अथ श्रीवराहपुराणम्

(नारायणं नमस्कृत्य नरं चैव नरोत्तमम्। देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ।।)

नमस्तस्मै वराहाय लीलयोद्धरते महीम्।

खुरमध्यगतो यस्य मेरुः खणखणायते ।। १.१ ।।

दंष्ट्राग्रेणोद्धृता गौरुदधिपरिवृता पर्वतैर्निम्नगाभिः

साकं मृत्पिण्डवत् प्राग्बृहदुरुवपुषाऽनन्तरूपेण येन।

सोऽयं कंसासुरारिर्मुरनरकदशास्यान्तकृत्सर्वसंस्थः

कृष्णो विष्णुः सुरेशो नुदतु मम रिपूनादिदेवो वराहः।। १.२ ।।

यः संसारार्णवे नौरिव मरणजराव्याधिनक्रोर्मिभीमे

भक्तानां भीतिहर्ता मुरनरकदशास्यान्तकृत् कोलरूपी।

विष्णुः सर्वेश्वरोऽयं यमिह कृतधियो लीलया प्राप्नुवन्ति

मुक्तात्मानो नपापं भवत्तु नुदितारातिपक्षः क्षितीशः ।। १.३ ।।

सूत उवाच।

यस्मिन् काले क्षितिः पूर्वं वराहवपुषा तु सा।

उद्धृता विष्णुना भक्त्या पप्रच्छ परमेश्वरम् ।। १.४ ।।

धरण्युवाच।

कल्पे कल्पे भवानेव मां समुद्धरते विभो।

न चाहं वेद ते मूर्तिं नादिसर्गं च केशव।। १.५ ।।

वेदेषु चैव नष्टेषु मत्स्यो भूत्वा रसातलम्।

प्रविश्य तानपाकृष्य ब्रह्मणे दत्तवानसि ।। १.६ ।।

अन्यत् सुरासुरमयं त्वं समुद्रस्य मन्थने।

धृतवानसि कौर्म्येण मन्दरं मधुसूदन ।। १.७ ।।

पुनर्वाराहरूपेण मां गच्छन्तीं रसातलम् ।

उज्जहारैकदंष्ट्रेण भगवान् वै महार्णवात्।। १.८ ।।

अन्यद्धिरण्यकशिपुर्वरदानेन दर्पितः।

आबाधमानः पृथिवीं स त्वया विनिपातितः ।

बलिस्तु बद्धो भगवंस्त्वया वामनरूपिणा ।। १.९ ।।

पुनर्निःक्षत्रिया देव त्वया चापि पुरा कृता ।
जामदग्न्येन रामेण त्वया भूत्वाऽसकृत्प्रभो ।। १.१० ।।
पुनश्च रावणो रक्षः क्षपितं क्षात्रतेजसा ।
न च जानाम्यहं देव तव किञ्चिद्विचेष्टितम् ।। १.११ ।।
उद्धृत्य मां कथं सृष्टिं सृजसे किं च सा त्वया।
सकृद् ध्रियेत कृत्वा च पाल्यते चापि केन च ।। १.१२ ।।
केन वा सुलभो देव जायसे सततं विभो ।
कथं च सृष्टेरादिः स्यादवसानं कथं भवेत् ।। १.१३ ।।
कथं युगस्य गणना संख्याऽस्यानुचतुर्युगम् ।
के वा विशेषास्तेष्वस्मिन् का वाऽवस्था महेश्वर ।। १.१४ ।।
यज्वानः के च राजानः के च सिद्धिं परां गताः ।
एतत्सर्वं समासेन कथयस्व प्रसीद मे ।। १.१५ ।।
इत्युक्तः क्रोडरूपेण जहास परमेश्वरः ।
हसतस्तस्य कुक्षौ तु जगद्धात्री ददर्श ह ।।
रुद्रान् देवान् सवसवः सिद्धसंघान् महर्षिभिः ।। १.१६ ।।
सचन्द्रसूर्यग्रहसप्तलोका-
नन्तः स्थितांस्तावदुपात्तधर्मान् ।
इतीदृशं पश्यति सा समस्तं
यावत्क्षितिर्वेपितसर्वगात्रा ।। १.१७ ।।
उन्मीलितास्यस्तु यदा महात्मा
दृष्टो धरण्याऽमलसर्वगात्र्या ।
तावत्स्वरूपेण चतुर्भुजेन
महोदधौ सुप्तमथोऽन्वपश्यत् ।। १.१८ ।।
शेषपर्यङ्कशयने सुप्तं देवं जनार्दनम् ।
दृष्ट्वा तन्नाभिपङ्कस्थमन्तःस्थं च चतुर्मुखम्।
कृताञ्जलिपुटा देवी स्तुतिं धात्री जगाद ह ।। १.१९ ।।
धरण्युवाच।
नमः कमलपत्राक्ष नमस्ते पीतवाससे।

नमः सुरारिविध्वंसकारिणे परमात्मने ।। १.२० ।।

शेषपर्यङ्कशपने धृतवक्षस्थलश्रिये ।

नमस्ते सर्वदेवेश नमस्ते मोक्षकारिणे ।। १.२१ ।।

नमः शार्ङ्गासिचक्राय जन्ममृत्युविवर्जिते।

नमो नाभ्युत्थितमहत्कमलासनजन्मने ।। १.२२ ।।

नमो विद्रुमरक्तास्यपाणिपल्लवशोभिने ।

शरणं त्वां प्रसन्नाऽस्मि त्राहि नारीमनागसम् ।। १.२३ ।।

पूर्णनीलाञ्जनाकारं वाराहं ते जनार्दन।

दृष्ट्वा भीताऽस्मि भूयोऽपि जगत् त्वद्देहगोचरम्।

इदानीं कुरु मे नाथ दयां त्राहि महाभयात्।। १.२४ ।।

केशवः पातु मे पादौ जङ्घे नारायणो मम ।

माधवो मे कटिं पातु गोविन्दो गुह्यमेव च ।। १.२५ ।।

नाभिं विष्णुस्तु मे पातु उदरं मधुसूदनः ।

ऊरुं त्रिविक्रमः पातु हृदयं पातु वामनः ।। १.२६ ।।

श्रीधरः पातु मे कण्ठं हृषीकेशो मुखं मम ।

पद्मनाभस्तु नयने शिरो दामोदरो मम ।। १.२७ ।।

एवं न्यस्य हरेर्न्यासमामानि जगती तदा ।

नमस्ते भगवन् विष्णो इत्युक्त्वा विरराम ह ।। १.२८ ।।

इति श्रीवराहपुराणे भगवच्छास्त्रे प्रथमोऽध्यायः ।। १ ।।

**सूत उवाच ।**
ततस्तुष्टो हरिर्भक्त्या धरण्यात्मशरीरगाम् ।
मायां प्रकाश्य तेनैव स्थितो वाराहमूर्त्तिना ।। २.१ ।।
जगाद किं ते सुश्रोणि प्रश्नमेनं सुदुर्लभम् ।
कथयामि पुराणस्य विषयं सर्वशास्त्रतः ।। २.२ ।।
पुराणानां हि सर्वेषामयं साधारणः स्मृतः ।
श्लोकं धरणि निश्चित्य निःशेषं त्वं पुनः श्रृणु ।। २.३ ।।
श्रीवराह उवाच ।
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ।। २.४ ।।
आदिसर्गमहं तावत् कथयामि वरानने ।
यस्मादारभ्य देवानां राज्ञां चरितमेव च ।
ज्ञायते चतुरंशश्च परमात्मा सनातनः ।। २.५ ।।
आदावहं व्योम महत् ततोऽणुं-
रेकैव मत्तः प्रबभूव बुद्धिः ।
त्रिधा तु सा सत्त्वरजस्तमोभिः
पृथक्पृथक्तत्त्वरूपैरुपेता ।। २.६ ।।
तस्मिंस्त्रिकेऽहं तमसो महान् स
सदोच्यते सर्वविदां प्रधानः ।
उतस्मादपि क्षेत्रविदूर्जितोऽभूद्
बभूव वुद्धिस्तु ततो बभूव ।। २.७ ।।
तस्मात्तु तेभ्यो श्रवणादिहेतवस्
ततोऽक्षमाला जगतो व्यवस्थिता ।
भूतैर्गतैरेव च पिण्डमूर्ति-
र्मया भद्रे विहिता त्वात्मनैव ।। २.८ ।।
शून्यं त्वासीत् तत्र शब्दस्तु खं च
तस्माद् वायुस्तत एवानु तेजः ।
तस्मादापस्तत एवानु देवि
मया सृष्टा भवती भूतधात्री ।। २.९ ।।
योगे पृथिव्या जलवत् ततोऽपि
सबुद्बुदं कललं त्वण्डमेव ।
तस्मिन् प्रवृत्ते द्विगतेऽहमासी-
दापोमयश्चात्मनात्मानमादौ ।। २.१० ।।
सृष्ट्वा नारास्ता अथो तत्र चाहं
येन स्यान्मे नाम नारायणेति ।
कल्पे कल्पे तत्र संयामि भूयः
सुप्तस्य मे नाभिजः स्याद् यथाद्यः ।। २.११ ।।
एवंभूतस्य मे देवि नाभिपद्मे चतुर्मुखः ।

उत्तस्थौ स मया प्रोक्तः प्रजाः सृज महामते ।। २.१२ ।।
एवमुक्त्वा तिरोभावं गतोऽहं सोऽपि चिन्तयन् ।
आस्ते यावज्जगद्धात्रि नाध्यगच्छत किंचन ।। २.१३ ।।
तावत् तस्य महारोषो ब्रह्मणोऽव्यक्तजन्मनः।
संभूय तेन बालः स्यादङ्के रोषात्मसंभवः ।। २.१४ ।।
यो रुदन् वारितस्तेन ब्रह्मणाऽव्यक्तमूर्त्तिना ।
ब्रवीति नाम मे देहि तस्य रुद्रेति सो ददौ ।। २.१५ ।।
सोऽपि तेन सृजस्वेति प्रोक्तो लोकमिमं शुभे ।
अशक्तः सोऽथ सलिले ममज्ज तपसे धृतः ।। २.१६ ।।
तस्मिन् सलिलमग्ने तु पुनरन्यं प्रजापतिम् ।
ब्रह्मा ससर्ज्ज भूतेषु दक्षिणाङ्गुष्ठतो वरम् ।
वामे चैव तथाऽङ्गुष्ठे तस्य पत्नीमथासृजत् ।। २.१७ ।।
स तस्यां जनयामास मनुं स्वायंभुवं प्रभुः ।
तस्मात् संभाविता सृष्टिः प्रजानां ब्रह्मणा पुरा ।। २.१८ ।।
*धरण्युवाच ।*
विस्तरेण ममाचक्ष्व आदिसर्गं सुरेश्वर ।
ब्रह्मा नारायणाख्योऽयं कल्पादौ चाभवद् यथा ।। २.१९ ।।
श्रीभगवानुवाच ।
ससर्ज सर्वभूतानि यथा नारायणात्मकः ।
कथ्यमानं मया देवि तदशेषं क्षिते श्रृणु ।। २.२० ।।
गतकल्पावसाने तु निशि सुप्तोत्थितः शुभे ।
सत्त्वोद्रिक्तस्तथा ब्रह्मा शून्यं लोकमवैक्षत ।। २.२१ ।।
नारायणः परोऽचिन्त्यः पराणामपि पूर्वजः ।
ब्रह्मस्वरूपी भगवाननादिः सर्वसंभवः ।। २.२२ ।।
इदं चोदाहरन्त्यत्र श्लोकं नारायणं प्रति ।
ब्रह्मस्वरूपिणं देवं जगतः प्रभवाप्ययम् ।। २.२३ ।।
आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ।। २.२४ ।।
सृष्टिं चिन्तयतस्तस्य कल्पादिषु यथा पुरा ।
अबुद्धिपूर्वकस्तस्य प्रादुर्भूतस्तमोमयः ।। २.२५ ।।
तमो मोहो महामोहस्तामिस्त्रो ह्यन्धसंज्ञितः ।
अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः ।। २.२६ ।।
पञ्चधाऽवस्थितः सर्गो ध्यायतोऽप्रतिबोधवान् ।
बहिरन्तोऽप्रकाशश्च संवृतात्मा नगात्मकः ।
स मुख्यसर्गो विज्ञेयः सर्गविद्भिर्विचक्षणैः ।। २.२७ ।।
पुनरन्यदभूत् तस्य ध्यायतः सर्गमुत्तमम्।
तिर्यक्स्त्रोतस्तु वै यस्मात् तिर्यक्स्त्रोतस्तु वै स्मृतः ।। २.२८ ।।
पश्वादयस्ते विख्याता उत्पथग्राहिणस्तु ते।

तमप्यसाधकं मत्वा तिर्यक्स्त्रोतं चतुर्मुखः ।। २.२९ ।।
ऊर्ध्वस्त्रोतस्त्रिधा यस्तु सात्त्विको धर्मवर्त्तनः ।
ततोर्ध्वचारिणो देवाः सर्वगर्भसमुद्भवाः ।। २.३० ।।
ते सुखप्रीतिवहुला बहिरन्तस्त्वनावृताः ।
तस्मिन् सर्गेऽभवत् प्रीतिर्निष्पद्यन्ते प्रजास्तदा ।। २.३० ।।
तदा सृष्ट्वाऽन्यसर्गं तु तदा दध्यौ प्रजापतिः ।
असाधकांस्तु तान् मत्वा मुख्यसर्गादिसंभवान् ।। २.३१ ।।
ततः स चिन्तयामास अर्वाक्स्त्रोतस्तु स प्रभुः ।
अर्वाक्स्त्रोतसि चोत्पन्ना मनुष्याः साधका मताः ।। २.३२ ।।
ते च प्रकाशबहुलास्तमोद्रिक्ता रजोधिकाः ।
तस्मात् तु दुखः बहुला भूयोभूयश्च कारिणः ।। २.३३ ।।
इत्येते कथिताः सर्गाः षडेते सुभगे तव ।
प्रथमो महतः सर्गस्तन्मात्राणि द्वितीयकः ।। २.३४ ।।
वैकारिकस्तृतीयस्तु सर्गश्चैन्द्रियकः स्मृतः ।
इत्येष प्राकृतः सर्गः संभूतो बुद्धिपूर्वकः ।। २.३५ ।।
मुख्यसर्गश्चतुर्थस्तु मुख्या वै स्थावराः स्मृताः ।
तिर्यक्स्त्रोतश्च यः प्रोक्तस्तैर्यक्स्त्रोतः स उच्यते ।। २.३६ ।।
तथोर्ध्वस्त्रोतसां श्रेष्ठः सप्तमः स तु मानवः ।
अष्टमोऽनुग्रहः सर्गः सात्त्विकस्तामसश्च सः ।। २.३७ ।।
पञ्चैते वैकृताः सर्गाः प्राकृतास्तु त्रयः स्मृताः ।
प्राकृतो वैकृतश्चैव कौमारो नवमः स्मृतः ।। २.३८ ।।
इत्येते वै समाख्याता नव सर्गाः प्रजापतेः ।
प्राकृता वैकृताश्चैव जगतो मूलहेतवः ।
इत्येते कथिताः सर्गाः किमन्यच्छ्रोतुमिच्छसि ।। २.३९ ।।
*धरण्युवाच ।*
नवधा सृष्टिरुत्पन्ना ब्रह्मणोऽव्यक्तजन्मनः ।
कथं सा ववृधे देव एतन्मे कथयाच्युत ।। २.४० ।।
*श्रीवराह उवाच ।*
प्रथमं ब्रह्मणा सृष्टा रुद्राद्यास्तु तपोधनाः।
सनकादयस्ततः सृष्टा मरीच्यादय एव च ।। २.४१ ।।
मरीचिरत्रिश्च तथा अङ्गिराः पुलहः क्रतुः ।
पुलस्त्यश्च महातेजाः प्रचेता भृगुरेव च ।
नारदो दशमश्चैव वसिष्ठश्च महातपाः ।। २.४२ ।।
सनकादयो निवृत्त्याख्ये तेन धर्मे प्रयोजिताः ।
प्रवृत्त्याख्ये मरीच्याद्या मुक्त्वैकं नारदं मुनिम् ।। २.४३ ।।
योऽसौ प्रजापतिस्त्वाद्यो दक्षिणाङ्गुष्ठसंभवः ।
तस्यादौ तत्र वंशेन जगदेतच्चराचरम् ।। २.४४ ।।
देवाश्च दानवाश्चैव गन्धर्वोरगपक्षिणः ।

सर्वे दक्षस्य कन्यासु जाताः परमधार्मिकाः ।। २.४५ ।।
योऽसौ रुद्रेति विख्यातः पुत्रः क्रोधसमुद्भवः ।
भ्रुकुटीकुटिलात् तस्य ललाटात् परमेष्ठिनः ।। २.४६ ।।
अर्द्धनारीनरवपुः प्रचण्डोऽतिभयंकरः ।
विभजात्मानमित्युक्तो ब्रह्मणाऽन्तर्दधे पुनः ।। २.४७ ।।
तथोक्तोऽसौ द्विधा स्त्रीत्वं पुरुषत्वं चकार सः ।
बिभेद पुरुषत्वं च दशधा चैकधा च सः ।
ततस्त्वेकादश ख्याता रुद्रा ब्रह्मसमुद्भवाः ।। २.४८ ।।
अयमुद्देशतः प्रोक्तो रुद्रसर्गो मयाऽनघे ।
इदानीं युगमाहात्म्यं कथयामि समासतः ।। २.४९ ।।
कृतं त्रेता द्वापरश्च कलिश्चेति चतुर्युगम् ।
एतस्मिन् ये महासत्त्वा राजानो भूरिदक्षिणाः ।
देवासुराश्च यं चक्रुर्धर्मं कर्म च तच्छृणु ।। २.५० ।।
आसीत् प्रथमकल्पे तु मनुः स्वायंभुवः पुरा ।
तस्य पुत्रद्वयं जज्ञे अतिमानुषचेष्टितम्।
प्रियव्रतोत्तानपादनामानं धर्मवत्सलम् ।। २.५१ ।।
तत्र प्रियव्रतो राजा महायज्वा तपोबलः ।
स चेष्ट्वा विविधैर्यज्ञैर्विपुलैर्भूरिदक्षिणैः ।। २.५२ ।।
सप्तद्वीपेषु संस्थाप्य भरतादीन् सुतान् निजान् ।
स्वयं विशालां वरदां गत्वा तेपे महत् तपः ।। २.५३ ।।
तस्मिन् स्थितस्य तपसि राज्ञो वै चक्रवर्त्तिनः ।
उपेयान्नारदस्तत्र दिदृक्षुर्धर्मचारिणम् ।। २.५४ ।।
स दृष्ट्वा नारदं व्योम्नि ज्वलद्भास्करतेजसम् ।
अभ्युत्थानेन राजेन्द्र उत्तस्थौ हर्षितस्तदा ।। २.५५ ।।
तस्यासनं च पाद्यं च सम्यक् तस्य निवेद्य वै ।
स्वागतादिभिरालापैः परस्परमवोचताम् ।
कथान्ते नारदं राजा पप्रच्छ ब्रह्मवादिनम् ।। २.५६ ।।
*प्रियव्रत उवाच ।*
भगवन् किञ्चिदाश्चर्यमेतस्मिन् कृतसंज्ञिते ।
युगे दृष्टं श्रुतं वाऽपि तन्मे कथय नारद ।। २.५७ ।।
*नारद उवाच ।*
आश्चर्यमेकं दृष्टं मे तच्छृणुष्व प्रियव्रत ।
ह्यस्तनेऽहनि राजेन्द्र श्वेताख्यं गतवानहम् ।
द्वीपं तत्र सरो दृष्टं फुल्लपङ्कजमालिनम् ।। २.५८ ।।
सरसस्तस्य तीरे तु कुमारीं पृथुलोचनाम् ।
दृष्ट्वाऽहं विस्मयापन्नस्तां कन्यामायतेक्षणाम् ।। २.५९ ।।
पृष्टवानस्मि राजेन्द्र तदा मधुरभाषिणीम् ।
काऽसि भद्रे कथं वाऽसि किं वा कार्यमिह त्वया ।

कर्त्तव्यं चारुसर्वाङ्गि तन्ममाचक्ष्व शोभने ।। २.६० ।।
एवमुक्ता मया सा हि मां दृष्ट्वाऽनिमिषेक्षणा ।
स्मृत्वा तूष्णीं स्थिता यावत् तावन्मे ज्ञानमुत्तमम् ।। २.६१ ।।
विस्मृतं सर्ववेदाश्च सर्वशास्त्राणि चैव ह ।
योगशास्त्राणि शिक्षाश्च वेदानां स्मृतयस्तथा ।। २.६२ ।।
सर्वं दृष्ट्वैव मे राजन् कुमार्याऽपहृतं क्षणात् ।
ततोऽहं विस्मयाविष्टश्चिन्ताशोकसमन्वितः ।। २.६३ ।।
तामेव शरणं गत्वा यावत् पश्यामि पार्थिव ।
तावद् दिव्यः पुमांस्तस्याः शरीरे समदृश्यत ।। २.६४ ।।
तस्यापि पंसो हृदये त्वपरस्तस्य चोरसि ।
अन्यो रक्तेक्षणः श्रीमान् द्वादशादित्यसन्निभः ।। २.६५ ।।
एवं दृष्ट्वा पुमांसोऽत्र त्रयः कन्याशरीरगाः ।
क्षणेन तत्र कन्यैका न तान् पश्यामि सुव्रत ।। २.६६ ।।
ततः पृष्टा मया देवी सा कुमारी कथं मम ।
वेदा नष्टा ममाचक्ष्व भद्रे तन्नाशकारणम् ।। २.६७ ।।
कन्योवाच ।
माताऽहं सर्ववेदानां सावित्री नाम नामतः ।
मां न जानासि येन त्वं ततो वेदा हृतास्तव ।। २.६८ ।।
एवमुक्ते तया राजन् विस्मयेन तपोधन ।
पृष्टा क एते पुरुषा एतत्कथय शोभने ।। ६९ ।।
*कन्योवाच*
य एष मच्छरीरस्थः सर्वाङ्गैश्चारुलोचनः ।
एष ऋग्वेदनामा तु देवो नारायणः स्वयम् ।
वह्निभूतो दहत्याशु पापान्युच्चारणादनु ।। २.७० ।।
एतस्य हृदये योऽयं दृष्ट आसीत् त्वयात्मजः ।
स यजुर्वेदरूपेण स्थितो ब्रह्मा महाबलः ।। २.७१ ।।
तस्याप्युरसि संविष्टो य एष शुचिरुज्ज्वलः ।
स सामवेदनामा तु रुद्ररूपी व्यवस्थितः ।
एष आदित्यवत् पापान्याशु नाशयते स्मृतः ।। २.७२ ।।
एते त्रयो महावेदा ब्रह्मन् देवास्त्रयः स्मृताः ।
एते वर्णा अकाराद्याः सवनान्यत्र वै द्विज ।। २.७३ ।।
एतत्सर्वं समासेन कथितं ते द्विजोत्तम ।
गृहाण वेदान् शास्त्राणि सर्वज्ञत्वं च नारद ।। २.७४ ।।
एतस्मिन् वेदसरसि स्नानं कुरु महाव्रत ।
कृते स्नानेऽन्यजन्मीयं येन स्मरसि सत्तम ।। २.७५ ।।
एवमुक्त्वा तिरोभावं गता कन्या नराधिप ।
अहं तत्र कृतस्नानस्त्वां दिदृक्षुरिहागतः ।। २.७६ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे द्वितीयोऽध्यायः ।। २ ।।

प्रियव्रत उवाच ।
अन्यस्मिन् भगवन् जन्मन्यासीद् यत् तद् विचेष्टितम् ।
सर्वं कथय देवर्षे महत् कौतूहलं हि मे ।। ३.१ ।।
नादरद उवाच ।
स्नातस्य मम राजेन्द्र तस्मिन् वेदसरस्यथ ।
सावित्र्याश्च वचः श्रुत्वा तस्मिन् जन्मसहस्त्रकम् ।
स्मरणं तत्क्षणाज्जातं श्रृणु जन्मान्तरं मम ।। ३.२ ।।
अस्त्यवन्तीपुरं राजंस्तत्राहं प्राग् द्विजोत्तमः ।
नाम्ना सारस्वतः पूर्वं वेदवेदाङ्गपारगः ।। ३.३ ।।
बहुभृत्यपरीवारो बहुधान्यश्च पार्थिव ।
अन्यस्मिन् कृतसंज्ञे तु युगे परमबुद्धिमान् ।। ३.४ ।।
ततो ध्यातं मयैकान्ते किमनेन करोम्यहम् ।
द्वन्द्वेन सर्वमेतद्धि न्यस्त्वा पुत्रेषु याम्यहम् ।
तपसे धृतसंकल्पः सरः सारस्वतं द्रुतम् ।। ३.५ ।।
एवं चिन्त्य मया इष्टः कर्मकाण्डेन केशवः ।
श्राद्धैश्च पितरो देवा यज्ञैश्चान्ये तथा जनाः ।। ३.६ ।।
ततोऽहं निर्गतो राजंस्तपसे धृतमानसः ।
सारस्वतं नाम सरो यदेतत् पुष्करं स्मृतम् ।। ३.७ ।।
तत्र गत्वा मया विष्णुः पुराणः पुरुषः शिवः ।
आराधितो मया भक्त्या जपं नारायणात्मकम् ।। ३.८ ।।
ब्रह्मपारमयं राजन् जपता परमं स्तवम् ।
ततो मे भगवांस्तुष्टः प्रत्यक्षत्वं जगाम ह ।। ३.९ ।।
प्रियव्रत उवाच ।
कीदृशं ब्रह्मपारं तु श्रोतुमिच्छामि सत्तम ।
कथयस्व प्रसादेन देवर्षे सुप्रसन्नधीः ।। ३.१० ।।
नारद उवाच ।
परं पराणाममृतं पुराणं
पारं परं विष्णुमनन्तवीर्यम् ।
नमामि नित्यं पुरुषं पुराणं
परायणं पारगतं पराणाम् ।। ३.११ ।।
पुरातनं त्वप्रतिमं पुराणं
परापरं पारगमुग्रतेजसम् ।
गम्भीरगम्भीरधियां प्रधानं
नतोऽस्मि देवं हरिमीशितारम् ।। ३.१२ ।।
परात्परं चापरमं प्रधानं
परास्पदं शुद्धपदं विशालम् ।
परात्परेशं पुरुषं पुराणं
नारायणं स्तौमि विशुद्धभावः ।। ३.१३ ।।

पुरा पुरं शून्यमिदं ससर्ज्ज
तदा स्थितत्वात् पुरुषः प्रधानः ।
जने प्रसिद्धः शरणं ममास्तु
नारायणो वीतमलः पुराणः ।। ३.१४ ।।
पारं परं विष्णुमपाररूपं
पुरातनं नीतिमतां प्रधानम् ।
धृतक्षमं शान्तिधरं क्षितीशं
शुभं सदा स्तौमि महानुभावम् ।। ३.१५ ।।
सहस्त्रमूर्धानमनन्तपाद-
मनेकबाहुं शशिसूर्यनेत्रम् ।
क्षराक्षरं क्षीरसमुद्रनिद्रं
नारायणं स्तौम्यमृतं परेशम् ।। ३.१६ ।।
त्रिवेदगम्यं त्रिनवैकमूर्तिं
त्रिशुक्लसंस्थं त्रिहुताशभेदम् ।
त्रितत्त्वलक्ष्यं त्रियुगं त्रिनेत्रं
नमामि नारायणमप्रमेयम् ।। ३.१७ ।।
कृते सितं रक्ततनुं तथा च
त्रेतायुगे पूततनुं पुराणम् ।
तथा हरिं द्वापरतः कलौ च

कृष्णीकृतात्मानमथो नमामि ।। ३.१८ ।।
ससर्ज यो वक्त्रत एव विप्रान्
भुजान्तरे क्षत्रमथोरुयुग्मे ।
विशः पदाग्रेषु तथैव शूद्रान्
नमामि तं विश्वतनुं पुराणम् ।। ३.१९ ।।
परात्परं पारगतं प्रमेयं
युधांपतिं कार्यत एव कृष्णम्।
गदासिचर्मण्यभृतोत्थपाणिं
नमामि नारायणमप्रमेयम् ।। ३.२० ।।
इति स्तुतो देववरः प्रसन्नो
जगाद मां नीरदतुल्यघोषः ।
वरं वृणीष्वेत्यसकृत् ततोऽहं
तस्यैव देहे लयमिष्टवांश्च ।। ३.२१ ।।
इति श्रुत्वा वचो मह्यं देवदेवः सनातनः ।
उवाच प्रकृतिं विप्र संसरस्वाक्षयामिमाम् ।। ३.२२ ।।
ब्रह्मणो युगसाहस्त्रं तत्ते तस्मात् समुद्भवः ।
भविता ते तथा नाम दास्यते संप्रयोजनम् ।। ३.२३ ।।
नारं पानीयमित्युक्तं तं पितॄणां सदा भवान् ।
ददाति तेन ते नाम नारदेति भविष्यति ।। ३.२४ ।।

एवमुक्त्वा गतो देवः सद्योऽदर्शनमुच्चकैः ।
अहं कलेवरं त्यक्त्वा कालेन तपसा तदा ।। ३.२५ ।।
ब्रह्मणोऽङ्गे लयं प्राप्तस्तदोत्पत्तिं च पार्थिव ।
दिवसे तु पुनः सृष्टो दशभिस्तनयैः सह ।। ३.२६ ।।
दिनादिर्यो हि देवस्य ब्रह्मणोऽव्यक्तजन्मनः ।
स सृष्ट्यादिः समस्तानां देवादीनां न संशयः ।। ३.२७ ।।
सर्वस्य जगतः सृष्टिरेषैव प्रभुधर्मतः ।
एतन्मे प्राकृतं जन्म यन्मां पृच्छसि पार्थिव ।। ३.२८ ।।
तस्मान्नारायणं ध्यात्वा प्राप्तोऽस्मि परतो नृप ।
तस्मात् त्वमपि राजेन्द्र भव विष्णुपरायणः ।। ३.२९ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे तृतीयोऽध्यायः ।। ३ ।।

धरण्युवाच ।
योऽसौ नारायणो देवः परमात्मा सनातनः ।
भगवन् सर्वभावेन उताहो नेति शंस मे ।। ४.१ ।।
श्रीवराह उवाच ।
मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः ।
रामो रामश्च कृष्णश्च बुद्धः कल्की च ते दश ।। ४.२ ।।
इत्येताः कथितास्तस्य मूर्त्तयो भूतधारिणि ।
दर्शनं प्राप्तुमिच्छूनां सोपानानीव शोभते ।। ४.३ ।।
यत् तस्य परमं रूपं तन्न पश्यन्ति देवताः ।
अस्मदादिस्वरूपेण पूरयन्ति ततो धृतिम् ।। ४.४ ।।
ब्रह्मा भगवतो मूर्त्या रजसस्तमसस्तथा ।
याभिः संस्थाप्यते विश्वं स्थितौ संचाल्यते च ह ।। ४.५ ।।
त्वमेका तस्य देवस्य मूर्तिराद्या धराधरे ।
द्वितीया सलिलं मूर्तिस्तृतीया तैजसी स्मृता ।। ४.६ ।।
चतुर्थी वायुमूर्तिः स्यादाकाशाख्या तु पञ्चमी ।
एतास्तु मूरत्यस्तस्य क्षेत्रज्ञत्वं हि मद्धियाम् ।
मूर्त्तित्रयं तथा तस्य इत्येताश्चाष्टमूर्तयः ।। ४.७ ।।
आभिव्यप्तिमिदं सर्वं जगन्नारायणेन ह ।
इत्येतत् कथितं देवि किमन्यच्छ्रोतुमिच्छसि ।। ४.८ ।।
धरण्युवाच ।
नारदेनैवमुक्तस्तु तदा राजा प्रियव्रतः ।
कृतवान् किं ममाचक्ष्व प्रसादात् परमेश्वर ।। ४.९ ।।
श्रीवराह उवाच ।
भवतीं सप्तधा कृत्वा पुत्राणां च प्रदाय सः ।
प्रियव्रतस्तपस्तेपे नारदाच्छ्रुतविस्मयः ।। ४.१० ।।
नारायणात्मकं ब्रह्म परं जप्त्वा स्वयंभुवः ।
ततस्तुष्टमनाः पारं परं निर्वाणमाप्तवान् ।। ४.११ ।।
श्रृणु चान्यद् वरारोहे यद् वृत्तं परमेष्ठिनः ।
आराधनाय यततः पुराकाले नृपस्य ह ।। ४.१२ ।।
आसीदश्वशिरा नाम राजा परमधार्मिकः ।
सोऽश्वमेधेन यज्ञेन यष्ट्वा सुबहुदक्षिणः ।। ४.१३ ।।
स्नातश्चावभृथे सोऽथ ब्राह्मणैः परिवारितः ।
यावदास्ते स राजर्षिस्तावद् योगिवरो मुनिः ।
आययौ कपिलः श्रीमान् जैगीषव्यश्च योगिराट् ।। ४.१४ ।।
ततस्त्वरितमुत्थाय स राजा स्वागतक्रियाम् ।
चकार परया युक्तः स मुदा राजसत्तमः ।। ४.१५ ।।
तावच्चिर्चितावासनगौ दृष्ट्वा राजा महाबलः ।
पप्रच्छ तौ तिग्मधियौ योगज्ञौ स्वेच्छयागतौ ।। ४.१६ ।।

भवन्तौ संशयं विप्रौ पृच्छामि पुरुषोत्तमौ ।
कथमाराधयेद् देवं हरिं नारायणं परम् ।। ४.१७ ।।
विप्रावूचतुः ।
क एष प्रोच्यते राजंस्त्वया नारायणो गुरुः ।
आवां नारायणौ द्वौ तु त्वत्प्रत्यक्षगतौ नृप ।। ४.१८ ।।
अश्वशिरा उवाच ।
भवन्तौ ब्राह्मणौ सिद्धौ तपसा दग्धकिल्बिषौ ।
कथं नारायणावावामिति वाक्यमथेरितम् ।। ४.१९ ।।
शङ्खचक्रगदापाणिः पीतवासा जनार्दनः ।
गरुडस्थो महादेवः कस्तस्य सदृशो भुवि ।। ४.२० ।।
तस्य राज्ञो वचः श्रुत्वा तौ विप्रौ संशितव्रतौ ।
जहसतुः पश्य विष्णुं राजन्निति जजल्पतुः ।। ४.२१ ।।
एवमुक्त्वा स कपिलः स्वयं विष्णुर्बभूव ह ।
जैगीषव्यश्च गरुडस्तत्क्षणात् समजायत ।। ४.२२ ।।
ततो हाहाकृतं त्वासीत् तत्क्षणाद् राजमण्डलम् ।
दृष्ट्वा नारायणं देवं गरुडस्थं सनातनम् ।। ४.२३ ।।
कृताञ्जलिपुटो भूत्वा ततो राजा महायशाः ।
उवाच शाम्यतां विप्रौ नायं विष्णुरथेदृशः ।। ४.२४ ।।
यस्य ब्रह्मा समुत्पन्नो नाभिपङ्कजमध्यतः ।
तस्माच्च ब्रह्मणो रुद्रः स विष्णुः परमेश्वरः ।। ४.२५ ।।
इति राजवचः श्रुत्वा तदा तौ मुनिपुंगवौ ।
चक्रतुः परमां मायां योगमायां विशेषतः ।। ४.२६ ।।
कपिलः पद्मनाभस्तु जैगीषव्यः प्रजापतिः ।
कमलस्थो बभौ ह्रस्वस्तस्य चाङ्के कुमारकः ।। ४.२७ ।।
ददर्श राजा रक्ताक्षं कालानलसमद्युतिम् ।
नेत्थं भवति विश्वेशो मायैषा योगिनां सदा ।
सर्वव्यापी हरिः श्रीमानिति राजा जगाद ह ।। ४.२८ ।।
ततो वाक्यावसाने तु तस्य राज्ञो हि संसदि ।
मशका मत्कुणा यूका भ्रमराः पक्षिणोरगाः ।। ४.२९ ।।
अश्वा गावो द्विपाः सिंहा व्याघ्रा गोमायवो मृगाः ।
अन्येऽपि पशवः कीटा ग्राम्यारण्याश्च सर्वशः ।
दृश्यन्ते राजभवने कोटिशो भूतधारिणि ।। ४.३० ।।
तं दृष्ट्वा भूतसंघातं राजा विस्मितमानसः ।
यावच्चिन्तयते किं स्यादेतदित्यवगम्य च ।
जैगीषव्यस्य माहात्म्यं कपिलस्य च धीमतः ।। ४.३१ ।।
कृताञ्जलिपुटो भूत्वा स राजाऽश्वशिरास्तदा ।
पप्रच्छ तावृषी भक्त्या किमिदं द्विजसत्तमौ ।। ४.३२ ।।
द्विजावूचतुः ।

आवां पृष्टौ त्वया राजन् कथं विष्णुरिहेज्यते ।
प्राप्यते वा महाराज तेनेदं दर्शितं तव ।। ४.३३ ।।
सर्वज्ञस्य गुणा ह्येते ये राजंस्तव दर्शिताः ।
स च नारायणो देवः सर्वज्ञः कामरूपवान् ।। ४.३४ ।।
सौम्यस्तु संस्थितः क्वापि प्राप्यते मनुजैः किल ।
आराधनेन चैतस्य वाक्यमर्थवदिष्यते ।। ४.३५ ।।
किन्तु सर्वशरीरस्थः परमात्मा जगत्पतिः ।
स्वदेहे दृश्यते भक्त्या नैकस्थानगतस्तु सः ।। ४.३६ ।।
अतोऽर्थं दर्शितं रूपं देवस्य परमात्मनः ।
आवयोस्तव राजेन्द्र प्रतीतिः स्याद् यथा तव ।
एवं सर्वगतो विष्णुस्तव देहे जनेश्वर ।। ४.३७ ।।
मन्त्रिणां भृत्यसङ्घस्य सुराद्या ये प्रदर्शिताः ।
पशवः कीटसङ्घाश्च तेऽपि विष्णुमया नृप ।। ४.३८ ।।
भावनां तु दृढां कुर्याद् यथा सर्वगतो हरिः ।
नान्यत् तत् सदृशं भूतमिति भावेन सेव्यते ।। ४.३९ ।।
एष ते ज्ञानसद्भावस्तव राजन् प्रकीर्तितः ।
परिपूर्णेन भावेन स्मरन् नारायणं हरिम् ।। ४.४० ।।
परिपूर्णेन बावेन स्मर नारायणं गुरुम् ।
पुष्पोपहारैर्धूपैश्च ब्राह्मणानां च तर्पणैः ।
ध्यानेन सुस्थितेनाशु प्राप्यते परमेश्वरः ।। ४.४१ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे चतुर्थोऽध्यायः ।। ४ ।।

अश्वशिरा उवाच ।
भवन्तौ मम संदेहमेकं छेत्तुमिहार्हतः ।
येन छिन्नेन जायेत मम संसारविच्युतिः ।। ५.१ ।।
एवमुक्ते नृपतिना तदा योगिवरो मुनिः ।
कपिलः प्राह धर्मात्मा राजानं यजतां वरम् ।। ५.२ ।।
कपिल उवाच ।
कस्ते मनसि संदेहो राजन् परमधार्मिक ।
छिन्दामि येन तच्छ्रुत्वा ब्रूहि यत्तेऽभिवाञ्छितम् ।। ५.३ ।।
राजोवाच ।
कर्मणा प्राप्यते मोक्ष उताहो ज्ञानिना मुने ।
एतन्मे संशयं छिन्धि यदि मेऽनुग्रहः कृतः ।। ५.४ ।।
कपिल उवाच ।
इमं प्रश्नं महाराज पुरा पृष्टो बृहस्पतिः ।
रैभ्येण ब्रह्मपुत्रेण राज्ञा च वसुना पुरा ।
वसुरासीन्नृपश्रेष्ठो विद्वान् दानपतिः पुरा ।। ५.५ ।।
चाक्षुषस्य मनोः काले ब्रह्मणोऽन्वयवर्द्धनः ।
वसुश्च ब्रह्मणः सद्म गतवांस्तद्दिदृक्षया ।। ५.६ ।।
पथि चैत्ररथं दृष्ट्वा विद्याधरवरं नृप ।
अपृच्छच्च वसुः प्रीत्या ब्रह्मणोऽवसरं प्रभो ।। ५.७ ।।
सोऽब्रवीद् देवसमितिर्वर्तते ब्रह्मणो गृहे ।
एवं श्रुत्वा वसुस्तस्थौ द्वारि ब्रह्मौकसस्तदा ।
तावत् तत्रैव रैभ्यस्तु आजगाम महातपाः ।। ५.८ ।।
स राजा प्रीतमनसा वसुः संपूर्णमानसः ।
उवाच पूजयित्वाग्रे क्व प्रयातोऽसि वै मुने ।। ५.९ ।।
रैभ्य उवाच ।
अहं बृहस्पतेः पार्श्वे आगतोऽस्मि महानृप ।
किञ्चित्कार्यान्तरं प्रष्टुमहं देवपुरोहितम् ।। ५.१० ।।
एवं वदति रैभ्ये तु ब्रह्मणस्तन्महत्सदः ।
उत्तस्थौ स्वानि धिष्ण्यानि गता देवगणाः प्रभो ।। ५.११ ।।
तावद् बृहस्पतिस्तत्र रैभ्येण सह संविदम् ।
कृत्वा स्वधिष्ण्यमगमद् वसुना च सुपूजितः ।। ५.१२ ।।
रैभ्य आङ्गिरसो राजा वसुश्चोपविवेश ह ।
उपविष्टेषु राजेन्द्र तेषु तेष्वपि सोऽब्रवीत् ।। ५.१३ ।।
बृहस्पतिर्देवगुरू रैभ्यं वचनमन्तिके ।
किं करोमि महाभाग वेदवेदाङ्गपारग ।। ५.१४ ।।
रैभ्य उवाच ।
बृहस्पते कर्मणा किं प्राप्यते ज्ञानिनाऽथवा ।
मोक्ष एतन्ममाचक्ष्व पृच्छतः संशयं प्रभो ।। ५.१५ ।।

बृहस्पतिरुवाच ।
यत्किंचित् कुरुते कर्म पुरुषः साध्वसाधु वा ।
सर्वं नारायणे न्यस्य कुर्वन् नैव च लिप्यते ।। ५.१६ ।।
श्रूयते च द्विजश्रेष्ठ संवादो विप्रलुब्धयोः ।
आत्रेयो ब्राह्मणः कश्चिद् वेदाभ्यासरतो मुनिः ।। ५.१७ ।।
वसत्यविरतं प्रातःस्नायी त्रिषवणे रतः ।
नाम्ना संयमनः पूर्वमेकस्मिन् दिवसे नदीम् ।
धर्मारण्ये गतः स्नातुं धन्यां भागीरथीं शुभाम् ।। ५.१८ ।।
तत्रासीनं महायूथं हरिणानां विचक्षणः ।
लुब्धो निष्ठुरको नाम धनुःपाणिः कृतान्तवत् ।
आययौ तं जिघांसुः स धनुष्यायोज्य सायकम् ।। ५.१९ ।।
ततः संयमनो विप्रो दृष्ट्वा तं मृगयारतम् ।
वारयामास मा भद्र जीवघातमिमं कुरु ।। ५.२० ।।
एतच्छ्रुत्वा वचो व्याधः स्मितपूर्वमिदं वचः ।
उवाच नाहं हिंसामि पृथग्जीवं द्विजोत्तम ।। ५.२१ ।।
परमात्मा त्वयं भूतैः क्रीडते भगवान् स्वयम् ।
कृता मृदा बलीवर्द्दास्तद्वदेतन्न संशयः ।। ५.२२ ।।
अहे भावः सदा ब्रह्मन्नविद्येयं मुमुक्षुणाम् ।
यात्राप्राणरतं सर्वं जगदेतद् विचेष्टितम् ।
तत्राहमिति यः शब्दः स साधुत्वं न गच्छति ।। ५.२३ ।।
इत्याकर्ण्य स विप्रेन्द्रो द्विजः संयमनस्तदा ।
विस्मयेनाब्रवीद् वाक्यं लुब्धं निष्ठुरकं द्विजः ।। ५.२४ ।।
किमेतदुच्यते भद्र प्रत्यक्षं हेतुमद्वचः ।
ततः श्रुत्वा मुनेर्विप्रं लुब्धकः प्राह धर्मवित् ।
कुत्वा लोहमयं जालं तस्याधो ज्वलनं ददौ ।। ५.२५ ।।
दत्त्वा वह्निं द्विजं प्राह ज्वाल्यतां काष्ठसचयः ।
ततो विप्रो मुखेनाग्निं प्रज्वाल्य विरराम ह ।। ५.२६ ।।
ज्वलिते तु पुनर्वह्नौ तं जालं लोहसंभवम् ।
पृथक्पृथक् सहस्त्राणि निन्येऽन्तर्जालकैर्द्विज ।
एकस्थानगतस्यापि वह्नेरायसजालकैः ।। ५.२७ ।।
ततो लुब्धोऽब्रवीद्विप्रमेकां ज्वालां महामुने ।
गृहाण येन शेषाणां करिष्यामीह नाशनम् ।। ५.२८ ।।
एवमुक्त्वा हुताशे तु तोयपूर्णं घटं द्रुतम् ।
चिक्षेप सहसा वह्निः प्रशशामाशु पूर्ववत् ।। ५.२९ ।।
ततोऽब्रवील्लुब्धकस्तु ब्राह्मणं तं तपोधनम् ।
भगवन् या त्वया ज्वाला गृहोतासीद्धुताशनात् ।
प्रयच्छ येन मार्गाणि मांसान्यानाय्य भक्षये ।। ५.३० ।।
एवमुक्तस्तदा विप्रो यावदायसजालकम् ।

पश्यत्येव न तत्राग्निर्मूलनाशे गतः क्षयम् ।। ५.३१ ।।
ततो विलक्षभावेन ब्राह्मणः शंसितव्रतः ।
तूष्णींभूतस्थितस्तावल्लुब्धको वाक्यमब्रवीत् ।। ५.३२ ।।
एतस्मिञ्ज्वलितो वह्निर्बहुशाखश्च सत्तम ।
मूलनाशे भवेन्नाशस्तद्वदेतदपि द्विज ।। ५.३३ ।।
आत्मा स प्रकृतिस्थश्च भूतानां संश्रयो भवेत् ।

भूय एषा जगत्सृष्टिस्तत्रैव जगतो भवेत् ।। ५.३४ ।।
पिण्डग्रहणधर्मेण यदस्य विहितं व्रतम् ।
तत्तदात्मनि संयोज्य कुर्वाणो नावसीदति ।। ५.३५ ।।
एवमुक्ते तु व्याधेन ब्राह्मणे राजसत्तम ।
पुष्पवृष्टिरथाकाशात् तस्योपरि पपात ह ।। ५.३६ ।।
विमानानि च दिव्यानि कामगानि महान्ति च ।
बहुरत्नानि मुख्यानि ददृशे ब्राह्मणोत्तमः ।। ५.३७ ।।
तेषु निष्ठुरकं लुब्धं सर्वेषु समवस्थितम् ।
ददृशे ब्राह्मणस्तत्र कामरूपिणमुत्तमम् ।। ५.३८ ।।
अद्वैतवासनासिद्धं योगाद् बहुशरीरकम् ।
दृष्ट्वा विप्रो मुदा युक्तः प्रययौ निजमाश्रमम् ।। ५.३९ ।।
एवं ज्ञानवतः कर्म्म कुर्वतोऽपि स्वजातिकम् ।
भवेन्मुक्तिर्द्विजश्रेष्ठ रैभ्य राजन् वसो ध्रुवम् ।। ५.४० ।।
एवं तौ संशयच्छेदं प्राप्तौ रैभ्यवसू नृप ।
बृहस्पतेस्ततो धिष्ण्याज्जग्मतुर्निजमाश्रमम् ।। ५.४१ ।।
तस्मात् त्वमपि राजेन्द्र देवं नारायणं प्रभुम् ।
अभेदेन स्वदेहस्थं पश्यन्नाराधय प्रभुम् ।। ५.४२ ।।
कपिलस्य वचः श्रुत्वा स राजाऽश्वशिरा विभुः ।
ज्येष्ठं पुत्रं समाहूय धन्यं स्थूलशिराह्वयम् ।
अभिषिच्य निजे राज्ये स राजा प्रययौ वनम् ।। ५.४३ ।।
नैमिषाख्यं वरारोहे तत्र यज्ञतनुं गुरुम् ।
तपसाराधयामास यज्ञमूर्तिं स्तवेन च ।। ५.४४ ।।
धरण्युवाच ।
कथं यज्ञतनोः स्तोत्रं राज्ञा नारायणस्य ह ।
स्तुतिः कृता महाभाग पुनरेतच्च शंस मे ।। ५.४५ ।।
श्रीवराह उवाच ।
नमामि याज्यं त्रिदशाधिपस्य
भवस्य सूर्यस्य हुताशनस्य ।
सोमस्य राज्ञो मरुतामनेक-
रूपं हरिं यज्ञनरं नमस्ये ।। ५.४६ ।।
सुभीमदंष्ट्रं शशिसूर्यनेत्रं
संवत्सरे चायनयुग्मकुक्षम् ।

दर्भाङ्गरोमाणमथेध्मशक्तिं
सनातनं यज्ञनरं नमामि ।। ५.४७ ।।
द्यावापृथिव्योरिदमन्तरं हि
व्याप्तं शरीरेण दिशश्च सर्वाः ।
तमीड्यमीशं जगतां प्रसूतिं
जनार्दनं तं प्रणतोऽस्मि नित्यम् ।। ५.४८ ।।
सुरासुराणां च जयाजयाय
युगे युगे यः स्वशरीरमाद्यम् ।
सृजत्यनादिः परमेश्वरो य-
स्तं यज्ञमूर्तिं प्रणतोऽस्मि नाथम् ।। ५.४९ ।।
दधार मायामयमुग्रतेजा
जयाय चक्रं त्वमलांशुशुभ्रम् ।
गदासिशार्ङ्गादिचतुर्भुजोऽयं
तं यज्ञमूर्तिं प्रणतोऽस्मि नित्यम् ।। ५.५० ।।
क्वचित् सहस्त्रं शिरसां दधार
क्वचिन्महापर्वततुल्यकायम् ।
क्वचित् स एव त्रसरेणुतुल्यो
यस्तं सदा यज्ञनरं नमामि ।। ५.५१ ।।
चतुर्मुखो यः सृजते समग्रं
रथाङ्गपाणिः प्रतिपालनाय ।
क्षयाय कालानलसन्निभो य-
स्तं यज्ञमूर्तिं प्रणतोऽस्मि नित्यम् ।। ५.५२ ।।
संसारचक्रक्रमणक्रियायै
य इज्यते सर्वगतः पुराणः ।
यो योगिभिर्ध्यायते चाप्रमेयस्
तं यज्ञमूर्तिं प्रणतोऽस्मि नित्यम् ।। ५.५३ ।।
सम्यङ्मनस्यर्पितवानहं ते
यदा सुदृश्यं स्वतनौ नु तत्त्वम् ।
न चान्यदस्तोति मतिः स्थिरा मे
यतस्ततो मावतु शुद्धभावम् ।। ५.५४ ।।
इतीरितस्तस्य हुताशनार्चिः -
प्रख्यं तु तेजः पुरतो बभूव ।
तस्मिन् स राजा प्रविवेश बुद्धिं
कृत्वा लयं प्राप्तवान् यज्ञमूर्तौ ।। ५.५५ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे पञ्चमोऽध्यायः ।। ५ ।।

धरण्युवाच ।
स वसुः संशयच्छेदं प्राप्य रैभ्यश्च सत्तमः ।
उभौ किं चक्रतुर्देव श्रुत्वा चाङ्गिरसं वचः ।। ६.१ ।।
श्रीवराह उवाच ।
स वसुः सर्वधर्मज्ञः स्वराज्यं प्रतिपालयन् ।
अयजद् बहुभिर्यज्ञैर्महद्भिर्भूरिदक्षिणैः ।। ६.२ ।।
कर्मकाण्डेन देवेशं हरिं नारायणं प्रभुम् ।
तोषयामास राजेन्द्रस्तमभेदेन चिन्तयन् ।। ६.३ ।।
ततः कालेन महता तस्य राज्ञो मतिः किल ।
निवृत्तराज्यभोगस्य दन्द्वस्यान्तमुपेयुषी ।। ६.४ ।।
ततः पुत्रं विवस्वन्तं श्रेष्ठं भ्रातृशतस्य ह ।
अभिषिच्य स्वके राज्ये तपोवनमुपागमत् ।। ६.५ ।।
पुष्करं नाम तीर्थानां प्रवरं यत्र केशवः ।
पुण्डरीकाक्षनामा तु पूज्यते तत्परायणैः ।। ६.६ ।।
तत्र गत्वा स राजर्षिः काश्मीराधिपतिर्वसुः ।
अतितीव्रेण तपसा स्वशरीरमशोषयत् ।। ६.७ ।।
पुण्डरीकाक्षपारं तु स्तवं भक्त्या जपन् बुधः ।
आरिराधयिषुर्देवं नारायणमकल्मषम् ।
स्तोत्रान्ते तल्लयं प्राप्तः स राजा राजसत्तमः ।। ६.८ ।।
धरण्युवाच ।
पुण्डरीकाक्षपारं तु स्तोत्रं देव कथं स्मृतम् ।
कीदृशं तन्ममाचक्ष्व परमेश्वर तत्त्वतः ।। ६.९ ।।
श्रीवराह उवाच ।
नमस्ते पुण्डरीकाक्ष नमस्ते मधुसूदन ।
नमस्ते सर्वलोकेश नमस्ते तिग्मचक्रिणे ।। ६.१० ।।
विश्वमूर्तिं महाबाहुं वरदं सर्वतेजसम् ।
नमामि पुण्डरीकाक्षं विद्याऽविद्यात्मकं विभुम् ।। ६.११ ।।
आदिदेवं महादेवं वेदवेदाङ्गपारगम् ।
गम्भीरं सर्वदेवानां नमामि मधुसूदनम् ।। ६.१२ ।।
विश्वमूर्तिं महामूर्तिं विद्यामूर्तिं त्रिमूर्तिकम् ।
कवचं सर्वदेवानां नमस्ये वारिजेक्षणम् ।। ६.१३ ।।
सहस्त्रशीर्षिणं देवं सहस्त्राक्षं महाभुजम् ।
जगत्संव्याप्य तिष्ठन्तं नमस्ये परमेश्वरम् ।। ६.१४ ।।
शरण्यं शरणं देवं विष्णुं जिष्णुं सनातनम् ।
नीलमेघप्रतीकाशं नमस्ये चक्रपाणिनम् ।। ६.१५ ।।
शुद्धं सर्वगतं नित्यं व्योमरूपं सनातनम् ।
भावाभावविनिर्मुक्तं मस्ये सर्वगं हरिम् ।। ६.१६ ।।
नान्यत् किंचित् प्रपश्यामि व्यतिरिक्तं त्वयाऽच्युत ।

त्वन्मयं च प्रपश्यामि सर्वमेतच्चराचरम् ।। ६.१७ ।।
एवं तु वदतस्तस्य मूर्त्तिमान् पुरुषः किल ।
निर्गत्य देहान्नीलाभो घनचण्डो भयंकरः ।। ६.१८ ।।
रक्ताक्षो ह्रस्वकायस्तु दग्धस्थूणासमप्रभः ।
उवाच प्राञ्जलिर्भूत्वा किं करोमि नराधिप ।। ६.१९ ।।
राजोवाच ।
कोऽसि किं कार्यमिह ते कस्मादागतवानसि ।
एतन्मे कथय व्याध एतदिच्छामि वेदितुम् ।। ६.२० ।।
व्याध उवाच ।
पूर्वं कलियुगे राजन् राजा त्वं दक्षिणापथे ।
पूर्णधर्मोद्भवः श्रीमाञ्जनस्थाने विचक्षणः ।। ६.२१ ।।
स कदाचिद् भवान् वीर तुरगैः परिवारितः ।
अरण्यमागतो हन्तुं श्वापदानि विशेषतः ।। ६.२२ ।।
तत्र त्वयाऽन्यकामेन मृगवेषधरो मुनिः ।
दण्डयुग्मेन दूरे तु पातितो धरणीतले ।। ६.२३ ।।
सद्यो मृतश्च विप्रेन्द्रस्त्वं च राजन् मुदा युतः ।
हरिणोऽयं हत इति यावत् पश्यसि पार्थिव ।

तावन्मृगवपुर्विप्रो मृतः प्रस्त्रवणे गिरौ ।। ६.२४ ।।
तं दृष्ट्वा त्वं महाराज क्षुभितेन्द्रियमानसः ।
गृहं गतस्ततोऽन्यस्य कस्यचित् कथितं त्वया ।। ६.२५ ।।
ततः कतिपयाहस्य त्वया रात्रौ नरेश्वर ।
ब्रह्महत्याभयाद्भीतचितेनैतद् विचिन्तितम् ।
कृत्यं करोमि शान्त्यर्थं मुच्यते येन पातकात् ।। ६.२६ ।।
ततस्त्वया महाराज सकृन्नारायणं प्रभुम् ।
संचिन्त्य द्वादशी शुद्धा त्वया राजन्नुपोषिता ।। ६.२७ ।।
नारायणो मे सुप्रीत इति प्रोक्त्वा शुभेऽहनि ।
गौर्दत्ता विधिना सद्यो मृतोऽस्युदरशूलतः ।। ६.२८ ।।
अभुक्तो द्वादशीधर्मे यत् तत्रापि च कारणम् ।
कथयामि भवत्पत्नी नाम्ना नारायणी शुभा ।। ६.२९ ।।
सा कण्ठगेन प्राणेन व्याहृता तेन ते गतिः ।
कल्पमेकं महाराज जाता विष्णुपुरे तव ।। ६.३० ।।
अहं च तव देहस्थः सर्वं जानामि चाक्षयम् ।
ब्रह्मग्रहो महाघोरः पीडयामीति मे मतिः ।। ६.३१ ।।
तावद्विष्णोस्तु पुरुषैः किङ्करैर्मुसलैरहम् ।
प्रहतः संक्षयं यातस्ततस्ते रोमकूपतः ।
स्वर्गस्थस्यापि राजेन्द्र स्थितोऽहं स्वेन तेजसा ।। ६.३२ ।।
ततोऽहःकल्पनिर्वृत्ते रात्रिकल्पे च सत्तम ।

इदानीमादिसृष्टौ तु कृते नृपतिसत्तम ।। ६.३३ ।।
संभूतस्त्वं महाराज राज्ञः सुमनसो गृहे ।
काश्मीरदेशाधिपतेरहं चाङ्गरुहैस्तव ।। ६.३४ ।।
यज्ञैरिष्टं त्वयानेकैर्बहुभिश्चाप्तदक्षिणैः ।
न चाहं तैरपहतो विष्णुस्मरणवर्जितैः ।। ६.३५ ।।
इदानीं यत् त्वया स्तोत्रं पुण्डरीकाक्षपारकम् ।
पठितं तत्प्रभावेन विहायाङ्गरुहाण्यहम् ।
एकीभूतः पुनर्जातो व्याधरूपो नृपोत्तम ।। ६.३६ ।।
अहं भगवतः स्तोत्रं श्रुत्वा प्राक्पापमूर्त्तिना ।
मुक्तोऽस्मि धर्मबुद्धिर्मे वर्त्तते साम्प्रतं विभो ।। ६.३७ ।।
एतच्छ्रुत्वा वचो राजा परं विस्मयमागतः ।
वरेण छन्दयामास तं व्याधं राजसत्तमः ।। ६.३८ ।।
राजोवाच ।
स्मारितोऽस्मि यथा व्याध त्वया जन्मान्तरं गतम् ।
तथा त्वं मत्प्रसादेन धर्मव्याधो भविष्यसि ।। ६.३९ ।।
यश्चैतत् पुण्डरीकाक्षपारगं श्रृणुयात् परम् ।
तस्य पुष्करयात्रायां विधिस्नानफलं भवेत् ।। ६.४० ।।
श्रीवराह उवाच ।
एवमुक्त्वा ततो राजा विमानवरमास्थितः ।
परेण तेजसा योगमवापाशेषधारिणि ।। ६.४१ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे षष्ठोऽध्यायः ।। ६ ।।

धरण्युवाच ।
रैभ्योऽसौ मुनिशार्दूलः श्रुत्वा सिद्धं वसुं तदा ।
स्वयं किमकरोद् देव संशयो मे महानयम् ।। ७.१ ।।
श्रीवराह उवाच ।
स रैभ्यो मुनिशार्दूलः श्रुत्वा सिद्धं वसुं तदा ।
आजगाम गयां पुण्यां पितृतीर्थं तपोधनः ।
तत्र गत्वा पितॄन् भक्त्या पिण्डदानेन तर्पयत् ।। ७.२ ।।
ततो वै सुहमत्तीव्रं तपः परमदुश्चरम् ।
चरतस्तस्य तत्तीव्रं तपो रैभ्यस्य धीमतः ।
आजगाम महायोगी विमानस्थोऽतिदीप्तिमान् ।। ७.३ ।।
त्रसरेणुसमे शुद्धे विमाने सूर्यसन्निभे ।
परमाणुप्रमाणेन पुरुषस्तत्र दीप्तिमान् ।। ७.४ ।।
सोऽब्रवीद् रैभ्य किं कार्यं तपश्चरसि सुव्रत ।
एवमुक्त्वा दिवो भूमिं मापयामास वै पुमान् ।। ७.५ ।।
तत्रापि रथपञ्चाभं विमानं सूर्यसन्निभम् ।
युगपद् ब्रह्मभुवनं व्याप्नुवन्तं ददर्श सः ।। ७.६ ।।
ततः स विस्मयाविष्टो रैभ्यः प्रणतिपूर्वकम् ।
पप्रच्छ तं महायोगिन् को भवान् प्रब्रवीतु मे ।। ७.७ ।।
पुरुष उवाच ।
अहं रुद्रादवरजो ब्रह्मणो मानसः सुतः ।
नाम्ना सनत्कुमारेति जनलोके वसाम्यहम् ।। ७.८ ।।
भवतः पार्श्वमायातः प्रणयेन तपोधन ।
धन्योऽसि सर्वथा वत्स ब्रह्मणः कुलवर्धनः ।। ७.९ ।।
रैभ्य उवाच ।
नमोऽस्तु ते योगिवर प्रसीद
दयां महयं कुरुषे विश्वरूप ।
किमत्र कृत्यं वद योगिसिंह
कथं हि धन्योऽहमुक्तस्त्वया च ।। ७.१० ।।
सनत्कुमार उवाच ।
धन्यस्त्वमेव द्विजवर्यमुख्य
यद् वेदवादाभिरतः पितॄंश्च ।
प्रीणासि मन्त्रव्रतजप्यहोमै-
र्गयां समासाद्य तथाऽन्नपिण्डैः ।। ७.११ ।।
श्रृणुष्व चान्यं नृपतिर्बभूव
विशालनामा स पुरीं विशालाम् ।
उवास धन्यो धृतिमानपुत्रः
स्वयं विशालाधिपतिर्द्विजाग्र्यान् ।
पप्रच्छ पुत्रार्थममित्रसाह -

स्ते ब्राह्मणाश्चोचुरदीनसत्त्वाः ।। ७.१२ ।।
र्गत्वा गयामन्नदानैरनेकैः ।
ध्रुवं सुतस्ते भविता नृपेश
सुसंप्रदाता सकलक्षितीशः ।। ७.१३ ।।
इतीरितो ब्राह्मणैः स प्रहृष्टो
राजा विशालाधिपतिः प्रयत्नात् ।
आगत्य तेन प्रवरेण तीर्थे
मघासु भक्त्याऽथ कृतं पितॄणाम् ।। ७.१४ ।।
पिण्डप्रदानं विधिना प्रयत्ना-
ददद्वियत्युत्तममूर्तयस्तान् ।
पश्यन् स पुंसः सितपीतकृष्णा-
नुवाच राजा किमिदं भवद्भिः ।
उपेक्ष्यते शंसत सर्वमेव
कौतूहलं मे मनसि प्रवृत्तम् ।। ७.१५ ।।
सित उवाच ।
अहं सितस्ते जनकोऽस्मि तात
नाम्ना च वृत्तेन च कर्मणा च ।
अयं च मे जनको रक्तवर्णो
नृशंसकृद् ब्रह्महा पापकारी ।। ७.१६ ।।
अधीश्वरो नाम परः पिताऽस्य
कृष्णो वृत्त्या कर्मणा चापि कृष्णः ।
एतेन कृष्णेन हताः पुरा वै
जन्मन्यनेके ऋषयः पुराणाः ।। ७.१७ ।।
एतौ मृतौ द्वावपि पुत्र रौद्र-
मवीचिसंज्ञं नरकं प्रपन्नौ ।
अधीश्वरो मे जनकः परोऽस्य
कृष्णः पिता द्वावपि दीर्घकालम् ।
अहं च शुद्धेन निजेन कर्मणा
शक्रासनं प्रापितो दुर्लभं ततः ।। ७.१८ ।।
त्वया पुनर्मन्त्रविदा गयायां
पिण्डप्रदानेन बलादिमौ च ।
मेलापितौ तीर्थपिण्डप्रदान -
प्रभावतो मे नरकाश्रितावपि ।। ७.१९ ।।
पितॄन् पितामहांस्तत्र तथैव प्रपितामहान् ।
प्रीणयामीति तत्तोयं त्वया दत्तमरिंदम ।। ७.२० ।।
तेनास्मद्युगपद्योगो जातो वाक्येन सत्तम ।
तीर्थप्रभावाद् गच्छामः पितृलोकं न संशयः ।। ७.२१ ।।
अत्र पिण्डप्रदानेन एतौ तव पितामहौ ।

दुर्गतावपि संसिद्धौ पापकृद्विकृतिं गतौ ।। ७.२२ ।।
तीर्थप्रभाव एषोऽस्मिन् ब्रह्मघ्नस्यापि तत्सुतः ।
पुतः पिण्डप्रदानेन कुर्यादुद्धरणं पुनः ।। ७.२३ ।।
एतस्मात् कारणात् पुत्र अहमेतौ विगृह्य वै ।
आगतोऽस्मि भवन्तं वै द्रष्टुं यास्यामि साम्प्रतम् ।
एतस्मात् कारणाद् रैभ्य भवान् धन्यो मयोच्यते ।। ७.२४ ।।
सकृद् गयाभिगमनं सकृत्पिण्डप्रदापनम् ।
दुर्लभं त्वं पुनर्नित्यमस्मिन्नेव व्यवस्थितः ।। ७.२५ ।।
किमनु प्रोच्यते रैभ्य तव पुण्यमिदं प्रभो ।
येन साक्षाद् गदापाणिर्दृष्टो नारायणः स्वयम् ।। ७.२६ ।।
ततो गदाधरः साक्षादस्मिंस्तीर्थे व्यवस्थितः ।
अतोऽतिविख्याततमं तीर्थमेतद् द्विजोत्तम ।। ७.२७ ।।
श्रीवराह उवाच ।
एवमुक्त्वा महायोगी तत्रैवान्तरधीयत ।
रैभ्योऽपि च गदापाणेर्हरेः स्तोत्रमथाकरोत् ।। ७.२८ ।।
रैभ्य उवाच ।
गदाधरं विबुधजनैरभिष्टुतं
धृतक्षमं क्षुधितजनार्त्तिनाशनम् ।
शिवं विशालासुरसैन्यमर्दनं
नमाम्यहं हतसकलाशुभं स्मृतौ ।। ७.२९ ।।
पुराणपूर्वं पुरुषं पुरुष्टृतं
पुरातनं विमलमलं नृणां गतिम् ।
त्रिविक्रमं धृतधरणिं बलेर्हं
गदाधरं रहसि नमामि केशवम् ।। ७.३० ।।
सुशुद्धभावं विभवैरुपावृतं
श्रियावृतं विगतमलं विचक्षणम् ।
क्षितीश्वरैरपगतकिल्बिषैः स्तुतं
गदाधरं प्रणमति यः सुखं वसेत् ।। ७.३१ ।।
सुरासुरैरर्च्चितपादपङ्कजं
केयूरहाराङ्गदमौलिधारिणम् ।
अब्धौ शयानं च रथाङ्गपाणिनं
गदाधरं प्रणमति यः सुखं वसेत् ।। ७.३२ ।।
सितं कृते त्रेतायुगेऽरुणं विभुं
तथा तृतीये पीतवर्णमच्युतम् ।
कलौ घनालिप्रतिमं महेश्वरं
गदाधरं प्रणमति यः सुखं वसेत् ।। ७.३३ ।।
बीजोद्भवो यः सृजते चतुर्मुख-
स्तथैव नारायणरूपतो जगत् ।

प्रपालयेद् रुद्रवपुस्तथान्तकृद्
गदाधरो जयतु षडर्द्धमूर्तिमान् ।। ७.३४ ।।
सत्त्वं रजश्चैव तमो गुणास्त्रय-
स्त्वेतेषु नान्यस्य समुद्भवः किल ।
स चैक एव त्रिविधो गदाधरो
दधातु धैर्यं मम धर्ममोक्षयोः ।। ७.३५ ।।
संसारतोयार्णवदुःखतन्तुभि-
र्वियोगनक्रक्रमणैः सुभीषणैः ।
मज्जन्तमुच्चैः सुतरां महाप्लवे
गदाधरो मामु दधातु पोतवत् ।। ७.३६ ।।
स्वयं त्रिमूर्तिः स्वमिवात्मनात्मनि
स्वशक्तितश्चाण्डमिदं ससर्ज्ज ह ।
तस्मिञ्जलोत्थासनमार्यतेजसं
ससर्ज्ज यस्तं प्रणतोऽस्मि भूधरम् ।। ७.३७ ।।
मत्स्यादिनामानि जगत्सु केवलं
सुरादिसंरक्षणतो वृषाकपिः ।
मुख्यस्वरूपेण समन्ततो विभु-
र्गदाधरो मे विदधातु सद्गतिम् ।। ७.३८ ।।
श्रीवराह उवाच ।
एवं स्तुतस्तदा विष्णुर्भक्त्या रैभ्येण धीमता ।
प्रादुर्बभूव सहसा पीतवासा जनार्दनः ।। ७.३९ ।।
शङ्खचक्रगदापाणिर्गरुडस्थो वियद्गतः ।
उवाच मेघगम्भीरधीरवाक् पुरुषोत्तमः ।। ७.४० ।।
तुष्टोऽस्मि रैभ्य भक्त्या ते स्तुत्या च द्विजसत्तम ।
तीर्थस्नानेन च विभो ब्रूहि यत्तेऽभिवाञ्छितम् ।। ७.४१ ।।
रैभ्य उवाच ।
गतिं मे देहि देवेश यत्र ते सनकादयः ।
वसेयं तत्र येनाहं त्वत्प्रसादाद् गदाधर ।। ७.४२ ।।
देव उवाच ।
एवमस्त्विति ते ब्रह्मन्नित्युक्त्वाऽन्तरधीयत ।
भगवानपि रैभ्यस्तु दिव्यज्ञानसमन्वितः ।। ७.४३ ।।
क्षणाद् बभूव देवेन परितुष्टेन चक्रिणा ।
जगाम यत्र ते सिद्धाः सनकाद्या महर्षयः ।। ७.४४ ।।
एतच्च रैभ्यनिर्द्दिष्टं स्तोत्रं विष्णोर्गदाभृतः ।
यः पठेत् स गयां गत्वा पिण्डदानाद् विशिष्यते ।। ७.४५ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे सप्तमोऽध्यायः ।। ७ ।।

श्रीवराह उवाच ।
योऽसौ वसोः शरीरे तुव्याधो भूत्वा नृपस्य ह ।
स स्ववृत्त्यां स्थितः कालं चतुर्वर्षसहस्त्रिकम् ।। ८.१ ।।
एकैकं स्वकुटुम्बार्थे हत्वा वनचरं मृगम् ।
भृत्यातिथिहुताशानां प्रीणनं कुरुते सदा ।। ८.२ ।।
मिथिलायां वरारोहे सदा पर्वणि पर्वणि ।
पितॄणां कुरुते श्राद्धं स्वाचारेण विचक्षणः ।। ८.३ ।।
अग्निं परिचरन् नित्यं वदन् सत्यं सुभाषितम् ।
प्राणयात्रानुसक्तस्तु योऽसौ जीवं न पातयेत् ।। ८.४ ।।
एवं तु वसतस्तस्य धर्मबुद्धिर्महातपाः ।
पुत्रस्त्वर्जुनको नाम बभूव मुनिवद्वशी ।। ८.५ ।।
तस्य कालेन महता चारित्रेण च धीमतः ।
बभूवार्ज्जुनकी नाम कन्या च वरवर्णिनी ।। ८.६ ।।
तस्या यौवनकाले तु चिन्तयामास धर्मवित् ।
कस्येयं दीयते कन्या को वा योग्यश्च वै पुमान् ।। ८.७ ।।
इति चिन्तयतस्तस्य मतङ्गस्य सुतं प्रति ।
धर्मव्याधस्य सुव्यक्तं प्रसन्नाख्यं प्रति ब्रुवन् ।। ८.८ ।।
एवं संचिन्त्य मातङ्गः प्रसन्नं प्रति सोद्यतः ।
उवाच तस्य पितरं प्रसन्नायार्ज्जुनीं भवान् ।
गृहाण तपतां श्रेष्ठ स्वयं दत्तां महात्मने ।। ८.९ ।।
मतङ्ग उवाच ।
प्रसन्नोऽयं मम सुतः सर्वशास्त्रविशारदः ।
गृहणाम्यर्जुनकीं कन्यां त्वत्सुतां व्याधसत्तम ।। ८.१० ।।
एवमुक्ते तदा कन्यां धर्मव्याधो महातपाः ।
मतङ्गपुत्राय ददौ प्रसन्नाय च धीमते ।। ८.११ ।।
धर्मव्याधस्तदा कन्यां दत्वा स्वगृहमीयिवान् ।
साऽपि श्वशुरयोर्भर्तुः शुश्रीषणपराऽभवत् ।। ८.१२ ।।
अथ कालेन महता सा कन्याऽर्जुनकी शुभा ।
उक्ता श्वश्रुवा सुता पुत्रि जीवहन्तुस्त्वमीदृशी ।
न जानासि तपश्चर्तुं भर्त्तुराराधनं तथा ।। ८.१३ ।।
साऽपि स्वल्पापराधेन भर्त्सिता तनुमध्यमा ।
पितुर्वेश्मगता बाला रोदमाना मुहुर्मुहुः ।। ८.१४ ।।
पित्रा पृष्टा किमेतत् ते पुत्रि रोदनकारणम् ।
एवमुक्ता तदा सा तु कथयामास भामिनी ।। ८.१५ ।।
श्वश्वाऽहमुक्ता तीव्रेण कोपेन महता पितः ।
जीवहन्तुः सुतेत्युच्चैरसकृद् व्याधजेति च ।। ८.१६ ।।
एतच्छ्रुत्वा स धर्मात्मा धर्मव्याधो रुषान्वितः ।
मतङ्गस्य गृहं सोऽथ गत्वा जनपदैर्वृतम् ।। ८.१७ ।।
तस्यागतस्य संबन्धी मतङ्गो जयतां वरः ।
आसनाद्यर्घ्यपाद्येन पूजयित्वेदमब्रवीत् ।
किमागमनकृत्यं ते किं करोम्यागतक्रियाम् ।। ८.१८ ।।
व्याध उवाच ।
भोजनं किंचिदिच्छामि भोक्तुं चैतन्यवर्जितम् ।
कौतूहलेन येनाहमागतो भवतो गृहम् ।। ८.१९ ।।
मतङ्ग उवाच ।
गोधूमा व्रीमयश्चैव संस्कृता मम वेश्मनि ।
भुज्यतां धर्मविच्छ्रेष्ठ यथाकामं तपोधन ।। ८.२० ।।
व्याध उवाच ।
पश्यामि कीदृशास्ते हि गोधूमा व्रीहयो यवाः ।
स्वरूपेण च सन्त्येते येन वो वेद्मि सत्तम ।। ८.२१ ।।
श्रीवराह उवाच ।
एवमुक्ते मतङ्गेन शूर्पं गोधूमपूरितम् ।
अपरं तत्र व्रीहीणां धर्मव्याधाय दर्शितम् ।। ८.२२ ।।
दृष्ट्वा व्रीहीन् सगोधूमान् धर्मव्याधो वरासनात् ।

उत्थाय गन्तुमारेभे मतङ्गेन निवारितः ।। ८.२३ ।।

किमर्थं गन्तुमारब्धं त्वया वद महामते ।
अभुक्तेनैव संसिद्धं मद्गृहे चान्नमुत्तमम् ।
पाचयित्वा स्वयं चैव कस्मात् त्वं नाद्य भुञ्जसे ।। ८.२४ ।।
व्याध उवाच ।
सहस्त्रशः कोटिशश्च जीवान् हंसि दिने दिने ।
अथेदृशस्य पापस्य कोऽन्नं भुञ्जति सत्पुमान् ।। ८.२५ ।।
अचैतन्यं यदि गृहे विद्यतेऽन्नं सुसंस्कृतम् ।
इदानीमत्र संदृष्टा एते तु जलजन्तवः ।। ८.२६ ।।
(उप्ताः सहस्त्रतां यान्ति प्रतिसंवत्सरं मुने ।) ।। ८.२६ (१)।।
अहमेकं कुटुम्बार्थे हन्म्यरण्ये पशुं दिने ।
तं चेत् पितृभ्यः संस्कृत्य दत्त्वा भुञ्जामि सानुगः ।। ८.२७ ।।
त्वं तु जीवान् बहून् हत्वा स्वकुटुम्बेन सानुगः ।
भुञ्जन्नेतेन सततमभोज्यं तन्मतं मम ।। ८.२८ ।।
ब्रह्मणा तु पुरा सृष्टा ओषध्यः सर्ववीरुधः ।
यज्ञार्थं तत्तु भूतानां भक्ष्यमित्येव वै श्रुतिः ।। ८.२९ ।।
दिव्यो भौतस्तथा पैत्रो मानुषो ब्राह्म एव च ।
एते पञ्च महायज्ञा ब्रह्मणा निर्मिताः पुरा ।। ८.३० ।।
ब्राह्मणानां हितार्थाय इतरेषां च तन्मुखम् ।
इतरेषां तु वर्णानां ब्राह्मणैः कारिताः शुभाः ।। ८.३१ ।।
एवं यदि विभागः स्याद् वरान्नं तद् विशुध्यति ।
अन्यथा व्रीहयोऽप्येते एकैके मृगपक्षिणः ।
मन्तव्या दातृभोक्तॄणां महामांसं तु तत् स्मृतम् ।। ८.३२ ।।
मया ते दुहिता दत्ता पुत्रार्थे देवरूपिणी ।
सा च त्वद्भार्यया प्रोक्ता दुहिता जन्तुघातिनः ।। ८.३३ ।।
अतोऽर्थमागतोऽहं ते गृहं प्रति समीक्षितुम् ।
आचारं देवपूजां च अतिथीनां च तर्पणम् ।। ८.३४ ।।
एतेषामेकमप्यत्र कुर्वन्नपि न दृश्यते ।
तद् गृहं गन्तुमिच्छामि पितॄणां श्राद्धकाम्यया ।। ८.३५ ।।
स्वगृहे नैव भुञ्जामि पितॄणां कार्यमित्युत ।
अहं व्याधो जीवघाती न तु त्वं लोकहिंसकः ।। ८.३६ ।।
मत्सुता जीवघातस्य यदोढा त्वत्सुतेन च ।
तन्महत्त्वं च संजातं प्रायश्चितं तपोधन ।। ८.३७ ।।
एवमुक्त्वा स चोत्थाय शप्त्वा नारीं तदा धरे ।
मा स्नुषाभिः समं श्वश्र्वा विश्वासो भवतु क्वचित् ।। ८.३८ ।।
मा च स्नुषा कदाचित् स्याद् या श्वश्रूं जीवतीमिषेत् ।
एवमुक्त्वा गतो व्याधः स्वगृहं प्रति भामिनि ।। ८.३९ ।।
ततो देवान् पितॄन् भक्तया पूजयित्वा विचक्षणः ।
पुत्रं चार्जुनकं स्थाप्य स्वसन्ताने महातपाः ।। ८.४० ।।
धर्मव्याधो जगामाशु तीर्थं त्रैलोक्यविश्रुतम् ।
पुरुषोत्तमाख्यं च परं तत्र गत्वा समाहितः ।
तपश्चचार नियतः पठन् स्तोत्रमिदं धरे ।। ८.४१ ।।
नमामि विष्णुं त्रिदशारिनाशनं
विशालवक्षस्थलसंश्रितश्रियम् ।
सुशासनं नीतिमतां परां गतिं
त्रिविक्रमं मन्दरधारिणं सदा ।। ८.४२ ।।
दामोदरं रञ्जितभूतलं धिया
यशोंशुशुभ्रं भ्रमराङ्गसप्रभम् ।
धराधरं नरकरिपुं पुरुष्टुतं
नमामि विष्णुं शरणं जनार्दनम् ।। ८.४३ ।।
(नरं नृसिंहं हरिमीश्वरं प्रभुं
त्रिधामनामानमनन्तवर्चसम् ।
सुसंस्कृतास्यं शरणं नरोत्तमं

व्रजामि देवं सततं तमच्युतम् ।। ८.४३ (१))
त्रिधा स्थितं तिग्मरथाङ्गपाणिनं
नयस्थितं तृप्तमनुत्तमैर्गुणैः ।
निःश्रेयसाख्यं क्षपितेतरं गुरुं
नमामि विष्णुं पुरुषोत्तमं त्वहम् ।। ८.४४ ।।
(हतौ पुराणौ मधुकैटभावुभौ
बिभर्त्ति च क्ष्मां शिरसा सदा हि सः ।
यथा स्तुतो मे प्रसभं सनातनो
दधातु विष्णुः सुखमूर्जितं मम ।। ८.४४ (१))
महावराहो हविषाम्बुभोजनो
जनार्दनो मे हितकृच्चितीमुखः ।
क्षितीधरो मामुदधिक्षयो महान्
स पातु विष्णुः शरणार्थिनं तु माम् ।। ८.४५ ।।
मायाततं येन जगत्त्रयं कृतं
यथाग्निनैकेन ततं चराचरम् ।
चराचरस्य स्वयमेव सर्वतः
स मेऽस्तु विष्णुः शरणं जगत्पतिः ।। ८.४६ ।।
भवे भवे यश्च ससर्ज्ज कं ततो
जगत् प्रसूतं सचराचरं त्विदम् ।
ततश्च रुद्रात्मवति प्रलीयते-
ऽन्वतो हरिर्विष्णुहरस्तथोच्यते ।। ८.४७ ।।
खात्मेन्दुपृथ्वीपवनाग्निभास्करा
जलं च यस्य प्रभवन्ति मूर्त्तयः ।
स सर्वदा मे भगवान् सनातनो
ददातु शं विष्णुरचिन्त्यरूपधृक् ।। ८.४८ ।।
इतीरिते तस्य सनातनः स्वयं
पुरो बभूवाद्भुतरूपदर्शनः ।

धरण्युवाच ।
आदौ कृतयुगे नाथ किं कृतं विश्वमूर्त्तिना ।
नारायणेन तत्सर्वं श्रोतुमिच्छामि तत्त्वतः ।। 9.1 ।।
श्रीवराह उवाच ।
पूर्वं नारायणस्त्वेको नासीत् किञ्चिद्धरेः परम् ।
सैक एव रतिं लेभे नैव स्वच्छन्दकर्मकृत् ।। 9.2 ।।
तस्य द्वितीयमिच्छन्तश्चिन्ता बुद्ध्यात्मिका बभौ ।
असावित्येव संज्ञाया क्षणं भास्करसन्निभा ।। 9.3 ।।
तस्या अपि द्विधा भूता चिन्ताऽभूद ब्रह्मवादिनी ।
उमेति संज्ञया यत्तत्सदा मर्त्ये व्यवस्थिता ।। 9.4 ।।
ओमित्येकाक्षरीभूता ससर्जेमां महीं तदा ।
भूः ससर्ज भुवं सोऽपि स्वः ससर्ज ततो महः ।। 9.5 ।।
ततश्च जन इत्येव तपश्चात्मा प्रलीयते ।
एतदोतं तथा प्रोतं सूत्रे मणिगणा इव ।। 9.6 ।।
जगत् प्रणवतो भूतं शून्यमेतत् स्थितं तदा ।
येयं मूर्तिर्भगवतः शंकरः स स्वयं हरिः ।। 9.7 ।।
शून्याँल्लोकानिमान् दृष्ट्वा सिसृक्षुर्मूर्त्तिमुत्तमाम् ।
क्षोभयित्वा मनोधाम तत्राकारः स्वमात्रतः ।। 9.8 ।।
स्थितस्तस्मिन् यदा क्षुब्धे ब्रह्माण्डमभवत्तदा ।
तस्मिंस्तु शकलीभूते भूर्लोकं च व्यवस्थितम् ।। 9.9 ।।
अपरं भुवनं प्रायान्मध्ये भास्करसन्निभम् ।
पुराणपुरुषो व्याप्य पद्मकोशे व्यवस्थितः ।। 9.10 ।।
स हि नारायणो देवः प्राजापत्येन तेजसा ।
अकाराद्यं स्वरं नाभ्यां हलं च विससर्ज ह ।। 9.11 ।।
अमूर्त्तसृष्टौ शास्त्राणि उदगायत् तदा दिशः ।
सुष्ट्वा पुनरमेयात्मा चिन्तयामास धारणम् ।। 9.12 ।।
तस्य चिन्तयतो नेत्रात् तेजः समभवन्महत् ।
दक्षिणं वह्निसङ्काशं वामं तुहिनसन्निभम् ।। 9.13 ।।
तं दृष्ट्वा चन्द्रसूर्यौ तु कल्पितौ परमेष्ठिना ।
ततः प्राणः समुत्तस्थौ वायुश्च परमेष्ठिनः ।। 9.14 ।।
स एव वायुर्भगवान् योऽद्यापि हृदिगो विभुः ।
तस्माद् वह्निः समुत्तस्थौ तस्मादग्नेर्जलं महत् ।। 9.15 ।।
य एवाग्निः स वै तेजो ब्राह्मं परमकारणम् ।
बाहुभ्यामप्यसौ तेजः क्षात्रं तेजः ससर्ज ह ।। 9.16 ।।
ऊरुभ्यामपि वैश्यांश्च पद्भ्यां शूद्रांस्तथा विभुः ।
ततस्तु ससृजे यक्षान् राक्षसांश्च तथा विभुः ।। 9.17 ।।
चतुर्विधैस्तु भूर्लोकं भुवर्लोकं वियच्चरैः ।
भूतैः स्वर्मार्गगैरन्यैः स्वर्लोकं समपूरयत् ।। 9.18 ।।

महर्लोकं तथा तैस्तैर्भूतैश्च सनकादिभिः ।
जनोलोकं ततश्चैव वैराजैः समपूरयत् ।। 9.19 ।।
तपोलोकं ततो देवस्तपोनिष्ठैरपूरयत् ।
अपुनर्मारकैर्देवैः सत्यलोकमपूरयत् ।। 9.20 ।।
सृष्टिं सृष्ट्वा तथा देवो भगवान् भूतभावनः ।
कल्पसंज्ञं स्वकं घस्त्रं जागर्ति परमेश्वरः ।। 9.21 ।।
तस्मिन् जगति भूर्लोको भुवर्लोकश्च जायते ।
स्वर्लोकश्च त्रयोऽप्येते जायन्ते नात्र संशयः ।। 9.22 ।।
सुप्ते तु देवे कल्पान्ते तावती रात्रिरिष्यते ।
त्रै लोक्यमेतत् सुप्तं स्यात् तथोपप्लवतां गतम् ।। 9.23 ।।
ततो रात्र्यां व्यतीतायामुत्थितः कमलेक्षणः ।
चिन्तयामास तान् वेदान् मातरं च चतुर्ष्वपि ।
चिन्तयानः स देवेशस्तान् वेदान् नाध्यगच्छत ।। 9.24 ।।
लोकमार्गस्थितिं कर्तुं निद्राज्ञानेन मोहितः ।
चिन्तयामास देवेशो नात्र वेदा व्यवस्थिताः ।। 9.25 ।।
ततः स्वमूर्तौ तोयाख्ये लीनान् दृष्ट्वा सुरेश्वरः ।
जिघृक्षुश्चिन्तयामास मत्स्यो भूत्वाविशज्जलम् ।। 9.26 ।।
एवं ध्यात्वा महामत्स्यस्तत्क्षणात् समजायत ।
विवेश च जलं देवः समन्तात् क्षोभयन्निव ।। 9.27 ।।
तस्मिन् प्रविष्टे सहसा जलं तु
महामहीधृग्वपुषि प्रकाशम् ।
मात्स्यं गते देववरे महोदधिं
हरिं स्तवैस्तुष्टुवुरुद्धृतक्षितिम् ।। 9.28 ।।
नमोऽस्तु वेदान्तरगाप्रतर्क्य
नमोऽस्तु नारायण मत्स्यरूप ।
नमोऽस्तु ते सुस्वर विश्वमूर्ते
नमोऽस्तु विद्याद्वयरूपधारिन् ।। 9.29 ।।
नमोऽस्तु चन्द्रार्कमरुत्स्वरूप
जलान्तविश्वस्थित चारुनेत्र ।
नमोऽस्तु विष्णोः शरणं व्रजामः
प्रपाहि नो मत्स्यतनुं विहाय ।। 9.30 ।।
त्वया ततं विश्वमनन्तमूर्ते
पृथग्गते किञ्चिदिहास्ति देव ।
भवान् न चास्य व्यतिरिक्तमूर्त्ति-
स्त्वत्तो वयं ते शरणं प्रपन्नाः ।। 9.31 ।।
खात्मेन्दुवह्निश्च मनश्च रूपं
पुराणमूर्तेस्तव चाब्जनेत्र ।
क्षमस्व शंभो यदि भक्तिहीनं

त्वया जगद्भासति देवदेव ।। 9.32 ।।
विरुद्धमेतत् तव देवरूपं
सुभीषणं सुस्वनमद्रितुल्यम् ।
पुराण देवेश जगन्निवास
शमं प्रयाह्यच्युत तीव्रभानो ।। 9.33 ।।
वयं हि सर्वे शरणं प्रपन्ना
भयाच्च ते रूपमिदं प्रपश्य ।
लोके समस्तं भवता विना तु
न विद्यते देहगतं पुराणम् ।। 9.34 ।।
एवं स्तुतस्तदा देवो जलस्थान् जगृहे च सः ।
वेदान् सोपनिषच्छास्त्रानन्तःस्थं रूपमास्थितः ।। 9.35 ।।
यावत्स्वमूर्तिर्भगवांस्तावदेव जगत् त्विदम् ।
कूटस्थे तल्लयं याति विकृतिस्थे विवर्द्धते ।। 9.36 ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे नवमोऽध्यायः ।। 9 ।।

श्रीवराह उवाच ।
एवं सृष्ट्वा जगत्सर्वं भगवान् लोकभावनः ।
विरराम ततः सृष्टिर्व्यवर्द्धत धरे तदा ।। १०.१ ।।
वृद्धायामथ सृष्टौ तु सर्वे देवाः पुरातनम् ।
नारायणाख्यं पुरुषं यजन्तो विविधैर्मखैः ।। १०.२ ।।
द्वीपेषु चैव सर्वेषु वर्षेषु च मखैर्हरिम् ।
देवाः सत्रैर्महद्भिस्ते यजन्तः श्रद्धयाऽन्विताः ।
तोषयामासुरत्यर्थं स्वं पूज्यं कर्तुमीप्सवः ।। १०.३ ।।
एवं तोषयतां तेषां बहुवर्षसहस्त्रिकम् ।
काले देवस्तदा तुष्टः प्रत्यक्षत्वं जगाम ह ।। १०.४ ।।
अनेकबाहूदरवक्त्रनेत्रो
महागिरेः श्रृङ्गमिवोल्लिखंस्तदा ।
उवाच किं कार्यमथो सुरेशो
ब्रूतां वरं देववरा वरं वः ।। १०.५ ।।
देवा ऊचुः ।
जयस्व गोविन्द महानुभाव
त्वया वयं नाथ वरेण देवाः ।
मनुष्यलोकेऽपि भवन्तमाद्यं
विहाय नास्मान्भवते ह कश्चित् ।। १०.६ ।।
रुद्रादित्या वसवो ये च साध्या
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।
सर्वे भवन्तं शरणं गताः स्म
कुरुष्व पूज्यानिह विश्वमूर्ते ।। १०.७ ।।
एवमुक्तस्तदा तैस्तु महायोगेश्वरो हरिः ।
करोमि सर्वान् वः पूज्यानित्युक्त्वाऽन्तरधीयत ।। १०.८ ।।
देवा अपि निजौकांसि गतवन्तः सनातनम् ।
स्तुवन्तः परमेशोऽपि त्रिविधं भावमास्थितः ।। १०.९ ।।
एवं त्रिधा जगद्धाता भूत्वा देवान् महेश्वरः ।
आराध्य सात्त्विकं राजं तामसं च त्रिधा स्थितम् ।। १०.१० ।।
सात्त्विकेन पठेद् वेदान् यजेद् यज्ञेन देवताः ।
आत्मनोऽवयवो भूत्वा राजसेनापि केशवः ।। १०.११ ।।
स कालरूपिणं रौद्रं प्रकृत्या शूलपाणिनम् ।
आत्मनो राजसीं मूर्तिं पूजयामास भक्तितः ।
तामसेनापि भावेन असुरेषु व्यवस्थितः ।। १०.१२ ।।
एवं त्रिधा जगद्धाता भूत्वा देवान् महेश्वरः ।
आराधयामास ततो लोकोऽपि त्रिविधोऽभवत् ।। १०.१३ ।।
ब्रह्मविष्णुमहेशाननाम्ना गृह्य व्यवस्थितः ।
स च नारायणो देवः कृते युगवरे प्रभुः ।। १०.१४ ।।

त्रेतायां रुद्ररूपस्तु द्वापरे यज्ञमूर्तिमान् ।
कलौ नारायणो देवो बहुरूपो व्यजायत ।। १०.१५ ।।
तस्यादिकृत्ततो विष्णोश्चरितं भूरितेजसः ।
श्रृणुष्व सर्वं सुश्रोणि गदतो मम भामिनि ।। १०.१६ ।।
आसीत् कृतयुगे राजा सुप्रतीको महाबलः ।
तस्य भार्याद्वयं चासीदविशिष्टं मनोरमम् ।। १०.१७ ।।
विद्युत्प्रभा कान्तिमती तयोरेते तु नामनी ।
तयोः पुत्रं समं राजा न लेभे यत्नवानपि ।। १०.१८ ।।
यदा तदा मुनिश्रेष्ठमात्रेयं वीतकल्मषम् ।
तोषयामास विधिना चित्रकूटे नगोत्तमे ।। १०.१९ ।।
सक ऋषिस्तोषितस्तेन दीर्घकालं वरार्थिना ।
वरं दिदित्सया यावदब्रवीदत्रिजो मुनिः ।। १०.२० ।।
तावदिन्द्रोऽपि करिणा गतः पार्श्वेन तस्य ह ।
देवसैन्यैः परिवृतस्तूष्णीमेव महाबलः ।। १०.२१ ।।
तं दृष्ट्वाऽन्तर्गतप्रीतिमप्रीतिं प्रीतवान् मुनिः ।
चुकोप देवराजाय शापमुग्रं ससर्ज ह ।। १०.२२ ।।
यस्मात् त्वया ममावज्ञा कृता मूढ दिवस्पते ।
ततस्त्वं चालितो राज्यादन्यलोके वसिष्यसि ।। १०.२३ ।।
एवमुक्त्वाऽपि कोपेन सुरेशं तं च भूपतिम् ।
उवाच राजन् पुत्रस्ते भविता दृढविक्रमः ।। १०.२४ ।।
इन्द्ररूपोपमः श्रीमानुद्यच्छस्त्रः प्रतापवान् ।
विद्याप्रभावकर्म्मज्ञः क्रूरकर्मा भविष्यति ।
दुर्जयोऽतिबली राजा एवमुक्त्वा गतो मुनिः ।। १०.२५ ।।
सोऽपि राजा सुप्रतीको भार्यायां गर्भमावहत् ।
विद्युत्प्रभायां धर्मज्ञः साऽपि काले त्वसूयत ।। १०.२६ ।।
तस्याः पुत्रः समभवद् दुर्जयाख्यो महाबलः ।
जातकर्मादिसंस्कारं तस्य चक्रे मुनिः स्वयम् ।
(दुर्वासा नाम तपसो तस्य देहमकल्मषः ।। १०.२७ ।।)
तस्य चेष्टेर्बलेनासौ मुनेः सौम्यो बभूव ह ।
वेदशास्त्रार्थविद्यायां पारगो धर्मवान् शुचिः ।। १०.२८ ।।
या द्वितीयाऽभवत् पत्नी तस्य राज्ञो महात्मनः ।
नाम्ना कीर्त्तिमती धन्या तस्याः पुत्रो बभूव ह ।
नाम्ना सुद्युम्न इत्येवं वेदवेदाङ्गपारगः ।। १०.२९ ।।
अथ कालेन महता स राजा राजसत्तमः ।
सुप्रतीकः सुतं दृष्ट्वा दुर्जयं योग्यमन्तिके ।। १०.३० ।।
आत्मनो वृद्धभावं च वाराणस्याधिपो बली ।
चिन्तयामास राज्यार्थं दुर्जयं प्रति भामिनि ।। १०.३१ ।।
एवं संचिन्त्य धर्मात्मा तस्य राज्यं ददौ नृपः ।

स्वयं च चित्रकूटाख्यं पर्वतं स जगाम ह ।। १०.३२ ।।
दुर्जयोऽपि महद्राज्यं हस्त्यश्वरथवाजिभिः ।
संयोज्य चिन्तयामास राज्यवृद्धिं प्रति प्रभुः ।। १०.३३ ।।
एवं संचिन्त्य मेधावी हस्त्यश्वरथपत्तिभिः ।
समेतां वाहिनीं कृत्वा उत्तरां दिशमाश्रितः ।
तस्य चोत्तरतो देशाः सर्वे सिद्धा महात्मनः ।। १०.३४ ।।
भारताख्यमिदं वर्षं साधयित्वा सुदुर्जयः ।
ततः किंपुरुषं नाम वर्षं तेनापि साधितम् ।। १०.३५ ।।
ततः परतरं चान्यद्धरिवर्षं जिगाय सः ।
रम्यं हिरण्मयं चापि कुरुभद्राश्वमेव च ।
इलावृतं मेरुमध्यमेतत् सर्वं जिगाय सः ।। १०.३६ ।।
जित्वा जम्ब्वाख्यमेतद्धि द्वीपं यावदसौ नृपः ।
जगाम देवराजानं जेतुं सर्वसुरान्वितम् ।। १०.३७ ।।
मेरुपर्वतमारुह्य देवगन्धर्वदानवान् ।
गुह्यकान् किं नरान् दैत्यांस्ततो ब्रह्मसुतो मुनिः ।
नारदो दुर्जयजयं देवराजाय शंसत ।। १०.३८ ।।
तत इन्द्रस्त्वरायुक्तो लोकपालैः समन्वितः ।
जगाम दुर्जयं हन्तुं सोऽचिरेणास्त्रनिर्ज्जितम् ।
विहाय पर्वतं मेरुं मर्त्यलोकमिहागतः ।। १०.३९ ।।
पूर्वदेशे च देवेन्द्रो लोकपालैः समं प्रभुः ।
स्थितवांस्तस्य सुमहच्चरितं संभविष्यति ।। १०.४० ।।
दुर्जयश्च सुराञ्जित्वा यावत् प्रतिनिवर्त्तते ।
गन्धमादनपृष्ठे तु स्कन्धावारनिवेशनम् ।
कृत्वाऽवस्थितसंभारमागतं तापसौ तु तम् ।। १०.४१ ।।
तावगतावथाब्रूतां राजन् दुर्ज्जय लोकपाः ।
निवारितास्त्वया सर्वं लोकपालैर्विना जगत् ।
न प्रवर्त्तत तस्मान् नौ देहि तत्पदमुत्तमम् ।। १०.४२ ।।
एवमुक्ते ततस्तौ तु दुर्ज्जयः प्राह धर्मवित् ।
कौ भवन्ताविति ततस्तावूचतुररिंदमौ ।
विद्युत्सुविद्युन्नामानावसुराविति मानद ।। १०.४३ ।।
त्वया सम्प्रति चेच्छामो धर्म्यं सत्सु सुसंस्कृतौ ।
लोकपालमतं सर्वमावां कुर्म सुदुर्जय ।। १०.४४ ।।
एवमुक्ते दुर्ज्जयेन तौ स्वर्गे सन्निवेशितौ ।
लौकपालौ कृतौ सद्यस्ततोऽन्तर्धानं जग्मतुः ।। १०.४५ ।।
तयोरपि महत्कर्म चरितं च धराधरे ।
भविष्यति महाराजो दुर्जयो मन्दरोपरि ।। १०.४६ ।।
धनदस्य वनं दिव्यं दृष्ट्वा नन्दनसन्निभम् ।
मुदा बभ्राम रम्येऽस्मिन् स यावद्राजसत्तमः ।। १०.४७ ।।

तावत्सुवर्णवृक्षाधः कन्याद्वयमपश्यत ।
अतीवरूपसंपन्नमतीवाद्भुतदर्शनम् ।। १०.४८ ।।
दृष्ट्वा तु विस्मयाविष्टः क इमे शुभलोचने ।
एवं संचिन्त्य यावत् स क्षणमेकं व्यवस्थितः ।
तस्मिन् वने तावदुभौ तापसौ सोऽवलोकयत् ।। १०.४९ ।।
तौ दृष्ट्वा सहसा राजा ययौ प्रीत्या परां मुदम् ।
अवतीर्य द्विपात् तूर्णं नमश्चक्रे तयोः स्वयम् ।। १०.५० ।।
उपविष्टः स ताभ्यां तु कौश्ये दत्ते वरासने ।
पृष्टः कस्त्वं कुतश्चासि कस्य वा किमिह स्थितः ।। १०.५१ ।।
तौ प्रहस्याब्रवीद् राजा सुप्रतीकेति विश्रुतः ।
तस्य पुत्रः समुत्पन्नो दुर्जयो नाम नामतः ।। १०.५२ ।।
पृथिव्यां सर्वराजानो जिगीषन्निह सत्तमौ ।
आगतोऽस्मि ध्रुवं चैव स्मर्त्तव्योऽहं तपोधनौ ।
भवन्तौ कौ समाख्यातं ममानुग्रहकाङ्क्षया ।। १०.५३ ।।
तापसावूचतुः ।
आवां हेतृप्रहेत्राख्यौ मनोः स्वायंभुवः सुतौ ।
आवां देवविनाशाय गतौ स्वो मेरुपर्वतम् ।। १०.५४ ।।
तत्रावयोर्महासैन्यं गजाश्वरथसंकुलम् ।
जिगाय सर्वदेवानां शतशोऽथ सहस्त्रशः ।। १०.५५ ।।
ते च देवा महत्सैन्यं दृष्ट्वा सर्वं निपातितम् ।
असुरैरुज्झितप्राणं ततस्ते शरणं गताः ।। १०.५६ ।।
क्षीराब्धौ यत्र देवेशो हरिः शेते स्वयं प्रभुः ।
तत्र विज्ञापयामासुः सर्वे प्रणतिपूर्वकम् ।। १०.५७ ।।
देवदेव हरे सर्वं सैन्यं त्वसुरसत्तमैः ।
पराजितं परित्राहि भीतं विह्वल्लोचनम् ।। १०.५८ ।।
त्वया देवासुरे युद्धे पूर्वं त्राताः स्म केशव ।
सहस्त्रबाहोः क्रूरस्य समरे कालनेमिनः ।। १०.५९ ।।
इदानीमपि देवेश असुरौ देवकण्टकौ ।
हेतृप्रहेतृनामानौ बहुसैन्यपरिच्छदौ ।
तौ हत्वा त्राहि नः सर्वान् देवदेव जगत्पते ।। १०.६० ।।
एवमुक्तस्ततो देवो विष्णुर्नारायणः प्रभुः ।
अहं यास्यामि तौ हन्तुमित्युवाच जगत्पतिः ।। १०.६१ ।।
एवमुक्तास्ततो देवा मेरुपर्वतसन्निधौ ।
प्रतस्थुस्तेऽथ मनसा चिन्तयन्तो जनार्दनम् ।। १०.६२ ।।
तैः संचिन्तितमात्रस्तु देवश्चक्रगदाधरः ।
आवयोः सैन्यमाविश्य एक एव महाबलः ।। १०.६३ ।।
एकधा दशधात्मानं शतधा च सहस्त्रधा ।
लक्षधा कोटिधा कृत्वा स्वभूत्या च जगत्पतिः ।। १०.६४ ।।

एवं स्थिते देववरे अस्मत्सैन्ये महाबलः ।
यः कश्चिदसुरो राजन्नावयोर्बलमाश्रितः ।
स हतः पतितो भूमौ दृश्यते गतचेतनः ।। १०.६५ ।।
एवं तत् सहसा सैन्यं मायया विश्वमूर्तिना ।
निहतं साश्वकलिलं पत्तिद्विपसमाकुलम् ।। १०.६६ ।।
चतुरङ्गं बलं सर्वं हत्वा देवो रथाङ्गधृक् ।
आवां शोषावथो दृष्ट्वा गतोऽन्तर्द्धानमीश्वरः ।। १०.६७ ।।
आवयोरीदृशं कर्म दृष्टं देवस्य शार्ङ्गिणः ।
ततस्तमेव शरणं गतावाराधनाय वै ।। १०.६८ ।।
त्वं चास्मन्मित्रतनयः सुप्रतीकात्मजो नृप ।
इमे च आवयोः कन्ये गृहाण मनुजेश्वर ।
हेतृकन्या सुकेशी तु मिश्रकेशी प्रहेतृणः ।। १०.६९ ।।
दुर्जयस्त्वेवमुक्तस्तु हेतृणा ते उभे शुभे ।
कन्ये जग्राह धर्मेण भार्यार्थं मनुजेश्वरः ।। १०.७० ।।
ते लब्ध्वा सहसा राजा मुदा परमया युतः ।
आजगाम स्वकं राष्ट्रं निजसैन्यसमावृतः ।। १०.७१ ।।
ततः कालेन महता तस्य पुत्रद्वयं बभौ ।
सुकेश्याः सुप्रभः पुत्रो मिश्रकेश्याः सुदर्शनः ।। १०.७२ ।।
स राजा दुर्जयः श्रीमाँल्लब्ध्वा पुत्रद्वयं शुभम् ।
स्वयं कालान्तरे श्रीमाञ्जगामारण्यमन्तिके ।। १०.७३ ।।
तत्रस्थो वनजातीर्हि बधयन् वै भयंकराः ।
ददर्शारण्यमाश्रित्य मुनिं स्थितमकल्मषम् ।। १०.७४ ।।
तपस्यन्तं महाभागं नाम्ना गौरमुखं शुभम् ।
ऋषिवृन्दस्य गोप्तारं त्रातारं पापिनः स्वयम् ।। १०.७५ ।।
तस्याश्रमे विमलजलाविलेमरु-
त्सुगन्धिवृक्षप्रवरे द्विजन्मनः ।
रराज जीमूत इवाम्बरान्मही-
मुपागतः प्रवरविमानवद् गृहः ।। १०.७६ ।।
ज्वलनमखाग्निप्रतिभाषिताम्बरः
सुशुद्धसंवासितवेशकुट्टकः ।
शिष्यैः समुच्चारितसामनादकः
सुरूपयोषिदृषिकन्यकाकुलः ।
इतीदृशोऽस्यावसाथो वराश्रमे
सुपुष्पिताशेषतरुप्रसूनः ।। १०.७७ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे दशमोऽध्यायः ।। १० ।।

श्रीवराह उवाच ।
ततस्तमीदृशं दृष्ट्वा तदा गौरमुखाश्रमम् ।
दुर्ज्जयश्चिन्तयामास रम्यमाश्रममण्डलम् ।। ११.१ ।।
प्रविशाम्यत्र पश्यामि ऋषीन् परमधार्मिकान् ।
चिन्तयित्वा तदा राजा प्रविवेश तमाश्रमम् ।। ११.२ ।।
तस्य प्रविष्टस्य ततो राज्ञः परमहर्षितः ।
चकार पूजां धर्मात्मा तदा गौरमुखो मुनिः ।। ११.३ ।।
स्वागतादिक्रियाः कृत्वा कथान्ते तं महामुनिः ।
स्वशक्त्याऽहं नृपश्रेष्ठ सानुगस्य च भोजनम् ।। ११.४ ।।
करिष्यामि प्रमुच्यन्तां साधु वाहा इति द्विजः ।
एवमुक्त्वा स्थितस्तूष्णीं स मुनिः संशितव्रतः ।। ११.५ ।।
राजाऽपि तस्थौ तद्भक्त्या स्वसहायैः समन्वितः ।
अक्षौहिण्यो बलस्यास्य पञ्चमात्रास्तदा स्थिताः ।
अयं च तापसः किं मे दास्यते भोजनं त्विह ।। ११.६ ।।
निमन्त्र्य दुर्जयं विप्रस्तदा गौरमुखो नृपम् ।
चिन्तयामास किं चास्य मया देयं तु भोजनम् ।। ११.७ ।।
एवं चिन्तयतस्तस्य महर्षेर्भावितात्मनः ।
स्थितो मनसि देवेशो हरिर्नारायणः प्रभुः ।। ११.८ ।।
ततः संस्मृत्य मनसा देवं नारायणं तदा ।
तोषयामास गङ्गायां प्रविश्य मुनिसत्तमः ।। ११.९ ।।
धरण्युवाच ।
कथं गौरमुखो विष्णुं तोषयामास भूधर ।
एतन्मे कौतुकं श्रोतुं सम्यगिच्छा प्रवर्त्तते ।। ११.१० ।।
नमोऽस्तु विष्णवे नित्यं नमस्ते पीतवाससे ।
नमस्ते चाद्यरूपाय नमस्ते जलरूपिणे ।। ११.११ ।।
नमस्ते सर्वसंस्थाय नमस्ते जलशायिने ।
नमस्ते क्षितिरूपाय नमस्ते तेजसात्मने ।। ११.१२ ।।
नमस्ते वायुरूपाय नमस्ते व्योमरूपिणे ।
त्वं देवः सर्वभूतानां प्रभुस्त्वमसि हृच्छयः ।। ११.१३ ।।
त्वमोङ्कारो वषट्कारः सर्वत्रैव च संस्थितः ।
त्वमादिः सर्वदेवानां तव चादिर्न विद्यते ।। ११.१४ ।।
त्वं भूस्त्वं च भुवो देव त्वं जनस्त्वं महः स्मृतः ।
त्वं तपस्त्वं च सत्यं च त्वयि देव चराचरम् ।। ११.१५ ।।
त्वत्तो भूतमिदं विश्वं त्वदुद्भूता ऋगादयः ।
त्वत्तः शास्त्राणि जातानि त्वत्तो यज्ञाः प्रतिष्ठिताः ।। ११.१६ ।।
त्वत्तो वृक्षा वीरुधश्च त्वत्तः सर्वा वनौषधीः ।
पशवः पक्षिणः सर्पास्त्वत्त एव जनार्दन ।। ११.१७ ।।
ममापि देवदेवेश राजा दुर्जयसंज्ञितः ।
आगतोऽभ्यागतस्तस्य आतिथ्यं कर्त्तुमुत्सहे ।। ११.१८ ।।
तस्य मे निर्धनस्याद्य देवदेव जगत्पते ।
भक्तिनम्रस्य देवेश कुरुष्वान्नाद्यसंचयम् ।। ११.१९ ।।
यं यं स्पृशामि हस्तेन यं यं पश्यामि चक्षुषा ।
वृक्षं वा तृणकन्दं वा तत्तदन्नं चतुर्विधम् ।। ११.२० ।।
तथा त्वन्यतमं वाऽपि यद् ध्यातं मनसा मया ।
तत् सर्वं सिद्ध्यतां मह्यं नमस्ते परमेश्वर ।। ११.२१ ।।
इति स्तुत्या तु देवेशस्तुतोष जगतां पतिः ।
मुनेस्तस्य स्वकं रूपं दर्शयामास केशवः ।। ११.२२ ।।
उवाच सुप्रसन्नात्मा ब्रूहि विप्र वरं परम् ।
एवं श्रुत्वाऽक्षिणी यावदुन्मीलयति वै मुनिः ।। ११.२३ ।।
तदा शङ्खगदापाणिः पीतवासा जनार्दनः ।
गरुडस्थोऽपि तेजस्वी द्वादशादित्यसप्रभः ।। ११.२४ ।।
दिवि सूर्यसहस्त्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ।। ११.२५ ।।
तत्रैकस्थं जगत् कृत्स्नं प्रविभक्तमनेकधा ।

ददर्श स मुनिर्देवि विस्मयोत्फुल्ललोचनः ।। ११.२६ ।।
जगाम शिरसा देवं कृताञ्जलिरथाब्रवीत् ।
यदि मे वरदो देवो भूयाद् भक्तस्य केशव ।। ११.२७ ।।
इदानीमेष नृपतिर्यथा सबलवाहनः ।
ममाश्रमे कृताहारः श्वः प्रयाता स्वकं गृहम् ।। ११.२८ ।।
इत्युक्तस्तस्य देवेशो वरदः संबभूव ह ।
चित्तसिद्धिं ददौ तस्मै मणिं च सुमहाप्रभम् ।। ११.२९ ।।
तं दत्त्वाऽन्तर्दधे देवः स च गौरमुखो मुनिः ।
जगाम चाश्रमं पुण्यं नाना ऋषिनिषेवितम् ।। ११.३० ।।
तत्र गत्वा स विप्रेन्द्रश्चिन्तयमास वै मुनिः ।
हिमवच्छिखराकारं महाभ्रमिव चोन्नतम् ।
शशाङ्करश्मिसङ्काशं गृहं वै शतभूमिकम् ।। ११.३१ ।।
तादृशानां सहस्त्राणि लक्षकोट्यश्च सर्वशः ।
गृहाणि निर्ममे विप्रो विष्णोर्लब्धवरस्तदा ।। ११.३२ ।।
प्राकाराणि ततोपान्ते तल्लग्नोद्यानकानि च ।
कोकिलाकुलघुष्टानि नानाद्विजवराणि च ।
चम्पकाशोकपुन्नागनागकेशरवन्ति च ।। ११.३३ ।।
नानाजात्यस्तथा वृक्षा गृहोद्यानेषु सर्वशः ।
हस्तिनां हस्तिशालाश्च तुरगाणां च मन्दुराः ।। ११.३४ ।।
चकार संचयान् विप्रो नानाभक्ष्याणि सर्वशः ।
भक्ष्यं भोज्यं तथा लेह्यं चोष्यं बहुविधं तथा ।
चकारान्नाद्यनिचयं हेमपात्र्यश्च सर्वतः ।। ११.३५ ।।
एवं कृत्वा स विप्रस्तु राजानं भूरितेजसम् ।
उवाच सर्वसैन्यानि प्रविशन्तु गृहानिति ।। ११.३६ ।।
एवमुक्तस्ततो राजा तद्गृहं पर्वतोपमम् ।
प्रविवेशान्तरेष्वन्ये भृत्या विविशुराशु वै ।। ११.३७ ।।
ततस्तेषु प्रविष्टेषु तदा गौरमुखो मुनिः ।
प्रगृह्य तं मणिं दिव्यं राजानं चेदमब्रवीत् ।। ११.३८ ।।
मज्जनाभ्यवहारार्थं पथि श्रमकृते तथा ।
विलासिनीस्तथा दासान् प्रेषयिष्यामि ते नृप ।। ११.३९ ।।
एवमुक्त्वा स विप्रेन्द्रस्तं मणिं वैष्णवं शुभम् ।
एकान्ते स्थापयामास राज्ञस्तस्य प्रपश्यतः ।। ११.४० ।।
तस्मिन् स्थापितमात्रे तु मणौ शुद्धसमप्रभे ।
निश्चेरुर्योषितस्तत्र दिव्यरूपाः सहस्त्रशः ।। ११.४१ ।।
सुकुमाराङ्गरागाद्याः सुकुमारवराङ्गनाः ।
सुकपोलाः सुचार्व्यङ्ग्यः सुकेशान्ताः सुलोचनाः ।
काश्चित्सौवर्णपात्रीश्च गृहीत्वा संप्रतस्थिरे ।। ११.४२ ।।
एवं योषिद्गणास्तत्र नराः कर्मकरास्तथा ।
निर्जग्मुस्तस्य नृपतेः सर्वे भृत्या नृपस्य ह ।
केवलं भोजनं पूर्वं परिधानं च सर्वशः ।। ११.४३ ।।
ताः स्त्रियः सर्वभृत्यानां राजमार्गेण मज्जनम् ।
ददुस्ते च नराश्वानां हस्तिनां च त्वरान्विताः ।। ११.४४ ।।
नानाविधानि तूर्याणि तत्रावाद्यन्त सर्वशः ।
मज्जने नृपतेस्तत्र ननृतुश्चान्ययोषितः ।
अपराश्च जगुस्तत्र शक्रस्येव प्रमज्जतः ।। ११.४५ ।।
एवं दिव्योपचारेण स्नात्वा राजा महामनाः ।
चिन्तयामास राजेन्द्रो विस्मयाविष्टचेतनः ।
किमिदं मुनिसामर्थ्यं तपसो वाऽथ वा मणेः ।। ११.४६ ।।
एवं स्नात्वा शुभे वस्त्रे परिधायोत्तमे तथा ।
विविधान्नं तु विधिना बुभुजे स नृपोत्तमः ।। ११.४७ ।।/50
यथा च नृपतेः पूजा कृता तेन महर्षिणा ।
तद्वद् भृत्यजनस्यापि चकार मुनिसत्तमः ।। ११.४८ ।।
यावत् स राजा बुभुजे सभृत्यबलवाहनः ।
तावदस्तगिरिं भानुर्जगामारुणसप्रभः ।। ११.४९ ।।
ततस्तु रात्रिः समपद्यताऽधुना

शरच्छशाङ्कोज्ज्वलऋक्षमण्डिता ।
करोति रागं स च रोहिणीधवः
सुसङ्गतं सौम्यगुणेषु तापि च ॥ ११.५० ॥
भृगूद्वहः कृष्णतरांशुभानुना
सहोद्यतो दैत्यगुरुः सुराधिपः ।
अथान्तरात्पक्षगतो न राजते
स्वभावयोगेन मतिस्तु देहिनाम् ॥ ११.५१ ॥
सुरक्ततां भूमिसुतश्च मुञ्चते
राहुः सिती चन्द्रमसोंशुभिः सितैः ।
मुक्तः स्वभावो जगतः सुरासुरै-
रनुस्वभावो बलवान् सुकृन्नृपः ॥ ११.५२ ॥
सितेश्वराख्यापितरश्मिमण्डले
सूर्यत्वसिद्धान्तकषेव निर्मले ।
करोति केतुर्न परे महत्तम-
स्तदा कुशीलेषु गतिश्च निर्मला ॥ ११.५३ ॥
बुधोच्चबुद्धिर्जगतो विभावयन्
रराज राज्ञो तनयः स्वकर्मभिः ।
भृतेच्छकः कक्षविवाहितश्चिरं
भवेदियं साधुषु सम्मितिर्ध्रुवम् ॥ ११.५४ ॥
करोति केतुः कपिलं वियच्चिरं
राज्ञः सुराणां पथि संस्थितं भृशम् ।
न दुर्जनः सज्जनसंसदि क्वचित्
करोति शुद्धं निजकर्मकौशलम् ॥ ११.५५ ॥
शशाङ्करश्मिप्रविभासिता अपि
प्रकाशमीयुर्निरताः पदे पदे ।
कुलंभवाः संभवधर्मपत्तयो
महांशुयोगान्महतां समुन्नतिम् ॥ ११.५६ ॥
त्रिदोषसक्तान्निकृतोऽस्य सर्वशः
सुतेन राज्ञो वरुणस्य सूर्यजः ।
विराजते कौशिकसन्निवेशिता
न वेदकर्म क्वचिदन्यथा भवेत् ॥ ११.५७ ॥
द्वन्द्वः समेतान् मम यः शिशुः पुरा
हरिर्य आराधितवान् नृपासनम् ।
लक्ष्म्यापि बुद्ध्या सुचिरं प्रकाशते
ध्रुवेण विष्णुस्मरणेन दुर्लभम् ॥ ११.५८ ॥
इतीदृशी रात्रिरभूदृषेः शुभे
वराश्रमे दुर्जयभूपतेः शुभा ।
सभृत्यसामन्तवराश्वदन्तिनः
सुभक्तवस्त्राभरणादिपूजया ॥ ११.५९ ॥
इतीदृशायां वररत्नचित्रिताः
सुपट्टसंवीतवरास्तृतास्तदा ।
गृहेषु पर्यङ्कवराः समाश्रिताः
सुरूपयोषित्कृतभङ्गभासुराः ॥ ११.६० ॥
स तत्र राजा विससर्ज भूभृतः
स्वयं सभृत्यानपि सर्वतो गृहान् ।
गतेषु सुष्वाप वरस्त्रिया वृतः
सुरेशवत्स्वर्गगतः प्रतापवान् ॥ ११.६१ ॥
एवं सुमनसस्तस्य सभृत्यस्य महात्मनः ।
ऋषेस्तस्य प्रभावेन हृष्टास्तु सुषुपुस्तदा ॥ ११.६२ ॥
ततो रात्र्यां व्यतीतायां स राजा ताः स्त्रियः पुनः ।
अन्तर्द्धानं गतास्तत्र दृष्ट्वा तानि गृहाणि च ॥ ११.६३ ॥
अदृश्यानि महार्हाणि वरासनजलानि च ।
राजा स विस्मयाविष्टश्चिन्तयामास दुःखितः ॥ ११.६४ ॥
कथमेवं मणिर्मह्यं भवतीति पुनः पुनः ।
चिन्तयन्नधिगम्याथ स राजा दुर्जयस्तदा ॥ ११.६५ ॥

चिन्तामणिमिमं चास्य हरामीति विचिन्त्य सः ।
प्रयाणं नोदयामास स राजाश्रमबाह्यतः ।
आश्रमस्य बहिर्गत्वा नातिदूरे सवाहनः ।। ११.६६ ।।
ततो विरोचनाख्यं वै प्रेषयामास मन्त्रिणम् ।
ऋषेर्गौरमुखस्यापि मणेर्याचनकर्मणि ।। ११.६७ ।।
ऋषिं तं च समागत्य मणिं याचितुमुद्यतः ।
रत्नानां भाजनं राजा मणिं तस्मै प्रदीयताम् ।। ११.६८ ।।
अमात्येनैवमुक्तस्तु क्रुद्धो गौरमुखोऽब्रवीत् ।
प्रतिगृह्णाति विप्रस्तु राजा चैव ददाति च ।
त्वं च राजा पुनर्भूत्वा याचसे दीनवत् कथम् ।। ११.६९ ।।
एवं ब्रूहि दुराचारं राजानं दुर्जयं स्वयम् ।
गच्छ द्रुतं दुराचार मा त्वा लोकोऽत्यगादिति ।। ११.७० ।।
(एवमुक्त्वा मुनिः प्रागात् कुशेध्माहरणाय वै ।
चिन्तयन् मनसा तं च मणिं शत्रुविनाशनम् ) ।। ११.७१ ।।
एवमुक्तस्तदा दूतो जगाम च नृपान्तिकम् ।
कथयामास तत्सर्वं यदुक्तं ब्राह्मणेन च ।। ११.७२ ।।
ततः क्रोधपरीतात्मा श्रुत्वा ब्राह्मणभाषितम् ।
दुर्जयः प्राह नीलाख्यं सामन्तं गच्छ माचिरम् ।
ब्राह्मणस्य मणिं गृह्य तूर्णमेहि यदृच्छया ।। ११.७३ ।।
एवमुक्तस्तदा नीलो बहुसेनापरिच्छदः ।
जगाम स च विप्रस्य वन्यमाश्रममण्डलम् ।। ११.७४ ।।
तत्राग्निहोत्रशालायां दृष्ट्वा तं मणिमाहितम् ।
उत्तीर्य स्यन्दनान्नीलः सोऽवरोहत भूतले ।। ११.७५ ।।
अवतीर्णे ततस्तस्मिन् नीले परमदारुणे ।
क्रूरबुद्ध्या मणेस्तस्मान्निर्जग्मुः शस्त्रपाणयः ।। ११.७६ ।।
सरथाः सध्वजाः साश्वाः सबाणाः सासिचर्मिणः ।
सधनुष्काः सतूणीरा योधाः परमदुर्जयाः ।
निश्चेरुस्तं मणिं भित्वा असंख्येया महाबलाः ।। ११.७७ ।।
तत्र सज्जा महाशूरा दश पञ्च च संख्यया ।
नामभिस्तान् महाभागे कथयामि शृणुष्व तान् ।। ११.७८ ।।
सुप्रभो दीप्ततेजाश्च सुरश्मिः शुभदर्शनः ।
सुकान्तिः सुन्दरः सुन्दः प्रद्युम्नः सुमनाः शुभः ।। ११.७९ ।।
सुशीलः सुखदः शम्भुः सुदान्तः सोम एव च ।
एते पञ्चदश प्रोक्ता नायका मणितोत्थिताः ।। ११.८० ।।
ततो विरोचनं दृष्ट्वा बहुसैन्यपरिष्कृतम् ।
योधयामासुरव्यग्रा विविधायुधपाणयः ।। ११.८१ ।।
धनूंषि तेषां कनकप्रभाणि
शरान् सुजाम्बूनदपुङ्खनद्धान् ।
पतन्ति खड्गानि विभीषणानि
भुशुण्डिशूलाः परमप्रधानाः ।। ११.८२ ।।
रथो रथं संपरिवार्य तस्थौ
गजो गजस्यापि हयो हरस्य ।
पदातिरत्युग्रपराक्रमश्च
पदातिमेव प्रससार चाग्र्यम् ।। ११.८३ ।।
द्वन्द्वन्यनेकानि तथैव युद्धे
द्रवन्ति शूराः परिभर्त्सयन्तः ।
विभीषणं निर्गतचापमार्गं
बभूव बाहुप्रभवं सुघोरम् ।। ११.८४ ।।
तथा प्रवृत्ते तुमुलेऽथ युद्धे
हतः स राज्ञः सचिवो विसंज्ञः ।
सहानुगः सर्वबलैरुपेतो
जगाम वैवस्वतमन्दिराय ।। ११.८५ ।।
तस्मिन् हते दुर्जयराजमन्त्रिणि
उपाययौ स्वेन बलेन राजा ।
स दुर्जयः साश्वरथोऽतितीव्रः

प्रतापवांस्तैर्मणिजैर्युयोध ।। ११.८६ ।।
ततस्तस्मिंस्तदा राज्ञो महत्कदनमाबभौ ।
ततो हेतुप्रहेतृभ्यां श्रुत्वा जामातरं रणे ।। ११.८७ ।।
युध्यमानं महाबाहुं ततस्त्वाययतुश्चमूः ।
तस्मिन् बले तु दैत्या ये तान् श्रृणुष्व धरेरितान् ।। ११.८८ ।।
प्रघसो विघसश्चैव सङ्घसोऽशनिसप्रभः ।
विद्युत्प्रभः सुघोषश्च उन्मत्ताक्षो भयंकरः ।। ११.८९ ।।
अग्निदन्तोऽग्नितेजाश्च बाहुशक्रः प्रतर्दनः ।
विराधो भीमकर्मा च विप्रचित्तिस्तथैव च ।। ११.९० ।।
एते पञ्चदश श्रेष्ठा असुराः परमायुधाः ।
अक्षौहिणीपरीवार एकैकोऽत्र पृथक्पृथक् ।। ११.९१ ।।
महामायास्तु समरे दुर्ज्जयस्य महात्मनः ।
युयुधुर्मणिजैः सार्द्धं महासैन्यपरिच्छदाः ।। ११.९२ ।।
(सुप्रभः प्रघसं त्वाजौ ताडयामास पञ्चभिः ।
शरैराशीविषाकारैः प्रतप्तैः पतगैरिव ।। ) ।। ११.९३ ।।
तप्ततेजास्त्रिभिर्बाणैर्विघसं संप्रविध्यत ।
संघसं दशभिर्बाणैः सुरश्मिः प्रत्यविध्यत ।। ११.९४ ।।
अशनिप्रभं रणेऽविध्यत् पञ्चभिः शुभदर्शनः ।
विद्युत्प्रभं सुकान्तिस्तु सुघोषं सुन्दरस्तथा ।। ११.९५ ।।
उन्मत्ताक्षं तथाविध्यत् सुन्दः पञ्चभिराशुगैः ।
चकर्त्त च धनुस्तस्य शितेन नतपर्वणा ।। ११.९६ ।।
सुमना अग्निदंष्ट्रं तु सुशुभश्चाग्नितेजसम् ।
सुशीलो वायुशक्रं तु सुमुखश्च प्रतर्दनम् ।। ११.९७ ।।
(विराधेन तथा शम्भुः सुकीर्तिर्भीमकर्म्मणा ।
विप्रचित्तिस्तथा सोमं एतद् युद्धं महानभूत् ।।) ।। ११.९८ ।।
परस्परं सुयुद्धेन योधयित्वाऽस्त्रलाघवात् ।
यथासंख्येन ते दैत्याः पुनर्मणिभवैर्हताः ।। ११.९९ ।।
यावत् संग्रामघोरो वै महांस्तेषां व्यवर्द्धत ।
तावत् समित्कुशादीनि कृत्वा गौरमुखो मुनिः ।। ११.१०० ।।
आगतो महदाश्चर्यं संग्रामं भीमदर्शनम् ।
बहुसैन्यपरीवारं स्थितं तं चापि दुर्ज्जयम् ।। ११.१०१ ।।
तं दृष्ट्वा स मुनिर्द्वारि चिन्तापरम एव हि ।
उपविश्याधिगम्याथ मणेः कारणमेव ह ।। ११. १०२ ।।
एवं कृत्वा मणिकृतं रौद्रं गाढं च संयुगम् ।
चिन्तयामास देवेशं हरिं गौरमुखो मुनिः ।। ११.१०३ ।।
स देवः पुरतस्तस्य पीतवासाः खगासनः ।
किमत्र ते मया कार्यमिति वाणीमुदीरयत् ।। ११.१०४ ।।
स ॠषिः प्राञ्जलिर्भूत्वा उवाच पुरुषोत्तमम् ।
जहीमं दुर्ज्जयं पापं ससैन्यं परिवारिणम् ।। ११.१०५ ।।
एवमुक्तस्तदा तेन चक्रं ज्वलनसन्निभम् ।
(मुमोच दुर्जयबले कालचक्रं सुदर्शनम्) ।। ११.१०६ ।।
तेन चक्रेण तत्सैन्यमासुरं दौर्जयं क्षणात् ।
निमेषान्तरमात्रेण भस्मवद् बहुधा कृतम् ।। ११.१०७ ।।
एवं कृत्वा ततो देवो मुनिं गौरमुखं तदा ।
उवाच निमिषेणेदं निहतं दानवं बलम् ।। ११.१०८ ।।
अरण्येऽस्मिंस्ततस्त्वेवं नैमिषारण्यसंज्ञितम् ।
भविष्यति यथार्थं वै ब्राह्मणानां विशेषतः ।। ११.१०९ ।।
अहं च यज्ञपुरुष एतस्मिन् वनगोचरे ।
नाम्ना याज्या सदा चेमे दश पञ्च च नायकाः ।
कृते युगे भविष्यन्ति राजानो मणिजा मुने ।। ११.११० ।।
एवमुक्त्वा ततो देवो गतोऽन्तर्धानमीश्वरः ।
द्विजोऽपि स्वाश्रमे तस्थौ मुदा परमया युतः ।। ११.१११ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे एकादशोऽध्यायः ।। ११ ।।

११.९७ पाठभेदः

सुमना अग्निदंष्ट्रं तु सुवेदश्चाग्नितेजसम्। सुनलो वायुशक्रौ तु सुवेदस्तु प्रतर्दनम्।। ११.१००

श्रीवराह उवाच ।
ततः पुत्रं रथाङ्गाग्निदग्धं श्रुत्वा नृपोत्तमः ।
सुप्रतीकः प्रतीतात्मा चिन्तयामास पार्थिवः ।
तस्य चिन्तयतस्त्वेवं तदा बुद्धिरजायत ।। १२.१ ।।
चित्रकूटे गिरौ विष्णुः सदा रामेति कीर्त्यते ।
ततोऽहं रामसंज्ञेन नाम्ना स्तौमि जगत्पतिम् ।। १२.२ ।।
सुप्रतीक उवाच ।
नमामि रामं नरनाथमच्युतं
कविं पुराणं त्रिदशारिनाशनम् ।
शिवस्वरूपं प्रभवं महेश्वरं
सदा प्रपन्नार्तिहरं धृतश्रियम् ।। १२.३ ।।
भवान् सदा देव समस्ततेजसां
करोषि तेजांसि समस्तरूपधृक् ।
क्षितौ भवान् पञ्चगुणस्तथा जले
चतुःप्रकारस्त्रिविधोऽथ तेजसि ।
द्विधाऽथ वायौ वियति प्रतिष्ठितो
भवान् हरे शब्दवपुः पुमानसि ।। १२.४ ।।
भवान् शशी सूर्यहुताशनोऽसि
त्वयि प्रलीनं जगदेतदुच्यते ।
भवत्प्रतिष्ठं रमते जगत् यतः
स्तुतोऽसि रामेति जगत् प्रतिष्ठितम् ।। १२.५ ।।
भवार्णवे दुःखतरोर्मिसंकुले
तथाक्षमानग्रहणेऽतिभीषणे ।
न मज्जति त्वत्स्मरणप्लवो नरः
स्मृतोऽसि रामेति तथा तपोवने ।। १२.६ ।।
वेदेषु नष्टेषु भवांस्तथा हरे
करोषि मात्स्यं वपुरात्मनः सदा ।
युगक्षये रञ्जितसर्वदिङ्मुखो
भवांस्तथाग्निर्बहुरूपधृग् विभो ।। १२.७ ।।
कौर्मं तथा ते वपुरास्थितः सदा
युगे युगे माधव तोयमन्थने ।
न चान्यदस्तीति भवत्समं क्वचि-
ज्जनार्दनाद् यः स्वयं भूतमुत्तमम् ।। १२.८ ।।
त्वया ततं विश्वमिदं महात्मन्
स्वकाखिलान् वेद दिशश्च सर्वाः ।
कथं त्वमाद्यं परमं तु धाम
विहाय चान्यं शरणं व्रजामि ।। १२.९ ।।
भवानेकः पूर्वमासीत् ततश्च

त्वत्तो मही सलिलं वह्निरुच्चैः ।
वायुस्तथा खं च मनोऽपि बुद्धि-
श्चेतोगुणास्तत्प्रभवं च सर्वम् ।। १२.१० ।।
त्वया ततं विश्वमिदं समस्तं
सनातनस्त्वं पुरुषो मतो मे ।
समस्तविश्वेश्वर विश्वमूर्ते
सहस्त्रबाहो जय देव देव ।
नमोऽस्तु रामाय महानुभाव ।। १२.११ ।।
इति स्तुतो देववरः प्रसन्नः
तदा राज्ञः सुप्रतीकस्य मूर्तिम् ।
संदर्शयामास ततोऽभ्युवाच
वरं वृणीष्वेति च सुप्रतीकम् ।। १२.१२ ।।
एवं श्रुत्वा वचनं तस्य राजा
ससंभ्रमं देवदेवं प्रणम्य ।
उवाच देवेश्वर मे प्रयच्छ
लयं यदास्ते परमं वपुस्ते ।। १२.१३ ।।
इतीरिते राजवरः क्षणेन
लयं तथाऽगादसुरघ्नमूर्तौ ।
स्थितस्तस्मिन्नात्मभूतो विमुक्तः
स भूमिपः कर्मकाण्डैरनेकैः ।। १२.१४ ।।
श्रीवराह उवाच ।
इतीरितं ते तु मया पुराणं
स्वायम्भुवे चादिकृतैकदेशम् ।
शक्यं न चास्यैर्बहुभिः सहस्त्रै-
रपीह केनापि मुखेन वक्तुम् ।। १२.१५ ।।
उद्देशतः संस्मृतमात्रमेत-
न्मया भद्रे कथितं ते पुराणम् ।
समुद्रतोयात् परिमाणसृष्टिः
क्वचित् क्वचिद् वृत्तमथो ह्यनर्ध्यम् ।। १२.१६ ।।
स्वयम्भुवा कथितं ब्रह्मणाऽपि
नारायणेनापि कुतो भवेऽन्यः ।
अशक्यमस्माभिरितीरितं ते
तन्मूर्त्तित्वात् स्मरणेनेदमाद्यम् ।। १२.१७ ।।
समुद्रे बालुकासंख्या विद्यते रजसः क्षितौ ।
न तु सृष्टेः पुनः संख्या क्रीडतः परमेष्ठिनः ।। १२.१८ ।।
एष नारायणस्यांशो मया प्रोक्तः शुचिस्मिते ।
कृते वृत्तान्त एषश्च किमन्यच्छ्रोतुमिच्छसि ।। १२.१९ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे द्वादशोऽध्यायः ।। १२ ।।

धरण्युवाच ।
एतत् तन्महदाश्चर्यं दृष्ट्वा गौरमुखो मुनिः ।
ते चापि मणिजाः प्राप्ताः किं फलं तु वरं गुरोः ।। १३.१ ।।
कोऽसौ गौरमुखः श्रीमान् मुनिः परमधार्म्मिकः ।
किं चकार हरेः कर्म्म दृष्ट्वाऽसौ मुनिपुंगवः ।। १३.२ ।।
श्रीवराह उवाच ।
निमिषेण कृतं कर्म दृष्ट्वा भगवतो मुनिः ।
आरिराधयिषुर्देवं तमेव प्रययौ वनम् ।
प्रभासं नाम सोमस्य तीर्थं परमदुर्लभम् ।। १३.३ ।।
तत्र दैत्यान्तकृद् देवः प्रोच्यते तीर्थचिन्तकैः ।
आराधयामास हरिं दैत्यसूदनसंज्ञितम् ।। १३.४ ।।
तस्याराधयतो देवं हरिं नारायणं प्रभुम् ।
आजगाम महायोगी मार्कण्डेयो महामुनिः ।। १३.५ ।।
तं दृष्ट्वाऽभ्यागतं दूरादर्घपाद्येन सो मुनिः ।
अर्चयामास तं भक्त्या मुदा परमया युतः ।। १३.६ ।।
कौश्यां वृष्यां तदासीनं पप्रच्छेदं मुनिस्तदा ।
शाधिं मां मुनिशार्दूल किं करोमि महाव्रत ।। १३.७ ।।
एवमुक्तः स विप्रेन्द्रो मार्कण्डेयो महातपाः ।
उवाच श्लक्ष्णया वाचा मुनिं गौरमुखं तदा ।। १३.८ ।।
मार्कण्डेय उवाच ।
एतदेव महत्कृत्यं यत्सतां संगमो भवेत् ।
यत्तु सान्देहिकं कार्यं तत्पृच्छस्व महामुने ।। १३.९ ।।
गौरमुख उवाच ।
एते हि पितरो नाम प्रोच्यन्ते वेदवादिभिः ।
सर्ववर्णषु सामान्या उताहोस्वित् पृथक् पृथक् ।। १३.१० ।।
मार्कण्डेयः ।
सर्वेषामेव देवानामाद्यो नारायणो गुरुः ।
तस्माद् ब्रह्मा समुत्पन्नः सोऽपि सप्तासृजन्मुनीन् ।। १३.११ ।।
मां यजस्वेति तेनोक्तास्तदा ते परमेष्ठिना ।
आत्मनात्मानमेवाग्रे अयजन्त इति श्रुतिः ।। १३.१२ ।।
तेषां वै ब्रह्मजातानां महावैकारिकर्मणाम् ।
अशपद् व्यभिचारो हि महानेष कृतो यतः ।
प्रभ्रष्टज्ञानिनः सर्वे भविष्यथ न संशयः ।। १३.१३ ।।

एवं शप्तास्ततस्ते वै ब्रह्मणात्मसमुद्भवाः ।
सद्यो वंशकरान् पुत्रानुत्पाद्य त्रिदिवं ययुः ।। १३.१४ ।।
ततस्तेषु प्रयातेषु त्रिदिवं ब्रह्मवादिषु ।
तत्पुत्राः श्राद्धदानेन तर्पयामासुरञ्जसा ।। १३.१५ ।।
ते च वैमानिकाः सर्वे ब्रह्मणः सप्त मानसाः ।
तत् पिण्डदानं मन्त्रोक्तं प्रपश्यन्तो व्यवस्थिताः ।। १३.१६ ।।
गौरमुख उवाच ।
ये च ते पितरो ब्रह्मन् यं च कालं समासते ।
किं यतो वै पितृगणास्तस्मिंल्लोके व्यवस्थिताः ।। १३.१७ ।।
मार्कण्डेय उवाच ।
प्रवर्त्तन्ते वराः केचिद् देवानां सोमवर्द्धनाः ।
ते मरीच्यादयः सप्त स्वर्गे ते पितरः स्मृताः ।। १३.१८ ।।
चत्वारो मूर्त्तिमन्तो वै त्रयस्त्वन्ये ह्यमूर्त्तयः ।
तेषां लोकनिसर्गं च कीर्त्तयिष्यामि तच्छृणु ।। १३.१९ ।।
प्रभावं च महर्धिं च विस्तरेण निबोध मे ।
धर्ममूर्तिधरास्तेषां त्रयोऽन्ये परमा गणाः ।
तेषां नामानि लोकांश्च कीर्तयिष्यामि तच्छृणु ।। १३.२० ।।
लोकाः संतानका नाम यत्र तिष्ठन्ति भास्वराः ।
अमूर्त्तयः पितृगणास्ते वै पुत्राः प्रजापतेः ।। १३.२१ ।।
विराजस्य प्रजाश्रेष्ठा वैराजा इति ते स्मृताः ।।
देवानां पितरस्ते हि तान् यजन्तीह देवताः ।। १३.२२ ।।
एते वै लोकविभ्रष्टा लोकान् प्राप्य सनातनान् ।
पुनर्युगशतान्तेषु जायन्ते ब्रह्मवादिनः ।। १३.२३ ।।
ते प्राप्य तां स्मृतिं भूयः साध्य योगमनुत्तमम् ।
चिन्त्य योगगतिं शुद्धां पुनरावृत्तिदुर्लभाम् ।। १३.२४ ।।
एते स्म पितरः श्राद्धे योगिनां योगवर्द्धनाः ।
आप्यायितास्तु ते पूर्वं योगं योगबले रतौ ।। १३.२५ ।।
तस्माच्छ्राद्धानि देयानि योगिनां योगिसत्तम ।
एष वै प्रथमः सर्गः सोमपानामनुत्तमः ।। १३.२६ ।।
एते त एकतनवो वर्तन्ते द्बिजसत्तमाः ।
भूर्लोकवासिनां याज्याः स्वर्गलोकनिवासिनः ।।
ब्रह्मपुत्रा मरीच्याद्यास्तेषां याज्या महद्गताः ।। १३.२७ ।।
कल्पवासिकसंज्ञानां तेषामपि जने गताः ।

सनकाद्यास्ततस्तेषां वैराजास्तपसि स्थिताः ।
तेषां सत्यगता मुक्ता इत्येषा पितृसंततिः ।। १३.२८ ।।
अग्निष्वात्तेति मारीच्या वैराजा बर्हिसंज्ञिताः ।
सुकालेयापि पितरो वसिष्ठस्य प्रजापतेः ।
तेऽपि याज्यास्त्रिभिर्वर्णैर्न शूद्रेण पृथक्कृतम् ।। १३.२९ ।।
वर्णत्रयाभ्यनुज्ञातः शूद्रः सर्वान् पितृन् यजेत् ।
न तु तस्य पृथक् सन्ति पितरः शूद्रजातयः ।। १३.३० ।।
मुक्तश्चेतनको ब्रह्मन् ननु विप्रेषु दृश्यते ।
विशेषशास्त्रदृष्ट्या तु पुराणानां च दर्शनात् ।। १३.३१ ।।
एवं ऋषिस्तुतैः शास्त्रं ज्ञात्वा याज्यकसंभवान् ।
स्वयं सृष्ट्यां स्मृतिर्लब्धा पुत्राणां ब्रह्मणा ततः ।
परं निर्वाणमापन्नास्तेऽपि ज्ञानेन एव च ।। १३.३२ ।।
वस्वादीनां कश्यपाद्या वर्णानां वसवादयः ।
अविशेषेण विज्ञेया गन्धर्वाद्या अपि ध्रुवम् ।। १३.३३ ।।
एष ते पैतृकः सर्ग उद्देशेन महामुने ।
कथितो नान्त एवास्य वर्षकोट्या हि दृश्यते ।। १३.३४ ।।
श्राद्धस्य कालान् वक्ष्यामि तान् श्रृणुष्व द्विजोत्तम ।
श्राद्धार्हमागतं द्रव्यं विशिष्टमथवा द्विजम् ।। १३.३५ ।।
श्राद्धं कुर्वीत विज्ञाय व्यतीपातेऽयने तथा ।
विषुवे चैव संप्राप्ते ग्रहणे शशिसूर्ययोः ।
समस्तेष्वेव विप्रेन्द्र राशिष्वर्केऽतिगच्छति ।। १३.३६ ।।
नक्षत्रग्रहपीडासु दुष्टस्वप्नावलोकने ।
इच्छाश्राद्धानि कुर्वीत नवसस्यागमे तथा ।। १३.३७ ।।
अमावास्या यदा आर्द्राविशाखास्वातियोगिनो ।
श्राद्धैः पितृगणस्तृप्तिं तदाप्नोत्यष्टवार्षिकीम् ।। १३.३८ ।।
अमावस्या यदा पुष्ये रौद्रेऽथर्क्षे पुनर्वसौ ।
द्वादशाब्दं तथा तृप्तिं प्रयान्ति पितरोऽर्च्चिताः ।। १३.३९ ।।
वासवाजैकपादर्क्षे पितृणां तृप्तिमिच्छताम् ।
वारुणे चाप्यमावास्या देवानामपि दुर्लभा ।। १३.४० ।।
नवस्वर्क्षेष्वमावास्या यदा तेषु द्विजोत्तम ।
तदा श्राद्धानि देयानि अक्षय्यफलमिच्छताम् ।
अपि कोटिसहस्त्रेण पुण्यस्यान्तो न विद्यते ।। १३.४१ ।।
अथापरं पितरः श्राद्धकालं

रहस्यमस्मत् प्रवदन्ति पुण्यम् ।
वैशाखमासस्य तु या तृतीया
नवम्यसौ कार्त्तिकशुक्लपक्षे ।। १३.४२ ।।
नभस्यमासस्य तमिस्त्रपक्षे
त्रयोदशी पञ्चदशी च माघे ।
उपप्लवे चन्द्रमसो रवेश्च
तथाष्टकास्वप्ययनद्वये च ।। १३.४३ ।।
पानीयमप्यत्र तिलैर्विमिश्रं
दद्यात्पितृभ्यः प्रयतो मनुष्यः ।
श्राद्धं कृतं तेन समाःसहस्त्रं
रहस्यमेतत् पितरो वदन्ति ।। १३.४४ ।।
माघासिते पञ्चदशी कदाचि-
दुपैति योगं यदि वारुणेन ।
ऋक्षेण कालः परमः पितृणां
न त्वल्पपुण्यैर्द्विज लभ्यतेऽसौ ।। १३.४५ ।।
काले धनिष्ठा यदि नाम तस्मिन्
भवेत्तु विप्रेन्द्र सदा पितृभ्यः ।
दत्तं जलान्नं प्रददाति तृप्तिं
वर्षायुतं तत्कुलजैर्मनुष्यैः ।। १३.४६ ।।
तत्रैव चेद् भाद्रपदास्तु पूर्वाः
काले तदा यैः क्रियते पितृभ्यः ।
श्राद्धं परा तृप्तिमुपेत्य तेन
युगं समग्रं पितरः स्वपन्ति ।।
श्राद्धं तु यत्पक्षमुदाहरन्ति
तत्पैतृकं मुनिगणाः प्रवदन्ति तुष्टिम् ।। १३.४७ ।।
गङ्गासरयूमथवा विपाशां
सरस्वतीं नैमिषगोमतीं वा ।
ततोऽवगाह्यार्चनमादरेण
कृत्वा पितृणामहितानि हन्ति ।। १३.४८ ।।
गायन्ति चैतत् पितरः कदा तु
वर्षामघातृप्तिमवाप्य भूयः ।
माघासितान्ते शुभतीर्थतोयै-
र्यास्याम तृप्तिं तनयादिदत्तैः ।। १३.४९ ।।

चित्तं च वित्तं च नृणां विशुद्धं
शस्तश्च कालः कथितो विधिश्च ।
पात्रं यथोक्तं परमा च भक्ति-
र्नृणां प्रयच्छन्त्यभिवाञ्छितानि ।। १३.५० ।।
पितृगीतास्तथैवात्र श्लोकास्तान् श्रृणु सत्तम ।
श्रुत्वा तथैव भविता भाव्यं तत्र विधात्मना ।। १३.५१ ।।
अपि धन्यः कुले जायादस्माकं मतिमान् नरः ।
अकुर्वन् वित्तशाठ्यं यः पिण्डान् यो निर्वपिष्यति ।। १३.५२ ।।
रत्नवस्त्रमहायानं सर्वं भोगादिकं वसु ।
विभवे सति विप्रेभ्यो अस्मानुद्दिश्य दास्यति ।। १३.५३ ।।
अन्नेन वा यथाशक्त्या कालेऽस्मिन् भक्तिनम्रधीः ।
भोजयिष्यति विप्राग्र्यांस्तन्मात्रविभवो नरः ।। १३.५४ ।।
असमर्थोऽन्नदानस्य वन्यशाकं स्वशक्तितः ।
प्रदास्यतिद्विजाग्र्येभ्यः स्वल्पां यो वापि दक्षिणाम् ।। १३.५५ ।।
तत्राप्यसामर्थ्ययुतः कराग्राग्रस्थितांस्तिलान् ।
प्रणम्य द्विजमुख्याय कस्मैचिद् द्विज दास्यति ।। १३.५६ ।।
तिलैः सप्ताष्टभिर्वापि समवेतां जलाञ्जलिम् ।
भक्तिनम्रः समुद्दिश्याप्यस्माकं संप्रदास्यति ।। १३.५७ ।।
यतः कुतश्चित् संप्राप्य गोभ्यो वापि गवाह्निकम् ।
अभावे प्रीणयत्यस्मान् भक्त्या युक्तः प्रदास्यति ।। १३.५८ ।।
सर्वाभावे वनं गत्वा कक्षामूलप्रदर्शकः ।
सूर्यादिलोकपालानामिदमुच्चैः पठिष्यति ।। १३.५९ ।।
न मेऽस्ति वित्तं न धनं न चान्य-
च्छ्राद्धस्य योग्यं स्वपितॄन् नतोऽस्मि ।
तृप्यन्तु भक्त्या पितरो मयैतौ
भुजौ ततौ वर्त्मनि मारुतस्य ।। १३.६० ।।
इत्येतत् पितृभिर्गीतं भावाभावप्रयोजनम् ।
कृतं तेन भवेच्छ्राद्धं य एवं कुरुते द्विज ।। १३.६१ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे त्रयोदशोऽध्यायः ।। १३ ।।

मार्कण्डेय उवाच ।
एतन्मे कथितं पूर्वं ब्रह्मपुत्रेण धीमता ।
सनकानुजेन विप्रर्षे ब्राह्मणान् श्रृणु सांप्रतम् ।। १४.१ ।।
त्रिणाचिकेतस्त्रिमधुस्त्रिसुपर्णः षडङ्गवित् ।
वेदवित् श्रोत्रियो योगी तथा वै ज्योष्ठसामगः ।। १४.२ ।।
ऋत्विजं भागिनेयं च दौहित्रं श्वसुरं तथा ।
जामातरं मातुलं च तपोनिष्ठं च ब्राह्मणम् ।। १४.३ ।।
पञ्चाग्न्यभिरतं चैव शिष्यं संबन्धिनं तथा ।
मातापितृरतं चैव एताञ्छ्राद्धे नियोजयेत् ।। १४.४ ।।
मित्रध्रुक् कुनखी चैव श्यावदन्तस्तथा द्विजः ।
कन्यादूषयिता वह्निवेदोज्झः सोमविक्रयी ।। १४.५ ।।
अभिशप्तस्तथा स्तेनः पिशुनो ग्रामयाजकः ।
भृतकाध्यापकश्चैव भृतकाध्यापितश्च यः ।। १४.६ ।।
परपूर्वापतिश्चैव मातापित्रोस्तथोज्झकः ।
वृषलीसूतिपोष्यश्च वृषलीपतिरेव च ।
तथा देवलकश्चापि श्राद्धे नार्हन्ति केतनम् ।। १४.७ ।।
प्रथमेऽह्नि बुधः कुर्याद् विप्राग्र्याणां निमन्त्रणम् ।
आनिमन्त्र्य द्विजान् गेहमागतान् भोजयेद् यतीन् ।। १४.८ ।।
पादशौचादिना गेहमागतान् भोजयेद् द्विजान् ।
पवित्रपाणिराचान्तानासनेषूपवेशयेत् ।। १४.९ ।।
पितृणामयुजो युग्मान् देवानामपि योजयेत् ।
देवानामेकमेकं वा पितृणां च नियोजयेत् ।। १४.१० ।।
तथा मातामहश्राद्धं वैश्वदेवसमन्वितम् ।
कुर्वीत भक्तिसंपन्नसक्तन्त्रं वा वैश्वदेविकम् ।। १४.११ ।।
प्राङ्मुखं भोजभेद् विप्रं देवानामुभयात्मकम् ।
पितृपैतामहानां च भोजयेच्चाप्युदङ्मुखान् ।। १४.१२ ।।
पृथक् तयोः केचिदाहुः श्राद्धस्य करणं द्विज ।
एकत्रैकेन पाकेन वदन्त्यन्ये महर्षयः ।। १४.१३ ।।
विष्टरार्थं कुशान् दत्त्वा संपूज्यार्घविधानतः ।
कुर्यादावाहनं प्राज्ञो देवानां तदनुज्ञया ।। १४.१४ ।।
यवाम्बुना च देवानां दद्यादर्घ्यं विधानवित् ।
सुगन्धधूपदीपांश्च दत्त्वा तेभ्यो यथाविधि ।
पितृणामपसकव्येन सर्वमेवोपकल्पयेत् ।। १४.१५ ।।

अनुज्ञां च ततः प्राप्य दत्त्वा दर्भान् द्विधाकृतान् ।
मन्त्रपूर्वं पितॄणां तु कुर्यादावाहनं बुधः ।
तिलाम्बुना चापसव्यं दद्यादर्घ्यादिकं बुधः ।। १४.१६ ।।
काले तत्रातिथिं प्राप्तमन्नकामं द्विजाध्वगम् ।
ब्राह्मणैरभ्यनुज्ञातः कामं तमपि पूजयेत् ।। १४.१७ ।।
योगिनो विविधै रूपैर्नराणामुपकारिणः ।
भ्रमन्ति पृथिवीमेतामविज्ञातस्वरूपिणः ।। १४.१८ ।।
तस्मादभ्यर्चयेत् प्राप्तं श्राद्धकालेऽतिथिं बुधः ।
श्राद्धक्रियाफलं हन्ति द्विजेन्द्रापूजितोऽतिथिः ।। १४.१९ ।।
जुहुयाद् व्यञ्जनं क्षारैर्वर्ज्यमन्नं ततोऽनले ।
अनुज्ञातो द्बिजैस्तैस्तु त्रिः कृत्वा पुरुषर्षभ ।। १४.२० ।।
अग्नये कव्यवाहनाय स्वाहेति प्रथमाहुतिः ।
सोमाय वै पितृमते दातव्या तदनन्तरम् ।। १४.२१ ।।
वैवस्वताय चैवान्या तृतीया दीयताहुतिः ।
हुतावशिष्टमल्पाल्पं विप्रपात्रेषु निर्वपेत् ।। १४.२२ ।।
ततोऽन्नं मृष्टमत्यर्थमभीष्टमभिसंस्कृतम् ।
दत्त्वा जुषध्वमिच्छातो वाच्यमेतदनिष्ठुरम् ।। १४.२३ ।।
भोक्तव्यं तैश्च तच्चित्तैर्मौनिभिः सुमुखैः सुखम् ।
अक्रुध्यता अत्वरता देयं तेनापि भक्तितः ।। १४.२४ ।।
रक्षोघ्नमन्त्रपठनं भूमेरास्तरणं तिलैः ।
कृत्वाऽध्येयाश्च पितरस्त एव द्विजसत्तमाः ।। १४.२५ ।।
पिता पितामहश्चैव तथैव प्रपितामहः ।
मम तृप्तिं प्रयान्त्वद्य होमाप्यायितमूर्त्तयः ।। १४.२६ ।।
पितापितामहश्चैव तथैव प्रपितामहः ।
मम तृप्तिं प्रयान्त्वद्य विप्रदेहेषु संस्थिताः ।। १४.२७ ।।
पिता पितामहश्चैव तथैव प्रपितामहः ।
तृप्तिं प्रयान्तु पिण्डेषु मया दत्तेषु भूतले ।। १४.२८ ।।
पिता पितामहश्चैव तथैव प्रपितामहः ।
तृप्तिं प्रयान्तु मे भक्त्या यन्मयैतदुदाहृतम् ।। १४.२९ ।।
मातामहस्तृप्तिमुपैतु तस्य
तथा पिता तस्य पिता ततोऽन्यः ।
विश्वेऽथ देवाः परमां प्रयान्तु
तृप्तिं प्रणश्यन्तु च यातुधानाः ।। १४.३० ।।

यज्ञेश्वरो हव्यसमस्तकव्य-
भोक्ताऽव्ययात्मा हरिरीश्वरोऽत्र ।
तत्सन्निधानादपयान्तु सद्यो
रक्षांस्यशेषाण्यसुराश्च सर्वे ।। १४.३१ ।।
तृप्तेष्वेतेषु विप्रेषु किरेदन्नं महीतले ।
दद्यादाचमनार्थाय तेभ्यो वारि सकृत्सकृत् ।। १४.३२ ।।
सुतृप्तैस्तैरनुज्ञातः सर्वेणान्नेन भूतले ।
सलिलेन ततः पिण्डान् समागृह्य समाहितः ।। १४.३३ ।।
पितृतीर्थेन सलिलं तथैव सलिलाञ्जलिम् ।
मातामहेभ्यस्तेनैव पिण्डांस्तीर्थेन निर्वपेत्।
दक्षिणाग्रेषु दर्भेषु पुष्पधूपादिपूजिताम् ।। १४.३४ ।।
स्वपित्रे प्रथमं पिण्डं दद्यादुच्छिष्टसन्निधौ ।
पितामहाय चैवान्यं तत्पित्रे च तथाऽपरम् ।। १४.३५ ।।
दर्भमूले लेपभुजः प्रीणयेल्लेपघर्षणात् ।
पिण्डे मातामहे तद्वद् गन्धमाल्यादिसंयुतैः ।। १४.३६ ।।
पूजयित्वा द्विजाग्र्याणां दद्यादाचमनं बुधः ।
पैत्रेभ्यः प्रथमं भक्त्या तन्मनस्को द्विजेश्वर ।। १४.३७ ।।
सुस्वधेत्याशिषा युक्तां दद्याच्छक्त्या च दक्षिणाम् ।
दत्त्वा च दक्षिणां तेभ्यो वाचयेद् वैश्वदेविकान् ।
प्रीयन्तामिति ये विश्वे देवास्तेन इतीरयेत् ।। १४.३८ ।।
तथेति चोक्ते तैर्विप्रैः प्रार्थनीयास्तथाशिषः ।
पश्चाद् विसर्जयेद् देवान् पूर्वं पैत्रान्महामते ।। १४.३९ ।।
मातामहानामप्येवं सह देवैः क्रमः स्मृतः ।
भोजने च स्वशक्त्या च दाने तद्वद् विसर्ज्जने ।
आपादशौचनात् पूर्वं कुर्यादेव द्विजन्मसु ।। १४.४० ।।
जानन्तं प्रथमं पित्र्यं तथा मातामहेषु च ।
विसर्जयेत् प्रीतिवचः संमान्याभ्यर्थितांस्ततः ।
निवर्त्तेताभ्यनुज्ञात आद्वारान्तमनुव्रजेत् ।। १४.४१ ।।
ततस्तु वैश्वदेवाख्यां कुर्यान्नित्यक्रियां ततः ।
भुञ्जीयाच्च समं पूज्य भृत्यबन्धुभिरात्मना ।। १४.४२ ।।
एवं श्राद्धं बुधः कुर्यात् पित्र्यं मातामहं तथा ।
श्राद्धैराप्यायिता दद्युः सर्वान् कामान् पितामहाः ।। १४.४३ ।।
त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः ।

रजतस्य तथा दानं तथा संदर्शनादिकम् ।। १४.४४ ।।
वर्ज्यस्तु कुर्वता श्राद्धं क्रोधोऽध्वगममं त्वरा ।
भोक्तुरप्यत्र विप्रेन्द्र त्रयमेतन्न संशयः ।। १४.४५ ।।
विश्वेदेवाः सपितरस्तथा मातामहा द्विज ।
कुलं चाप्यायते पुंसां सर्वं श्राद्धं प्रकुर्वताम् ।। १४.४६ ।।
सोमाधारः पितृगणो योगाधारश्च चन्द्रमाः ।
श्राद्धं योगिनियुक्तं तु तस्मद् विप्रेन्द्र शस्यते ।। १४.४७ ।।
सहस्त्रस्यापि विप्राणां योगी चेत् पुरतः स्थितः ।
सर्वान् भोक्तृंस्तारयति यजमानं तथा द्विज ।। १४.४८ ।।
मह्यं सनत्कुमारेण पूर्वकल्पे द्विजोत्तम ।
कथितं वायुना चापि देवानां शंभुना तथा ।। १४.४९ ।।
ऋषीणां शक्तिपुत्रेण तथा मैत्रेयसंज्ञिते ।
भविष्यति क्रमाद् यावन् मया ते कथितं द्विज ।। १४.५० ।।)
इयं सर्वपुराणेषु सामान्या पैतृकी क्रिया ।
एतत् क्रमात् कर्मकाण्डं ज्ञात्वा मुच्येत बन्धनात् ।। १४.५१ ।।
एतदाश्रित्य निर्वाणं ऋषयः संशितव्रताः ।
प्राप्ता गौरमुखेदानीं त्वमप्येवं परो भव ।। १४.५२ ।।
इति ते कथितं भक्त्या पृच्छतो द्विजसत्तम ।
पितॄन् यष्ट्वा हरिं ध्यायेद् यस्तस्य किमतः परम् ।
न तस्मात् परतः पित्र्यं तन्त्रमस्तीति निश्चयः ।। १४.५३ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे चतुर्दशोऽध्यायः ।। १४ ।।
धरण्युवाच ।
एवं श्राद्धविधिं श्रुत्वा मार्कण्डेयान्महामुनिः ।
तदा गौरमुखो देव किमूर्ध्वं कृतवान् विभो ।। १५.१ ।।

श्रीवराह उवाच ।
एतच्छ्रुत्वा तदा धात्रि पितृतन्त्रं महामुनिः ।
संस्मारितो जन्मशतं मार्कण्डेयेन धीमता ।। १५.२ ।।
धरण्युवाच ।
भगवन् गौरमुखः कोऽसौ अन्यजन्मनि कः स्मृतः ।
कथं च स्मृतवान् स्मृत्वा किं चकार च सत्तमः ।। १५.३ ।।
श्रीवराह उवाच ।
भृगुरासीत् स्वयं साक्षादन्यस्मिन् ब्रह्म जन्मनि ।
तदन्वयात्मजस्त्वेष मार्कण्डेयो महामुनिः ।। १५.४ ।।
पुत्रैस्तु बोधिता यूयं सुगतिं प्राप्स्यथेति यत् ।
प्रागुक्तं ब्रह्मणा तेन मार्कण्डेयेन बोधितः ।। १५.५ ।।
सस्मार सर्वजन्मानि स्मृत्वा चैव तु यत्कृतम् ।
तच्छृणुष्व वरारोहे कथयामि समासतः ।। १५.६ ।।
एवं श्राद्धविधानेन द्वादशाब्दं ततः पितॄन् ।
इष्ट्वा पश्चाद्धरेः स्तोत्रं स मुनिस्तूपचक्रमे ।। १५.७ ।।
प्रभासं नाम यत्तीर्थं त्रिषु लोकेषु विश्रुतम् ।
तत्र दैत्यान्तकं देवं स्तोतुं गौरमुखः स्थितः ।। १५.८ ।।
गौरमुख उवाच ।
स्तोष्ये महेन्द्रं रिपुदर्पहं शिवं
नारायणं ब्रह्मविदां प्रतिष्ठितम् ।
आदित्यचन्द्राश्वियुगस्थमाद्यं
पुरातनं दैत्यहरं सदा हरिम् ।। १५.९ ।।
चकार मात्स्यं वपुरात्मनो यः
पुराकृतं वेदविनाशकाले ।
महामहीधृग्वपुरग्रपुच्छ -
छटाहवार्च्चिः सुरशत्रुहाद्यः ।। १५.१० ।।
तथाब्धिमन्थानकृते गिरीन्द्रं
दधार यः कौर्म्मवपुः पुराणम् ।
हितेच्छया यः पुरुषः पुराणः
प्रपातु मां दैत्यहरः सुरेशः ।। १५.११ ।।
महावराहः सततं पृथिव्यास्
तलात्तलं प्राविशद् यो महात्मा ।
यज्ञाङ्गसंज्ञः सुरसिद्धवन्द्यः

स पातु मां दैत्यहरः पुराणः ।। १५.१२ ।।
नृसिंहरूपी च भवत्यजस्त्रं
युगे युगे योगिवरोग्रभीमः ।
करालवक्त्रः कनकाग्रवर्चा
रत्नाशयोऽस्मानसुरान्तकोऽव्यात् ।। १५.१३ ।।
बलेर्मखध्वंसकृते महात्मा
स्वां गूढतां योगवपुःस्वरूपः ।
स दण्डकाष्ठाऽजिनलक्षणः पुनः
क्षितिं च पदा क्रान्तवान् यः स पातु ।। १५.१४ ।।
त्रिःसप्तकृत्वो जगतीं जिगाय
जित्वा ददौ कश्यपाय प्रचण्डः ।
स जामदग्न्योऽभिजनस्य गोप्ता
हिरण्यगर्भोऽसुरहा प्रपातु ।। १५.१५ ।।
चतुःप्रकारं च वपुर्य आद्यं
हैरण्यगर्भप्रतिमानलक्ष्यम् ।
रामादिरूपैर्बहुरूपभेद-
श्चकार सोऽस्मानसुरान्तकोऽव्यात् ।। १५.१६ ।।
चाणूरकंसासुरदर्पभीते-
र्भीतामराणामभयाय देवः ।
युगे युगे वासुदेवो बभूव
कल्पे भवत्यद्भुतरूपकारी ।
युगे युगे कल्किनाम्ना महात्मा
वर्णस्थितिं कर्त्तुमनेकमूर्त्तिः ।। १५.१७ ।।
सनातनो ब्रह्ममयः पुराणो
न यस्य रूपं सुरसिद्धदैत्याः ।
पश्यन्ति विज्ञानगतिं विहाय
अथोप्यनेकानि समर्च्चयन्ति ।
मत्स्यादिरूपाणि चराणि सोऽव्यात् ।। १५.१८ ।।
नमो नमस्ते पुरुषोत्तमाय
पुनश्च भूयोऽपि नमो नमस्ते ।
नमः पुरस्तादथ पृष्ठतस्ते
नयस्व मां मुक्तिपदं नमस्ते ।। १५.१९ ।।
एवं नमस्यतस्तस्य महर्षेर्भावितात्मनः ।

प्रत्यक्षतां गतो देवः स्वयं चक्रगदाधरः ।। १५.२० ।।
तं दृष्ट्वा तस्य विज्ञानं निस्तरङ्गं स्वदेहतः ।
उत्तस्थौ सोऽपि तं लब्ध्वा तस्मिन् ब्रह्मणि शाश्वते ।
लयं जगाम देवात्मा त्वपुनर्भवसंज्ञिते ।। १५.२१ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे पञ्चदशोऽध्यायः ।। १५ ।।

धरण्युवाच ।
तदा दुर्वाससा शप्तो देवराजः शतक्रतुः ।
वसिष्यसि त्वं मर्त्त्येषु सुप्रतीकसुतेन तु ।। १६.१ ।।
उत्सादितो दिवो मूढेत्येवमुक्तस्तु भूधर ।
इन्द्रो मर्त्त्यमुपागम्य सर्वदेवसमन्वितः ।। १६.२ ।।
किं चकार च तस्मिंस्तु दुर्जये च निपातिते ।
परमेष्ठिना भगवता तेन योगविदुत्तमौ ।। १६.३ ।।
स्वर्गे विद्युत्सुविद्युच्च तौ च किं चक्रतुस्तदा ।
एतन्मे संशयं देव कथयस्व प्रसादतः ।। १६.४ ।।
श्रीवराह उवाच ।
दूर्जयेन जितो धात्रि देवराजः शतक्रतुः ।
भारते हि तदा वर्षे वाराणस्यां तु पूर्वतः ।
आश्रित्य संस्थितो देवैः सह यक्षमहोरगैः ।। १६.५ ।।
विद्युत्सुविद्युच्च तदा योगमास्थाय शोभने ।
दीर्घतापज्वरं वायुकर्मयोगेन संश्रितौ ।।
लोकपालायितं कृत्स्नं चक्रतुर्योगमायया ।। १६.६ ।।
तं दुर्जयं मृतं श्रुत्वा समुद्रान्तःस्थितं तदा ।
आनीय चतुरङ्गं तु देवान् प्रति विजग्मतुः ।। १६.७ ।।
आगत्य तौ तदा दैत्यौ महत्सैन्येन पर्वतम् ।
हिमवन्तं समाश्रित्य संस्थितौ तु बभूवतुः ।। १६.८ ।।
देवा अपि महत्सैन्यं संहत्य कृतदंशिताः ।
मन्त्रयाञ्चक्रुरव्यग्रा ऐन्द्रं पदमभीप्सवः ।। १६.९ ।।
अब्रवीत् तत्र देवानां गुरुराङ्गिरसो मुनिः ।
गोमेधेन यजध्वं वै प्रथमेन तदन्तरम् ।। १६.१० ।।
यष्टव्यं क्रतुभिः सर्वैरेकस्थितिरथामराः ।
उपदेशो मया दत्तः क्रियतां शीघ्रमेष वै ।। १६.११ ।।
एवमुक्तास्तदा देवा गाः पशूंश्चानुकल्प्य ते ।
मुमुचुश्चरणार्थाय रक्षार्थं सरमां ददुः ।। १६.१२ ।।
ताश्च गावो देवशुन्या रक्ष्यमाणा धराधरे ।
तत्र जग्मुस्तदा गावश्चरन्त्यो यत्र तेऽसुराः ।। १६.१३ ।।
ते च गावस्तु ता दृष्ट्वा शुक्रमूचुः पुरोहितम् ।
पश्वर्थं देवगा ब्रह्मंश्चार्यन्ते रक्षमाणया ।
देवशून्या सरमया वद किं क्रियतेऽधुना ।। १६.१४ ।।

एवमुक्तस्तदा शुक्रः प्रत्युवाचासुरांस्तदा ।
एता गा ह्रियतां शीघ्रमसुरा मा विलम्बथ ।। १६.१५ ।।
एवमुक्तास्तदा दैत्या जह्रुस्ता गा यद्दृच्छया ।
हृतासु तासु सरमा मार्गमन्वेषणे रता ।। १६.१६ ।।
अपश्यत् सा दितेः पुत्रैर्नीता गावो धराधरे ।
दैत्यैरपि शुनी दृष्टा दृष्टमार्गा विशेषतः ।। १६.१७ ।।
दृष्ट्वा ते तां च साम्नैव सामपूर्वमिदं वचः ।
आसां गवां तु दुग्ध्वैव क्षीरं त्वं सरमे शुभे ।। १६.१८ ।।
पिबस्वैवमिति प्रोक्ता तस्यै तद् ददुरञ्जसा ।
दत्त्वा तु क्षीरपानं तु तस्यै ते दैत्यनायकाः ।। १६.१९ ।।
मा भद्रे देवराजाय गाश्चेमा विनिवेदय ।
एवमुक्त्वा ततो दैत्या मुमुचुस्तां शुनीं वने ।। १६.२० ।।
तैर्मुक्ता सा सुरांस्तूर्णं जगाम खलु वेपती ।
नमश्चक्रे च देवेन्द्रं सरमा सुरसत्तमम् ।। १६.२१ ।।
तस्याश्च मरुतो देवा देवेन्द्रेण निरूपिताः ।
गूढं गच्छत रक्षार्थं देवशुन्या महाबलाः ।। १६.२२ ।।
इत्युक्तास्तेन सूक्ष्मेण वपुषा जग्मुरञ्जसा ।
तेऽप्यागम्य सुरेन्द्राय नमश्चक्रुर्धराधरे ।। १६.२३ ।।
तां देवराजः पप्रच्छ क्व गावः सरमेऽभवन् ।
एवमुक्ता तु सरमा न जानामीति चाब्रवीत् ।। १६.२४ ।।
तत इन्द्रो रुषा युक्तो यज्ञार्थमुपकल्पिताः ।
गावः क्व चेति मरुतः प्रोवाचेदं शुनी कथम् ।। १६.२५ ।।
एवमुक्तास्तु मरुतो देवेन्द्रेण धराधरे ।
कथयामासुरव्यग्राः कर्म्मं तत् सरमाकृतम् ।। १६.२६ ।।
तत इन्द्रः समुत्थाय पदा संताडयच्छुनीम् ।
क्रोधेन महताविष्टो देवेन्द्रः पाकशासनः ।। १६.२७ ।।
क्षीरं पीतं त्वया मूढे गावस्ताश्चासुरैर्हृताः ।
एवमुक्त्वा पदा तेन ताडिता सरमा धरे ।। १६.२८ ।।
तस्येन्द्रपादघातेन क्षीरं वक्त्रात् प्रसुस्त्रुवे ।
स्त्रवता तेन पयसा सा शुनी यत्र गा भवन् ।
जगाम तत्र देवेन्द्रः सहसैन्यस्तदा धरे ।। १६.२९ ।।
गत्वा चापश्यद् देवेन्द्रस्ता गा दैत्यैरुपाहृताः ।
पालनां चक्रुर्ये दैत्या बलिनो भृशम् ।

ते सैन्यैर्निहताः सद्यस्तत्यजुर्गाः स्वमूर्त्तिभिः ।। १६.३० ।।
सामन्तैश्च सुरेन्द्रोऽथ वृतः परमहर्षितैः ।
ताश्च लब्ध्वा महेन्द्रस्तु मुदा परमया युतः ।। १६.३१ ।।
चकार यज्ञान् विविधान् सहस्त्रानपि स प्रभुः ।
क्रियमाणैस्ततो यज्ञैर्ववृधेन्द्रस्य तद् बलम् ।। १६.३२ ।।
वर्द्धितेन बलेनेन्द्रो देवसैन्यमुवाच ह ।
सन्नह्यन्तां सुराः शीघ्रं दैत्यानां वधकर्मणि ।। १६.३३ ।।
एवमुक्तास्ततो देवाः सन्नद्धास्तत्क्षणेऽभवन् ।
असुराणामभावाय जग्मुर्देवाः सवासवाः ।। १६.३४ ।।
गत्वा तु युयुधुस्तूर्णं विजिग्युस्त्वासुरीं चमूम् ।
जिताश्च देवैरसुरा हतशेषा धराधरे ।
ममज्जुः सागरजले भयत्रस्ता विचेतसः ।। १६.३५ ।।
देवराजोऽपि त्रिदिवं लोकपालैः समं धरे ।
आरुह्य बुभुजे प्राग्वत् स देवो देवराट् प्रभुः ।। १६.३६ ।।
य एनं श्रृणुयान्नित्यं सरमाख्यानमुत्तमम् ।
स गोमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ।। १६.३७ ।।
भ्रष्टराज्यश्च यो राजा श्रृणोतीदं समाहितः ।
स देवेन्द्र इव स्वर्गं राज्यं स्वं लभते नरः ।। १६.३८ ।।
।। इति श्रीवराहपुराणे भगवच्छात्रे षोडशोऽध्यायः ।। १६ ।।

धरण्युवाच ।
ये ते मणौ तदा देव उत्पन्ना नरपुंगवाः ।
तेषां वरो भगवता दत्तस्त्रेतायुगे किल ।। १७.१ ।।
राजानो भवितारो वै कथं तेषां समुद्भवः ।
किं च चक्रुर्हि ते कर्म पृथङ् नामानि शंस मे ।। १७.२ ।।
श्रीवराह उवाच ।
सुप्रभो मणिजो यस्तु राजा नाम्ना महामनाः ।
तस्योत्पत्तिं वरारोहे श्रृणु त्वं भूतधारिणि ।। १७.३ ।।
आसीद् राजा महाबाहुरादौ कृतयुगे पुरा ।
श्रुतकीर्तिरिति ख्यातस्त्रैलोक्ये बलवत्तरः ।। १७.४ ।।
तस्य पुत्रत्वमापेदे सुप्रभो मणिजो धरे ।
प्रजापालेति वै नाम्ना श्रुतकीर्तिर्महाबलः ।। १७.५ ।।
सैकस्मिंश्चिद् दिने प्रायाद् विपिनं श्वापदाकुम् ।
तत्रापश्यदृषेर्धन्यं महदाश्रममण्डलम् ।। १७.६ ।।
तस्मिन् महातपा नाम ऋषिः परधार्मिकः ।
तपस्तेपे निराहारो जपन् ब्रह्म सनातनम् ।। १७.७ ।।
तत्रासौ पार्थिवः श्रीमान् प्रवेशाय मतिं तदा ।
चकार चाविशद् राजा प्रजापालो महातपाः ।। १७.८ ।।
तस्मिन् वराश्रमपदे वनवृक्षजात्या
धराप्रसूतोर्जितमार्गजुष्टाः ।
लतागृहा इन्दुरविप्रकाशिनो
नायासितज्ञाः कुलभृङ्गराजाः ।। १७.९ ।।
सुरक्तपद्मोदरकोमलाग्र-
नखाङ्गुलीभिः प्रसृतैः सुराणाम् ।
वराङ्गनाभिः पदपङ्क्तिमुच्चै-
विंहाय भूमिं त्वपि वृत्रशत्रोः ।। १७.१० ।।
क्वचित् समीपे तमतीव हृष्टै-
र्नानाद्विजैः षट्चृरणैश्च मत्तैः ।
वासद्भिरुच्चैर्विविधप्रमाणाः
शाखाः सुपुष्पाः समयोगयुक्ताः ।। १७.११ ।।
कदम्बनीपार्ज्जुनशीलशाल-
लतागृहस्थैर्मधुरस्वरेण ।
जुष्टं विहङ्गैः सुजनप्रयोगा
निराकुला कार्यधृतिर्यथास्थैः ।। १७.१२ ।।
मखाग्निधूमैरुदिताग्निहोमै-
स्ततः समन्तात् गृहमेधिभिर्द्विजैः ।
सिंहैरिवाधर्म्मकरी विदारितः
स तीक्ष्णदंष्ट्रैर्वरमत्तकेसरैः ।। १७.१३ ।।

एवं स राजा विविधानुपायान्
वराश्रमे प्रेक्षमाणो विवेश ।
तस्मिद् प्रविष्टे तु स तीव्रतेजा
महातपाः पुण्यकृतां प्रधानः ।
दृष्टो यथा भानुरनन्तभानुः
कौश्यासने ब्रह्मविदां प्रधानः ।। १७.१४ ।।
दृष्ट्वा स राजा विजयी मृगाणां
मतिं विसस्मार मुनेः प्रसङ्गात् ।
चकार धर्मं प्रति मानसं सो
अनुत्तमं प्राप्य नृपो मुनिं सः ।। १७.१५ ।।
स मुनिस्तं नृपं दृष्ट्वा प्रजापालमकल्मषम् ।
अभ्यागतक्रियां चक्रे आसनस्वागतादिभिः ।। १७.१६ ।।
ततः कृतासनो राजा प्रणम्य ऋषिपुङ्गवम् ।
पप्रच्छ वसुधे प्रश्नमिमं परमदुर्लभम् ।। १७.१७ ।।
भगवन् दुःखसंसारमग्नैः पुम्भिस्तितीर्षुभिः ।
यत्कार्यं तन्ममाचक्ष्व प्रणते शंसितव्रत ।। १७.१८ ।।
महातपा उवाच ।
संसारार्णवमज्जमानमनुजैः पोतः स्थिरोऽतिध्रुवः
कार्यः पूजनदानहोमविविधैर्यज्ञैः समं ध्यायनैः ।
कीलैः कीलितमोक्षभिः सुरभटैरूर्ध्वं महारज्जुभिः
प्राणाद्यैरधुना कुरुष्व नृपते पोतं त्रिलोकेश्वरम् ।। १७.१९ ।।
नारायणं नरकहरं सुरेशं
भक्त्या नमस्कुर्वति यो नृपेश ।
स वीतशोकः परमं विशोकं
प्राप्नोति विष्णोः पदमव्ययं तत् ।। १७.२० ।।
नृप उवाच ।
भगवन् सर्वधर्मज्ञ कथं विष्णुः सनातनः ।
पूज्यते मोक्षमिच्छद्भिः पुरुषैर्वद तत्त्वतः ।। १७.२१ ।।
महातपा उवाच ।
श्रृणु राजन् महाप्राज्ञ यथा विष्णुः प्रसीदति ।
पुरुषाणां तथा स्त्रीणां सर्वयोगीश्वरो हरिः ।। १७.२२ ।।
सर्वे देवाः सपितरो ब्रह्माद्याश्चाण्डमध्यगाः ।
विष्णोः सकाशादुत्पन्ना इतीयं वैदिकी श्रुतिः ।। १७.२३ ।।
अग्निस्तथाश्विनौ गौरी गजवक्त्रभुजंगमाः ।
कार्तिकेयस्तथादित्यो मातरो दुर्गया सह ।। १७.२४ ।।
दिशो धनपतिर्विष्णुर्यमो रुद्रः शशी तथा ।
पितरश्चेति संभूताः प्राधान्येन जगत्पतेः ।। १७.२५ ।।
हिरण्यगर्भस्य तनौ सर्वं एव समुद्भवाः ।

पृथक्पृथक् ततो गर्वं वहमानाः समन्ततः ।। १७.२६ ।।
अहं योग्यस्त्वहं याज्य इति तेषां स्वनो महान् ।
श्रूयते देवसमितौ सागरक्षुब्धसन्निभः ।। १७.२७ ।।
तेषां विवदमानानां वह्निरुत्थाय पार्थिव ।
उवाच मां यजस्वेति ध्यायध्वं मामिति ब्रुवन् ।। १७.२८ ।।
प्राजापत्यमिदं नूनं शरीरं मद्विनाकृतम् ।
विनाशमुपपद्येत यतो नाहं महानहम् ।। १७.२९ ।।
एवमुक्त्वा शरीरं तु त्यक्त्वा वह्निर्विनिर्ययौ ।
निर्गतेऽपि ततस्तस्मिंस्तच्छरीरं न शीर्यते ।। १७.३० ।।
ततोऽश्विनौ मूर्तिमन्तौ प्राणापानौ शरीरगौ ।
आवां प्रधानावित्येवमूचतुर्याज्यसत्तमौ ।। १७.३१ ।।
एवमुक्त्वा शरीरं तु विहाय क्वचिदास्थितौ ।
तयोरपि क्षयं कृत्वा क्षेत्री तत्पुरमास्थितः ।। १७.३२ ।।
ततो वागब्रबीद् गौरी प्राधान्यं मयि संस्थितम् ।
साऽप्येवमुक्त्वा क्षेत्रात् तु निश्चक्राम बहिः शुभा ।। १७.३३ ।।
तया विनापि तत्क्षेत्रं वागूनं व्यवतिष्ठत ।
ततो गणपतिर्वाक्यमाकाशाख्योऽब्रवीत् तदा ।। १७.३४ ।।
न मया रहितं किञ्चिच्छरीरं स्थायि दूरतः ।
कालान्तरेत्येवमुक्त्वा सोऽपि निष्क्रम्य देहतः ।। १७.३५ ।।
पृथग्भूतस्तथाप्येतच्छरीरं नाप्यनीनशत् ।
विनाकाशाख्यतत्त्वेन तथापि न विशीर्यते ।। १७.३६ ।।
सुषिरैस्तु विहीनं तु दृष्ट्वा क्षेत्रं व्यवस्थितम् ।
शरीरधातवः सर्वे ते ब्रूयुर्वाक्यमेव हि ।। १७.३७ ।।
अस्माभिर्व्यतिरिक्तस्य न शरीरस्य धारणम् ।
भवतीत्येवमुक्त्वा ते जहुः सर्वे शरीरिणः ।। १७.३८ ।।
तैर्व्यपेतमपि क्षेत्रं पुरुषेण प्रपाल्यते ।
तं दृष्ट्वा त्वब्रवीत् स्कन्दः सोऽहंकारः प्रकीर्तितः ।। १७.३९ ।।
मया विना शरीरस्य संभूतिरपि नेष्यते ।
एवमुक्त्वा शरीरात् तु सोऽभ्यपेतः पृथक् स्थितः ।। १७.४० ।।
तेनाक्षतेन तत्क्षेत्रं विना मुक्तवदास्थितम् ।
तं दृष्ट्वा कुपितो भानुः स आदित्यः प्रकीर्तितः ।। १७.४१ ।।
मया विना कथं क्षेत्रमिमं क्षणमपीष्यते ।
एवमुक्त्वा प्रयातः स तच्छरीरं न शीर्यते ।। १७.४२ ।।
ततः कामादिरुत्थाय गणो मातृविसंज्ञितः ।
न मया व्यतिरिक्तस्य शरीरस्य व्यवस्थितिः ।
एवमुक्त्वा स यातस्तु शरीरं तन्न शीर्यते ।। १७.४३ ।।
ततो मायाऽब्रवीत्कोपात् सा च दुर्गा प्रकीर्तिता ।
न मयाऽस्य विना भूतिरित्युक्त्वाऽन्तर्दधे पुनः ।। १७.४४ ।।

ततो दिशः समुत्तस्थुरूचुश्चेदं वचो महत् ।
नास्माभी रहितं कार्यं भवतीति न संशयः ।
चतस्त्र आगताः काष्ठा अपयाताः क्षणात् तदा ।। १७.४५ ।।
ततो धनपतिर्वायुर्मय्यपेते क्व संभवः ।
शरीरस्येति सोप्येवमुक्त्वा मूर्धानगोऽभवत् ।। १७.४६ ।।
ततो विष्णुर्मनो ब्रूयान्नायं देहो मया विना ।
क्षणमप्युत्सहेत् स्थातुमित्युक्त्वाऽन्तर्दधे पुनः ।। १७.४७ ।।
ततो धर्मोऽब्रवीत् सर्वमिदं पालितवानहम् ।
इदानीमप्युपगते कथमेतद्भविष्यति ।। १७.४८ ।।
एवमुक्त्वा गतो धर्मस्तच्छरीरं न शीर्यते ।
ततोब्रवीन्महादेवः अव्यक्तो भूतनायकः ।। १७.४९ ।।
महत्संज्ञो मया हीनं शरीरं नो भवेद् यथा ।
एवमुक्त्वा गतः शम्भुस्तच्छरीरं न शीर्यते ।। १७.५० ।।
तं दृष्ट्वा पितरश्चोचुस्तन्मात्रा यावदस्मभिः ।
प्रगतैरेभिरेतच्च शरीरं शीर्यते ध्रुवम् ।
एवमुक्त्वा तु ते देहं त्यक्त्वाऽन्तर्द्धानमागताः ।। १७.५१ ।।
अग्निः प्राणो अपानश्च आकाशं सर्वधातवः ।
क्षेत्रं तद्वदहंकारो भानुः कामादयो मया ।
काष्ठा वायुर्विष्णुर्धर्म शम्भुस्तथेन्द्रियार्थकाः ।। १७.५२ ।।
एतैर्मुक्तं तु तत्क्षेत्रं तत् तथैव व्यवस्थितम् ।
सोमेन पाल्यमानं तु पुरुषेणेन्दुरूपिणा ।। १७.५३ ।।
एवं व्यवस्थिते सोमे षोडशात्मन्यथाक्षरे ।
प्राग्वत् तत्र गुणोपेतं क्षेत्रमुत्थाय बभ्रम ।। १७.५४ ।।
प्रागवस्थं शरीरं तु दृष्ट्वा सर्वज्ञपालितम् ।
ताः क्षेत्रदेवताः सर्वा वैलक्षं भावमाश्रिताः ।। १७.५५ ।।
तमेवं तुष्टुवुः सर्वास्तं देवं परमेश्वरम् ।
स्वस्थानमीयिषुः सर्वास्तदा नृपतिसत्तम ।। १७.५६ ।।
त्वमग्निस्त्वं तथा प्राणस्त्वमपानः सरस्वती ।
त्वमाकाशं धनाध्यक्षस्त्वं शरीरस्य धातवः ।। १७.५७ ।।
अहंकारो भवान् देव त्वमादित्योऽष्टको गणः ।
त्वं माया पृथिवी दुर्गा त्वं दिशस्त्वं मरुत्पतिः ।। १७.५८ ।।
त्वं विष्णुस्त्वं तथा धर्मस्त्वं जिष्णुस्त्वं पराजितः ।
अक्षरार्थस्वरूपेण परमेश्वरसंज्ञितः ।। १७.५९ ।।
अस्माभिरपयातैस्तु कथमेतद्भविष्यति ।
एवमत्र शरीरं तु त्यक्तमस्माभिरेव च ।। १७.६० ।।
तत् परं भवता देव तदवस्थं प्रपाल्यते ।
स्थानभङ्गो न नः कार्यः स्वयं सृष्ट्वा प्रजापते ।। १७.६१ ।।
एवं स्तुतस्ततो देवस्तेषां तोषं परं ययौ ।

उवाच चैतान् क्रीडार्थं भवन्तोत्पादिता मया ।। १७.६२ ।।
कृतकृत्यस्य मे किं नु भवद्भिर्विप्रयोजनम् ।
तथापि दद्मि वो रूपे द्वे द्वे प्रत्येकशोऽधुना ।। १७.६३ ।।
भूतकार्येष्वमूर्तेन देवलोके तु मूर्तिना ।
तिष्ठध्वमपि कालान्ते लयं त्वाविशत द्रुतम् ।। १७.६४ ।।
शरीराणि पुनर्नैवं कर्त्तव्योऽहमिति क्वचित् ।
मूर्त्तीनां च तथा तुभ्यं दद्मि नामानि वोऽधुना ।। १७.६५ ।।
अग्नेर्वैश्वानरो नाम प्राणापानौ तथाश्विनौ ।
भविष्यति तथा गौरी हिमशैलसुता तथा ।। १७.६६ ।।
पृथिव्यादिगणस्त्वेष गजवक्त्रो भविष्यति ।
शरीरधातवश्चेमे नानाभूतानि एव तु ।
अहंकारस्तथा स्कन्दः कार्त्तिकेयो भविष्यति ।। १७.६७ ।।
भानुश्चादित्यरूपोऽसौ मूर्त्तामूर्त्त च चक्षुषी ।
कामाद्योऽयं गणो भूयो मातृरूपो भविष्यति ।। १७.६८ ।।
शरीरमाया दुर्गैषा कारणान्ते भविष्यति ।
दश कन्या भविष्यन्ति काष्ठास्त्वेतास्तु वारुणाः ।। १७.६९ ।।
अयं वायुर्धनेशस्तु कारणान्ते भविष्यति ।
अयं मनो विष्णुनामा भविष्यति न संशयः ।। १७.७० ।।
धर्मोऽपि यमनामा च भविष्यति न संशयः ।
महत्तत्त्वं च भगवान् महादेवो भविष्यति ।। १७.७१ ।।
इन्द्रियार्थाश्च पितरो भविष्यन्ति न संशयः ।
अयं सोमः स्वयं भूत्वा यामित्रं सर्वदामराः ।। १७.७२ ।।
एवं वेदान्तपुरुषः प्रोक्तो नारायणात्मकः ।
स्वस्थाने देवताः सर्वा देवस्तु विरराम ह ।। १७.७३ ।।
एवं प्रभावो देवोऽसौ वेदवेद्यो जनार्दनः ।
कथितो नृपते तुभ्यं किमन्यच्छ्रोतुमिच्छसि ।। १७.७४ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे सप्तदशोऽध्यायः ।। १७ ।।

प्रजापाल उवाच ।
कथमग्नेः समुत्पत्तिरश्विनोर्वा महामुने ।
गौर्या गणपतेर्वाऽपि नागानां वा गुहस्य च ।। १८.१ ।।
आदित्यचन्द्रमातृणां दुर्गाया वा दिशां तथा ।
धनदस्य च विष्णोर्वा धर्मस्य परमेष्ठिनः ।। १८.२ ।।
शम्भोर्वापि पितृणां च तथा चन्द्रमसो मुने ।
शरीरदेवता ह्येताः कथं मूर्त्तित्वमागताः ।। १८.३ ।।
किं च तासां मुने भोज्यं का वा संज्ञा तिथिश्च का ।
यस्यां यष्टास्त्वमी पुंसां फलं यच्छन्त्यनामयम् ।
एतन्मे सरहस्यं तु मुने त्वं वक्तुमर्हसि ।। १८.४ ।।
महातपा उवाच ।
योगसाध्यः स्वरूपेण आत्मा नारायणात्मकः ।
सर्वज्ञः क्रीडतस्तस्य भोगेच्छा चात्मनात्मनि ।
क्षोभितेऽभून्महाभूते एतच्छब्दं तदद्भुतम् ।। १८.५ ।।
तमप्यप्रीतिमत्तोयं विकारं समरोचयत् ।
विकुर्वतस्तस्य तदा महानग्निः समुत्थितः ।
कोटिज्वालापरीवारः शब्दवान् दहनात्मकः ।। १८.६ ।।
असावप्यतितेजस्वी विकारं समरोचयत् ।
विकुर्वतो बभौ वह्नेर्वायुः परमदारुणः ।
तस्मादपि विकारस्थादाकाशं समपद्यत ।। १८.७ ।।
तच्छब्दलक्षणं व्योम स च वायुः प्रतापवान् ।
तच्च तेजोऽम्भसा युक्तं श्लिष्टमन्योन्यतस्तदा ।। १८.८ ।।
तेजसा शोषितं तोयं वायुना उग्रगामिना ।
बाधितेन तथा व्योम्ना मार्गे दत्ते तु तत्क्षणात् ।। १८.९ ।।
पिण्डीभूतं तथा सर्वं काठिन्यं समपद्यत ।
सेयं पृथ्वी महाभाग तेषां वृद्धतराऽभवत् ।। १८.१० ।।
चतुर्णां योगकाठिन्यादेकैकगुणवृद्धितः ।
पृथ्वी पञ्चगुणा ज्ञेया तेऽप्येतस्यां व्यवस्थिताः ।। १८.११ ।।
स च काठिन्यकं कुर्वन् ब्रह्माण्डं समपद्यत ।
तस्मिन् नारायणो देवश्चतुर्मूर्तिश्चतुर्भुजः ।। १८.१२ ।।
प्राजापत्येन रूपेण सिसृक्षुर्विविधाः प्रजाः ।
चिन्तयन् नाधिगच्छेत सृष्टिं लोकपितामहः ।। १८.१३ ।।
ततोऽस्य सुमहान् कोपो जज्ञे परमदारुणः ।
तस्मात् कोपात् सहस्त्रार्चिरुत्तस्थौ दहनात्मकः ।। १८.१४ ।।
स तं दिधक्षुर्ब्रह्माणं ब्रह्मणोक्तस्तदा नृप ।
हव्यं कव्यं वहस्वेति ततोऽसौ हव्यवाहनः ।। १८.१५ ।।
ब्रह्माणं क्षुधितः प्रायात् किं करोमि प्रसाधि माम् ।
स ब्रह्मा प्रत्युवाचाथ त्रिधा तृप्तिमवाप्स्यसि ।। १८.१६ ।।

दत्तासु दक्षिणास्वादौ तृप्तिर्भूत्वा यतोऽमरान् ।
नयसे दक्षिणाभागं दक्षिणाग्निस्ततोऽभवत् ।। १८.१७ ।।
आ समन्ताद्धुतं किंचिद् यत् त्रिलोके विभावसो ।
तद् वहस्व सुरार्थाय ततस्त्वं हव्यवाहनः ।। १८.१८ ।।
गृहं शरीरमित्युक्तं तत्पतिस्त्वं यतोऽधुना ।
अतो वै गार्हपत्यस्त्वं भव सर्वगतो विभो ।। १८.१९ ।।
विश्वान् नरान् हुतो येन नयसे सद्गतिं प्रभो ।
अतो वैश्वानरो नाम तव वाक्यं भविष्यति ।। १८.२० ।।
द्रविणं बलमित्युक्तं धनं च द्रविणं यतः ।
ददाति तद् भवानेव द्रविणोदास्ततोऽभवत् ।। १८.२१ ।।
तनुं पास्यतनुं पासि येन त्वं सर्वदा विभो ।
ततस्तनूनपान्नाम तव वत्स भविष्यति ।। १८.२२ ।।
भवान् जातानि वै वेद अजातानि च येन वै ।
अतस्ते नाम भवतु जातवेदा इति प्रभो ।। १८.२३ ।।
नाराः सामान्यतः पुंसो विशेषेण द्विजातयः ।
ते शंसन्ति यतस्त्वां तु नाराशंसस्ततो भव ।। १८.२४ ।।
अगस् तिरोभवेन्नित्यं निःशब्दो निश्चयात्मकः ।
अगस्त्वं सर्वगत्वाच्च तेनाग्निस्त्वं भविष्यसि ।। १८.२५ ।।
ध्मा प्रपूरणशब्दो य इध्मा नाम प्रकीर्त्यते ।
पूरितस्यागतिर्येन तेनेध्मस्त्वं भविष्यसि ।। १८.२६ ।।
याज्यान्येतानि नामानि तव पुत्र महामखे ।
यजन्तस्त्वां नराः कामैस्तर्पयिष्यन्त्यसंशयम् ।। १८.२७ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे अष्टादशोऽध्यायः ।। १८ ।।

महातपा उवाच ।
विष्णोर्विभूतिमाहात्म्यं कथितं ते प्रसङ्गतः ।
तिथीनां शृणु माहात्म्यं कथ्यमानं मया नृप ।। १९.१ ।।
इत्थंभूतो महानग्निर्ब्रह्मक्रोधोद्भवो महान् ।
उवाच देवं ब्रह्माणं तिथिर्मे दीयतां विभो ।
यस्यामहं समस्तस्य जगतः ख्यातिमाप्नुयाम् ।। १९.२ ।।
ब्रह्मोवाच ।
देवानामथ यक्षाणां गन्धर्वाणां च सत्तम ।
आदौ प्रतिपदा येन त्वमुत्पन्नोऽसि पावक ।। १९.३ ।।
त्वत्पदात् प्रतिपदं चान्या संभविष्यन्ति देवताः ।
अतस्ते प्रतिपन्नाम तिथिरेषा भविष्यति ।। १९.४ ।।
तस्यां तिथौ हविष्येण प्राजापत्येन मूर्तिना ।
होष्यन्ति तेषां प्रीताः स्युः पितरः सर्वदेवताः ।। १९.५ ।।
चतुर्विधानि भूतानि मनुष्याः पशवोऽसुराः ।
देवाः सर्वे सगन्धर्वाः प्रीताः स्युस्तर्पिते त्वयि ।। १९.६ ।।
यश्चोपवासं कुर्वीत त्वद्भक्तः प्रतिपद्दिने ।
क्षीराशनो वा वर्त्तेत शृणु तस्य फलं महत् ।। १९.७ ।।
चतुर्युगानि षट्त्रिंशत् स्वर्लोकेऽसौ महीयते ।
तेजस्वी रूपसंपन्नो द्रव्यवान् जायते नरः ।। १९.८ ।।
इह जन्मन्यसौ राजा प्रेत्य स्वर्गे महीयते ।
तूष्णीं बभूव सोप्यग्निर्ब्रह्मदत्ताश्रयं ययौ ।। १९.९ ।।
य इदं शृणुयान्नित्यं प्रातरुत्थाय मानवः ।
अग्नेर्जन्म स पापेभ्यो मुच्यते नात्र संशयः ।। १९.१० ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे एकोनविंशोऽध्यायः ।। १९ ।।

प्रजापाल उवाच ।
एवमग्नेः समुत्पत्तिर्जाता ब्रह्मन् महात्मनः ।
प्राणापानौ कथं देवावश्विनौ संबभूवतुः ।। २०.१ ।।
मरीचिर्ब्रह्मणः पुत्रः स्वयं ब्रह्मा द्विसप्तभिः ।
रूपैर्व्यवस्थितस्तेषां मरीचिः श्रेष्ठतामगात् ।। २०.२ ।।
तस्य पुत्रो महातेजाः कश्यपो नाम वै मुनिः ।
स्वयं प्रजापतिः श्रीमान् देवतानां पिताऽभवत् ।। २०.३ ।।
तस्य पुत्रा बभूवुर्हि आदित्या द्वादश प्रभो ।
अदित्यपत्यानि ते सर्वे आदित्यास्तेन कीर्तिताः ।। २०.४ ।।
तेषां मध्ये महातेजा मार्त्तण्डो लोकविश्रुतः ।
नारायणात्मकं तेजो द्वादशं संप्रकीर्तितम् ।। २०.५ ।।
ये ते मासास्त आदित्याः स्वयं संवत्सरो हरिः ।
एवं ते द्वादशादित्या मार्त्तण्डश्च प्रधानवान् ।। २०.६ ।।
तस्य त्वष्टा ददौ कन्यां संज्ञां नाम महाप्रभाम् ।
तस्यापत्यद्वयं जज्ञे यमश्च यमुना तथा ।। २०.७ ।।
तस्य तेजोऽप्यसहती बभूवाश्वी मनोजवा ।
स्वां छायां तत्र संस्थाप्य सा जगमोत्तरान् कुरून् ।। २०.८ ।।
तद्रूपां तां सवर्णां तु भेजे मार्त्तण्डभास्करः ।
तस्या अपि द्वयं जज्ञे शनिं तपतिमेव च ।। २०.९ ।।
यदा त्वसदृशं भेजे पुत्रान् प्रति नरोत्तम ।
संज्ञां प्रोवाच भगवान् क्रोधसंरक्तलोचनः ।
असमत्वं न कर्त्तव्यं स्वेष्वपत्येषु भामिनि ।। २०.१० ।।
एवमुक्ता यदा सा तु असमत्वं व्यरोचत ।
तदा यमः स्वपितरं प्रोवाच भृशदुःखितः ।। २०.११ ।।
नेयं माता भवेत् तात अस्माकं शत्रुवत् सदा ।
सपत्नीव वृथाचारा स्वेस्वपत्येषु वत्सला ।। २०.१२ ।।
एवं यमवचः श्रुत्वा सा छाया क्रोधमूर्च्छिता ।
शशाप प्रेतराजस्त्वं भविष्यस्यचिरादिव ।। २०.१३ ।।
एवं श्रुत्वाऽथ मार्त्तण्डस्तदा पुत्रहितैषया ।
उवाच मध्यवर्ती त्वं भविता धर्मपापयोः ।
लोकपालश्च भविता त्वं पुत्र दिवि शोभसे ।। २०.१४ ।।
शनिं शशाप मार्त्तण्डश्छायाकोपप्रधर्षितः ।
त्वं क्रूरदृष्टिर्भविता मातृदोषेण पुत्रक ।। २०.१५ ।।
एवमुक्त्वा समुत्थाय योगं भानुर्दिदृक्षया ।
तामपश्यत्त्वसौ साश्वी उत्तरेषु कुरुष्वथ ।। २०.१६ ।।
ततोऽश्वरूपं कृत्वा स गत्वा तत्रोत्तरान् कुरून् ।
प्राजापत्येन मार्गेण युयोजात्मानमात्मना ।। २०.१७ ।।
तस्यां त्वाष्ट्र्यामश्वरूप्यां मार्त्तण्डस्तीव्रतेजसः ।

बीजं निर्वापयामास तज्ज्वलन्तं द्विधाऽपतत् ।। २०.१८ ।।
तत्र प्राणस्त्वपानश्च योनौ चात्मजितौ पुरा ।
वरदानेन च पुनर्मूर्त्तिमन्तौ बभूवतुः ।। २०.१९ ।।
तौ त्वाष्ट्र्यामश्वरूपिण्यां जातौ येन नरोत्तमौ ।
ततस्तावश्विनौ देवौ कीर्त्त्येते रविनन्दनौ ।। २०.२० ।।
प्रजापतिः स्वयं भानुस्त्वाष्ट्री शक्तिः परापरा ।
तस्याः प्राग्वच्छरीरस्थावमूर्त्तौ मूर्तिमाश्रितौ ।। २०.२१ ।।
ततस्तावश्विनौ देवौ मार्त्तण्डमुपतस्थतुः ।
ऊचतुः स्वरुचिं तावत् किं कर्त्तव्यमथावयोः ।। २०.२२ ।।
मार्त्तण्ड उवाच ।
पुत्रौ प्रजापतिं देवं भक्त्याराधयतां वरम् ।
नारायणं स वो दाता वरं नूनं भविष्यति ।। २०.२३ ।।
एवं तावश्विनौ प्रोक्तौ मार्त्तण्डेन महात्मना ।
तेपतुस्तीव्रतपसौ तपः परमदुश्चरम् ।
ब्रह्मपारमयं स्तोत्रं जपन्तौ तु समाहितौ ।। २०.२४ ।।
तयोः कालेन महता ब्रह्मा नारायणात्मकः ।
तुतोष परमप्रीत्या वरं चैतं ददौ तयोः ।। २०.२५ ।।
प्रजापाल उवाच ।
अश्विभ्यामीरितं स्तोत्रं ब्रह्मणोऽव्यक्तजन्मनः ।
श्रोतुमिच्छाम्यहं ब्रह्मंस्त्वत्प्रसादान्महामुने ।। २०.२६ ।।
महातपा उवाच ।
श्रृणु राजन् यथा स्तोत्रमश्विभ्यां ब्रह्मणः कृतम् ।
ईदृशं च फलं प्राप्तं तयोः स्तोत्रस्य चानघ ।। २०.२७ ।।
ॐनमस्ते निष्क्रिय निष्प्रपञ्च निराश्रय निरपेक्ष निरालम्ब
निर्गुण निरालोक निराधार निर्जय निराकार ।
ब्रह्मन् महाब्रह्मन् ब्राह्मणप्रिय पुरुष महापुरुषोत्तम ।
देव महादेवोत्तम स्थाणो स्थितस्थापक ।
भूत महाभूत भूताधिपति यक्ष महायक्ष यक्षाधिपते ।
गुह्य महागुह्याधिपते सौम्य महासौम्य सौम्याधिपते ।
पक्षि महापक्षिपते दैत्य महादैत्याधिपते ।
रुद्र महारुद्राधिपते विष्णु महाविष्णुपते ।
परमेश्वर नारायण प्रजापतये नमः ।
एवं स्तुतस्तदा ताभ्यामश्विभ्यां स प्रजापतिः ।
तुतोष परमप्रीत्या वाक्यं चेदमुवाच ह ।। २०.२८ ।।
वरं वरयतां शीघ्रं देवैः परमदुर्लभम् ।
येन मे वरदानेन चरतस्त्रिदिवं सुखम् ।। २०.२९ ।।
अश्विनावूचतुः ।
आवयोर्यज्ञभागं तु देहि देव प्रजापते ।

सोमपत्वं च देवानां सामान्यत्वं च शाश्वतम् ।। २०.३० ।।
ब्रह्मोवाच ।
रूपं कान्तिरनौपम्यं भिषक्त्वं सर्ववस्तुषु ।
सोमपत्वं च लोकेषु सर्वमेतद् भविष्यति ।। २०.३१ ।।
एतत् सर्वं द्वितीयायामश्विभ्यां ब्रह्मणा पुरा ।
दत्तं यस्मादतस्तेषां तिथीनामुत्तमा तिथिः ।। २०.३२ ।।
एतस्यां रूपकामस्तु पुष्पाहारो भवेन्नरः ।
संवत्सरं शुचिर्नित्यं सुस्वरूपी भवेन्नरः ।
अश्विभ्यां ये गुणाः प्रोक्तास्ते तस्यापि भवन्ति च ।। २०.३३ ।।
य इदं श्रृणुयान्नित्यमश्विभ्यां जन्म चोत्तमम् ।
सर्वपापविनिर्मुक्तः पुत्रवान् जायते नरः ।। २०.३४ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे विंशोऽध्यायः ।। २० ।।

महातपा उवाच ।
पूर्वं प्रजापतिर्देवः सिसृक्षुर्विविधाः प्रजाः ।
चिन्तयामास धर्मात्मा यदा ता नाध्यगच्छत ।। २१.२ ।।
तदाऽस्य कोपात् संजज्ञे स च रुद्रः प्रतापवान् ।
रोदनात् तस्य रुद्रत्वं संजातं परमेष्ठिनः ।। २१.३ ।।
तस्य ब्रह्मा शुभां कन्यां भार्यार्थं मूर्त्तिसंभवाम् ।
गौरी नाम्ना स्वयं देवी भारती तां ददौ पिता ।। २१.४ ।।
रुद्रायामितदेहाय स्वयं ब्रह्मा प्रजापतिः ।
स तां लब्ध्वा वरारोहां मुदा परमया युतः ।। २१.५ ।।
सर्गकालेषु तं ब्रह्मा तपसा प्रत्युवाच ह ।
रुद्र प्रजाः सृजस्वेति पौनःपुन्येन चोदितः ।
असमर्थोऽहमिति जले निमज्जत महाबलः ।। २१.६ ।।
तपोर्थित्वं तपोहीनः स्त्रष्टुं शक्नोति न प्रजाः ।
एवं चिन्त्य जले मग्नस्ततो रुद्रः प्रतापवान् ।। २१.७ ।।
तस्मिन् निमग्ने देवेशे तां ब्रह्मा कन्यकां पुनः ।
अन्तःशरीरगां कृत्वा गौरीं परमशोभनाम् ।। २१.८ ।।
पुनः सिसृक्षुर्भगवानसृजत् सप्त मानसान् ।
दक्षं च तेषामारभ्य प्रजाः सम्यग् व्यवर्द्धिताः ।। २१.९ ।।
तत्र दाक्षायणीपुत्राः सर्वे देवाः सवासवाः ।
वसवोऽष्टौ च रुद्राश्च आदित्या मरुतस्तथा ।। २१.१० ।।
साऽपि दक्षाय सुश्रोणी गौरी दत्ताथ ब्रह्मणा ।
दुहितृत्वे पुरा या हि रुद्रेणोढा महात्मना ।। २१.११ ।।
सा च दाक्षायणी देवी पुनर्भूता नृपोत्तम ।
ततो दक्षः प्रहृष्टात्मा दौहित्रान् स्वान् स वृद्धिकृत् ।
दृष्ट्वा यज्ञमथारेभे प्रीणनाय प्रजापतिः ।। २१.१२ ।।
तत्र ब्रह्मसुताः सर्वे मरीच्यादय एव च ।
चक्रुरात्त्विर्ज्यकं कर्म्म स्वे स्वे मार्गे व्यवस्थिताः ।। २१.१३ ।।
ब्रह्मा स्वयं मरीच्यस्तु बभूवाऽन्ये तथापरे ।
अत्रिस्तु यज्ञकर्मस्थ आग्नीध्रस्त्वङ्गिरा भवत् ।। २१.१४ ।।
होता पुलस्त्यस्त्वभवदुद्गाता पुलहोऽभवत् ।
क्रतौ क्रतुस्तु प्रस्तोता तदा यज्ञे महातपाः ।। २१.१५ ।।
प्रतिहर्ता प्रचेतास्तु तस्मिन् क्रतुवरे बभौ ।
सुब्रह्मण्यो वसिष्ठस्तु सनकाद्याः सभासदः ।

तत्र याज्यः स्वयं ब्रह्मा स च इज्यस्तु पूज्यते ।। २१.१६ ।।
पूज्या दक्षस्य दौहित्रा रुद्रादित्याङ्गिरादयः ।
प्रत्यक्षपितरस्ते हि तैः प्रीतैः प्रीयते जगत् ।। २१.१७ ।।
तत्र भागार्थिनो देवा आदित्या वसवस्तथा ।
विश्वेदेवाः सपितरो गन्धर्वाद्या मरुद्गणाः ।। २१.१८ ।।
जगृहुर्यज्ञभागान् स्वान् यावत् ते हविषोर्पितान् ।
तावत्कालं जलात् सद्य उत्तस्थौ ब्रह्मणः पुनः ।। २१.१९ ।।
रुद्रः कोपोद्भवो यस्तु पूर्वं मग्नो महाजले ।
स सहस्त्रार्कसंकाशो निश्चक्राम जलात् ततः ।। २१.२० ।।
सर्वज्ञानमयो देवः सर्वदेवमयोऽमलः ।
प्रत्यक्षदर्शी सर्वस्य जगतस्तपसा बभौ ।। २१.२१ ।।
तस्मिंस्तु काले पञ्चानां जातः सर्गो नरोत्तम ।
दिव्यानां पृथिवीस्थानां चतुर्णामरजातिनाम् ।। २१.२२ ।।
रौद्रसर्गस्य संभूतिस्तदा सद्योऽपि जायते ।
इदानीं रुद्रसर्गं त्वं श्रृणु पार्थिवसत्तम ।। २१.२३ ।।
दशवर्षसहस्त्राणि तपश्चीर्त्वा महज्जले ।
प्रतिबुद्धो यदा रुद्रस्तदा चोर्वीं सकाननाम् ।
दृष्ट्वा सस्यवतीं रम्यां मनुष्यपशुसंकुलाम् ।। २१.२४ ।।
शुश्राव च तदा शब्दानृत्विजां दक्षसद्मनि ।
आश्रमे यज्ञिनां चोच्चैर्योगस्थैरिति कीर्त्तितम् ।। २१.२५ ।।
ततः श्रुत्वा महातेजाः सर्वज्ञः परमेश्वरः ।
चुकोप सुभृशं देवो वाक्यं चेदमुवाच ह ।। २१.२६ ।।
अहं पूर्वं तु कविना सृष्टः सर्वात्मना विभुः ।
प्रजाः सृजस्वेति तदा वाक्यमेतत् तथोक्तवान् ।। २१.२७ ।।
इदानीं केन तत्कर्म कृतं सृष्ट्यादिवर्णनम् ।
एवमुक्त्वा भृशं कोपान्ननाद परमेश्वरः ।। २१.२८ ।।
तस्य नानदतो ज्वालाः श्रोत्रेभ्यो निर्ययुस्तदा ।
तत्र भूतानि वेताला उच्छुष्माः प्रेतपूतनाः ।। २१.२९ ।।
कूष्माण्डा यातुधानाश्च सर्वे प्रज्वलिताननाः ।
उत्तस्थुः कोटिशस्तत्र नानाप्रहरणावृताः ।। २१.३० ।।
ते दृष्ट्वा भूतसंघाता विविधायुधपाणयः ।
ससर्ज वेदविद्याङ्गं रथं परमशोभनम् ।। २१.३१ ।।
तस्मिन्नृगादयस्त्वश्वास्त्रितत्त्वं च त्रिवेणुकम् ।

त्रिपूजकं त्रिषवणं धर्माक्षं मारुतध्वनिम् ।। २१.३२ ।।
अहोरात्रे पताके द्वे धर्माधर्मे तु दण्डके ।
शकटं सर्वविद्याश्च स्वयं ब्रह्मादिसारथिः ।। २१.३३ ।।
गायत्री च धनुस्तस्य ओङ्कारो गुण एव च ।
स्वराः सप्त शरास्तस्य देवदेवस्य सुव्रत ।। २१.३४ ।।
एवं कृत्वा स सामग्रीं देवदेवः प्रतापवान् ।
जगाम दक्षयज्ञाय कोपाद् रुद्रः प्रतापवान् ।। २१.३५ ।।
गच्छतस्तस्य देवस्य अम्बराङ्गिरसं नयत् ।
ऋत्विजां मन्त्रनिचयो नष्टो रुद्रागमे तदा ।। २१.३६ ।।
विपरीतमिदं दृष्ट्वा तदा सर्वे च ऋत्विजः ।
ऊचुः संनह्यतां देवा महद् वो भयमागतम् ।। २१.३७ ।।
कश्चिदायाति बलवानसुरो ब्रह्मनिर्मितः ।
यज्ञभागार्थमेतस्मिन् क्रतौ परमदुर्लभम् ।। २१.३८ ।।
एवमुक्तास्ततो देवा ऊचुर्मातामहं तदा ।
दक्ष तात किमत्रास्मत्कार्यं ब्रूहि विवक्षितम् ।। २१.३९ ।।
दक्ष उवाच ।
गृह्यन्तां द्रुतमस्त्राणि संग्रामोऽत्र विधीयताम् ।
एवमुक्ते तदा देवैर्विविधायुधधारिभिः ।
रुद्रस्यानुचरैः सार्धं महद्युद्धं प्रवर्तितम् ।। २१.४० ।।
तत्र वेतालभूतानि कूष्माण्डा ग्रहपूतनाः ।
युयुधुर्लोकपालैश्च नानाशस्त्रधराणि च ।। २१.४१ ।।
देवा रौद्राणि भूतानि निरसन्तो यमालयम् ।
चिक्षिपुः सायकान् घोरानसींश्च सपरश्वधान् ।। २१.४२ ।।
भूतान्यपि मृधे धोराण्युल्मुकैरस्थिभिः शरैः ।
जग्मुर्देवान् मृधे रोषाद् रुद्रस्य पुरतो बलात् ।। २१.४३ ।।
ततस्तस्मिन् महारौद्रे संग्रामे भीमरूपिणि ।
रुद्रो भगस्य नेत्रे तु बिभेदैकेषुणा मृधे ।। २१.४४ ।।
रुद्रस्य शरपातेन नष्टनेत्रं भगं तदा ।
दृष्ट्वाऽस्य क्रोधात् तेजस्वी पूषा रुद्रमयोधयत् ।। २१.४५ ।।
सृजन्तमिषुजालानि पूषणं तु महामृधे ।
दृष्ट्वा रुद्रोऽस्य दन्तांस्तु चकर्ष परवीरहा ।। २१.४६ ।।
तस्य दन्तांस्तदा दृष्ट्वा पूष्णो रुद्रेण पातितान् ।
दुद्रुवुः वसवो दिक्षु रुद्रास्त्वेकादश द्रुतम् ।। २१.४७ ।।

तान् भग्नान् सहसा दिक्षु दृष्ट्वा विष्णुः प्रतापवान् ।
आदित्यावरजो वाक्यमुवाच स्वबलं तदा ।। २१.४८ ।।
क्व यात पौरुषं त्यक्त्वा दर्पं माहात्म्यमेव च ।
व्यवसायं कुलं भूतिं कथं न स्मर्यते द्रुतम् ।। २१.४९ ।।
परमेष्ठिगुणैर्युक्तो लघुवद्धीतितः पुरा ।
नमस्कं कुरुते मोघं पृथिव्यां पद्मजः स्वयम् ।। २१.५० ।।
एवमुक्त्वा गरुत्मन्तमारुरोह हरिस्तदा ।
शङ्खचक्रगदापाणिः पीतवासा जनार्दनः ।। २१.५१ ।।
ततो हरिहरं युद्धमभवल्लोमहर्षणम् ।
रुद्रः पाशुपतास्त्रेण विव्याध हरिमोजसा ।
हरिर्नारायणास्त्रेण रुद्रं विव्याध कोपवान् ।। २१.५२ ।।
नारायणं पाशुपतमुभेऽस्त्रे व्योम्नि रोषिते ।
युयुधाते भृशं दिव्यं परस्परजिघांसया ।
दिव्यं वर्षसहस्त्रं तु तयोर्युद्धमभूत् तदा ।। २१.५३ ।।
तत्रैकं मुकुटोद्बद्धं मूर्द्धन्यं जटजालकम् ।
एकं प्रध्मापयच्छङ्खमन्यड्डुमरुकं शुभम् ।। २१.५४ ।।
एकं खङ्गकरं तत्र तथाऽन्यं दण्डधारिणम् ।
एकं कौस्तुभदीप्ताङ्गमन्यं भूतिविभूषितम् ।। २१.५५ ।।
एकं गदां भ्रामयति द्वितीयं दण्डमेव च ।
एकं शोभति कण्ठस्थैर्मणिभिस्त्वस्थिभिः परम् ।
एकं पीताम्बरं तत्र द्वितीयं सर्पमेखलम् ।। २१.५६ ।।
एवं तौ स्पर्द्धिनावस्त्रौ रौद्रनारायणात्मकौ ।
अन्योऽन्यातिशयोपेतौ तदालोक्य पितामहः ।। २१.५७ ।।
उवाच शाम्यतामस्त्रौ स्वस्वभावेन सुव्रतौ ।
एवं ते ब्रह्मणा चोक्तौ शान्तभावं प्रजग्मतुः ।। २१.५८ ।।
तथा विष्णुहरौ ब्रह्मा वाक्यमेतदुवाच ह ।
उभौ हरिहरौ देवौ लोके ख्यातिं गमिष्यथः ।। २१.५९ ।।
अयं च यज्ञो विध्वस्तः संपूर्णत्वं गमिष्यति ।
दक्षस्य ख्यातिमाँल्लोकः संतत्याऽयं भविष्यति ।। २१.६० ।।
एवमुक्त्वा हरिहरौ तदा लोकपितामहः ।
ब्रह्मा लोकानुवाचेदं रुद्रभागोऽस्य दीयताम् ।। २१.६१ ।।
रुद्रभागो ज्येष्ठभाग इतीयं वैदिकी श्रुतिः ।
स्तुतिं च देवाः कुरुत रुद्रस्य परमेष्ठि नः ।। २१.६२ ।।

भगनेत्रहरं देवं पूष्णो दन्तविनाशनम् ।
स्तुतिं कुरुतमा शीघ्रं गीतैरेतैस्तु नामभिः ।
येनायं वः प्रसन्नात्मा वरदत्वं भजेत ह ।। २१.६३ ।।
एवमुक्तास्तु ते देवाः स्तोत्रं शंभोर्महात्मनः ।
चक्रुः परमया भक्त्या नमस्कृत्य स्वयंभुवे ।। २१.६४ ।।
देवा ऊचुः ।
नमो विषमनेत्राय नमस्ते त्र्यम्बकाय च ।
नमः सहस्त्रनेत्राय नमस्ते शूलपाणये ।। २१.६५ ।।
नमः खट्वाङ्गहस्ताय नमो दण्डभृते करे ।
त्वं देव हुतभुग्ज्वालाकोटिभानुसमप्रभः ।। २१.६६ ।।
अदर्शनेऽनयद् देव मूढविज्ञानतोऽधुना ।
कृतमस्माभिरेवेश तदत्र क्षम्यतां प्रभो ।। २१.६७ ।।
नमस्त्रिनेत्रार्त्तिहराय शंभो
त्रिशूलपाणे विकृतास्यरूप ।
समस्तदेवेश्वर शुद्धभाव
प्रसीद रुद्राच्युत सर्वभाव ।। २१.६८ ।।
पूष्णोऽस्य दन्तान्तक भीमरूप
प्रलम्बभोगीन्द्रलुलन्तकण्ठ ।
विशालदेहाच्युत नीलकण्ठ
प्रसीद विश्वेश्वर विश्वमूर्त्ते ।। २१.६९ ।।
भगाक्षिसंस्फोटनदक्षकर्मा
गृहाण भागं मखतः प्रधानम् ।
प्रसीद देवेश्वर नीलकण्ठ
प्रपाहि नः सर्वगुणोपपन्न ।। २१.७० ।।
सिताङ्गरागाप्रतिपन्नमूर्त्ते
कपालधारिंस्त्रिपुरघ्न देव ।
प्रपाहि नः सर्वभयेषु चैव
उमापते पुष्करनालजन्म ।। २१.७१ ।।
पश्याम ते देहगतान् सुरेश
सर्गादयो वेदवराननन्त ।
साङ्गान् सविद्यान् सपदक्रमांश्च
सर्वान् निलीनांस्त्वयि देवदेव ।। २१.७२ ।।
भव शर्व महादेव पिनाकिन् रुद्र ते हर ।

नताः स्म सर्वे विश्वेश त्राहि नः परमेश्वर ।। २१.७३ ।।
इत्थं स्तुतस्तदा देवैर्देवदेवो महेश्वरः ।
तुतोष सर्वदेवानां वाक्यं चेदमुवाच ह ।। २१.७४ ।।
रुद्र उवाच ।
भगस्य नेत्रं भवतु पूष्णो दन्तास्तथा मखः ।
दक्षस्याच्छिद्रतां यातु यज्ञश्चाप्यदितेः सुताः ।
पशुभावं तथा चापि अपनेष्यामि वो सुराः ।। २१.७५ ।।
मद्दर्शनेन यो जातः पशुभावो दिवौकसाम् ।
स मयाऽपहृतः सद्यः पतित्वं वो भविष्यति ।। २१.७६ ।।
अहं च सर्वविद्यानां पतिराद्यः सनातनः ।
अहं वै पतिभावेन पशुमध्ये व्यवस्थितः ।। २१.७७ ।।
अतः पशुपतिर्नाम मम लोके भविष्यति ।
ये मां यजन्ति तेषां स्याद् दीक्षा पाशुपती भवेत् ।। २१.७८ ।।
एवमुक्तेऽथ रुद्रेण ब्रह्मा लोकपितामहः ।
उवाच रुद्रं सस्नेहं स्मितपूर्वमिदं वचः ।। २१.७९ ।।
ध्रुवं पाशुपतिर्देव त्वं लोके ख्यातिमेस्यति ।
अयं च देवस्त्वन्नाम्ना लोके ख्यातिं गमिष्यति ।
आराध्यश्च समस्तानां देवादीनां गमिष्यसि ।। २१.८० ।।
एवमुक्त्वा तदा ब्रह्मा दक्षं प्रोवाच बुद्धिमान् ।
गौरीं प्रयच्छ रुद्राय पूर्वमेवोपपादिताम् ।। २१.८१ ।।
एवमुक्त्वा तदा दक्षस्तां कन्यां ब्रह्मसन्निधौ ।
ददौ रुद्राय महते गौरीं परमशोभनाम् ।। २१.८२ ।।
स तां जग्राह विधिवद् रुद्रः परमशोभनाम् ।
दक्षस्य च प्रियं कुर्वन् बहुमानपुरःसरम् ।। २१.८३ ।।
गृहीतायां तु कन्यायां दाक्षायण्यां पितामहः ।
ददौ रुद्रस्य निलयं कैलासं सुरसन्निधौ ।। २१.८४ ।।
रुद्रोऽपि प्रययौ भूतैः समं कैलासपर्वतम् ।
देवाश्चापि यथास्थानं स्वं स्वं जग्मुर्मुदान्विताः ।
ब्रह्माऽपि दक्षसहितः प्राजापत्यं पुरं ययौ ।। २१.८५ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे एकविंशोऽध्यायः ।। २१ ।।

महातपा उवाच ।
तस्मिन् निवसतस्तस्य रुद्रस्य परमेष्ठिनः ।
चुकोप गौरी देवस्य पितुर्वैरमनुस्मरन् ।। २२.१ ।।
चिन्तयामास दक्षस्य अनेनापकृतं पुरा ।
यज्ञो विध्वंसितो यस्मात् तस्माच्चान्यां तनूमहम् ।। २२.२ ।।
आराध्य तपसा तस्य गृहे भूत्वा व्रजाम्यहम् ।
कथं गच्छामि पितरं दक्षं क्षपितबान्धवम् ।। २२.३ ।।
भवपत्नी च दुहिता एवं संचिन्त्य सुन्दरी ।
जगाम तपसे शैलं हिमवन्तं महागिरिम् ।। २२.४ ।।
तत्र कालेन महता क्षपयन्ती कलेवरम् ।
स्वशरीराग्निना दग्धा ततः शैलसुताऽभवत् ।। २२.५ ।।
उमा नामेति महती कृष्णा चेत्यभिधानतः ।
लब्ध्वा तु शोभनां मूर्तिं हिमवन्तगृहे शुभा ।। २२.६ ।।
पुनस्तपश्चकारोग्रं देवं स्मृत्वा त्रिलोचनम् ।
असावेव पतिर्मह्यमित्युक्त्वा तपसि स्थिता ।। २२.७ ।।
कुर्वन्त्या तत् तपश्चोग्रं हिमवन्ते महागिरौ ।
कालेन महता देवस्तपसाराधितस्तया ।। २२.८ ।।
आजगामाश्रमं तस्या विप्रो भूत्वा महेश्वरः ।
वृद्धः शिथिलसर्वाङ्गः स्खलंश्चैव पदे पदे ।। २२.९ ।।
कृच्छ्रात् तस्याः समीपं तु आगत्य द्विजसत्तमः ।
बुभुक्षितोऽस्मि मे देहि भद्रे भोज्यं द्विजस्य तु ।। २२.१० ।।
एवमुक्ता तदा कन्या उमा शैलसुता शुभा ।
उवाच ब्राह्मणं भोज्यं दद्मि विप्र फलादिकम् ।
कुरु स्नानं द्रुतं विप्र भुञ्जस्वान्नं यदृच्छया ।। २२.११ ।।
एवमुक्तस्तदा विप्रस्तस्य पार्श्वे महानदीम् ।
गङ्गां जगाम स्नानार्थी स्नानं कर्त्तुमवातरत् ।। २२.१२ ।।
स्नानं तु कुर्वता तेन रुद्रेण द्विजरूपिणा ।
भूत्वा मायामयं भीमं मकरं भयदर्शनम् ।
ग्राहितस्तु तदा विप्रस्तेन दुष्टेन मद्गुना ।। २२.१३ ।।
दृष्ट्वा धृतमथात्मानं मकरेण बलीयसा ।
वृद्धमात्मानमन्यं तां दर्शयन् वाक्यमब्रवीत् ।। २२.१४ ।।
अब्रह्मण्यं गतं कन्ये धावस्वानय मां रुषः ।
यावन्नायाति विकृतिं तावन्मां त्रातुमर्हसि ।। २२.१५ ।।

एवमुक्ता तदा कन्या चिन्तयामास पार्वती ।
पितृभावेन शैलेन्द्रं भर्तृभावेन शंकरम् ।
स्पृशामि तपसा पूता कथं विप्रं स्पृशाम्यहम् ।। २२.१६ ।।
यद्येनं नापकर्षामि मकरेण जले धृतम् ।
तदानीं ब्रह्मवध्या मे भवतीति न संशयः ।। २२.१७ ।।
अन्यव्यतिक्रमे धर्ममपनेतुं च शक्यते ।
ब्रह्मवध्या पुनर्नैवमेवमुक्तवा गता त्वरम् ।। २२.१८ ।।
सा गत्वा त्वरितं भीरुर्गृहीत्वा पाणिना द्विजम् ।
चकर्षान्तर्जलात् तावत् स्वयं भूतपतिर्हरः ।। २२.१९ ।।
यमाराध्य तपश्चर्त्तुमारब्धं शैलपुत्राया ।
स एव भगवान् रुद्रस्तस्याः पाणौ विलम्बत ।। २२.२० ।।
तं दृष्ट्वा लज्जिता देवी पूर्वत्यागमनुस्मरन् ।
न किंचिदुत्तरं सुभ्रूर्वदति स्म सुलज्जिता ।। २२.२१ ।।
तूष्णींभूतां तु तां दृष्ट्वा गौरीं रुद्रो हसन्निव ।
पाणौ गृहीत्वा मां भद्रे कथं त्यक्तुमिहार्हसि ।। २२.२२ ।।
मत्पाणिग्रहणं भद्रे वृथा यदि करिष्यसि ।
तदानीं ब्रह्मणः पुत्र्यामाहारार्थं ब्रवीम्यहम् ।। २२.२३ ।।
न भवेत् परिहासोऽयमुक्ता देवी परापरा ।
लज्जमाना तदा वाक्यं वदति स्मितपूर्वकम् ।। २२.२४ ।।
देवदेव त्रिलोकेश त्वदर्थोऽयं समुद्यमः ।
प्राग्जन्माराधितो भर्त्ता भवान् देवो महेश्वरः ।। २२.२५ ।।
इदानीं मे भवान् देवः पतिर्नान्यो भविष्यति ।
किन्तु स्वामी पिता मह्यं शैलेन्द्रो मे व्रजामि तम् ।
अनुज्ञाप्य विधानेन ततः पाणिं गृहीष्यसि ।। २२.२६ ।।
एवमुक्त्वा तदा देवी पितरं प्रति भामिनी ।
कृताञ्जलिपुटा भूत्वा हिमवन्तमुवाच ह ।। २२.२७ ।।
अतोऽन्यजन्मभर्त्ता मे रुद्रो दक्षमखान्तकः ।
इदानीं तपसा सैव ध्यातोऽभूद् गतिभावनः ।। २२.२८ ।।
स च विश्वपतिर्भूत्वा ब्राह्मणो मे तपोवनम् ।
आगत्य भोजनार्थाय याचयामास शंकरः ।
मया स्नातुं व्रजस्वेति चोदितो जाह्नवीं गतः ।। २२.२९ ।।
तत्रासौ वृद्धकायेन द्विजरूपेण शंकरः ।
मकरेण धृतस्तूर्णं अब्रह्हमण्यमुवाच ह ।। २२.३० ।।

ब्रह्महत्याभयात् तात मया पाणौ धृतस्ततः ।
धृतमात्रः स्वकं देहं दर्शयामास शंकरः ।। २२.३१ ।।
ततो मामब्रवीद् देवः पाणिग्रहणमागताम् ।
भवती देवि मा किंचिद् विचारय तपोधने ।। २२.३२ ।।
एवमुक्ता त्वहं तेन शंकरेण महात्मना ।
तदनुज्ञाप्य देवेशं भवन्तं प्रष्टुमागता ।
इदानीं यत् क्षमं कार्यं तच्छीघ्रं संविधीयताम् ।। २२.३३ ।।
एवं श्रुत्वा तदा वाक्यं शैलराजो मुदा युतः ।
उवाच दुहितां धन्यां तस्मिन् काले वराननाम् ।। २२.३४ ।।
पुत्रि धन्योऽस्म्यहं लोके यस्य रुद्रः स्वयं हरः ।
जामाता भविता देवि त्वयाऽपत्यवतामहम् ।
स्थापितो मूर्ध्नि देवानामपि पुत्रि त्वया ह्यहम् ।। २२.३५ ।।
स्थीयतां क्षणमेकं तु यावदागमनं मम ।
एवमुक्त्वा गतो राजा शैलानां ब्रह्मणोऽन्तिकम् ।। २२.३६ ।।
तत्र दृष्ट्वा महात्मानं सर्वदेवपितामहम् ।
उवाच प्रणतो भूत्वा ब्रह्माणं शैलराट् ततः ।। २२.३७ ।।
देवोमा दुहिता मह्यं तां रुद्राय ददाम्यहम् ।
त्वया देव अनुज्ञातस्तत्करोमि प्रशाधि माम् ।। २२.३८ ।।
ततो ब्रह्मा प्रीतमना याहि रुद्राय तां शुभाम् ।
प्रयच्छोवाच देवानां तदा लोकपितामहः ।। २२.३९ ।।
एवमुक्तः शैलराजः स्ववेश्मागम्य सत्वरम् ।
देवानृषीन् सिद्धसंघान् चामन्त्रयत सत्वरम् ।। २२.४० ।।
तुम्बुरुं नारदं चैव हाहाहूहूं तथैव च ।
स गत्वा किन्नरांश्चैव असुरान् राक्षसानपि ।। २२.४१ ।।
पर्वताः सरितः शैला वृक्षा ओषधयस्तथा ।
आगता मूर्त्तिमन्तो वै पर्वताः सङ्गमोपलाः ।
हिमवद्दुहितुर्द्रष्टुं विवाहं शंकरेण ह ।। २२.४२ ।।
तत्र वेदिः क्षितिश्चासीत् कलशाः सप्त सागराः ।
सूर्यो दीपस्तथा सोमः सरितो ववहुर्जलम् ।। २२.४३ ।।
एवं विवाहसामग्रीं कृत्वा शैलवराधिपः ।
प्रेषयामास रुद्राय समीपं मन्दरं गिरिम् ।। २२.४४ ।।
स तदा मन्दरोक्तस्तु शंकरो द्रुतमाययौ ।
विधिना सोमया पाणिं जग्राह परमेश्वरः ।। २२.४५ ।।

तत्रोत्सवे पर्वतनारदौ द्वौ
जगुश्च सिद्धा ननृतुर्वनस्पतीः ।
पुष्पाण्यनेकानि विचिक्षिपुः शुभाः
ननर्तुरुच्चैः सुरयोषितो भृशम् ।। २२.४६ ।।
तस्मिन् विवाहे सलिलप्रवाहे
चतुर्मुखो लोकपरः स्वसंस्थः ।
उवाच कन्यां भव पुत्रि लोके
नारी प्रभर्त्ता तव चान्यपुंसाम् ।
इत्येवमुक्त्वा स उमां सरुद्रां
पितामहः स्वं पुरमाजगाम ।। २२.४७ ।।
जामातरं पर्वतराट् सुपूज्य
विसर्जयामास विभुं स सोमम् ।
देवांश्च दैत्यान् विविधानृषींश्च
संपूज्य सर्वान् विविधैस्तु वस्तुभिः ।
विभूषणैर्वस्त्रवरान्नदानै -
र्विसर्जयामास तदाद्रिमुख्यान् ।।२२.४८ ।।
स वीतशोको विरजो विशुद्धः
शुभाननां देववराय दत्त्वा ।
उमां महात्मा हिमवानद्रिराजः
पैतामहे लोक इवाध्वरे भात् ।। २२.४९ ।।
इतीरितेयं तव राजसत्तम
प्रसूतिरेषा न विदुर्यां सुरासुराः ।
स्वयंभुदक्षादिराजः त्रिजन्मभि-
र्गौरीविवाहोऽपि मया सुकीर्तितः ।। २२.५० ।।
श्रीवराह उवाच ।
एवं सा गौरिनाम्ना तु कारणान्मूर्त्तिमागता ।
संबभूव यथा प्रोक्तं प्रजापालाय पृच्छते ।
ऋषिणा महता पूर्वं तपसा भावितात्मना ।। २२.५१ ।।
गौर्या उत्पत्तिरेषा वै कथिता परमर्षिणा ।
विवाहश्च यथा वृत्तस्तत्सर्वं कथितं तव ।। २२.५२ ।।
एतत्सर्वं तु गौर्या वै संपन्नं तु तृतीयया ।
तस्यां तिथौ तृतीयायां लवणं वर्जयेन्नरः ।
यश्चोपोष्यति नारी वा सा सौभाग्यं तु विन्दति ।। २२.५३ ।।

दुर्भगा या तु नारी स्यात् पुरुषश्चातिदुर्भगः ।
एतच्छ्रुत्वा तृतीयायां लवणं तु विवर्जयेत् ।। २२.५४ ।।
सर्वकामानवाप्नोति सौभाग्यं द्रव्यसम्पदम् ।
आरोग्यं च सदा लोके कान्तिं पुष्टिं च विन्दति ।। २२.५५ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे द्वाविंशोऽध्यायः ।। २२ ।।

प्रजापाल उवाच ।
कथं गणपतेर्जन्म मूर्तिमन्तं च सत्तम ।
एतन्मे संशयं छिन्धि धृतिकष्टं व्यवस्थितम् ।। २३.१ ।।
महातपा उवाच ।
पूर्वं देवगणाः सर्वे ऋषयश्च तपोधनाः ।
कार्यारम्भं तथा चक्रुः सिध्यन्ते च न संशयः ।। २३.२ ।।
सन्मार्गवर्तिषु यथा सिद्ध्यन्ते विघ्नतः क्रियाः ।
असत्कारिषु सर्वेषु तद्वदेवमविघ्नतः ।। २३.३ ।।
ततो देवाः सपितरश्चिन्तयामासुरोजसा ।
असत्कार्येषु विघ्नार्थं सर्व एवाभ्यमन्त्रयन् ।। २३.४ ।।
ततस्तेषां तदा मन्त्रं कुर्वतस्त्रिदिवौकसाम् ।
बभूव बुद्धिर्गमने रुद्रं प्रति महामतिम् ।। २३.५ ।।
ते तत्र रुद्रमागम्य कैलासनिलयं गुरुम् ।
ऊचुः सविनयं सर्वे प्रणिपातपुरःसरम् ।। २३.६ ।।
देवा ऊचुः ।
देवदेव महादेव शूलपाणे त्रिलोचन ।
विघ्नार्थमविशिष्टानामुत्पादयितुमर्हसि ।। २३.७ ।।
एवमुक्तरस्तदा देवैर्भवः परमया मुदा ।
उमां निरीक्षयामास चक्षुषाऽनिमिषेण ह ।। २३.८ ।।
देवानां सन्निधौ तस्य पश्यतोमां महात्मनः ।
चिन्ताऽभूद् व्योम्नि मूर्तिभ्यो दृश्यते केन हेतुना ।। २३.९ ।।
पृथिव्या विद्यते मूर्त्तिरपां मूर्त्तिस्तथैव च ।
तेजसः श्वसनस्यापि मूर्त्तिरेषा तु दृश्यते ।
आकाशं च कथं नेति मत्वा देवो जहास च ।। २३.१० ।।
ज्ञानशक्तिमुमां दृष्ट्वा यद् दृष्टं व्योम्नि शंभुना ।
यच्चोक्तं ब्रह्मणा पूर्वं शरीरं तु शरीरिणाम् ।। २३.११ ।।
यच्चापि हसितं तेन देवेन परमेष्ठिना ।
एतत्कार्यचतुष्केण पृथिव्यादिचतुर्ष्वपि ।। २३.१२ ।।
मूर्त्तिमानतितेजस्वी हसतः परमेष्ठिनः ।
प्रदीप्तास्यो महादीप्तः कुमारो भासयन् दिशः ।
परमेष्ठिगुणैर्युक्तः साक्षाद् रुद्र इवापरः ।। २३.१३ ।।
उत्पन्नमात्रो देवानां योषितः सप्रमोहयन् ।
कान्त्या दीप्त्या तथा मूर्त्या रूपेण च महात्मवान् ।। २३.१४ ।।
तं दृष्ट्वा परमं रूपं कुमारस्य महात्मनः ।
उमाऽनिमेषनेत्राभ्यां तमपश्यत भामिनी ।। २३.१५ ।।
तं दृष्ट्वा कुपितो देवः स्त्रीभावं चञ्चलं तथा ।
मत्वा कुमाररूपं तु शोभनं मोहनं दृशाम् ।
ततः शशाप तं देवः स्त्रीशङ्कां परमेश्वरः ।। २३.१६ ।।

कुमार गजवक्त्रस्त्वं प्रलम्बजठरस्तथा ।
भविष्यसि तथा सर्पैरुपवीतगतिर्ध्रुवम् ।
एवं शशाप तं देवस्तीव्रकोपसमन्वितः ।। २३.१७ ।।
अर्द्धकोट्या च रोमाणामात्मनोऽङ्गे त्रिलोचनः ।
कूपकास्वेदसलिलपूर्णशूलधरस्तथा ।
धुन्वन् शरीरमुत्थाय ततो देवो रुषान्वितः ।। २३.१८ ।।
यथा यथाऽसौ स शरीरमाद्यं
धुनोति देवस्त्रिशिखास्त्रपाणिः ।
तथा तथा चाङ्गरुहाश्चकासु-
र्जलं क्षितौ संन्यपतंस्तथान्याः ।। २३.१९ ।।
विनायकानेकविधा गजास्या -
स्तमालनीलाञ्जनसंनिकाशाः ।
उत्तस्थुरुच्चैर्विविधास्त्रहस्ता -
स्ततस्तु देवा मनसाकुलेन ।। २३.२० ।।
किमेतदित्यद्भुतकर्मकारी
ह्येकः करोत्यप्रतिमं महच्च ।
कार्यं सुराणां कृतमेतदिष्टं
भवेदथैतं परितं कुतस्तत् ।। २३.२१ ।।
दिवौकसां चिन्तयतां तथा तु
विनायकैः क्ष्मा क्षुभिता बभूव ।
चतुर्मुखश्चाप्रतिमो विमान -
मारुह्य खे वाक्यमिदं जगाद ।। २३.२२ ।।
धन्याः स्थ देवाः सुरनायकेन
त्रिलोचनेनाद्भुतरूपिणा च ।
अनुगृहीताः परमेश्वरेण
सुरद्विषां विघ्नकृतां नतौ च ।। २३.२३ ।।
इत्येवमुक्त्वा प्रपितामहस्ता -
नुवाच देवस्त्रिशिखास्त्रपाणिम् ।
यस्ते विभो वक्त्रसमुद्भवः प्रभु-
र्विनायकानां भवतु त्विमेऽनुगाः ।। २३.२४ ।।
भवांस्तथाऽस्यात्मवरेण चाम्बरे
त्वया चतुर्ष्वस्तु शरीरचारी ।
आकाशमेतद् बहुधा व्यवस्थितं
त्वया वरेण्यः कृत एव नान्यः ।। २३.२५ ।।
प्रभुर्भव त्वं प्रतिमास्त्रपाणिना
इमानि चास्त्राणि वरांश्च देहि ।
इत्येवमुक्त्वाऽधिगते पितामहे
त्रिलोचनश्चात्मभवं जगाद ।। २३.२६ ।।

विनायको विघ्नकरो गजास्यो
गणेशनामा च भवस्य पुत्रः ।
एते च सर्वे तव यान्तु भृत्या
विनायकाः क्रूरदृशः प्रचण्डाः ।
उच्छुष्मदानादिविवृद्धदेहाः
कार्येषु सिद्धिं प्रतिपादयन्तः ।। २३.२७ ।।
भवांश्च देवेषु तथा मखेषु
कार्येषु चान्येषु महानुभावात् ।
अग्रेषु पूजां लभतेऽन्यथा च
विनाशयिष्यस्यथ कार्यसिद्धिम् ।। २३.२८ ।।
इत्येवमुक्त्वा परमेश्वरेण
सुरैः समं काञ्चनकुम्भसंस्थैः ।
जलैस्तथासावभिषिक्तगात्रो
रराज राजेन्द्र विनायकानाम् ।। २३.२९ ।।
दृष्टवाऽभिषिच्यमानं तु देवास्तं गणनायकम् ।
तुष्टुवुः प्रयताः सर्वे त्रिशूलास्त्रस्य सन्निधौ ।। २३.३० ।।
देवा ऊचुः ।
नमस्ते गजवक्त्राय नमस्ते गणनायक ।
विनायक नमस्तेऽस्तु नमस्ते चण्डविक्रम ।। २३.३१ ।।
नमोऽस्तु ते विघ्नकर्त्रे नमस्ते सर्पमेखल ।
नमस्ते रुद्रवक्त्रोत्थ प्रलम्बजठराश्रित ।। २३.३२ ।।
सर्वदेवनमस्कारादविघ्नं कुरु सर्वदा ।
एवं स्तुतस्तदा देवैर्महात्मा गणनायकः ।
अभिषिक्तश्च रुद्रस्य सोमस्यापत्यतां गतः ।। २३.३३ ।।
एतच्चतुर्थ्यां संपन्नं गणाध्यक्षस्य पार्थिव ।
यतस्ततोऽयं महती तिथीनां परमा तिथिः ।। २३.३४ ।।
एतस्यां यस्तिलान् भुक्त्वा भक्त्या गणपतिं नृप ।
आराधयति तस्याशु तुष्यते नात्र संशयः ।। २३.३५ ।।
यश्चैतत् पठते स्तोत्रं यश्चैतच्छृणुयात् सदा ।
न तस्य विघ्ना जायन्ते न पापं सर्वथा नृप ।। २३.३६ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे त्रयोविंशोऽध्यायः ।। २३ ।।

धरण्युवाच ।
कथं ते गात्रसंस्पर्शान्मूर्त्तिमन्तो महाबलाः ।
नागा बभूवुर्देवेश कारणं ते महीधर ।। २४.१ ।।
श्रीवराह उवाच ।
श्रुत्वा गणपतेर्जन्म प्रजापालो नराधिपः ।
उवाच श्लक्ष्णया वाचा तं मुनिं संशितव्रतम् ।। २४.२ ।।
प्रजापाल उवाच ।
भगवंस्तार्क्ष्यविषयाः कथं मूर्त्तिमुपागताः ।
नागा बभूवुः कुटिला एतदाख्यातुमर्हसि ।। २४.३ ।।
महातपा उवाच ।
सृजता ब्रह्मणा सृष्टिं मरीचिः सूतिकारणम् ।
प्रथमं मनसा ध्यातस्तस्य पुत्रस्तु कश्यपः ।। २४.४ ।।
तस्य दाक्षायणी भार्या कद्रूर्नाम शुचिस्मिता ।
मारीचो जनयामास तस्यां पुत्रान् महाबलान् ।। २४.५ ।।
अनन्तं वासुकिं चैव कम्बलं च महाबलम् ।
कर्कोटकं च राजेन्द्र पद्मं चान्यं सरीसृपम् ।। २४.६ ।।
महापद्मं तथा शङ्खं कुलिकं चापराजितम् ।
एते कश्यपदायादाः प्रधानाः परिकीर्त्तिताः ।। २४.७ ।।
एतेषां तु प्रसूत्या तु इदमापूरितं जगत् ।
कुटिला हीनकर्माणस्तीक्ष्णास्योत्थविषोल्बणाः ।
दृष्ट्वा संदश्य मनुजान् कुर्युर्भस्म क्षणाद् ध्रुवम् ।। २४.८ ।।
शब्दगामी यथा स्पर्शं मनुष्याणां नराधिप ।
अहन्यहनि जायेत क्षयः परमदारुणः ।। २४.९ ।।
आत्मनस्तु क्षयं दृष्ट्वा प्रजाः सर्वाः समन्ततः ।
जग्मुः शरण्यं शरणं परं तु परमेश्वरम् ।। २४.१० ।।
इममेवार्थमुद्दिश्य प्रजाः सर्वा महीपते ।
ऊचुः कमलजं विष्णुं पुराणं ब्रह्मसंज्ञितम् ।। २४.११ ।।
देवा ऊचुः ।
देवदेवेश लोकानां प्रसूति परमेश्वर ।
त्राहि नस्तीक्ष्णदंष्ट्राणां भुजंगानां महात्मनाम् ।। २४.१२ ।।
अहन्यहनि ये देव पश्येयुरुरगा दृशा ।
मनुष्यपशुरूपं वा तत्सर्वं भस्मसाद् भवेत् ।। २४.१३ ।।
त्वया सृष्टिः कृता देव नीयते सा भुजंगामैः ।
एतज्ज्ञात्वा तु दुर्वृत्तं तत्कुरुष्व महामते ।। २४.१४ ।।
ब्रह्मोवाच ।
अहं रक्षां विधास्यामि भवतीनां न संशयः ।
व्रजध्वं स्वानि धिष्ण्यानि प्रजा माभूत् ससाध्वसा ।। २४.१५ ।।
एवमुक्त्वा प्रजास्तेन ब्रह्मणाऽव्यक्तमूर्त्तिना ।

आजग्मुः परमप्रीत्या नत्वा चैव स्वयंभुवे ।। २४.१६ ।।
आगतासु प्रजास्वाद्यस्तानाहूय भुजंगमान् ।
शशाप परमक्रुद्धो वासुकिप्रमुखांस्तदा ।। २४.१७ ।।
ब्रह्मोवाच ।
यतो मत्प्रभवान् नित्यं क्षयं नयत मानुषान् ।
भवान्तरे अथान्यस्मिन् मातुः शापात् सुदारुणात् ।
भविताऽतिक्षयं घोरं नूनं स्वायंभुवेऽन्तरे ।। २४.१८ ।।
एवमुक्तास्तु वेपन्तो ब्रह्माणं भुजगोत्तमाः ।
निपत्य पादयोस्तस्य इदमूचुर्वचस्तदा ।। २४.१९ ।।
नागा ऊचुः ।
भगवन् कुटिला जातिरस्माकं भवता कृता ।
विषोल्बणत्वं क्रूरत्वं दृक्शस्त्रत्वं च नस्त्वया ।
संपादितं त्वया देव इदानीं शमयाच्युत ।। २४.२० ।।
ब्रह्मोवाच ।
यदि नाम मया सृष्टा भवन्तः कुटिलाशयाः ।
ततः किं मनुजान् नित्यं भक्षयध्वं गतव्यथाः ।। २४.२१ ।।
नागा ऊचुः ।
मर्यादां कुरु देवेश स्थानं चैव पृथक् पृथक् ।
मनुष्याणां तथाऽस्माकं समयं च पृथक् पृथक् ।
नागानां वचनं श्रुत्वा देवो वचनमब्रवीत् ।। २४.२२ ।।
अहं करोमि वो नागाः समयं मनुजैः सह ।
तदेकमनसः सर्वे श्रृणुध्वं मम शासनम् ।। २४.२३ ।।
पातालं वितलं चैव हर्म्याख्यं च तृतीयकम् ।
दत्तं चैव सदा रम्यं गृहं तत्र गमिष्यथ ।। २४.२४ ।।
तत्र भोगान् बहुविधान् भुञ्जाना मम शासनात् ।
तिष्ठध्वं सप्तमं यावद् रात्र्यन्तं तु पुनः पुनः ।। २४.२५ ।।
ततो वैवस्वतस्यादौ काश्यपेया भविष्यथ ।
दायादाः सर्वदेवानां सुपर्णस्य च धीमतः ।। २४.२६ ।।
तदा प्रसूतिर्वः सर्वा भोक्ष्यते चित्रभानुना ।
भवतां नैव दोषोऽयं भविष्यति न संशयः ।। २४.२७ ।।
ये वै क्रूरा भोगिनो दुर्विनीता -
स्तेषामन्तो भविता नान्यथैतत् ।
कालप्राप्तं भक्षयध्वं दशध्वं
तथाऽपकारे च कृते मनुष्यम् ।। २४.२८ ।।
मन्त्रौषधैर्गारुडमण्डलैश्च
बद्धैर्दृष्टैर्मानवा ये चरन्ति ।
तेषां भीतैर्वर्त्तितव्यं न चान्य-
च्चिन्त्यं कार्यं चान्यथा वो विनाशः ।। २४.२९ ।।

इतीरिते ब्रह्मणा ते भुजङ्गा
जग्मुः स्थानं क्ष्मातलाख्यं हि सर्वे ।
तस्थुर्भोगान् भुञ्जमानाः समग्रान्
रसातले लीलया संस्थितास्ते ।। २४.३० ।।
एवं शापं तु ते लब्ध्वा प्रसादं च चतुर्मुखात् ।
तस्थुः पातालनिलये मुदितेनान्तरात्मना ।। २४.३१ ।।
एतत् सर्वं च पञ्चम्यां तेषां जातं महात्मनाम् ।
अतस्त्वियं तिथिर्धन्या सर्वपापहरा शुभा ।। २४.३२ ।।
एतस्यां संयतो यस्तु अम्लं तु परिवर्जयेत् ।
क्षीरेण स्नापयेन्नागांस्तस्य यास्यन्ति मित्रताम् ।। २४.३३ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे चतुर्विंशोऽध्यायः ।। २४ ।।

प्रजापाल उवाच ।
अहंकारात् कथं जज्ञे कार्त्तिकेयो द्विजोत्तम ।
एतन्मे संशयं छिन्धि पृच्छतो वै महामुने ।। २५.१ ।।
महातपा उवाच ।
सर्वेषामेव तत्त्वानां यः परः पुरुषः स्मृतः ।
तस्मादव्यक्तमुत्पन्नं तत्त्वादि त्रिविधं तु तत् ।। २५.२ ।।
पुरुषाव्यक्तयोर्मध्ये महत्त्वं समपद्यत ।
स चाहंकार इत्युक्तो यो महान् समुदाहृतः ।। २५.३ ।।
पुरुषो विष्णुरित्युक्तः शिवो वा नामतः स्मृतः ।
अव्यक्तं तु उमा देवी श्रीर्वा पद्मनिभेक्षणा ।। २५.४ ।।
तत्संयोगादहंकारः स च सेनापतिर्गुहः ।
तस्योत्पत्तिं प्रवक्ष्यामि श्रृणु राजन् महामते ।। २५.५ ।।
आद्यो नारायणो देवस्तस्माद् ब्रह्मा ततोऽभवत् ।
अतः स्वयंभुवश्चान्ये मरीच्याद्यार्कसंभवाः ।। २५.६ ।।
तेष्वारभ्य सुरा दैत्या गन्धर्वा मानुषाः खगाः ।
पशवः सर्वभूतानि सृष्टिरेषा प्रकीर्तिता ।। २५.७ ।।
सृष्ट्यां विस्तारितायां तु देवदैत्या महाबलाः ।
सापत्न्यं भावमास्थाय युयुधुर्विजिगीषवः ।। २५.८ ।।
दैत्यानां बलिनः सन्ति नायका युद्धदुर्मदाः ।
हिरण्यकशिपुः पूर्वं हिरण्याक्षो महाबलः ।
विप्रचित्तिर्विचित्तिश्च भीमाक्षः क्रौञ्च एव च ।। २५.९ ।।
एतेऽतिबलिनः शूरा देवसैन्यं महामृधे ।
अनारतं सितैर्बाणैर्जयन्तेऽनुदिनं मृधे ।। २५.१० ।।
तेषां पराजयं दृष्ट्वा देवानां तु बृहस्पतिः ।
उवाच हीनं वः सैन्यं नायकेन विना सुराः ।। २५.११ ।।
एकेनेन्द्रेण दिव्यं तु सैन्यं पातुं न शक्यते ।
अतः सेनापतिं किञ्चिदन्वेषयत माचिरम् ।। २५.१२ ।।
एवमुक्तास्ततो देवा जग्मुर्लोकपितामहम् ।
सेनापतिं च नो देहि वाक्यमूचुः ससंभ्रमम् ।। २५.१३ ।।
ततो दध्यौ चतुर्वक्त्रः किमेषां क्रियते मया ।
ब्रह्माऽथ चिन्तयामास रुद्रं प्रति मनोगतम् ।। २५.१४ ।।
ततो देवाः सगन्धर्वा ऋषयः सिद्धचारणाः ।
ब्रह्माणं पुरतः कृत्वा जग्मुः कैलासपर्वतम् ।। २५.१५ ।।
तत्र दृष्ट्वा महादेवं शिवं पशुपतिं विभुम् ।
तुष्टवुर्विविधैस्तोत्रैः शक्राद्यास्त्रिदिवौकसः ।। २५.१६ ।।
देवा ऊचुः ।
नमाम सर्वे शरणार्थिनो वयं
महेश्वरं त्र्यम्बकभूतभावनम् ।

उमापते विश्वपते मरुत्पते
जगत्पते शंकर पाहि नः स्वयम् ।। २५.१७ ।।
जटाकलापाग्रशशाङ्कदीधिति-
प्रकाशिताशेषजगत्त्रयामल ।
त्रिशूलपाणे पुरुषोत्तमाच्युत
प्रपाहि दैत्याच्च जगत्त्रयोदरे ।। २५.१८ ।।
त्वमादिदेवः पुरुषोत्तमो हरि-
र्भवो महेशस्त्रिपुरान्तको विभुः ।
भगाक्षिहा दैत्यरिपुः पुरातनो
वृषध्वजः पाहि सुरोत्तमोत्तम ।। २५.१९ ।।
गिरीशजानाथ गिरिप्रियाप्रिय
प्रभो समस्तामरलोकपूजित ।
गणेश भूतेश शिवाक्षयाव्यय
प्रपाहि नो दैत्यवरान्तकाच्युत ।। २५.२० ।।
पृथ्व्यादितत्त्वेषु भवान् प्रतिष्ठितो
ध्वनिस्वरूपो गगने विशेषतः ।
वायौ द्विधा तेजसि च त्रिधा जले
चतुः क्षितौ पञ्चगुणः प्रपाहि नः ।। २५.२१ ।।
अग्निस्वरूपोऽसि तरौ तथोपले
सत्त्वस्वरूपोऽसि तथा जलेष्वपि ।
तेजःस्वरूपो भगवान् महेश्वरः
प्रपाहि नो दैत्यगणार्दितान् हर ।। २५.२२ ।।
नासीद्यदाऽकाण्डमिदं त्रिलोचन
प्रभाकरेन्द्रद्रविणाधिपाः कुतः ।
तदा भवानेव विरुद्धलोचन
प्रमाणबाधादिविवर्जितः स्थितः ।। २५.२३ ।।
कपालमालिन् शशिखण्डशेखर
श्मशानवासिन् सितभस्मगुण्ठित ।
फणीन्द्रसंवीततनोऽन्तकापह
प्रपाहि नो दक्षधिया सुरेश्वर ।। २५.२४ ।।
भवान् पुमान् शक्तिरियं गिरेः सुता
सर्वाङ्गरूपा भगवंस्तथा त्वयि ।
त्रिशूलरूपेण जगत्त्रयं करे
स्थितं त्रिनेत्रेषु मखाग्नयस्त्रयः ।। २५.२५ ।।
जटास्वरूपेण समस्तसागराः
कुलाचलाः सिन्धुवहाश्च सर्वशः ।
शशी परं ज्ञानमिदं तव स्थितं
न देव पश्यन्ति कुदृष्टयो जनाः ।। २५.२६ ।।

नारायणस्त्वं जगतां समुद्भव-
स्तथा भवः सैव चतुर्मुखो भवान् ।
सत्त्वादिभेदेन तथाग्निभेदतो
युगादिभेदेन च संस्थितस्त्रिधा ।। २५.२७ ।।
भवन्तमेते सुरनायकाः प्रभो
भवार्थिनोऽन्यस्य वदन्ति तोषयन् ।
यतस्ततो नो भव भूतिभूषण
प्रपाहि विश्वेश्वर रुद्र ते नमः ।। २५.२८ ।।
महातपा उवाच ।
एवं स्तुतस्तदा देवो रुद्रः पशुपतिः सुरैः ।
उवाच देवानव्यग्रः किं कार्यं ब्रूत मा चिरम् ।। २५.२९ ।।
देवा ऊचुः ।
सेनापतिं नो देवेश देहि दैत्यवधाय वै ।
देवानां ब्रह्ममुख्यानामेतदेव हितं भवेत् ।। २५.३० ।।
रुद्र उवाच ।
ददामि सेनानाथं वो देवा भवत विज्वराः ।
भविष्यमस्ति पौराणं योगादीनामचिन्तयन् ।। २५.३१ ।।
एवमुक्त्वा हरो देवान् विसृज्य स्वाङ्गसंस्थिताम् ।
शक्तिं संक्षोभयामास पुत्रहेतोः परंतप ।। २५.३२ ।।
तस्य क्षोभयतः शक्तिं ज्वलनार्कसमप्रभः ।
कुमारः सहजां शक्तिं बिभ्रज्ज्ञानैकशालिनीम् ।। २५.३३ ।।
उत्पत्तिस्तस्य राजेन्द्र बहुरूपा व्यवस्थिता ।
मन्वन्तरेष्वनेकेषु देवसेनापतिः किल ।। २५.३४ ।।
योऽसौ शरीरगो देवः अहंकारेति कीर्त्तितः ।
प्रयोजनवशाद् देवः सैव सेनापतिर्विभो ।। २५.३५ ।।
तस्मिन् जाते स्वयं ब्रह्मा सर्वदैवैः समन्वितः ।
पूजयामास देवेशं शिवं पशुपतिं तदा ।। २५.३६ ।।
सर्वैश्च देवै ऋषिभिश्च सिद्धैः
सेनापतिर्वरदानेन तेन ।
आप्यायितः सोऽपि सुरानुवाच
सखायार्थं क्रडने कार्यमेव ।। २५.३७ ।।
श्रुत्वा वचस्तस्य् महानुभावो
महादेवो वाक्यमिदं जगाद ।
ददामि ते क्रीडनकं तु कुक्कुटं
तथानुगौ शाखविशाखसंज्ञौ ।
कुमार भूतग्रहनायको भवान्
भवस्व देवेश्वर सेनयापतिः ।। २५.३८ ।।
एवमुक्त्वा ततो देवः सर्वे देवाश्च पार्थिव ।

तुष्टुवुर्वाग्भिरिष्टाभिः स्कन्दं सेनापतिं तदा ।। २५.३९ ।।
देवा ऊचुः ।
भवस्व देवसेनानीर्महेश्वरसुत प्रभो ।
षण्मुख स्कन्द विश्वेश कुक्कुटध्वज पावके ।। २५.४० ।।
कम्पितारे कुमारेश स्कन्द बालग्रहानुग ।
जितारे क्रौञ्चविध्वंस कृत्तिकासुत मातृज ।। २५.४१ ।।
भूतग्रहपतिश्रेष्ठ पावकि प्रियदर्शन ।
महाभूतपतेः पुत्र त्रिलोचन नमोऽस्तु ते ।। २५.४२ ।।
एवं स्तुतस्तदा देवैर्ववर्ध भवनन्दनः ।
द्वादशादित्यसंकाशो बभूवाद्भुतदर्शनः ।
त्रैलोक्यमपि तत्तेजस्तापयामास पार्थिव ।। २५.४३ ।।
प्रजापाल उवाच ।
कथं तं कृत्रिकापुत्रमुक्तवन्तः सुरं गुरुम् ।
कथं च पावकिरसौ कथं वा मातृनन्दनः ।। २५.४४ ।।
महातपा उवाच ।
आदिमन्वन्तरे देव उत्पत्तिर्या मयोदिता ।
परोक्षदर्शिभिर्देवैरेवमेव स्तुतः प्रभुः ।। २५.४५ ।।
कृत्तिका पावकस्त्वन्यमातरो गिरिजा तथा ।
द्विजीयजन्मनि गुहस्यैते उत्पत्तिहेतवः ।। २५.४६ ।।
एवमेतत् तवाख्यातं पृच्छतः पार्थिवोत्तम ।
आत्मविद्याऽमृतं गुह्यमहंकारस्य संभवः ।। २५.४७ ।।
स्वयं स्कन्दो महादेवः सर्वपापप्रणाशनः ।
तस्य षष्ठीं तिथिं प्रादादभिषेके पितामहः ।। २५.४८ ।।
एतां फलाशनो यस्तु क्षयेन्नियतमानसः ।
अपुत्रोऽपि लभेत् पुत्रानधनोऽपि धनं लभेत् ।
यं यमिच्छेत मनसा तं तं लभति मानवः ।। २५.४९ ।।
यश्चैतत् पठति स्तोत्रं कार्तिकेयस्य मानवः ।
तस्य गेहे कुमाराणां क्षेमारोग्यं भविष्यति ।। २५.५० ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे पञ्चविंशोऽध्यायः ।। २५ ।।

प्रजापाल उवाच ।
शरीरस्य कथं मूर्तिग्रहणं ज्योतिषो द्विज ।
एतन्मे संशयं छिन्धि प्रणतस्य द्विजोत्तम ।। २६.१ ।।
महातपा उवाच ।
योऽसावात्मा ज्ञानशक्तिरेक एव सनातनः ।
स द्वितीयं यदा चैच्छत् तदा स्वात्मस्थितो ज्वलत् ।। २६.२ ।।
यः सूर्य इति भास्वांस्तु अन्योन्येन महात्मनः ।
लोलीभूतानि तेजांसि भासयन्ति जगत्त्रयम् ।। २६.३ ।।
तस्मिन् सर्वे सुराः सिद्धा गणाः सर्वे महर्षिभिः ।
समं सूता इति विभो तस्मात् सूर्यो भवन् स्तुतः ।। २६.४ ।।
लोलीभूतस्य तस्याशु तेजसोऽभूच्छरीरकम् ।
पृथक्त्वेन रविः सोऽथ कीर्त्त्यते वेदवादिभिः ।। २६.५ ।।
भासयन् सर्वलोकांस्तु यतोऽसावुत्थितो दिवि ।
अतोऽसौ भास्करः प्रोक्तः प्रकर्षाच्च प्रभाकरः ।। २६.६ ।।
दिवा दिवस इत्युक्तस्तत्कारित्वाद् दिवाकरः ।
सर्वस्य जगतस्त्वादिरादित्यस्तेन उच्यते ।। २६.७ ।।
एतस्य द्वादशादित्याः संभूतास्तेजसा पृथक् ।
प्रधान एव सर्वेषां सर्वदा स विबुध्यते ।। २६.८ ।।
तं दृष्ट्वा जगतो व्याप्तिं कुर्वाणं परमेश्वरम् ।
तस्यैवान्तः स्थिता देवा विनिष्क्रम्य स्तुतिं जगुः ।। २६.९ ।।
देवा ऊचुः ।
भवान् प्रसूतिर्जगतः पुराणः
क्षयामलैव प्रदहन् जगन्ति ।
समुत्थितो नाथ शमं प्रयाहि
मा देवलोकान् प्लुष कर्मसाक्षिन् ।। २६.१० ।।
त्वया ततं सर्वत एव तेजः
प्रतापिना सूर्य यजुःप्रवृत्ते ।
तिग्मं रथाङ्गं तव देवकल्पं
कालाख्यमध्वान्तकरं वदन्ति ।। २६.११ ।।
प्रभाकरसक्त्वं रविरादिदेव
आत्मा समस्तस्य चराचरस्य ।
पितामहसक्त्वं वरुणो यमश्च
भूतं भविष्यच्च वदन्ति सिद्धाः ।। २६.१२ ।।
ध्वान्तं प्रणु त्वं सुरलोकपूज्य
प्रयाहि शान्तिं पितरो वदन्ति ।
वेदान्तवेद्योऽसि मखेषु देव
त्वं हूयसे विष्णुरसि प्रसह्य ।
इति स्तुतस्तैः सुरनाथ भक्त्या

प्रपाहि शंभो न इति प्रसह्य ।। २६.१३ ।।
एवमुक्तस्तदा देवैः सौम्यां मूर्त्तिमथाकरोत् ।
प्रकाशत्वं जगामाशु देवतानां महाप्रभः ।। २६.१४ ।।
एतत्सर्वं सुराणां तु दहनं शामितं पुरा ।
सप्तम्यां खलु सूर्येण मूर्त्तित्वं कृतवान् भुवि ।। २६.१५ ।।
एतां यः पुरुषो भक्त्या उपास्ते सूर्यमर्चयेत् ।
भास्करेण च तस्यासौ फलमिष्टं प्रयच्छति ।। २६.१६ ।।
एतत् ते कथितं राजन् सूर्याख्यानं पुरातनम् ।
आदिमन्वन्तरे वृत्तं मातरः श्रृणु सांप्रतम् ।। २६.१७ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे षड्विंशोऽध्यायः ।। २६ ।।

महातपा उवाच ।
पूर्वमासीन्महादैत्यो बलवानन्धको भुवि ।
स देवान् वशमानिन्ये ब्रह्मणो वरदर्पितः ।। २७.१ ।।
तेनात्मवान् सुराः सर्वे त्याजिता मेरुपर्वतम् ।
ब्रह्माणं शरणं जग्मुरन्धकस्य भयार्दिताः ।। २७.२ ।।
तानागतांस्तदा ब्रह्मा उवाच सुरसत्तमान् ।
किमागमनकृत्यं वो देवा ब्रूत किमास्यते ।। २७.३ ।।
देवा ऊचुः ।
अन्धकेनार्दिताः सर्वे वयं देवा जगत्पते ।
त्राहि सर्वांश्चतुर्वक्त्र पितामह नमोऽस्तु ते ।। २७.४ ।।
ब्रह्मोवाच ।
अन्धकान्नैव शक्तोऽहं त्रातुं वै सुरसत्तमाः ।
भवं शर्वं महादेवं व्रजाम शरणार्थिनः ।। २७.५ ।।
किन्तु पूर्वं मया दत्तो वरस्तस्य सुरोत्तमाः ।
अवध्यस्त्वं हि भविता न शरीरं स्पृशेन्महीम् ।। २७.६ ।।
तस्यैवं बलिनस्त्वेको हन्ता रुद्रः परंतपः ।
तत्र गच्छामहे सर्वे कैलासनिलयं प्रभुम् ।। २७.७ ।।
एवमुक्त्वा ययौ ब्रह्मा सदेवो भवसन्निधौ ।
तस्य संदर्शनाद् रुद्रः प्रत्युत्थानादिकाः क्रियाः ।
कृत्वाभ्युवाच देवेशो ब्रह्माणं भुवनेश्वरम् ।। २७.८ ।।
शंभुरुवाच ।
किं कार्यं देवताः सर्वा आगता मम सन्निधौ ।
येनाहं तत्करोम्याशु आज्ञा कार्या हि सत्वरम् ।। २७.९ ।।
देवा ऊचुः ।
रक्षस्व देव बलिनस्त्वन्धकाद् दुष्टचेतसः ।। २७.१० ।।
यावदेवं सुरा सर्वे शंसन्ति परमेष्ठिनः ।
तावत् सैन्येन महता तत्रैवान्धक आययौ ।। २७.११ ।।
बलेन चतुरङ्गेण हन्तुकामो भवं मृधे ।
तस्य भार्यां गिरिसुतां हर्तुमिच्छन् ससाधनः ।। २७.१२ ।।
तं दृष्ट्वा सहसाऽयान्तं देवशक्रप्रहारिणम् ।
सन्नह्य सहसा देवा रुद्रस्यानुचरा भवन् ।। २७.१३ ।।
रुद्रोऽपि वासुकिं ध्यात्वा तक्षकं च धनंजयम् ।
वलयं कटिंसूत्रं च चकार परमेश्वरः ।। २७.१४ ।।
नीलनामा च दैत्येन्द्रो हस्ती भूत्वा भवान्तिकम् ।
आगतस्त्वरितः शक्रहस्तीवोद्धतरूपवान् ।। २७.१५ ।।
स ज्ञातो नन्दिना दैत्यो वीरभद्राय दर्शितः ।
वीरभद्रोऽपि सिंहेन रूपेणाहत्य च द्रुतम् ।। २७.१६ ।।
तस्य कृत्तिं विदार्याशु करिणस्त्वञ्जनप्रभाम् ।

रुद्रायार्पितवान् सोऽपि तमेवाम्बरमाकरोत् ।
ततः प्रभृति रुद्रोऽपि गजचर्मपटोऽभवत् ।। २७.१७ ।।
गजचर्म्मपटो भूत्वा भुजंगाभरणोज्ज्वलः ।
आदाय त्रिशिखं भीमं सगणोऽन्धकमन्वयात् ।। २७.१८ ।।
ततः प्रवृत्ते युद्धे च देवदानवयोर्महत् ।
इन्द्राद्या लोकपालास्तु स्कन्दः सेनापतिस्तथा ।
सर्वे देवगणाश्चान्ये युयुधुः समरे तदा ।। २७.१९ ।।
तं दृष्ट्वा नारदा युद्धं ययौ नारायणं प्रति ।
शशंस च महद् युद्धं कैलासे दानवैः सह ।। २७.२० ।।
तच्छ्रुत्वा चक्रमादाय गरुडस्थो जनार्दनः ।
तमेव देशमागत्य युयुधे दानवैः सह ।। २७.२१ ।।
आगत्य च ततो देवा हरिणाप्यायिता रणे ।
विषण्णवदनाः सर्वे पलायनपरा भवन् ।। २७.२२ ।।
तत्र भग्नेषु देवेषु स्वयं रुद्रोऽन्धकं ययौ ।
तत्र तेन महद्युद्धमभवल्लोमहर्षणम् ।। २७.२३ ।।
तत्र देवोऽप्यसौ दैत्यं त्रिशूलेनाहनद् भृशम् ।
तस्याहतस्य यद् रक्तमपतद् भूतले किल ।
तत्रान्धका असंख्याता बभूवुरपरे भृशम् ।। २७.२४ ।।
तद् दृष्ट्वा महदाश्चर्यं रुद्रो शूलेऽन्धकं मृधे ।
गृहीत्वा त्रिशिखाग्रेण ननर्त्त परमेश्वरः ।। २७.२५ ।।
इतरेऽप्यन्धकाः सर्वे चक्रेण परमेष्ठिना ।
नारायणेन निहतास्तत्र येऽन्ये समुत्थिताः । २७.२६ ।।
असृग्धारातुषारैस्तु शूलप्रोतस्य चासकृत् ।
अनारतं समुत्तस्थुस्ततो रुद्रो रुषान्वितः ।। २७.२७ ।।
तस्य क्रोधेन महता मुखाज्ज्वाला विनिर्ययौ ।
तद्रूपधारिणी देवी यां तां योगेश्वरीं विदुः ।। २७.२८ ।।
स्वरूपधारिणी चान्या विष्णुनापि विनिर्मिता ।
ब्रह्मणा कार्तिकेयेन इन्द्रेण च यमेन च ।
वराहेण च देवेन विष्णुना परमेष्ठिना ।। २७.२९ ।।
पातालोद्धरणं रूपं तस्या देव्या विनिर्ममे ।
माहेश्वरी च राजेन्द्र इत्येता अष्टमारतः ।। २७.३० ।।
कारणं तानि यत्प्रोक्तं क्षेत्रज्ञेनावधारणम् ।
शरीराद् देवतानां तु तदिदं कीर्तितं मया ।। २७.३१ ।।
कामः क्रोधस्तथा लोभो मदो मोहोऽथ पञ्चमः ।
मात्सर्यं षष्ठमित्याहुः पैशुन्यं सप्तमं तथा ।
असूया चाऽष्टमी ज्ञेया इत्येता अष्टमातरः ।। २७.३२ ।।
कामं योगेश्वरीं विद्धि क्रोधो माहेश्वरीं तथा ।
लोभस्तु वैष्णवी प्रोक्ता ब्रह्माणी मद एव च ।। २७.३३ ।।

मोहः स्वयंभूः कौमारी मात्सर्यं चेन्द्रजं विदुः ।
यमदण्डधरा देवी पैशुन्यं स्वयमेव च ।
असूया च वराहाख्या इत्येताः परिकीर्तिताः ।। २७.३४ ।।
कामादिगण एषोऽयं शरीरे परिकीर्तितः ।
जग्राह मूर्त्तिं तु यथा तथा ते कीर्तितं मया ।। २७.३५ ।।
एताभिर्देवताभिश्च तस्य रक्तेऽतिशोषिते ।
क्षयं गताऽऽसुरी माया स च सिद्धोऽन्धकोऽभवत् ।
एतत् ते सर्वमाख्यातमात्मविद्याऽमृतं मया ।। २७.३६ ।।
य एतच्छृणुयान्नित्यं मातॄणामुद्भवं शुभम् ।
तस्य ताः सर्वतो रक्षां कुर्वन्त्यनुदिनं नृप ।। २७.३७ ।।
यश्चैतत् पठते जन्म मातॄणां पुरुषोत्तम ।
स धन्यः सर्वदा लोके शिवलोकं च गच्छति ।। २७.३८ ।।
तासां च ब्रह्मणा दत्ता अष्टमी तिथिरुत्तमा ।
एताः संपूजयेद् भक्त्या बिल्वाहारो नरः सदा ।
तस्य ताः परितुष्टास्तु क्षेमारोग्यं ददन्ति च ।। २७.३९ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे सप्तविंशोऽध्यायः ।। २७ ।।

प्रजापाल उवाच ।
कथं माया समुत्पन्ना दुर्गा कात्यायनी शुभा ।
आदिक्षेत्रे स्थिता सूक्ष्मा पृथग्मूर्त्ता व्यजायत ।। २८.१ ।।
महातपा उवाच ।
आसीद् राजा पुरा राजन् सिन्धुद्वीपः प्रतापवान् ।
वरुणांशो महाराज सोऽरण्ये तपसि स्थितः ।। २८.२ ।।
पुत्रो मे शक्रनाशाय भवेदिति नारधिपः ।
एवं कृतमतिः सोऽथ महता तपसा स्वकम् ।
कलेवरं स्थितो भूत्वा शोषयामास सुव्रत ।। २८.३ ।।
प्रजापाल उवाच ।
कथं तस्य द्विजश्रेष्ठ शक्रेणापकृतं भवेत् ।
येनासौ तद्विनाशाय पुत्रमिच्छन् व्रते स्थितः ।। २८.४ ।।
महातपा उवाच ।
सोऽन्यजन्मनि पुत्रोऽभूत् त्वष्टुर्बलभृतां वरः ।
अवध्यः सर्वशस्त्रेषु अपां फेनेन नाशितः ।। २८.५ ।।
जलफेनेन निहतस्तस्मिँल्लयमवाप्नुयात् ।
पुनर्ब्रह्मान्वयाज्जातः सिन्धुद्वीपेति संज्ञितः ।
स तेपे परमं तीव्रं शक्रवैरमनुस्मरन् ।। २८.६ ।।
ततः कालेन महता नदी वेत्रवती शुभा ।
मानुषं रूपमास्थाय सालंकारं मनोरमम् ।
आजगाम यतो राजा तेपे परमकं तपः ।। २८.७ ।।
तां दृष्ट्वा रूपसंपन्नां स राजा क्रुद्धमानसः ।
उवाच काऽसि सुश्रोणि सत्यं कथय भामिनि ।। २८.८ ।।
नद्युवाच ।
अहं जलपतेः पत्नी वरुणस्य महात्मनः ।
नाम्ना वेत्रवती पुण्या त्वामिच्छन्तीहमागता ।। २८.९ ।।
साभिलाषां परस्त्रीं च भजमानां विसर्ज्जयेत् ।
स पापः पुरुषो ज्ञेयो ब्रह्महत्यां च विन्दति ।
एवं ज्ञात्वा महाराज भजमानां भजस्व माम् ।। २८.१० ।।
एवमुक्तस्तया राजा साभिलाषोपभुक्तवान् ।
तस्य सद्योऽभवत् पुत्रो द्वादशार्कसमप्रभः ।। २८.११ ।।
वेत्रवत्युदरे जातो नाम्ना वैत्रासुरोऽभवत् ।
बलवानतितेजस्वी प्राग्ज्योतिषपतिर्भवत् ।। २८.१२ ।।

स कालेन युवा जातो बलवान् दृढविक्रमः ।
महायोगेन संयुक्तो जिगायेमां वसुंधराम् ।। २८.१३ ।।
सप्तद्वीपवतीं पश्चान्मेरुपर्वतमारुहत् ।
तत्रेन्द्रं प्रथमं जिग्ये पश्चादग्निं यमं ततः ।
निर्ऋतिं वरुणं वायुं धनदश्चेश्वरं ततः ।। २८.१४ ।।
इन्द्रो भग्नो गतः सोग्निं अग्निर्भग्नो यमं ययौ ।
यमो निर्ऋतिमागच्छन्निर्ऋतिर्वरुणं ययौ ।। २८.१५ ।।
इन्द्रादिभिरुपेतस्तु वरुणो वायुमन्वगात् ।
वायुर्धनपतिं त्वागात् सर्वैरिन्द्रादिभिः सह ।। २८.१६ ।।
धनदोऽपि स्वकं मित्रमीशं देवसमन्वितः ।
इयाय गदया सोऽपि दानवो बलदर्पितः ।
गदामादाय दुद्राव शिवलोकं प्रति प्रभो ।। २८.१७ ।।
शिवोऽप्यवध्यं तं मत्वा देवान् गुह्य ययौ पुरीम् ।
ब्रह्मणः सुरसिद्धाद्यैर्वन्दितां पुण्यकारिभिः ।। २८.१८ ।।
तत्र ब्रह्मा जगत्स्त्रष्टा विष्णुपादोद्भवे जले ।
नियामिताकाशगतो जपत्यन्तर्जले शुभे ।
क्षेत्रज्ञमायां गायत्रीं ततो देवा विचुक्रुशुः ।। २८.१९ ।।
त्राहि प्रजापते सर्वान् देवानृषिवरानपि ।
असुराद्भयमापन्नान् त्राहि त्राहीत्यचोदयन् ।। २८.२० ।।
एवमुक्तस्तदा ब्रह्मा दृष्ट्वा देवांस्तदागतान् ।
चिन्तयामास देवस्य मायेयं विततं जगत् ।
नासुरा न सुराश्चात्र मायेयं कीदृशी मता ।। २८.२१ ।।
एवं चिन्तयतस्तस्य प्रादुरासीदयोनिजा ।
शुक्लाम्बरधरा कन्या स्त्रक्किरीटोज्ज्वलानना ।
अष्टभिर्बाहुभिर्युक्ता दिव्यप्रहरणोद्यता ।। २८.२२ ।।
चक्रं शङ्खं गदां पाशं खड्गं घण्टां तथा धनुः ।
धारयन्ती तथा चान्यान् बद्धतूणा जलाद् बहिः ।। २८.२३ ।।
निश्चक्राम महादेवी सिंहवाहनवेगिता ।
युयुधे चासुरान् सर्वानेकैव बहुधा स्थिता ।। २८.२४ ।।
दिव्यं वर्षसहस्त्रं तु दिव्यैरस्त्रैर्महाबलम् ।
युद्ध्वा कालात्यये देव्या हतो वैत्रासुरो रणे ।
ततः किलकिलाशब्दो देवसैन्येऽभवन्महान् ।। २८.२५ ।।
हते वैत्रासुरे भीमे तदा सर्वे दिवौकसः ।

प्रणेमुर्जय युद्धेति स्वयमीशः स्तुतिं जगौ ।। २८.२६ ।।
महेश्वर उवाच ।
जयस्व देवि गायत्रे महामाये महाप्रभे ।
महादेवि महाभागे महासत्त्वे महोत्सवे ।। २८.२७ ।।
दिव्यगन्धानुलिप्ताङ्गि दिव्यस्त्रग्दामभूषिते ।
वेदमातर्नमस्तुभ्यं त्र्यक्षरस्थे महेश्वरि ।। २८.२८ ।।
त्रिलोकस्थे त्रितत्त्वस्थे त्रिवह्निस्थे त्रिशूलिनि ।
त्रिनेत्रे भीमवक्त्रे च भीमनेत्रे भयानके ।
कमलासनजे देवि सरस्वति नमोऽस्तु ते ।। २८.२९ ।।
नमः पङ्कजपत्राक्षि महामायेऽमृतस्त्रवे ।
सर्वगे सर्वभूतेशि स्वाहाकारे स्वधेऽम्बिके ।। २८.३० ।।
संपूर्णे पूर्णचन्द्राभे भास्वराङ्गे भवोद्भवे ।
महाविद्ये महावेद्ये महादैत्यविनाशिनि ।
महाबुद्ध्युद्भवे देवि वीतशोके किरातिनि ।। २८.३१ ।।
त्वं नीतिस्त्वं महाभागे त्वं गीस्त्वं गौस्त्वमक्षरम् ।
त्वं धीस्त्वं श्रीस्त्वमोङ्कारस्तत्त्वे चापि परिस्थिता ।
सर्वसत्त्वाहिते देवि नमस्ते परमेश्वरि ।। २८.३२ ।।
इत्येवं संस्तुता देवी भवेन परमेष्ठिना ।
देवैरपि जयेत्युच्चैरित्युक्ता परमेश्वरी ।। २८.३३ ।।
यावदास्ते चतुर्वक्त्रस्तावदन्तर्जलाद् बहिः ।
निश्चक्राम ततो देवीं कृतकृत्यां ददर्श सः ।। २८.३४ ।।
तां दृष्ट्वा देवकार्यं च सिद्धं मत्वा पितामहः ।
भविष्यं कार्यमुद्दिश्य ततो वचनमब्रवीत् ।। २८.३५ ।।
ब्रह्मोवाच ।
इयं देवी वरारोहा यातु शैलं हिमोद्भवम् ।
तत्र यूयं सुराः सर्वे गत्वा नन्दत माचिरम् ।। २८.३६ ।।
नवम्यां च सदा पूज्या इयं देवी समाधिना ।
वरदा सर्वलोकानां भविष्यति न संशयः ।। २८.३७ ।।
नवम्यां यश्च पिष्टाशी भविष्यति हि मानवः ।
नारी वा तस्य संपन्नं भविष्यति मनोगतम् ।। २८.३८ ।।
यश्च सायं तथा प्रातरिदं स्तोत्रं पठिष्यति ।
त्वयेरितं महादेव तस्य देव्या समं भवान् ।। २८.३९ ।।
वरदो देव सर्वासु आपत्स्वप्युद्धरस्व तम् ।

एवमुक्त्वा भवं ब्रह्मा पुनर्देवीं स चाब्रवीत् ।। २८.४० ।।
त्वया देवि महत्कार्यं कर्तव्यं चान्यदस्ति नः ।
भविष्यं महिषाख्यस्य असुरस्य विनाशनम् ।। २८.४१ ।।
एवमुक्त्वा ततो ब्रह्मा सर्वे देवाश्च पार्थिव ।
यथागतं ततो जग्मुर्द्देवीं स्थाप्य हिमे गिरौ ।
संस्थाप्य नन्दिता यस्मात् तस्मान्नन्दाऽभवत् तु सा ।। २८.४२ ।।
यश्चेदं श्रृणुयाज्जन्म देव्या यश्च स्वयं पठेत् ।
सर्वपापविनिर्मुक्तः परं निर्वाणमृच्छति ।। २८.४३ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे अष्टाविंशोऽध्यायः ।। २८ ।।

महातपा उवाच ।
श्रृणु राजन्नवहितः प्रजापाल कथामिमाम् ।
यदा दिशः समुत्पन्नाः श्रोत्रेभ्यः पृथिवीपते ।। २९.१ ।।
ब्रह्मणः सृजतः सृष्टिमादिसर्गे समुत्थिते ।
चिन्ताभून्महती को मे प्रजाः सृष्टा धरिष्यति ।। २९.२ ।।
एवं चिन्तयतस्तस्य अवकाशं प्रजास्विह ।
प्रादुर्बभूवुः श्रोत्रेभ्यः दश कन्या महाप्रभाः ।। २९.३ ।।
पूर्वा च दक्षिणा चैव प्रतीची चोत्तरा तथा ।
ऊर्ध्वाऽधरा च षण्मुख्याः कन्या ह्यासंस्तदा नृप ।। २९.४ ।।
अन्याश्चतस्त्रस्तेषां तु कन्याः परमशोभनाः ।
रूपस्विन्यो महाभागा गाम्भीर्येण समन्विताः ।। २९.५ ।।
ता ऊचुः प्रणयाद् देवं प्रजापतिमकल्मषम् ।
अवकाशं तु नो देहि देवदेव प्रजापते ।। २९.६ ।।
यत्र तिष्ठामहे सर्वा भर्तृभिः सहिताः सुखम् ।
पतयश्च महाभागा देहि नोऽव्यक्तसंभव ।। २९.७ ।।
ब्रह्मोवाच ।
ब्रह्माण्डमेतत् सुश्रोण्यः शतकोटिप्रविस्तरम् ।
तस्यान्ते स्वेच्छया भद्रा उष्यतां मा विलम्बत ।। २९.८ ।।
भर्तृंश्च वः प्रयच्छामि सृष्ट्वा रूपस्विनोऽनघाः ।
यथेष्टं गम्यतां देशो यस्या यो रोचतेऽधुना ।। २९.९ ।।
एवमुक्ताश्च ताः सर्वा यथेष्टं प्रययुस्तदा ।
ब्रह्मापि ससृजे तूर्णं लोकपालान् महाबलान् ।। २९.१० ।।
सृष्ट्वा तु लोकपालांस्तु ताः कन्याः पुनराह्वयत् ।
विवाहं कारयामास ब्रह्मा लोकपितामहः ।। २९.११ ।।
एकामिन्द्राय स प्रादादग्नयेऽन्यां यमाय च ।
निर्ऋताय च देवाय वरुणाय महात्मने ।। २९.१२ ।।
वायवे धनदेशाय ईशानाय च सुव्रत ।
ऊद्र्ध्वां स्वयमधिष्ठाय शेषायाधो व्यवस्थिताम् ।। २९.१३ ।।
एवं दत्त्वा पुनर्ब्रह्मा तिथिं प्रादाद् दिशां पुनः ।
दशमीं भर्तृनाम्नस्तु दध्यन्नं भोजनं प्रभुः ।। २९.१४ ।।
ततः प्रभृति ता देव्यः सेन्द्राद्याः परिकीर्तिताः ।
दशमी च तिथिस्तासामतीव दयिताभवत् ।। २९.१५ ।।
तस्यां दध्याशनो यस्तु सुव्रती भवते नरः ।
तस्य पापक्षयं तास्तु कुर्वन्त्यहरहर्नृप ।। २९.१६ ।।
यश्चैतच्छृणुयाज्जन्म दिशां नियतमानसः ।
स प्रतिष्ठामवाप्नोति ब्रह्मलोके न संशयः ।। २९.१७ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे एकोनत्रिंशोऽध्यायः ।। २९ ।।

महातपा उवाच ।
श्रृणु चान्यां वसुपतेरुत्पत्तिं पापनाशिनीम् ।
यथा वायुः शरीरस्थो धनदः संबभूव ह ।। ३०.१ ।।
आद्यं शरीरं यत् तस्मिन् वायुरन्तः स्थितोऽभवत् ।
प्रयोजनान्मूर्त्तिमत्त्वमादिष्टं क्षेत्रदेवता ।। ३०.२ ।।
तत्र मूर्त्तस्य वायोस्तु उत्पत्तिः कीर्त्त्यते मया ।
तां श्रृणुष्व महाभाग कथ्यमानां मयानघ ।। ३०.३ ।।
ब्रह्मणः सृष्टिकामस्य मुखाद् वायुर्विनिर्ययौ ।
प्रचण्डशर्करावर्षी तं ब्रह्मा प्रत्यषेधयत् ।
मूर्त्तो भवस्व शान्तश्च तत्रोक्तो मूर्त्तिमान् भवत् ।। ३०.४ ।।
सर्वेषां चैव देवानां यद् वित्तं फलमेव च ।
तत्सर्वं पाहि येनोक्तं तस्माद् धनपतिर्भवत् ।। ३०.५ ।।
तस्य ब्रह्मा ददौ तुष्टस्तिथिमेकादशीं प्रभुः ।
तस्यामनग्निपक्वाशी यो भवेन्नियतः शुचिः ।। ३०.६ ।।
तस्याशु धनदो देवस्तुष्टः सर्वं प्रयच्छति ।
एषा धनपतेर्मूर्तिः सर्वकिल्बिषनाशिनी ।। ३०.७ ।।
य एतां श्रृणुयाद् भक्त्या पुरुषः पठतेऽपि वा ।
सर्वकाममवाप्नोति स्वर्गलोकं च गच्छति ।। ३०.८ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे त्रिंशोऽध्यायः ।। ३० ।।

महातपा उवाच ।
मनोर्नाम मनुत्वं च यदेतत् पठ्यते किल ।
प्रयोजनवशाद् विष्णुरसावेव तु मूर्त्तिमान् ।। ३१.१ ।।
योऽसौ नारायणो देवः परात् परतरो नृप ।
तस्य चिन्ता समुत्पन्ना सृष्टिं प्रति नरोत्तम ।। ३१.२ ।।
सृष्टा चेयं मया सृष्टिः पालनीया मयैव ह ।
कर्मकाण्डं त्वमूर्त्तेन कर्तुं नैवेह शक्यते ।
तस्मान्मूर्त्तिं सृजाम्येकां यया पाल्यमिदं जगत् ।। ३१.३ ।।
एवं चिन्तयतस्तस्य सत्याभिध्यायिनो नृप ।
प्राक्सृष्टिजातं राजन् वै मूर्त्तिमत् तत्पुरो बभौ ।। ३१.४ ।।
पुरोभूते ततस्तस्मिन् देवो नारायणः स्वयम् ।
प्रविशन्तं ददर्शाथ त्रैलोक्यं तस्य देहतः ।। ३१.५ ।।
ततः सस्मार भगवान् वरदानं पुरातनम् ।
वागादीनां ततस्तुष्टः प्रादात् तस्य पुनर्वरम् ।। ३१.६ ।।
सर्वज्ञः सर्वकर्ता त्वं सर्वलोकनमस्कृतः ।
त्रैलोक्यविशनाच्च त्वं भव विष्णुः सनातनः ।। ३१.७ ।।
देवानां सर्वदा कार्यं कर्त्तव्यं ब्रह्मणस्तथा ।
सर्वज्ञत्वं च भवतु तव देव न संशयः ।। ३१.८ ।।
एवमुक्त्वा ततो देवः प्रकृतिस्थो बभूव ह ।
विष्णुरप्यधुना पूर्वां बुद्धिं सस्मार च प्रभुः ।। ३१.९ ।।
तदा संचिन्त्य भगवान् योगनिद्रां महातपाः ।
तस्यां संस्थाप्य भगवानिन्द्रियार्थोद्भवाः प्रजाः ।
ध्यात्वा परेण रूपेण ततः सुष्वाप वै प्रभुः ।। ३१.१० ।।
तस्य सुप्तस्य जठरान्महत्पद्मं विविःसृतम् ।
सप्तद्वीपवती पृथ्वी ससमुद्रा सकानना ।। ३१.११ ।।
तस्य रूपस्य विस्तारं पातालं नालसंस्थितम् ।
कर्णिकायां तथा मेरुस्तन्मध्ये ब्रह्मणो भवः ।। ३१.१२ ।।
एवं दृष्ट्वा परं तस्य शरीरस्य तु संभवम् ।
मुमुचे तच्छरीरस्थो वायुर्वायुं समं सृजत् ।। ३१.१३ ।।
अविद्याविजयं चेमं शङ्खरूपेण धारय ।
अज्ञानच्छेदनार्थाय खड्गं तेऽस्तु सदा करे ।। ३१.१४ ।।
कालचक्रमिमं घोरं चक्रं त्वं धारयाच्युत ।
अधर्मगजघातार्थं गदां धारय केशव ।। ३१.१५ ।।
मालेयं भूतमाता ते कण्ठे तिष्ठतु सर्वदा ।
श्रीवत्सकौस्तुभौ चेमौ चन्द्रादित्यच्छलेन ह ।। ३१.१६ ।।
मारुतस्ते गतिर्वीर गरुत्मान् स च कीर्त्तितः ।
त्रैलोक्यगामिनी देवी लक्ष्मीस्तेऽस्तु सदाश्रये ।
द्वादशी च तिथिस्तेऽस्तु कामरूपी च जायते ।। ३१.१७ ।।

घृताशनो भवेद्यस्तु द्वादश्यां त्वल्परायणः ।
स स्वर्गवासी भवतु पुमान् स्त्री वा विशेषतः ।। ३१.१८ ।।
एष विष्णुस्तवाख्यातो मूर्तयो देवदानवान् ।
हन्ति पाति शरीराणि सृजत्यन्यानि चात्मनः ।। ३१.१९ ।।
युगे युगे सर्वगोऽयं वेदान्ते पुरुषो ह्यसौ ।
न हीनबुद्ध्या वक्तव्यो मनुष्योऽयं कदाचन ।। ३१.२० ।।
य एवं श्रृणुयात् सर्गं वैष्णवं पापनाशनम् ।
स कीर्तिमिह संप्राप्य स्वर्गलोके महीयते ।। ३१.२१ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे एकत्रिंशोऽध्यायः ।। ३१ ।।

पूर्वं ब्रह्माऽव्ययः शुद्धः परादपरसंज्ञितः ।
स सिसृक्षुः प्रजास्त्वादौ पालनं च विचिन्तयत् ।। ३२.२ ।।
तस्य चिन्तयतस्त्वङ्गाद् दक्षिणाच्छ्वेतकुण्डलः ।
प्रादुर्बभूव पुरुषः श्वेतमाल्यानुलेपनः ।। ३२.३ ।।
तं दृष्ट्वोवाच भगवांश्चतुष्पादं वृषाकृतिम् ।
पालयेमाः प्रजाः साधो त्वं ज्येष्ठो जगतो भव ।। ३२.४ ।।
इत्युक्तः समवस्थोऽसौ चतुःपद्भ्यां कृते युगे ।
त्रेतायां स समस्तृभ्यां द्वे चैव द्वापरेऽभवत् ।
कलावेकेन पादेन प्रजाः पालयते प्रभुः ।। ३२.५ ।।
षड्भेदो ब्राह्मणानां स त्रिधा क्षत्रे व्यवस्थितः ।
द्विधा वैश्येकधा शूद्रे स्थितः सर्वगतः प्रभुः ।
रसातलेषु सर्वेषु द्वीपवर्षे स्वयं प्रभुः ।। ३२.६ ।।
द्रव्यगुणक्रियाजातिचतुःपादः प्रकीर्तितः ।
संहितापदक्रमश्चैव त्रिश्रृङ्गोऽसौ स्मृतो बुधैः ।। ३२.७ ।।
तथा आद्यन्त ओङ्कार द्विशिराः सप्तहस्तवान् ।
त्रिबद्धबद्धो विप्राणां मुख्यः पालयते जगत् ।। ३२.८ ।।
स धर्मः पीडितः पूर्वं सोमेनाद्भुतकर्मण ।
तारां जिघृक्षता पत्नीं भ्रातुराङ्गिरसस्य ह ।। ३२.९ ।।
सोऽपायाद् भीषितस्तेन बलिना क्रूरकर्मणा ।
अरण्यं गहनं घोरमाविवेश तदा प्रभुः ।। ३२.१० ।।
तस्मिन् गते सुराः सर्वे असुराणां तु पत्नयः ।
जिघृक्षन्तस्तदौकांसि बभ्रमुर्धर्मवञ्चिताः ।
असुरा अपि तद्वच्च सुरवेश्मनि बभ्रमुः ।। ३२.११ ।।
निर्मर्यादे तथा जाते धर्मनाशे च पार्थिव ।
देवासुरा युयुधिरे सोमदोषेण कोपिताः ।
स्त्रीहेतोश्च महाभाग विविधायुधपाणयः ।। ३२.१२ ।।
तान् दृष्ट्वा युध्यतो देवानसुरैः सह कोपितान् ।
नारदः प्राह संगम्य पित्रे ब्रह्मणि हर्षितः ।। ३२.१३ ।।
स हंसयानमारुह्य सर्वलोकपितामहः ।
निवारयामास तदा कस्यार्थे युद्धमब्रवीत् ।। ३२.१४ ।।
सर्वे शशंसुः सोमं तु स तु बुद्ध्वा स्वकं सुतम् ।
पीडनादपयातं तु गहनं वनमाश्रितम् ।। ३२.१५ ।।
ततो ब्रह्मा ययौ तत्र देवासुरयुतस्त्वरन् ।
ददर्श च सुरैः सार्द्धं चतुष्पादं वृषाकृतिम् ।
चरन्तं शशिसङ्काशं दृष्ट्वा देवानुवाच ह ।। ३२.१६ ।।
ब्रह्मा उवाच ।
अयं मे प्रथमः पुत्रः पीडितः शशिना भृशम् ।
पत्नीं जिघृक्षता भ्रातुर्द्धर्मसंज्ञो महामुनिः ।। ३२.१७ ।।

इदानीं तोषयध्वं वै सर्व एव सुरासुराः ।
येन स्थितिर्वो भवति समं देवासुरा इति ।। ३२.१८ ।।
ततः सर्वे स्तुतिं चक्रुस्तस्य देवस्य हर्षिताः ।
विदित्वा ब्रह्मणो वाक्यात् संपूर्णशशिसन्निभम् ।। ३२.१९ ।।
देवा ऊचुः ।
नमोऽस्तु शशिसङ्काश नमस्ते जगतः पते ।
नमोऽस्तु देवरूपाय स्वर्गमार्गप्रदर्शक ।
कर्ममार्गस्वरूपाय सर्वगाय नमो नमः ।। ३२.२० ।।
त्वयेयं पाल्यते पृथ्वी त्रैलोक्यं च त्वयैव हि ।
जनस्तपस्तथा सत्यं त्वया सर्वं तु पाल्यते ।। ३२.२१ ।।
न त्वया रहितं किंचिज्जगत्स्थावरजङ्गमम् ।
विद्यते त्वद्विहीनं तु सद्यो नश्यति वै जगत् ।। ३२.२२ ।।
त्वमात्मा सर्वभूतानां सतां सत्त्वस्वरूपवान् ।
राजसानां रजस्त्वं च तामसानां तम एव च ।। ३२.२३ ।।
चतुष्पादो भवान् देव चतुश्शृङ्गस्त्रिलोचनः ।
सप्तहस्तस्त्रिबन्धश्च वृषरूप नमोऽस्तु ते ।। ३२.२४ ।।
त्वया हीना वयं देव सर्व उन्मार्गवर्त्तिनः ।
तन्मार्गं यच्छ मूढानां त्वं हि नः परमा गतिः ।। ३२.२५ ।।
एवं स्तुतस्तदा देवैर्वृषरूपी प्रजापतिः ।
तुष्टः प्रसन्नमनसा शान्तचक्षुरपश्यत ।। ३२.२६ ।।
दृष्टमात्रास्तु ते देवाः स्वयं धर्मेण चक्षुषा ।
क्षणेन गतसंमोहाः सम्यक्सद्धर्मसंहिताः ।। ३२.२७ ।।
असुरा अपि तद्वच्च ततो ब्रह्मा उवाच तम् ।
अद्यप्रभृति ते धर्म तिथिरस्तु त्रयोदशी ।। ३२.२८ ।।
यस्तामुपोष्य पुरुषो भवन्तं समुपार्जयेत् ।
कृत्वा पापसमाहारं तस्मान्मुञ्चति मानवः ।। ३२.२९ ।।
यच्चारण्यमिदं धर्म्म त्वया व्याप्तं चिरं प्रभो ।
ततो नाम्ना भविष्ये तद्धर्मारण्यमिति प्रभो ।। ३२.३० ।।
चतुस्त्रिपाद् द्व्येकपाच्च प्रभो त्वं
कृतादिभिर्ल्लक्ष्यसे येन लोकैः ।
तथा तथा कर्मभूमौ नभश्च
प्रायोयुक्तः स्वगृहं पाहि विश्वम् ।। ३२.३१ ।।
इत्युक्तमात्रः प्रपितामहोऽधुना
सुरासुराणामथ पश्यतां नृप ।
अदृश्यतामगमत् स्वालयांश्च
जग्मुः सुराः सवृषा वीतशोकाः ।। ३२.३२ ।।
धर्मोत्पत्तिं य इमां श्रावयीत
तदा श्राद्धे तर्पयेत पितृंश्च ।

त्रयोदश्यां पायसेन स्वशक्त्या
स स्वर्गगामी तु सुरानुपेयात् ।। ३२.३३ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे द्वात्रिंशोऽध्यायः ।। ३२ ।।

श्रीवराह उवाच ।
अथापरां रुद्रसंभूतिमाद्यां
श्रृणुष्व राजन्निति सोऽभ्युवाच ।
महातपाः प्रीतितो धर्म्मदक्षः
क्षमास्त्रधारी ऋषिरुग्रतेजाः ।। ३३.१ ।।
जातः प्रजानां पतिरुग्रतेजा ।
ज्ञानं परं तत्त्वभावं विदित्वा ।
सृष्टिं सिसृक्षुः क्षुभितोऽतिकोपाद-
वृद्धिकाले जगतः प्रकामम् ।। ३३.२ ।।
तपस्यतोऽतः स्थिरकीर्तिः पुराणो
रजस्तमोध्वस्तगतिर्बभूव ।
वरो वरेण्यो वरदः प्रतापी
कृष्णारुणः पुरुषः पिङ्गनेत्रः ।। ३३.३ ।।
रुदन्नुक्तो ब्रह्मणा मा रुद त्वं
रुद्रस्ततोऽसावभवत् पुराणः ।
नयस्व सृष्टिं विततस्वरूपां
भवान् समर्थोऽसि महानुभाव ।। ३३.४ ।।
इत्युक्तमात्रः सलिले ममज्ज
मग्ने ससर्जात्मभवाय दक्षः ।
कस्थे तदा देववरे वितेनुः
सृष्टिं तु ते मानसा ब्रह्मजाताः ।। ३३.५ ।।
तस्यां ततायां तु सुराधिपे तु
पैतामहं यज्ञवरं प्रकामम् ।
मग्नः पुरा यत्सलिले स रुद्रः
उत्सृज्य विश्वं तु सुरान् सिसृक्षुः ।। ३३.६ ।।
सुस्त्राव यज्ञं सुरसिद्धयक्षा-
नुपागतान् क्रोधवशं जगाम ।
मन्युं प्रदीप्तं परिभाव्य केन
सृष्टं जगन्मां व्यतिरिच्य मोहात् ।। ३३.७ ।।
हा हेति चोक्ते ज्वलनार्चिषस्तु
तत्राभवन् क्षुद्रपिशाचसङ्घा
वेतालभूतानि च योगिसङ्घाः ।। ३३.८ ।।
घनं यदा तैर्विततं वियच्च
भूमिश्च सर्वाश्च दिशश्च लोकाः ।
तदा स सर्वज्ञतया चकार
धनुश्चतुर्विंशतिहस्तमात्रम् ।। ३३.९ ।।
गुणं त्रिवृत्तं च चकार रोषा-
दादत्त दिव्ये च धनुर्गुणं च ।

ततश्च पूष्णो दशनानविध्यद्
भगस्य नेत्रे वृषणौ क्रतोश्च ।। ३३.१० ।।
स विद्धबीजो व्यपयात्क्रतुश्च
मार्गं वायुर्धारधन् यज्ञवाटात् ।
देवाश्च सर्वे पशुपतिमुपेयु-
र्जग्मुश्च सर्वे प्रणतिं भवस्य ।। ३३.११ ।।
आगम्य तत्रैव पितामहस्तु
भवं प्रतीतः संपरिष्वज्य देवान् ।
भक्त्योपेतान् वीक्षयद् देवदेवान्
विज्ञानमन्तः कुरु वीरबाहो ।। ३३.१२ ।।
रुद्र उवाच ।
सृष्टः पूर्वं भवताऽहं न चेमे
कस्मान्न भागं परिकल्पयन्ति ।
यज्ञोद्भवं तेन रुषा मयेमे
हृतज्ञाना विकृता देवदेव ।। ३३.१३ ।।
ब्रह्मा उवाच ।
देवाः शंभुं स्तुतिभिर्ज्ञानहेतोर्
यजध्वमुच्चैरसुराश्च सर्वे ।
येन रुद्रो भगवांस्तोषमेति
सर्वज्ञता तोषमात्रस्य च स्यात् ।। ३३.१४ ।।
इत्युक्तास्तेन ते देवाः स्तुतिं चक्रुर्महात्मनः ।। ३३.१५ ।।
देवा ऊचुः ।
नमो देवातिदेवाय त्रिनेत्राय महात्मने ।
रक्तपिङ्गलनेत्राय जटामुकुटधारिणे ।। ३३.१६ ।।
भूतवेतालजुष्टाय महाभोगोपवीतिने ।
भीमाट्टहासवक्त्राय कपर्दिन् स्थाणवे नमः ।। ३३.१७ ।।
पूष्णो दन्तविनाशाय भगनेत्रहने नमः ।
भविष्यवृषचिह्नाय महाभूतपते नमः ।। ३३.१८ ।।
भविष्यत्रिपुरान्ताय तथान्धकविनाशिने ।
कैलासवरवासाय करिकृत्तिनिवासिने ।। ३३.१९ ।।
विकरालोद्र्ध्वकेशाय भैरवाय नमो नमः ।
अग्निज्वालाकरालाय शशिमौलिकृते नमः ।। ३३.२० ।।
भविष्यकृतकापालिव्रताय परमेष्ठिने ।
तथा दारुवनध्वंसकारिणे तिग्मशूलिने ।। ३३.२१ ।।
कृतकङ्कणभोगीन्द्र नीलकण्ठ त्रिशूलिने ।
प्रचण्डदण्डहस्ताय वडवाग्निमुखाय च ।। ३३.२२ ।।
वेदान्तवेद्याय नमो यज्ञमूर्ते नमो नमः ।
दक्षयज्ञविनाशाय जगद्भयकराय च ।। ३३.२३ ।।

विश्वेश्वराय देवाय शिवशंभुभवाय च ।
कपर्दिने करालाय महादेवाय ते नमः ।। ३३.२४ ।।
एवं देवैः स्तुतः शंभुरुग्रधन्वा सनातनः ।
उवाच देवदेवोऽहं यत्करोमि तदुच्यताम् ।। ३३.२५ ।।
देवा ऊचुः ।
वेदशास्त्राणि विज्ञानं देहि नो भव माचिरम् ।
यज्ञं सरहस्यं नो यदि तुष्टोऽसि नः प्रभो ।। ३३.२६ ।।
महादेव उवाच ।
भवन्तः पशवः सर्वे भवन्तु सहिता इति ।
अहं पतिर्वो भवतां ततो मोक्षमवाप्स्यथ ।
तथेति देवास्तं प्राहुस्ततः पशुपतिर्भवत् ।। ३३.२७ ।।
ब्रह्मा पशुपतिं प्राह प्रसन्नेनान्तरात्मना ।
चतुर्द्दशी ते देवेश तिथिरस्तु न संशयः ।। ३३.२८ ।।
तस्यां तिथौ भवन्तं ये यजन्ते श्रद्धयान्विताः ।
उपोष्य पश्चाद्भुञ्जीयाद्गोधूमान्नेन वै द्विजान् ।।
तस्य त्वं तुष्टिमापन्नो नय स्थानमनुत्तमम् ।। ३३.२९ ।।
एवमक्तस्तदा रुद्रो ब्रह्मणाऽव्यक्तजन्मना ।
दन्तान् नेत्रे फले प्रादाद्भगपूष्णोः क्रतोरपि ।
परिज्ञानं च सकलं स प्रादाच्च सुरेष्वपि ।। ३३.३० ।।
एवं रुद्रस्य संभूतिः संभूता ब्रह्मणः पुरा ।
अनेनैव प्रयोगेन देवानां पतिरुच्यते ।। ३३.३१ ।।
यश्चैनं श्रृणुयान्नित्यं प्रातरुत्थाय मानवः ।
सर्वपापविनिर्मुक्तो रुद्रलोकमवाप्नुयात् ।। ३३.३२ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे त्रयस्त्रिंशोऽध्यायः ।। ३३ ।।

महातपा उवाच ।
पितृणां संभवं राजन् कथ्यमानं निबोध मे ।
पूर्वं प्रजापतिर्ब्रह्मा सिसृक्षुर्विविधाः प्रजाः ।। ३४.१ ।।
एकाग्रमनसा सर्वास्तन्मात्रा मनसा बहिः ।
कृत्वा परमकं ब्रह्म ध्यायन् सर्गेप्सुरुच्चकैः ।। ३४.२ ।।
तस्यात्मनि तदा योगं गतस्य परमेष्ठिनः ।
तन्मात्रा निर्ययुर्देहाद् धूमवर्णाकृतित्विषः ।। ३४.३ ।।
पिबाम इति भाषन्तः सुरान् सोम इति स्म ह ।
ऊर्ध्वं जिगमिषन्तो वै वियत्संस्थास्तपस्विनः ।। ३४.४ ।।
तान् दृष्ट्वा सहसा ब्रह्मा तिर्यक्संस्थान उन्मुखान् ।
भवन्तः पितरः सन्तु सर्वेषां गृहमेधिनाम् ।। ३४.५ ।।
ऊर्ध्ववक्त्रास्तु ये तत्र ते नान्दीमुखसंज्ञिताः ।
वृद्धिश्राद्धेषु सतत पूज्या श्रुतिविधानतः ।। ३४.६ ।।
अग्निं पुरस्कृतो यैस्तु ते द्विजा अग्निहोत्रिणः ।
नित्यैर्नैमित्तिकैः काम्यैः पार्वणैस्तर्पयन्तु तान् ।। ३४.७ ।।
बहिःप्रवरणा ये च क्षत्रियास्तर्पयन्तु तान् ।
आज्यं पिबन्ति ये चात्र तानर्चयन्तु विशः सदा ।। ३४.८ ।।
ब्राह्मणैरभ्यनुज्ञाताः शूद्राः स्वपितृनामतः ।
तानेवार्चयतां सम्यग्विधिमन्त्रबहिष्कृताः ।। ३४.९ ।।
अनाहिताग्नयो ये च ब्रह्मक्षत्रविशो नराः ।
स्वकालिनस्तेऽर्चयन्तु लोकाग्निपुरतः सदा ।। ३४.१० ।।
इत्येवं पूजिता यूयमिष्टान् कामान् प्रयच्छत ।
आयुः कीर्तिं धनं पुत्रान् विद्यामभिजनं स्मृतिम् ।। ३४.११ ।।
इत्युक्त्वा तु तदा ब्रह्मा तेषां पन्थानमाकरोत् ।
दक्षिणायनसंज्ञं तु पितृणां च पितामहः ।। ३४.१२ ।।
तूष्णीं ससर्ज भूतानि तमूचुः पितरस्ततः ।
वृत्तिं नो देहि भगवन् यया विन्दामहे सुखम् ।। ३४.१३ ।।
ब्रह्मा उवाच ।
अमावास्यादिनं वोऽस्तु तस्यां कुशतिलोदकैः ।
तर्पिता मानुषैस्तृप्तिं परां गच्छथ नान्यथा ।। ३४.१४ ।।
तिला देयास्तथैतस्यामुपोष्य पितृभक्तितः ।
परमं तस्य संतुष्टा वरं यच्छत मा चिरम् ।। ३४.१५ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे चतुस्त्रिंशोऽध्यायः ।। ३४ ।।

महातपा उवाच ।
ब्रह्मणो मानसः पुत्रः अत्रिर्नाम महातपाः ।
तस्य पुत्रोऽभवत्सोमो दक्षजामातृतां गतः ।। ३५.१ ।।
सप्तविंशति याः कन्या दाक्षायण्यः प्रकीर्त्तिताः ।
सोमपत्न्योऽतिमन्तव्यास्तासां श्रेष्ठा तु रोहिणि ।। ३५.२ ।।
तामेव रमते सोमो नेतरा इति शुश्रुमः ।
इतराः प्रोचुरागत्य दक्षस्यासमतां शशेः ।। ३५.३ ।।
दक्षोऽप्यसकृदागत्य तमुवाच स नाकरोत् ।
समतां सोऽपि तं दक्षः शशापान्तर्हितो भव ।। ३५.४ ।।
एवं शप्तस्तु दक्षेण सोमो देहं त्यजेदथ ।
उवाच सोमो दक्षं तु भवानेवं भविष्यति ।
अनेकजो विहायेमं ब्रह्मदेहं सनातनम् ।। ३५.५ ।।
एवमुक्त्वा क्षयं सोम अगमद् दक्षशापतः ।
देवा मनुष्याः पशवो नष्टे सोमे सवीरुधः ।। ३५.६ ।।
क्षीणाभवंस्तदा सर्वा ओषध्यश्च विशेषतः ।
क्षयं गच्छद्भिरत्यर्थमोषधीभिः सुरर्षभाः ।। ३५.७ ।।
मूलेषु वीरुधां सोमः स्थित इत्यूचुरातुराः ।
तेषां चिन्ताऽभवत् तीव्रा विष्णुं च शरणं ययुः ।। ३५.८ ।।
भगवानाह तान् सर्वान् ब्रूत किं क्रियते मया ।
ते चोचुर्देव दक्षेण शप्तः सोमो विनाशितः ।। ३५.९ ।।
तानुवाच तदा देवो मथ्यतां कलशोदधिः ।
ओषध्यः सर्वतो देवाः प्रक्षिप्याशु सुसंयतैः ।। ३५.१० ।।
एवमुक्त्वा ततो देवान् दध्यौ रुद्रं हरिः स्वयम् ।
ब्रह्माणं च तथा दध्यौ वासुकिं नेत्रकारणात् ।। ३५.११ ।।
ते सर्वे तत्र सहिता ममन्थुर्वरुणालयम् ।
तस्मिंस्तु मथिते जातः पुनः सोमो महीपते ।। ३५.१२ ।।
योऽसौ क्षेत्रज्ञसंज्ञो वै देहेऽस्मिन् पुरुषः परः ।
स एव सोमो मन्तव्यो देहिनां जीवसंज्ञितः ।
परेच्छया स मूर्त्तिं तु पृथक् सौम्यां प्रपेदिवान् ।। ३५.१३ ।।
तमेव देवमनुजाः षोडशेमाश्च देवताः ।
उपजीवन्ति वृक्षाश्च तथैवोषधयः प्रभुम् ।। ३५.१४ ।।
रुद्रस्तमेव सकलं दधार शिरसा तदा ।
तदात्मिका भवन्त्यापो विश्वमूर्तिरसौ स्मृतः ।। ३५.१५ ।।
तस्य ब्रह्मा ददौ प्रीतः पौर्णमासीं तिथिं प्रभुः ।
तस्यामुपोषयेद् राजंस्तमर्थं प्रतिपादयेत् ।। ३५.१६ ।।
यवान्नहारश्च भवेत् तस्य ज्ञानं प्रयच्छति ।
कान्तिं पुष्टिं च राजेन्द्र धनं धान्यं च केवलम् ।। ३५.१७ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे पञ्चत्रिंशोऽध्यायः ।। ३५ ।।

महातपा उवाच ।
आदित्रेतासु राजानो मणिजा ये प्रकीर्त्तिताः ।
कथयिष्यामि तान् राजन् यत्र जातोऽपि पार्थिव ।। ३६.१ ।।
योऽसौ सुप्रभनामासीत् स त्वं राजन् कृते युगे ।
जातोऽसि नाम्ना विख्यातः प्रजापालेति शोभनः ।। ३६.२ ।।
शेषास्त्रेतायुगे राजन् भविष्यन्ति महाबलाः ।
यो दीप्ततेजा मणिजः स शन्तेति प्रकीर्तितः ।। ३६.३ ।।
सुरश्मिर्भविता राजा शशकर्णो महाबलः ।
शुभदर्शनः पाञ्चालो भविष्यति नराधिपः ।। ३६.४ ।।
सुशान्तिरङ्गवंशे वै सुन्दरोऽप्यङ्ग इत्युत ।
सुन्दश्च मुचुकुन्दोऽभूत्सुद्युम्नस्तुर एव च ।। ३६.५ ।।
सुमनाः सोमदत्तस्तु शुभः संवरणोऽभवत् ।
सुशीलो वसुदानस्तु सुखदो सुपतिर्भवत् ।। ३६.६ ।।
शम्भुः सेनापतिरभूत् सुकान्तो दशरथः स्मृतः ।
सोमोऽभूज्जनको राजा एते त्रेतायुगे नृप ।। ३६.७ ।।
सर्वे भूमिमिमां राजन् भुक्त्वा ते वसुधाधिपाः ।
इष्ट्वा च विविधैर्यज्ञैर्दिवं प्राप्स्यन्त्यसंशयम् ।। ३६.८ ।।
श्रीवराह उवाच ।
एवं श्रुत्वा स राजर्षिर्ब्रह्मविद्याऽमृतं प्रभुः ।
आख्यानं परमं प्रीतस्तपश्चर्तुमियाद् वनम् ।। ३६.९ ।।
ऋषिरध्यात्मयोगेन विहायेदं कलेवरम् ।
ब्रह्मभूतोऽभवद्धात्रि हरौ लयमवाप च ।। ३६.१० ।।
वृन्दावनं च राजाऽसौ तपोऽर्थं गतवान् प्रभुः ।
तत्र गोविन्दनामानं हरिं स्तोतुमथारभत् ।। ३६.११ ।।
राजोवाच ।
नमामि देवं जगतां च मूर्त्तिं
गोपेन्द्रमिन्द्रानुजमप्रमेयम् ।
संसारचक्रक्रमणैकदक्षं
क्षितीधरं देववरं नमामि ।। ३६.१२ ।।
भवोदधौ दुःखशतोर्म्मिभीमे
जरावर्त्ते कृष्णपातालमूले ।
तदन्तमेको दधते सुखं मे
नमोऽस्तु ते गोपतिरप्रमेय ।। ३६.१३ ।।

व्याध्यादियुक्तः पुरुषैर्ग्रहैश्च
सङ्घट्टमानं पुनरेव देव ।
नमोऽस्तु ते युद्धरते महात्मा
जनार्दनो गोपतिरुग्रबाहुः ।। ३६.१४ ।।
त्वमुत्तमः सर्वविदां सुरेश
त्वया ततं विश्वमिदं समस्तम् ।
गोपेन्द्र मां पाहि महानुभाव
भवाद्भीतं तिग्मरथाङ्गपाणे ।। ३६.१५ ।।
परोऽसि देव प्रवरः सुराणां
पुंसः स्वरूपोऽसि शशिप्रकाशः ।
हुताशवक्त्राच्युत तीव्रभाव
गोपेन्द्र मां पाहि भवे पतन्तम् ।। ३६.१६ ।।
संसारचक्रक्रमणान्यनेका -
न्याविर्भवन्त्यच्युत देहिनां यत् ।
त्वन्मायया मोहितानां सुरेश
कस्ते मायां तरते द्वन्द्वधामा ।। ३६.१७ ।।
अगोत्रमस्पर्शमरूपगन्ध -
मनाममनिर्देशमजं वरेण्यम् ।
गोपेन्द्र त्वां यद्युपासन्ति धीरा -
स्ते मुक्तिभाजो भवबन्धमुक्ताः ।। ३६.१८ ।।
शब्दातिगं व्योमरूपं विमूर्त्तिं
विकर्म्मिणां शुभभावं वरेण्यम् ।
चक्राब्जपाणिं तु तथोपचारा-
दुक्तं पुराणे सततं नमामि ।। ३६.१९ ।।
त्रिविक्रमं क्रान्तजगत्त्रयं च
चतुर्मूर्त्तिं विश्वगतां क्षितीशम् ।
शम्भुं विभुं भूतपतिं सुरेशं
नमाम्यहं विष्णुमनन्तमूर्त्तिम् ।। ३६.२० ।।
त्वं देव सर्वाणि चराचराणि
सृजस्यथो संहरसे त्वमेव ।
मां मुक्तिकामं नय देव शीघ्रं
यस्मिन् गता योगिनो नापयान्ति ।। ३६.२१ ।।
जयस्व गोविन्द महानुभाव

जयस्व विष्णो जय पद्मनाभ ।
जयस्व सर्वज्ञ जयाप्रमेय
जयस्व विश्वेश्वर विश्वमूर्त्ते ।। ३६.२२ ।।
श्रीवराह उवाच ।
एवं स्तुत्वा तदा राजा निधाय स्वं कलेवरम् ।
परमात्मनि गोविन्दे लयमागाच्च शाश्वते ।। ३६.२३ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे षट्त्रिंशोऽध्यायः ।। ३६ ।।

धरण्युवाच ।
कथमाराध्यसे देव भक्तिमद्भिर्नरैर्विभो ।
स्त्रीभिर्वा सर्वमेतन्मे शंस त्वं भूतभावन ।। ३७.१ ।।
श्रीवराह उवाच ।
भावसाध्योऽस्म्यहं देवि न वित्तैर्न जपैरहम् ।
साध्यस्तथाऽपि भक्तानां कायक्लेशं वदामि ते ।। ३७.२ ।।
कर्मणा मनसा वाचा मच्चित्तो यो नरो भवेत् ।
तस्य व्रतानि धास्यामि विविधानि निबोध मे ।। ३७.३ ।।
अहिंसा सत्यमस्तेयं ब्रह्मचर्यमकल्कता ।
एतानि मानसान्याहुर्व्रतानि तु धराधरे ।। ३७.४ ।।
एकभक्तं तथा नक्तमुपवासादिकं च यत् ।
तत्सर्वं कायिकं पुंसां व्रतं भवति नान्यथा ।। ३७.५ ।।
मौनं चाध्ययनं चैव देवस्तुत्यर्थकीर्तितत् ।
निवृत्तिश्चापि पैशुन्याद् वाचिकं व्रतमुत्तमम् ।।३७.६ ।।
अत्रापि श्रूयते चान्यदृषिरुग्रतपाः पुरा ।
ब्रह्मपुत्रः पुरा कल्पे आरुणिर्नाम नामतः ।। ३७.७ ।।
सोऽरण्यमगमत् किंचित् तपोर्थी द्विजसत्तमः ।
तपस्तेपे ततस्तस्मिन्नुपवासपरायणः ।। ३७.८ ।।
देविकायास्तटे रम्ये सोऽवसद् ब्राह्मणः किल ।
कदाचिदभिषेकाय स जगाम महानदीम् ।। ३७.९ ।।
तत्र स्नात्वा जपन् विप्रो ददर्शायान्तमग्रतः ।
व्याधं महाधनुःपाणिमुग्रनेत्रं विभीषणम् ।। ३७.१० ।।
तं द्विजं हन्तुमायात् स वल्कलानां जिघृक्षया ।
तं दृष्ट्वा क्षुभितो विप्रो ब्रह्मघ्नस्य भयादिति ।
ध्यायन् नारायणं देवं तस्थौ तत्रैव स द्विजः ।। ३७.११ ।।
तं दृष्ट्वाऽन्तर्गतहरिं व्याधो भीत इवाग्रतः ।
विहाय सशरं चापं ततो वचनमब्रवीत् ।। ३७.१२ ।।
व्याध उवाच ।
हन्तुमिच्छुरहं ब्रह्मन् भवन्तं प्रागिहागतः ।
इदानीं दर्शनात् तुभ्यं सा मतिः क्वापि मे गाता ।। ३७.१३ ।।
ब्राह्मणानां सहस्त्राणि सस्त्रीणामयुतानि च ।
निहतानि मया ब्रह्मन् निहतौ च कुटम्बिनौ ।। ३७.१४ ।।
नरकेऽभ्यधिकं चित्तं कदाचिदपि विद्यते ।
इदानीं तप्तुमिच्छामि तपोऽहं त्वत्समीपतः ।
उपदेशप्रदानेन प्रसादं कर्तुमर्हसि ।। ३७.१५ ।।
एवमुक्तोऽप्यसौ विप्रो नोत्तरं प्रत्यपद्यत ।
ब्रह्महा पापकर्मेति मत्वा ब्राह्मणपुंगवः ।। ३७.१६ ।।
अनुक्तोऽपि स धर्मेप्सुर्व्याधस्तत्रैव तस्थिवान् ।

स्नात्वा नद्यां द्विजः सोऽपि वृक्षमूलमुपाश्रितः ।। ३७.१७ ।।
कस्यचित् त्वथ कालस्य तां नदीमगमत् किल ।
व्याघ्रो बुभुक्षितः शान्तं तं विप्रं हन्तुमुद्यतः ।। ३७.१८ ।।
अन्तर्जलगतं विप्रं यावद् व्याघ्रो जिघृक्षति ।
तावद् व्याधेन विद्धोऽसौ सद्यः प्राणैर्वियोजितः ।। ३७.१९ ।।
तस्माद् व्याघ्रशरीरात् तु उत्थाय पुरुषः किल ।
विप्रश्चान्तर्जले मग्नः श्रुत्वा तं शब्दमाकुलम् ।
नमो नारायणायेति वाक्यमुच्चैरुवाच ह ।। ३७.२० ।।
व्याघ्रेणापि श्रुतो मन्त्रः प्राणैः कण्ठस्थितैस्ततः ।
श्रुतमात्रे जहौ प्राणान् पुरुषश्चाभवच्छुभः ।। ३७.२१ ।।
सोऽब्रवीद् यामि तं देशं यत्र विष्णुः सनातनः ।
त्वत्प्रसादाद् द्विजश्रेष्ठ मुक्तपाप्मा निरामयः ।। ३७.२२ ।।
इत्युक्तो ब्राह्मणः प्राह कोऽसि त्वं पुरुषर्षभ ।
सोऽब्रवीत् तस्य राजेन्द्रः प्रतापी पूर्वजन्मनि ।
दीर्घबाहुरिति ख्यातः सर्वधर्मविशारदः ।। ३७.२३ ।।
अहं जानामि वेदांश्च अहं वेद्मि शुभाशुभम् ।
ब्राह्मणे नैव मे कार्यं किं वस्तु ब्राह्मणा इति ।। ३७.२४ ।।
तस्यैवं वादिनो विप्राः सर्वे क्रोधसमन्विताः ।
ऊचुः शापं दुराधर्षः क्रूरो व्याघ्रो भविष्यसि ।। ३७.२५ ।।
अवमानात् तु विप्राणां सत्यान्तं स्मरणं तव ।
मृत्युकालेन संमूढ केशवेन भविष्यति ।। ३७.२६ ।।
इत्युक्तोऽहं पुरा तैस्तु ब्राह्मणैर्वेदपारगैः ।
तमेव सर्वं संप्राप्तो ब्रह्मशापं सुपुष्कलम् ।। ३७.२७ ।।
ततस्ते ब्राह्मणा सर्वे प्रणिपत्य महामुने ।
उक्ताऽनुग्रहहेतोर्वै ऊचुस्ते मामिमं पुरा ।। ३७.२८ ।।
षष्ठान्नकालिकस्याग्रे यस्ते स्थास्यति कश्चन ।
स भक्ष्यस्ते तु भविता कंचित्कालं नराधम ।। ३७.२९ ।।
यदेषुघातं लब्ध्वा तु प्राणैः कण्ठगतैर्भवान् ।
श्रोष्यसे द्विजवक्त्रात् तु नमो नारायणेति हि ।
तदा स्वर्गगतिस्तुभ्यं भविता नात्र संशयः ।। ३७.३० ।।
परवक्त्रगतस्यापि विष्णोर्नाम श्रुतं मया ।
लब्धद्वेषस्य विप्राणां प्रत्यक्षं तव सत्तम ।। ३७.३१ ।।
यः पुनर्ब्राह्मणान् पूज्य स्ववक्त्रेण नमो हरिम् ।
वदन् प्राणं विमुच्येत मुक्तौऽसौ वीतकिल्बिषः ।।। ३७.३२ ।।
सत्यं सत्यं पुनः सत्यमुत्क्षिप्य भुजमुच्यते ।
जङ्गमा ब्राह्मणा देवाः कूटस्थः पुरुषोत्तमः ।। ३७.३३ ।।
एवमुक्त्वा गतः स्वर्गं स राजा वीतकल्मषः ।
ब्राह्मणोऽपि सदायुक्तस्तं व्याधं प्रत्यभाषत ।। ३७.३४ ।।

ऋषिरुवाच ।
जिघृक्षोर्मृगराजस्य यत्त्वया रक्षितो ह्यहम् ।
तत्पुत्र तुष्टस्ते दद्मि वरं वरय सुव्रत ।। ३७.३५ ।।
व्याध उवाच ।
एष एव वरो मह्यं यत् त्वं मां भाषसे द्विज ।
अतः परं वरेणाहं किं करोमि प्रशाधि माम् ।। ३७.३६ ।।
ऋषिरुवाच ।
अहं त्वया पुरा पुत्र प्रार्थितोऽस्मि तपोऽर्थिना ।
बहुपातकयुक्तेन घोररूपेण चानघ ।। ३७.३७ ।।
इदानीं तव पापानि देविकाभिषवेण च ।
मद्दर्शनेन च चिरं विष्णुनामश्रुतेन च ।
नष्टानि शुद्धदेहोऽसि सांप्रतं नात्र संशयः ।। ३७.३८ ।।
इदानीं वरमेकं त्वं गृहाण मम सन्निधौ ।
तपः कुरुष्व साधो त्वं चिरकालं यदीच्छसि ।। ३७.३९ ।।
व्याध उवाच ।
य एष भवता प्रोक्तो विष्णुर्नारायणः प्रभुः ।
स कथं प्राप्यते मर्त्यैरेष एव वरो मम ।। ३७.४० ।।
ऋषिरुवाच ।
तमुद्दिश्य व्रतं कुर्याद् यत्किंचित्पुरुषोऽच्युतम् ।
स परं तमवाप्नोति भक्तया युक्तः पुमानिति ।। ३७.४१ ।।
एवं ज्ञात्वा भवान् पुत्र व्रतमेतत् समाचर ।
न भक्षयामि सकटं न वदाम्यनृतं क्वचित् ।। ३७.४२ ।।
एतत् ते व्रतमादिष्टं मया व्याधवर ध्रुवम् ।
तत्रैवं तपसा युक्तस्तिष्ठ त्वं यावदिच्छसि ।। ३७.४३ ।।
श्रीवराह उवाच ।
एवं चिन्तान्वितं मत्वा वरदो ब्राह्मणोऽभवत् ।
मोक्षार्थिनमथो बुद्ध्वा वञ्चयित्वा गतो मुनिः ।। ३७.४४ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे सप्तत्रिंशोऽध्यायः ।। ३७ ।।

श्रीवराह उवाच ।
स शुभं शोभनं मार्गमास्थाय व्याधसत्तमः ।
तपस्तेपे निराहारस्तं गुरुं मनसा स्मरन् ।। ३८.१ ।।
भिक्षाकाले तु संप्राप्ते शीर्णपर्णान्यभक्षयत् ।
स कदाचित् क्षुधाविष्टो वृक्षमूलं समाश्रितः ।। ३८.२ ।।
बुभुक्षितस्तरोः पर्णमैच्छद् भक्षितुमन्तिकात् ।
इत्येवं कुर्वतो व्योम्नि वागुवाचाशरीरिणी ।। ३८.३ ।।
मा भक्षयस्व सकटमुच्चैरेवं प्रभाषिते ।
ततोऽसौ तं विहायान्यद् वार्क्षं पतितमग्रहीत् ।। ३८.४ ।।
तमप्येवं निषिद्धं स्यादन्यं तथैवमेव च ।
एवं स सकटं मत्वा व्याधः किञ्चिन्न भक्षयत् ।। ३८.५ ।।
निराहारस्तपस्तेपे स्मरन् गुरुमतन्द्रितः ।
तस्याथ बहुना काले गते ऋषिवरोऽभ्यगात् ।। ३८.६ ।।
दुर्वासाः शंसितात्मा वै किञ्चित्प्राणमपश्यत ।
व्याधं तपोत्थतेजोभिर्ज्वलमानं हविर्यथा ।। ३८.७ ।।
सोऽपि व्याधस्तु तं नत्वा शिरसाऽथ महामुनिम् ।
उवाच स कृतार्थोऽस्मि भगवन् दर्शनात् तव ।। ३८.८ ।।
इदानीं श्राद्धकालं मे प्राप्तं त्वमवधारय ।
शीर्णपर्णानि भक्षयन् वै तैरेवाहं महामुने ।
भवन्तं प्रीणयामीति व्याधस्तं वाक्यमब्रवीत् ।। ३८.९ ।।
दुर्वासा अपि तं शुद्धं शुद्धभावं जितेन्द्रियम् ।
जिज्ञासुस्तत्तपो वाक्यमिदमुच्चैरुवाच ह ।। ३८.१० ।।
यवगोधूमशालीनामन्नं चैव सुसंस्कृतम् ।
दीयतां मे क्षुधार्ताय त्वामुद्दिश्यागताय च ।। ३८.११ ।।
इत्युक्तेन त्वसौ व्याधश्चिन्तां परमिकां गतः ।
क्व संभविष्यते मह्यमिति चिन्तापरोऽभवत् ।। ३८.१२ ।।
तस्य चिन्तयतः पात्रमाकाशात् पतितं शुभम् ।
सौवर्णं सिद्धिसंयुक्तं तज्जग्राह करेण सः ।। ३८.१३ ।।
तद् गृहीत्वा मुनिं प्राह दुर्वासाख्यं ससाध्वसः ।
अत्रैव स्थीयतां ब्रह्मन् यावद् भिक्षाटनं त्वहम् ।
करोमि तत्प्रसादोऽयं क्रियतां ब्रह्मवित्तम ।। ३८.१४ ।।
एवमुक्त्वा ततो भिक्षामटनं व्याधसत्तमः ।
नातिदूरेण नगरं धनयोषसमन्वितम् ।। ३८.१५ ।।
तस्य तत्र प्रयातस्य अग्रतः सर्वशोभनाः ।
वृक्षेभ्यो निर्ययुश्चान्या हेमपात्राग्रपाणयः ।
विविधान्नानि तस्याशु दत्त्वा पात्रं प्रपूरितम् ।। ३८.१६ ।।
स च भूतार्थमात्मानं मत्वा पुनरथाश्रमम् ।
आजगाम ततोऽपश्यत् तमृषिं जपतां वरम् ।। ३८.१७ ।।

तं दृष्ट्वा स्थाप्य तां भिक्षां शुचौ देशे प्रसन्नधीः ।
प्रणम्य तमृषिं वाक्यमुवाच व्याधसत्तमः ।। ३८.१८ ।।
भगवन् क्षालनं पद्भ्यां क्रियतामृषिपुंगव ।
यदि त्वहमनुग्राह्यस्तदेवं कर्त्तुमर्हसि ।। ३८.१९ ।।
एवमुक्तः स जिज्ञासुस्तपोवीर्यं शुभं मुनिः ।
नदीं गन्तुं न शक्नोमि जलपात्रं न चास्ति मे ।। ३८.२० ।।
कथं प्रक्षालयाम्याशु व्याध पादौ महामते ।
इत्येतन्मुनिना व्याधः श्रुत्वा चिन्तापरोऽभवत् ।
किं करोमि कथं चास्य भोजनं वै भविष्यति ।। ३८.२१ ।।
एवं संचिन्त्य मनसा गुरुं स्मृत्वा विचक्षणः ।
जगाम शरणं तां तु सरितं देविकां सुधीः ।। ३८.२२ ।।
व्याध उवाच ।
व्याधोऽस्मि पापकर्माऽस्मि ब्रह्महाऽस्मि सरिद्वरे ।
तथापि संस्मृता देवि पाहि मां शरणं गतम् ।। ३८.२३ ।।
देवतां नैव जानामि न मन्त्रं न तथार्चनम् ।
गुरुपादौ परं ध्यात्वा पश्यामि सततं शुभे ।। ३८.२४ ।।
एवं विधस्य मे देवि दयां कुरु सरिद्वरे ।
ऋषेः क्षालार्थसलिलं समीपं कुरु माचिरम् ।। ३८.२५ ।।
एवमुक्त्वाऽथ व्याधेन देविका पापनाशिनी ।
आजगाम यतस्तस्थौ दुर्वासाः संशितव्रतः ।। ३८.२६ ।।
तस्य पादौ स्वयं देवी क्षालयन्ती सरिद्वरा ।
जगाम ह्लादिनी भूत्वा व्याधाश्रमसमीपतः ।। ३८.२७ ।।
तं दृष्ट्वा महदाश्चर्यं दुर्वसा विस्मयं ययौ ।
प्रक्षाल्य हस्तौ पादौ च तदन्तं श्रद्धयान्वितम् ।
बुभुजे परमप्रीतस्तथाचम्य विचक्षणः ।। ३८.२८ ।।
तमस्थिशेषं व्याधं तु क्षुधादुर्बलतां गतम् ।
उवाच वेदाध्ययनं सर्वे वेदाः ससंग्रहाः ।
ब्रह्मविद्या पुराणानि प्रत्यक्षाणि भवन्तु ते ।। ३८.२९ ।।
एवं प्रादाद् वरं तस्य दुर्वासा नाम चाकरोत् ।
भवान् सत्यतपा नाम ऋषिराद्यो भविष्यति ।। ३८.३० ।।
एवं दत्तवरो व्याधस्तमाह मुनिसत्तमम् ।
व्याधो भूत्वा कथं ब्रह्मन् वेदानध्यापयाम्यहम् ।। ३८.३१ ।।
ऋषिरुवाच ।
प्राक्शरीरं गतं तेऽद्य निराहारस्य सत्तम ।
तपोमयं शरीरं ते पृथग्भूतं न संशयः ।। ३८.३२ ।।
प्राग्विज्ञानं गतं नाशमिदानीं शुद्धमक्षरम् ।
विद्धि तं शुद्धकायोऽसि तथाऽन्यत् ते शरीरकम् ।

तेन वेदाः समं शास्त्रैः प्रतिभास्यन्ति ते मुने ।। ३८.३३ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे अष्टत्रिंशोऽध्यायः ।। ३८ ।।

सत्यतपा उवाच ।
भगवन् द्वे शरीरे तु इति यत्परिकीर्त्तितम् ।
तन्मे कथय भेदं वै के ते ब्रह्मविदां वर ।। ३९.१ ।।
दुर्वासा उवाच ।
न द्वे त्रीणि शरीराणि वाच्यं तद्विपरीतकम् ।
विभोगायतनं चैव त्रिशरीराणि प्राणिनाम् ।। ३९.२ ।।
प्रागवस्थमधर्माख्यं परिज्ञानविवर्जितम् ।
अपरं सव्रतं तद्धि ज्ञेयमत्यन्तधार्मिकम् ।। ३९.३ ।।
धर्माधर्मोपभोगाय यत् तृतीयमतीन्द्रियम् ।
तत्त्रिभेदं विनिर्दिष्टं ब्रह्मविद्भिर्विचक्षणैः ।
यातना धर्मभोगश्च भुक्तिश्चेति त्रिभेदकम् ।। ३९.४ ।।
यस्तु भावः पुरा ह्यासीत् प्राणिनो निघ्नतः स वै ।
तत्पापाख्यं शरीरं ते पापसंज्ञं तदुच्यते ।। ३९.५ ।।
इदानीं शुभवृत्तिं तु कुर्वतस्तप आर्जवम् ।
अपरं धर्मरूपं तु शरीरं ते व्यवस्थितम् ।
तेन वेदपुराणानि ज्ञातुमर्हस्यसंशयम् ।। ३९.६ ।।
यदाष्टाकं संपरिवर्त्तते पुमां-
स्तदा त्र्यवस्थः परिकीर्त्यते तु वै ।
गताष्टवर्गस्त्रिगतः सदा शुभः
स्थिरो भवेदात्मनि निश्चयात्मवान् ।। ३९.७ ।।
यदा पञ्च पुनः पञ्च पञ्च पञ्चापि संत्यजेत् ।
एकमार्गस्तदा ब्रह्म शाश्वतं लभते नरः ।। ३९.८ ।।
सत्यतपा उवाच ।
भगवन् यदि विज्ञानं शरीरं नोपजायते ।
तदा केन प्रकारेण परं ब्रह्मोपलभ्यते ।। ३९.९ ।।
दुर्वासा उवाच ।
कर्मकाण्डं ज्ञानमूलं ज्ञानं कर्मादिकं तथा ।
एतयोरन्तरं नास्ति यथाऽश्ममृदयोर्मुने ।। ३९.१० ।।
कर्मकाण्डं चतुर्भेदं ब्राह्मणादिषु कीर्तितम् ।
तत्र वेदोक्तकर्माणि त्रयः कुर्वन्ति नित्यशः ।
त्रिशुश्रूषामथैकस्तु एषा वेदोदिता क्रिया ।। ३९.११ ।।
एतान् धर्मानवस्थाय ब्रह्मणोपास्तिं रोचते ।
तस्य मुक्तिर्भवेन्नूनं वेदवादरतस्य च ।। ३९.१२ ।।

सत्यतपा उवाच ।
यदेतत् परमं ब्रह्म त्वया प्रोक्तं महामुने ।
तस्य रूपं न जानन्ति योगिनोऽपि महात्मनः ।। ३९.१३ ।।
अनाममसगोत्रं च अमूर्त्तं मूर्त्तिवर्जितम् ।
कथं स ज्ञायते ब्रह्म संज्ञानामविवर्जितम् ।
तस्य संज्ञां कथय मे वेदमार्गव्यवस्थिताम् ।। ३९.१४ ।।
दुर्वासा उवाच ।
यदेतत् परमं ब्रह्म वेदव्यासेषु पठ्यते ।
स देवः पुण्डरीकाक्षः स्वयं नारायणः परः ।। ३९.१५ ।।
स यज्ञैर्विविधैरिष्टैर्दानैर्दत्तैश्च सत्तम ।
प्राप्यते परमो देवः स्वयं नारायणो हरिः ।। ३९.१६ ।।
सत्यतपा उवाच ।
भगवन् बहुवित्तेन ऋत्विग्भिर्वेदपारगैः ।
प्राप्यते पुण्यकृद्भिर्हि क्वचिद् यज्ञः कथंचन ।
तेन प्राप्तेन भगवान् लभ्यते दुःखतो हरिः ।। ३९.१७ ।।
वित्तेन च विना दानं दातुं विप्र न शक्यते ।
विद्यमानेऽपि न मतिः कुटुम्बासक्तचेतसः ।
तस्य मोक्षः कथं ब्रह्मन् सर्वथा दुर्लभो हरिः ।। ३९.१८ ।।
अल्पायासेन लभ्येत येन देवः सनातनः ।
तन्मे सामान्यतो ब्रूहि सर्ववर्णेषु यद् भवेत् ।। ३९.१९ ।।
दुर्वासा उवाच ।
कथयामि परं गुह्यं रहस्यं देवनिर्मितम् ।
धरण्या यत्कृतं पूर्वं मज्जन्त्या तु रसातले ।। ३९.२० ।।
पृथिव्याः पार्थिवो भावः सलिले नातिरेचितः ।
तस्मिन् सलिलमग्ने तु पृथ्वी प्रायाद् रसातलम् ।। ३९.२१ ।।
सा भूतधारिणी देवी रसातलगता शुभा ।
आराधयामास विभुं देवं नारायणं परम् ।
उपवासव्रतैर्देवी नियमैश्च पृथग्विधैः ।। ३९.२२ ।।
कालेन महता तस्याः प्रसन्नो गरुडध्वजः ।
उज्जहार स्थितौ चेमां स्थापयामास सोऽव्ययः ।। ३९.२३ ।।
सत्यतपा उवाच ।
कोऽसौ धरण्या संचीर्ण उपवासो महामुने ।
कानि व्रतानि च तथा एतन्मे वक्तुमर्हसि ।। ३९.२४ ।।

दुर्वासा उवाच ।
यदा मार्गशिरे मासि दशम्यां नियतात्मवान् ।
कृत्वा देवार्चनं धीमानग्निकार्यं यथाविधि ।। ३९.२५ ।।
शुचिवासाः प्रसन्नात्मा हव्यमन्नं सुसंस्कृतम् ।
भुक्त्वा पञ्चपदं गत्वा पुनः शौचं तु पादयोः ।। ३९.२६ ।।
कृत्वाऽष्टाङ्गुलमात्रं तु क्षीरवृक्षसमुद्भवम् ।
भक्षयेद् दन्तकाष्ठं तु तत आचम्य यत्नतः ।। ३९.२७ ।।
स्पृष्ट्वा द्वाराणि सर्वाणि चिरं ध्यात्वा जनार्दनम् ।
शङ्खचक्रगदापाणिं किरीटिं पीतवाससम् ।। ३९.२८ ।।
प्रसन्नवदनं देवं सर्वलक्षणलक्षितम् ।
ध्यात्वा पुनर्जलं हस्ते गृह्य भानुं जनार्दनम् ।। ३९.२९ ।।
ध्यात्वाऽर्घ्यं दापयेत् तस्य करतोयेन मानवः ।
एवमुच्चारयेद् वाचं तस्मिन् काले महामुने ।। ३९.३० ।।
एकादश्यां निराहारः स्थित्वाऽहमपरेऽहनि ।
भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युत ।। ३९.३१ ।।
एवमुक्त्वा ततो रात्रौ देवदेवस्य सन्निधौ ।
जपन्नारायणायेति स्वपेत् तत्र विधानतः ।। ३९.३२ ।।
ततः प्रभाते विमले नदीं गत्वा समुद्रगाम् ।
इतरां वा तडागं वा गृहे वा नियतात्मवान् ।। ३९.३३ ।।
आनीय मृत्तिकां शुद्धां मन्त्रेणानेन मानवः ।
धारणं पोषणं त्वत्तो भूतानां देवि सर्वदा ।
तेन सत्येन मे पापं यावन्मोचय सुव्रते ।। ३९.३४ ।।
ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि देव ते ।
तेनेमां मृत्तिकां स्पृष्ट्वा मा लभामि त्वयोदिताम् ।। ३९.३५ ।।
त्वयि सर्वे रसा नित्याः स्थिता वरुण सर्वदा ।
तेनेमां मृत्तिकां प्लाव्य पूतां कुरु ममाचिरम् ।। ३९.३६ ।।
एवं मृदं तथा तोयं प्रसाद्यात्मानमालभेत् ।
त्रिः कृत्वा शेषमृदया कुण्डमालिख्य वै जले ।। ३९.३७ ।।
ततस्तत्र नरः सम्यक् चक्रवर्त्युपचारतः ।
स्नात्वा चावश्यकं कृत्वा पुनर्देवगृहं व्रजेत् ।। ३९.३८ ।।
तत्राराध्य महायोगिं देवं नारायणं प्रभुम् ।
केशवाय नमः पादौ कटिं दामोदराय च ।। ३९.३९ ।।
ऊरुयुग्मं नृसिंहाय उरः श्रीवत्सधारिणे ।

कण्ठं कौस्तुभनाथाय वक्षः श्रीपतये तथा ।। ३९.४० ।।
त्रैलोक्यविजयायेति बाहू सर्वात्मने शिरः ।
रथाङ्गधारिणे चक्रं शंकरायेति वारिजम् ।। ३९.४१ ।।
गम्भीरायेति च गदामम्भोजं शान्तिमूर्त्तये ।
एवमभ्यर्च्य देवेशं देवं नारायणं प्रभुम् ।। ३९.४२ ।।
पुनस्तस्याग्रतः कुम्भान् चतुरः स्थापयेद् बुधः ।
जलपूर्णान् समाल्यांश्च सितचन्दनलेपितान् ।। ३९.४३ ।।
चूतपल्लवसग्रीवान् सितवस्त्रावगुण्ठितान् ।
स्थगितान् ताम्रपात्रैश्च तिलपूर्णैः सकाञ्चनैः ।। ३९.४४ ।।
चत्वारस्ते समुद्रास्तु कलशाः परिकीर्तिताः ।
तेषां मध्ये शुभं पीठं स्थापयेद् वस्त्रगर्भितम् ।। ३९.४५ ।।
तस्मिन् सौवर्णरौप्यं वा ताम्रं वा दारवं तथा ।
अलाभे सर्वपात्राणां पालाशं पात्रमिष्यते ।। ३९.४६ ।।
तोयपूर्णं तु तत्कृत्वा तस्मिन् पात्रे ततो न्यसेत् ।
सौवर्णं मत्स्यरूपेण कृत्वा देवं जनार्दम् ।
वेदवेदाङ्गसंयुक्तं श्रुतिस्मृतिविभूषितम् ।। ३९.४७ ।।
तत्रानेकविधैर्भक्षैः फलैः पुष्पैश्च शोभितम् ।
गन्धधूपैश्च वस्त्रैश्च अर्चयित्वा यथाविधि ।। ३९.४८ ।।
रसातलगता वेदा यथा देव त्वयाहृताः ।
मत्स्यरूपेण तद्वन्मां भवानुद्धर केशव ।
एवमुच्चार्य तस्याग्रे जागरं तत्र कारयेत् ।। ३९.४९ ।।
यथाविभवसारेण प्रभाते विमले तथा ।
चतुर्णां ब्राह्मणानां च चतुरो दापयेद् घटान् ।। ३९.५० ।।
पूर्वं तु बह्वृचे दद्याच्छन्दोगे दक्षिणं तथा ।
यजुःशाखान्विते दद्यात् पश्चिमं घटमुत्तमम् ।
उत्तरं कामतो दद्यादेष एव विधिः स्मृतः ।। ३९.५१ ।।
ऋग्वेदः प्रीयतां पूर्वे सामवेदस्तु दक्षिणे ।
यजुर्वेदः पश्चिमतो अथर्वश्चोत्तरेण तु ।। ३९.५२ ।।
अनेन क्रमयोगेन प्रीयतामिति वाचयेत् ।
मत्स्यरूपं च सौवर्णमाचार्याय निवेदयेत् ।। ३९.५३ ।।
गन्धधूपादिवस्त्रैश्च संपूज्य विधिवत् क्रमात् ।
यस्त्विमं सरहस्यं च मन्त्रं चैवोपपादयेत् ।
विधानं तस्य वै दत्त्वा फलं कोटिगुणोत्तरम् ।। ३९.५४ ।।

प्रतिपद्य गुरुं यस्तु मोहाद् विप्रतिपद्यते ।
स जन्मकोटि नरके पच्यते पुरुषाधमः ।
विधानस्य प्रदाता यो गुरुरित्युच्यते बुधैः ।। ३९.५५ ।।
एवं दत्त्वा विधानेन द्वादश्यां विष्णुमर्च्य च ।
विप्राणां भोजनं कुर्याद् यथाशक्त्या सदक्षिणम् ।। ३९.५६ ।।
ताम्रपात्रैश्च सतिलैः स्थगितान् कारयेद् घटान् ।
तत्र सज्जलपात्रस्थं ब्राह्मणाय कुटुम्बिने ।। ३९.५७ ।।
देवं दद्यान्महाभागस्ततो विप्रांश्च भोजयेत् ।
भूरिणा परमान्नेन ततः पश्चात् स्वयं नरः ।
भुञ्जीत सहितो बालैर्वाग्यतः संयतेन्द्रियः ।। ३९.५८ ।।
अनेन विधिना यस्तु धरणीव्रतकृन्नरः ।
तस्य पुण्यफलं चाग्र्यं श्रृणु बुद्धिमतां वर ।। ३९.५९ ।।
यदि वक्त्रसहस्त्राणि भवन्ति मम सुव्रत ।
आयुश्च ब्रह्मणस्तुल्यं भवेद् यदि महाव्रत ।। ३९.६० ।।
तदानीमस्य धर्मस्य फलं कथयितुं भवेत् ।
तथाप्युद्देशतो ब्रह्मन् कथयामि श्रृणुष्व तत् ।। ३९.६१ ।।
दश सप्त दश द्वे च अष्टौ चत्वार एव च ।
लक्षायुतानि चत्वारि एकस्थं स्याच्चतुर्युगम् ।। ३९.६२ ।।
तैरेकसप्ततियुगं भवेन्मन्वन्तरं मुने ।
चतुर्दशाहो ब्राह्मस्तु तावती रात्रिरिष्यते ।। ३९.६३ ।।
एवं त्रिंशद्दिनो मासस्ते द्वादश समा स्मृता ।
तेषां शतं ब्रह्मणस्तु आयुर्नास्त्यत्र संशयः ।। ३९.६४ ।।
यः सकृद् द्वादशीमेतामनेन विधिना क्षिपेत् ।
स ब्रह्मलोकमाप्नोति तत्कालं चैव तिष्ठति ।। ३९.६५ ।।
ततो ब्रह्मोपसंहारे तल्लयं तिष्ठते चिरम् ।
पुनः सृष्टौ भवेद् देवो वैराजानां महातपाः ।। ३९.६६ ।।
ब्रह्महत्यादिपापानि इह लोककृतान्यपि ।
अकामे कामतो वापि तानि नश्यन्ति तत्क्षणात् ।। ३९.६७ ।।
इह लोके दरिद्रो यो भ्रष्टराज्योऽथ वा नृपः ।
उपोष्य तां विधानेन स राजा जायते ध्रुवम् ।। ३९.६८ ।।
वन्ध्या नारी भवेद् या तु अनेन विधिना शुभा ।
उपोष्यति भवेत् तस्याः पुत्रः परमधार्मिकः ।। ३९.६९ ।।
अगम्यागमनं येन कृतं जानाति मानवः ।

स इमं विधिमासाद्य तस्मात् पापाद् विमुच्यते ।। ३९.७० ।।
ब्रह्मक्रियाया लोपेन बहुवर्षकृतेन च ।
उपोष्येमां सकृद् भक्त्या वेदसंस्कारमाप्नुयात् ।। ३९.७१ ।।
किमत्र बहुनोक्तेन न तदस्ति महामुने ।
अप्राप्यं प्राप्यते नैव पापं वा यन्न नश्यति ।। ३९.७२ ।।
अनेन विधिना ब्रह्मन् स्वयमेव ह्युपोषिता ।
धरण्या मग्नया तात नात्र कार्या विचारणा ।। ३९.७३ ।।
अदीक्षिताय नो देयं विधानं नास्तिकाय च ।
देवब्रह्मद्विषे वाऽपि न श्राव्यं तु कदाचन ।
गुरुभक्ताय दातव्यं सद्यः पापप्रणाशनम् ।। ३९.७४ ।।
इह जन्मनि सौभाग्यं धनं धान्यं वरस्त्रियः ।
भवन्ति विविधा यस्तु उपोष्य विधिना ततः ।। ३९.७५ ।।
य इमं श्रावयेद् भक्त्या द्वादशीकल्पमुत्तमम् ।
श्रृणोति वा स पापैस्तु सर्वैरेव प्रमुच्यते ।। ३९.७६ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे ऊनचत्वारिंशोऽध्यायः ।। ३९ ।।

दुर्वासा उवाच ।
तथैव पौषमासे तु अमृतं मथितं सुरैः ।
तत्र कूर्मो भवेद् देवः स्वयमेव जनार्दनः ।। ४०.१ ।।
तस्येयं तिथिरुद्दिष्टा हरेर्वै कूर्मरूपिणः ।
पुष्यमासस्य या शुद्धा द्वादशी शुक्लपक्षतः ।। ४०.२ ।।
तस्यां प्रागेव संकल्प्य प्राग्वत् स्नान्नादिकाः क्रियाः ।
निर्वर्त्याराधयेद् रात्र्यामेकादश्यां जनार्दनम् ।
पृथङ्मन्त्रैर्मुनिश्रेष्ठ देवदेवं जनार्दनम् ।। ४०.३ ।।
ॐकूर्माय पादौ प्रथमं प्रपूज्य
नारायणेति हरेः कटिं च ।
संकर्षणायेत्युदरं विशोके-
त्युरोभवायेति तथैव कण्ठम् ।
सुबाहवेत्येव भुजौ शिरश्च
नमो विशालाय रथाङ्गसारम् ।। ४०.४ ।।
स्वनाममन्त्रेण सुगन्धपुष्पै-
र्नानानिवेद्यैर्विविधैः फलैश्च ।
अभ्यर्च्य देवं कलशं तदग्रे
संस्थाप्य माल्यैः सितकण्ठदाम ।। ४०.५ ।।
तं रत्नगर्भं तु पुरेव कृत्वा
स्वशक्तितो हेममयं तु देवम् ।
समन्दरं कूर्मरूपेण कृत्वा
संस्थाप्य ताम्रे घृतपूर्णपात्रे ।
पूर्णघटस्योपरि संनिवेश्य
श्वो ब्राह्मणायैवमेवं तु दद्यात् ।। ४०.६ ।।
श्वो ब्राह्मणान् भोज्य सदक्षिणांश्च
यथाशक्त्या प्रीणयेद् देवदेवम् ।
नारायणं कूर्मरूपेण पश्चाद्
तथा स्वयं भुञ्जीत सभृत्यवर्गः ।। ४०.७ ।।
एवं कृते विप्र समस्तपापं
विनश्यते नात्र कुर्याद् विचारम् ।
संसारचक्रं तु विहाय शुद्धं
प्राप्नोति लोकं च हरेः पुराणम् ।
प्रयान्ति पापानि विनाशमाशु
श्रीमांस्तथा जायते सत्यधर्मः ।। ४०.८ ।।
अनेकजन्मान्तरसंचितानि
नश्यन्ति पापानि नरस्य भक्त्या ।
प्रागुक्तरूपं तु फलं भवेत

नारायणस्तुष्टिमायाति सद्यः ।। ४०.९ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे चत्वारिंशोऽध्यायः ।। ४० ।।

दुर्वासा उवाच ।
एवं माघे सिते पक्षे द्वादशीं धरणीभृतः ।
वराहस्य श्रृणुष्वाद्यां मुने परमधार्मिक ।। ४१.१ ।।
प्रागुक्तेन विधानेन संकल्पस्नानमेव च ।
कृत्वा देवं समभ्यर्च्य एकादश्यां विचक्षणः ।। ४१.२ ।।
धूपनैवेद्यगन्धैश्च अर्चयित्वाऽच्युतं नरः ।
पश्चात् तस्याग्रतः कुम्भं जलपूर्णं तु विन्यसेत् ।। ४१.३ ।।
ॐ वाराहायेति पादौ तु माधवायेति वै कटिम् ।
क्षेत्रज्ञायेति जठरं विश्वरूपेत्युरो हरेः ।। ४१.४ ।।
सर्वज्ञायेति कण्ठं तु प्रजानां पतये शिरः ।
प्रद्युम्नायेति च भुजौ दिव्यास्त्राय सुदर्शनम् ।
अमृतोद्भवाय शङ्खं तु एष देवार्चने विधिः ।। ४१.५ ।।
एवमभ्यर्च्य मेधावी तस्मिन् कुम्भे तु विन्यसेत् ।
सौवर्णं रौप्यताम्रं वा पात्रं विभवशक्तितः ।। ४१.६ ।।
सर्वबीजैस्तु संपूर्णं स्थापयित्वा विचक्षणः ।
तत्र शक्त्या तु सौवर्णं वाराहं कारयेद् बुधः ।। ४१.७ ।।
दंष्ट्राग्रेणोद्धृतां पृथ्वीं सपर्वतवनद्रुमाम् ।
माधवं मधुहन्तारं वाराहं रूपमास्थितम् ।। ४१.८ ।।
सर्वबीजभृते पात्रे रत्नगर्भं घटोपरि ।
स्थापयेत् परमं देवं जातरूपमयं हरिम् ।। ४१.९ ।।
सितवस्त्रयुगच्छन्नं ताम्रपात्रं तु वै मुने ।
स्थाप्याच्चर्येयेद् गन्धपुष्पैर्नैवेद्यैर्विविधैः शुभैः ।। ४१.१० ।।
पुष्पमण्डलिकां कृत्वा जागरं तत्र कारयेत् ।
प्रादुर्भावान् हरेस्तत्र वाचयेद् भावयेद् बुधः ।। ४१.११ ।।
एवं सन्नियमस्यान्तं प्रभाते उदिते रवौ ।
शुचिः स्नात्वा हरिं पूज्य ब्राह्मणाय निवेदयेत् ।। ४१.१२ ।।
वेदवेदाङ्गविदुषे साधुवृत्ताय धीमते ।
विष्णुभक्ताय विप्रर्षे विशेषेण प्रदापयेत् ।। ४१.१३ ।।
देवं सकुम्भं तं दत्त्वा हरिं वाराहरूपिणम् ।
ब्राह्मणाय भवेद् यद्धि फलं तन्मे निशामय ।। ४१.१४ ।।
इह जन्मनि सौभाग्यं श्रीः कान्तिस्तुष्टिरेव च ।
दरिद्रो वित्तवान् सद्यः अपुत्रो लभते सुतम् ।
अलक्ष्मीर्नश्यते सद्यो लक्ष्मीः संविशते क्षणात् ।। ४१.१५ ।।
इह जन्मनि सौभाग्यं परलोके निशामय ।
अस्मिन्नर्थे पुरावृत्तमितिहासं पुरातनम् ।। ४१.१६ ।।
इह लोकेऽभवद् राजा वीरधन्वेति विश्रुतः ।
स कदाचिद् वनं प्रायान् मृगहेतोः परंतपः ।। ४१.१७ ।।
व्यापादयन् मृगगणान् तत्रर्षिवनमध्यगः ।

जघान मृगरूपान् सोऽज्ञानतो ब्राह्मणान् नृपः ।। ४१.१८ ।।
भ्रातरस्तत्र पञ्चाशन्मृगरूपेण संस्थिताः ।
संवर्तस्य सुता ब्रह्मन् वेदाध्ययनतत्पराः ।। ४१.१९ ।।
सत्यतपा उवाच ।
कारणं किं समाश्रित्य ते चक्रुर्मृगरूपताम् ।
एतन्मे कौतुकं ब्रह्मन् प्रणतस्य प्रसीद मे ।। ४१.२० ।।
दुर्वासा उवाच ।
ते कदाचिद् वनं याता दृष्ट्वा हरिणपोतकान् ।
जातमात्रान् स्वमात्रा तु विहीनान् दृश्य सत्तम ।
एकैकं जगृहुस्ते हि ते मृताः स्कन्धसंस्थिताः ।। ४१.२१ ।।
ततस्ते दुःखिताः सर्वे ययुः पितरमन्तिकम् ।
ऊचुश्च वचनं चेदं मृगहिंसामृते मुने ।। ४१.२२ ।।
ऋषिपुत्रका ऊचुः ।
जातमात्रा मृगाः पञ्च अस्माभिर्निहता मुने ।
अकामतस्ततोऽस्माकं प्रायश्चित्तं विधीयताम् ।। ४१.२३ ।।
संवर्त्त उवाच ।
मत्पिता हिंसकस्त्वासीदहं तस्माद् विशेषतः ।
भवन्तः पापकर्माणः संजाता मम पुत्रकाः ।। ४१.२४ ।।
इदानीं मृगचर्माणि परिधाय यतव्रताः ।
चरध्वं पञ्चवर्षाणि ततः शुद्धा भविष्यथ ।। ४१.२५ ।।
एवमुक्तास्तु ते पुत्रा मृगचर्मोपवीतिनः ।
वनं विविशुरव्यग्रा जपन्तो ब्रह्म शाश्वतम् ।। ४१.२६ ।।
तथा वर्षे व्यतिक्रान्ते वीरधन्वा महीपतिः ।
तत्राजगाम यस्मिंस्ते चरन्ति मृगरूपिणः ।। ४१.२७ ।।
ते चाप्येकतरोर्मूले मृगचर्म्मोपवीतिनः ।
जपन्तः संस्थितास्ते हि राज्ञा दृष्ट्वा मृगा इति ।
मत्वा विद्धास्तु युगपन्मृतास्ते ब्रह्मवादिनः ।। ४१.२८ ।।
तान् दृष्ट्वा तु मृतान् राजा ब्राह्मणान् संशितव्रतान् ।
भयेन वेपमानस्तु देवराताश्रमं ययौ ।
तत्रापृच्छद् ब्रह्मवध्या ममायाता महामुने ।। ४१.२९ ।।
आमूल्य तद् वधं वृत्तं कथयित्वा नराधिपः ।
भृशं शोकपरीतात्मा रुरोद भृशदुःखितः ।। ४१.३० ।।
स ऋषिर्देवरातस्तु रुदन्तं नृपसत्तमम् ।
उवाच मा भैर्नृपते अपनेष्यामि पातकम् ।। ४१.३१ ।।
पाताले सुतलाख्ये च यथा धात्री निमज्जती ।
उद्धृता देवदेवेन विष्णुना क्रोडमूर्त्तिना ।। ४१.३२ ।।
तद्वद् भवन्तं राजेन्द्र ब्रह्मवध्यापरिप्लुतम् ।
उद्धरिष्यति देवोऽसौ स्वयमेव जनार्दनः ।। ४१.३३ ।।

एवमुक्तस्ततो राजा हर्षितो वाक्यमब्रवीत् ।
कतरेण प्रकारेण स मे देवः प्रसीददति ।
प्रसन्ने चाशुभं सर्वं येन नश्यति सत्तम ।। ४१.३४ ।।
दुर्वासा उवाच ।
एवमुक्तो मुनिस्तेन देवरात इमं व्रतम् ।
आचख्यौ सोऽपि तं कृत्वा भुक्त्वा भोगान्सुपुष्कलान् ।। ४१.३५ ।।
मृत्युकाले मुनिश्रेष्ठ सौवर्णेन विराजता ।
विमानेनागमत् स्वर्गमिन्द्रलोकं स पार्थिवः ।। ४१.३६ ।।
तस्येन्द्रस्त्वर्घ्यमादाय प्रत्युत्थानेन निर्ययौ ।
आयान्तमिन्द्रं दृष्ट्वा तु तमूचुर्विष्णुकिंकराः ।
न द्रष्टव्यो देवराजस्त्वद्धीनस्तपसा इति ।। ४१.३७ ।।
एवं सर्वे लोकपाला निर्ययुस्तस्य तेजसा ।
प्रत्याख्याताश्च तैर्विष्णुकिंकरैर्हीनकर्मणः ।
एवं स सत्यलोकान्तं गतो राजा महामुने ।। ४१.३८ ।।
अपुनर्मारके लोके दाहप्रलयवर्ज्जिते ।
अद्यापि तिष्ठते देवैः स्तूयमानो महानृपः ।
प्रसन्ने यज्ञपुरुषे किं चित्रं येन तद्भवेत् ।। ४१.३९ ।।
इह जन्मनि सौभाग्यमायुरारोग्यसम्पदः ।
एकैका विधिनोपास्ता ददात्यमृतमुत्तमम् ।। ४१.४० ।।
किं पुनर्वर्षसंपूर्णे स ददाति स्वकं पदम् ।
नारायणश्चतुर्मूर्त्तिः पराध्यं च न संशयः ।। ४१.४१ ।।
यथैवोद्धृतवान् वेदान् मत्स्यरूपेण केशवः ।
क्षीराम्बुधौ मथ्यमाने मन्दरं धृतवान् प्रभुः ।
तद्वच्च कूर्मरूपाख्या द्वितीया पश्य वैष्णवी ।। ४१.४२ ।।
यथा रसातलात् क्ष्मां च धृतवान् पुरुषोत्तमः ।
वराहरूपी तद्वच्च तृतीया पश्य वैष्णवी ।। ४१.४३ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे एकचत्वारिंशोऽध्यायः ।। ४१ ।।

दुर्वासा उवाच ।
तद्वत् फाल्गुनमासे तु शुक्लपक्षे तु द्वादशीम् ।
उपोष्य प्रोक्तविधिना हरिमाराधयेत् सुधीः ।। ४२.१ ।।
नरसिंहाय पादौ तु गोविन्दायेत्युरू तथा ।
कटिं विश्वभुजे पूज्य अनिरुद्धेत्युरस्तथा ।। ४२.२ ।।
कण्ठं तु शितिकण्ठाय पिङ्गकेशाय वै शिरः ।
असुरध्वंसनायेति चक्रं तोयात्मने तथा ।
शङ्खमित्येव संपूज्य गन्धपुष्पफलैस्तथा ।। ४२.३ ।।
तदग्रे घटमादाय सितवस्त्रयुगान्वितम् ।
तस्योपरि नृसिहं तु सौवर्णं ताम्रभाजने ।
सौवर्ण शक्तितः कृत्वा दारुवंशमयेऽपि वा ।। ४२.४ ।।
रत्नगर्भघटे स्थाप्य तं संपूज्य च मानवः ।
द्वादश्यां वेदविदुषे ब्राह्मणाय निवेदयेत् ।। ४२.५ ।।
एवं कृते फलं प्राप्तं यत् पुरा पार्थिवेन तु ।
तस्याहं संप्रवक्ष्यामि वत्सनाम्ना महामुने ।। ४२.६ ।।
आसीत् किंपुरुषे वर्षे राजा परमधार्मिकः ।
भारतेति च विख्यातस्तस्य वत्सः सुतोऽभवत् ।। ४२.७ ।।
स शत्रुभिर्जितः संख्ये हृतकोशो द्विपादवान् ।
वनं प्रायात् सपत्नीको वसिष्ठस्याश्रमेऽवसत् ।। ४२.८ ।।
कालेन गच्छता सोऽथ वसिष्ठेन महर्षिणा ।
किं कार्यमिति स प्रोक्तो वसस्यस्मिन् महाश्रमे ।। ४२.९ ।।
राजोवाच ।
भगवन् हृतकोशोऽहं हृतराज्यो विशेषतः ।
शत्रुभिर्हतसंकल्पो भवन्तं शरणं गतः ।
उपदेशप्रदानेन प्रसादं कर्तुमर्हसि ।। ४२.१० ।।
एवमुक्तो वसिष्ठस्तु तस्येमां द्वादशीं मुने ।
विधिना प्रत्युवाचाथ सोऽपि सर्वं तथाऽकरोत् ।। ४२.११ ।।
तस्य व्रतान्ते भगवान् नारसिंहस्तुतोष ह ।
चक्रं प्रादाच्च शत्रूणां विध्वंसनकरं परम् ।। ४२.१२ ।।
तेनास्त्रेण स्वकं राज्यं जितवान् स नृपोत्तमः ।
राज्ये स्थित्वाऽश्वमेधानां सहस्त्रमकरोद् विभुः ।
अन्ते च विष्णुलोकाख्यं पदमाप च सत्तम ।। ४२.१३ ।।
एषा धन्या पापहरा द्वादशी भवतो मुने ।
कथिता या प्रयत्नेन श्रुत्वा कुरु यथेप्सितम् ।। ४२.१४ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे द्विचत्वारिंशोऽध्यायः ।। ४२ ।।

दुर्वासा उवाच ।
एवमेव मुने मासि चैत्रे संकल्प्य द्वादशीम् ।
उपोष्याराधयेत् पश्चात् देवदेवं जनार्दनम् ।। ४३.१ ।।
वामनायेति पादौ तु विष्णवे कटिमर्चयेत् ।
वासुदेवेति जठरमुरः संपूर्णकाय च ।। ४३.२ ।।
कण्ठं विश्वकृते पूज्य शिरो वै व्योमरूपिणे ।
बाहू विश्वजिते पूज्य स्वनाम्ना शंखचक्रकौ ।। ४३.३ ।।
अनेन विधिनाभ्यर्च्य देवदेवं सनातनम् ।
प्राग्वदेवोत्तरं कुम्भं सयुग्मं पुरतो न्यसेत् ।। ४३.४ ।।
प्रागुक्तपात्रे संस्थाप्य वामनं काञ्चनं बुधः ।
यथाशक्त्या कृतं ह्रस्वं सितयज्ञोपवीतिनम् ।। ४३.५ ।।
कुण्डिकां स्थापयेत् पार्श्वे छत्रिकां पादुके तथा ।
अक्षमालां च संस्थाप्य वृसिकां च विशेषतः ।। ४३.६ ।।
एतैरुपस्करैर्युक्तं प्रभाते स द्विजातये ।
दापयेत् प्रीयतां विष्णुर्ह्रस्वरूपीत्युदीरयेत् ।। ४३.७ ।।
मासनाम्ना तु संयुक्तं प्रादुर्भावविधानकम् ।
प्रीयतामिति सर्वत्र विधिरेष प्रकीर्तितः ।। ४३.८ ।।
श्रूयते च पुरा राजा हर्यश्वः पृथिवीपतिः ।
अपुत्रः स तपस्तेपे पुत्रमिच्छंस्तपोधनम् ।। ४३.९ ।।
तस्यैव कुर्वतो व्युष्टिं पुत्रार्थे मुनिसत्तम ।
आजगाम हरिः पूर्वं द्विजरूपं समाश्रितः ।। ४३.१० ।।
उवाच तपसा राजन् किं ते व्यवसितं प्रभो ।
पुत्रार्थमिति प्रोवाच तं विप्रः प्रत्युवाच ह ।। ४३.११ ।।
इदमेव विधानं तु कुरु राजन्नुवाच ह ।
एवमुक्त्वा तु राजानं क्षणादन्तर्हितः प्रभुः ।। ४३.१२ ।।
राजाऽपि तं चकाराशु मन्त्रवन्तं द्विजातये ।
दरिद्राय तथा प्रादात् ज्योतिर्गार्गाय धीमते ।। ४३.१३ ।।
यथादितेरपुत्रायाः स्वयं पुत्रत्वमागतः ।
भगवंस्तेन सत्येन ममाप्यस्तु सुतो वरः ।। ४३.१४ ।।
अनेन विधिना दत्ते तस्य पुत्रोऽभवन्मुने ।
कुवलाश्व इति ख्यातश्चक्रवर्ती महाबलः ।। ४३.१५ ।।
अपुत्रो लभते पुत्रमधनो लभते धनम् ।
भ्रष्टराज्यो लभेद् राज्यं मृतो विष्णुपुरं व्रजेत् ।। ४३.१६ ।।
कीर्त्तित्वा सुचिरं तत्र इह मर्त्यमुपागतः ।

चक्रवर्ती भवेद् धीमान् ययातिरिव नाहुषः ।। ४३.१७ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे त्रयश्चत्वारिंशोऽध्यायः ।। ४३ ।।

दुर्वास उवाच ।
वैशाखेऽप्येवमेवं तु संकल्प्य विधिना नरः ।
तद्वत् स्नानादिकं कृत्वा ततो देवालयं व्रजेत् ।। ४४.१ ।।
तत्राराध्य हरिं भक्त्या एभिर्मन्त्रैर्विचक्षणः ।
जामदग्न्याय पादौ तु उदरं सर्वधारिणे ।
मधुसूदनायेति कटिमुरः श्रीवत्सधारिणे ।। ४४.२ ।।
क्षत्रान्तकाय च भुजौ मणिकण्ठाय कण्ठकम् ।
स्वनाम्ना शङ्खचक्रौ तु शिरो ब्रह्माण्डधारिणे ।। ४४.३ ।।
एवमभ्यर्च्य मेधावी प्राग्वत् तस्याग्रतो घटम् ।
विन्यस्य स्थगितं तद्वद् वस्त्रयुग्मेन वेष्टितम् ।। ४४.४ ।।
वैणवेन तु पात्रेण तस्मिन् संस्थापयेद्धरिम् ।
जामदग्न्येति विख्यातं नाम्ना क्लेशविनाशनम् ।। ४४.५ ।।
दक्षिणे परशुं हस्ते तस्य देवस्य कारयेत् ।
सर्वगन्धैश्च संपूज्य पुष्पैर्नानाविधैः शुभैः ।। ४४.६ ।।
ततस्तस्याग्रतः कुर्याज्जागरं भक्तिमान्नरः ।
प्रभाते विमले सूर्ये ब्राह्मणाय निवेदयेत् ।
एवं नियमयुक्तस्य यत्फलं तन्निबोध मे ।। ४४.७ ।।
आसीद् राजा महाभागो वीरसेनो महाबलः ।
अपुत्रः स पुरा तीव्रं तपस्तेपे महौजसा ।। ४४.८ ।।
चरतस्तत्तपो घोरं याज्ञवल्क्यो महामुनिः ।
आजगाम महायोगी तं दृष्ट्वा नातिदूरतः ।। ४४.९ ।।
तमायान्तमथो दृष्ट्वा ऋषिं परमवर्चसम् ।
कृताञ्जलिपुटो भूत्वा राजाभ्युत्थानमाकरोत् ।। ४४.१० ।।
स पूजितो मुनिः प्राह किमर्थं तप्यते तपः ।
राजन् कथय धर्मज्ञ किं ते कार्यं विवक्षितम् ।। ४४.११ ।।
राजोवाच ।
अपुत्रोऽहं महाभाग नास्ति मे पुत्रसंततिः ।
तेन मे तप आंस्थाय कृष्यते स्वतनुर्द्विज ।। ४४.१२ ।।
याज्ञवल्क्य उवाच ।
अलं ते तपसाऽनेन महाक्लेशेन पार्थिव ।
अल्पायासेन ते पुत्रो भविष्यति न संशयः ।। ४४.१३ ।।
राजोवाच ।
कथं मे भविता पुत्रो अल्पायासेन वै द्विज ।
एतन्मे कथय प्रीतो भगवन् प्रणतस्य ह ।। ४४.१४ ।।

दुर्वासा उवाच ।
एवमुक्तो मुनिस्तेन पार्थिवेन यशस्विना ।
आचख्यौ द्वादशीं चेमां वैशाखे सितपक्षजाम् ।। ४४.१५ ।।
स हि राजा विधानेन पुत्रकामो विशेषतः ।
उपोष्य लब्धवान् पुत्रं नलं परमधार्मिकम् ।
योऽद्यापि कीर्त्यते लोके पुण्यश्लोको नरोत्तमः ।। ४४.१६ ।।
प्रासङ्गिकं फलं ह्येतद् गतस्यास्य महामुने ।
सुपुत्रो जायते वित्तविद्यावान् कान्तिरुत्तमा ।। ४४.१७ ।।
इह जन्मनि किं चित्रं परलोके श्रृणुष्व मे ।
कल्पमेकं ब्रह्मलोके वसित्वाऽप्सरसां गणैः ।। ४४.१८ ।।
क्रीडत्यन्ते पुनः सृष्टौ चक्रवर्ती भवेद् ध्रुवम् ।
त्रिंशत्यब्दसहस्त्राणि जीवते नात्र संशयः ।। ४४.१९ ।।
।। इति श्रीवराहपुराणे भवगच्छास्त्रे चतुश्चत्वारिंशोऽध्यायः ।। ४४ ।।

दुर्वासा उवाच ।
ज्येष्ठमासेऽप्येवमेवं संकल्प्य विधिना नरः ।
अर्चयेत् परमं देवं पुष्पैर्नानाविधैः शुभैः ।। ४५.१ ।।
नमो रामाभिरामाय पादौ पूर्वं समर्चयेत् ।
त्रिविक्रमायेति कटिं धृतविश्वाय चोदरम् ।। ४५.२ ।।
उरः संवत्सरायेति कण्ठं संवर्त्तकाय च ।
सर्वास्त्रधारिणे बाहू स्वनाम्नाऽब्जरथाङ्गकौ ।। ४५.३ ।।
सहस्त्रशिरसेऽभ्यर्च्य शिरस्तस्य महात्मनः ।
एवमभ्यर्च्य विधिवत् प्रागुक्तं कुम्भं विन्यसेत् ।। ४५.४ ।।
प्राग्वद् वस्त्रयुगच्छन्नौ सौवर्णौ रामलक्ष्मणौ ।
अर्चयित्वा विधानेन प्रभाते ब्राह्मणाय तौ ।
दातव्यौ मनसा काममीहता पुरुषेण तु ।। ४५.५ ।।
अपुत्रेण पुरा पृष्टो राज्ञा दशरथेन च ।
पुत्रकामपरः पश्चाद् वसिष्ठः परमार्चितः ।। ४५.६ ।।
इदमेव विधानं तु कथयामास स द्विजः ।
प्राग्रहस्यं विदित्वा तु स राजा कृतवानिदम् ।। ४५.७ ।।
तस्य पुत्रः स्वयं जज्ञे रामनामा सुतो बली ।
चतुर्द्धा सोऽव्ययो विष्णुः परितुष्टो महामुने ।
एतदैहिकमाख्यातं पारत्रिकमतः श्रृणु ।। ४५.८ ।।
तावद् भोगान् भुञ्जते स्वर्गसंस्थो
यावदिन्द्रा दश च द्विद्विसंख्या ।
अतीतकाले पुनरेत्य मर्त्त्यो
भवेत राजा शतयज्ञयाजी ।
नश्यन्ति पापानि च तस्य पुंसः
प्राप्नोति निर्वाणमलं च शाश्वतम् ।। ४५.९ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे पञ्चचत्वारिंशोऽध्यायः ।। ४५ ।।

दुर्वासा उवाच ।
आषाढेऽप्येवमेवं तु संकल्प्य विधिना नरः ।
अर्चयेत् परमं देवं गन्धपुष्पैरनेकशः ।। ४६.१ ।।
वासुदेवाय पादौ तु कटिं संकर्षणाय च ।
प्रद्युम्नायेति जठरं अनिरुद्धाय वै उरः ।। ४६.२ ।।
चक्रपाणयेति भुजौ कण्ठं भूपतये तथा ।
स्वनाम्ना शङ्खचक्रौ तु पुरुषायेति वै शिरः ।। ४६.३ ।।
एवमभ्यर्च्य मेधावी प्राग्वत्तस्याग्रतो घटम् ।
विन्यस्य वस्त्रसंयुक्तं तस्योपरि ततो न्यसेत् ।
काञ्चनं वासुदेवं तु चतुर्व्यूहं सनातनम् ।। ४६.४ ।।
तमभ्यर्च्य विधानेन गन्धपुष्पादिभिः क्रमात् ।
प्राग्वत् तं ब्राह्मणे दद्याद् वेदवादिनि सुव्रते ।
एवं नियमयुक्तस्य यत्पुण्यं तच्छृणुष्व मे ।। ४६.५ ।।
वसुदेवोऽभवद् राजा यदुवंशविवर्द्धनः ।
देवकी तस्य भार्या तु समानव्रतधारिणी ।। ४६.६ ।।
सा त्वपुत्राऽभवत् साध्वी पतिधर्मपरायणा ।
तस्य कालेन महता नारदोऽभ्यगमद् गृहम् ।। ४६.७ ।।
वसुदेवेनासौ भक्त्या पूजितो वाक्यमब्रवीत् ।
वसुदेव श्रुणुष्व त्वं देवकार्यं ममानघ ।
श्रुत्वैतां च कथां शीघ्रमागतोऽस्मि तवान्तिकम् ।। ४६.८ ।।
पृथिवी देवसमितौ मया दृष्टा यदूत्तम ।
गत्वा च जल्पती भारं न शक्ता ऊहितुं सुराः ।। ४६.९ ।।
सौभकंसजरासन्धाः पुनर्नरक एव च ।
कुरुपाञ्चालभोजाश्च बलिनो दानवाः सुराः ।
पीडयन्ति समेता मां तान् हनध्वं सुरोत्तमाः ।। ४६.१० ।।
एवमुक्ताः पृथिव्या ते देवा नारायणं गताः ।
मनसा स च देवेशः प्रत्यक्षस्तत् क्षणात् बभौ ।। ४६.११ ।।
उवाच च सुरश्रेष्ठः स्वयं कार्यमिदं सुराः ।
साधयामि न सन्देहो मर्त्यं गत्वा मनुष्यवत् ।। ४६.१२ ।।
किंत्वाषाढे शुक्लपक्षे या नारी सह भर्त्तृणा ।
उपोष्यति मनुष्येषु तस्या गर्भे भवाम्यहम् ।। ४६.१३ ।।
एवमुक्त्वा गतो देवः स्वयं चाहमिहागतः ।
उपदिष्टं तु भवतो अपुत्रस्य विशेषतः ।
उपोष्य लभते पुत्रं सहभार्यो न संशयः ।। ४६.१४ ।।
एतां च द्वादशीं कृत्वा वसुदेवस्तथाप्तवान् ।
महतीं च श्रियं प्राप्तः पुत्रपौत्रसमन्वितः ।। ४६.१५ ।।
भुक्त्वा राज्यश्रियं सोऽथ गतः परमिकां गतिम् ।

एष ते विधिरुद्दिष्ट आषाढे मासि वै मुने ।। ४६.१६ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे षट्चत्वारिंशोऽध्यायः ।। ४६ ।।

दुर्वासा उवाच ।
श्रावणस्य तु मासस्य शुक्लपक्षे तु द्वादशी ।
अर्चयेत् परमं देवं गन्धपुष्पैर्जनार्नम् ।। ४७.१ ।।
दामोदराय पादौ तु हृषीकेशाय वै कटिम् ।
सनातनेति जठरमुरः श्रीवत्सधारिणे ।। ४७.२ ।।
चक्रपाणयेति भुजौ कण्ठं च हरये तथा ।
मुञ्जकेशाय च शिरो भद्रायेति शिखां तथा ।। ४७.३ ।।
एवं संपूज्य संस्थाप्य कुम्भं पूर्ववदेव तु ।
विन्यस्य वस्त्रयुग्मं तु तस्योपरि ततो न्यसेत् ।। ४७.४ ।।
काञ्चनं देवदेवं तु दामोदरसनामकम् ।
तमभ्यर्च्य विधानेन गन्धपुष्पादिभिः क्रमात् ।। ४७.५ ।।
प्राग्वत् तं ब्राह्मणे दद्याद् वेदवेदाङ्गपारगे ।
एवं नियमयुक्तस्य प्रभावं तच्छृणुष्व मे ।। ४७.६ ।।
एष ते विधिरुद्दिष्टः श्रावणे मासि वै विभो ।
एतस्याश्च प्रभावं यत् श्रृणु पापप्रणाशनम् ।। ४७.७ ।।
पुरा कृतयुगे राजा नृगो नाम महाबलः ।
बभ्राम स वनं घोरं मृगयासक्तमानसः ।। ४७.८ ।।
स कदाचित् तुरङ्गेण हृतो दूरं महद्वनम् ।
व्याघ्रसिंहगजाकीर्णं दस्युसर्पनिषेवितम् ।। ४७.९ ।।
एकाकी तत्र राजा तु अश्वं मुच्य तरोरधः ।
स्वयं कुशमथास्तीर्य सुप्तो दुःखसमन्वितः ।। ४७.१० ।।
तावत् तत्रैव लुब्धानां सहस्त्राणि चतुर्दश ।
आगतानि मृगान् हन्तुं रात्रौ राज्ञः समन्ततः ।। ४७.११ ।।
तत्रापश्यन्त ते सुप्तं हेमरत्नविभूषितम् ।
नृगं राजानमत्युग्रं श्रिया परमया युतम् ।। ४७.१२ ।।
ते गत्वा त्वरितं व्याधाः स्वभर्त्रे संन्यवेदयन् ।
सोऽपि रत्नसुवर्णार्थं राजानं हन्तुमुद्यतः ।। ४७.१३ ।।
तुरगस्य च हेतोस्तु निस्त्रिंशा वनचारिणः ।
राजानं सुप्तमासाद्य निगृहीतुं प्रचक्रमुः ।। ४७.१४ ।।
तावद् राज्ञः शरीरात् तु श्वेताभरणभूषिता ।
नारी काचित् समुत्तस्थौ स्त्रक्चन्दनविभूषिता ।
उत्थाय चक्रमादाय ते म्लेच्छा विनिपातिताः ।। ४७.१५ ।।
दस्यून् निहत्य सा देवी तस्य राज्ञस्तनुं पुनः ।
प्रविशन्त्याशु राजाऽपि प्रतिबुद्धोऽथ दृष्टवान् ।
म्लेच्छांस्तु निहतान् दृष्ट्वा सा स्वमूर्त्तिलयं गता ।। ४७.१६ ।।
अश्वमारुह्य स पुनर्वामदेवाश्रमं ययौ ।
तत्रापृच्छद् ऋषिं भक्त्या का स्त्री के ते निपातिताः ।
एतत् कार्यमृषे मह्यं कथयस्व प्रसीद मे ।। ४७.१७ ।।

वामदेव उवाच ।
त्वमासीच्छूद्रजातीय अन्यजन्मनि पार्थिव ।
तत्र त्वया ब्राह्मणस्य प्रेषणं कुर्वता श्रुता ।
श्रावणस्य तु मासस्य शुक्लपक्षे तु द्वादशी ।। ४७.१८ ।।
सविधानात् त्वया राजन् भक्त्या वै समुपोषिता ।
उपोषितायां तस्यां तु राज्यं लब्धं त्वयाऽनघ ।। ४७.१९ ।।
सर्वापत्सु च सा देवी भवन्तं परिरक्षति ।
यया विनिहताः क्रूरा म्लेच्छाः पापसमन्विताः ।
भवांश्च रक्षितो राजन् श्रावणद्वादशी तु सा ।। ४७.२० ।।
एकैव पाति चापत्सु राज्यमेकैव यच्छति ।
किं पुनर्द्वादशैतास्तु येनैन्द्रं न ददुः पदम् ।। ४७.२१ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे सप्तचत्वारिंशोऽध्यायः ।। ४७ ।।

दुर्वासा उवाच ।
तद्वद् भाद्रपदे मासि शुक्लपक्षे तु द्वादशीम् ।
संकल्प्य विधिना देवमर्च्चयेत् परमेश्वरम् ।। ४८.१ ।।
नमोऽस्तु कल्किने पादौ हृषीकेशाय वै कटिम् ।
म्लेच्छविध्वंसनायेति जगन्मूर्त्ते तथोदरम् ।। ४८.२ ।।
शितिकण्ठाय कण्ठं तु खड्गपाणेति वै भुजौ ।
चतुर्भुजायेति हस्तौ विश्वमूर्त्ते तथा शिरः ।। ४८.३ ।।
एवमभ्यर्च्य मेधावी प्राग्वत् तस्याग्रतो घटम् ।
विन्यसेत् कल्किनं देवं सौवर्णं तत्र कारयेत् ।। ४८.४ ।।
सितवस्त्रयुगच्छन्नं गन्धपुष्पोपशोभितम् ।
कृत्वा प्रभाते विप्राय प्रदेयं शास्त्रवित्तमे ।
एवं कृते भवेद् यस्तु तन्निबोध महामुने ।। ४८.५ ।।
पूर्वं राजा विशालोऽभूत् काश्यां पुर्यां महाबलः ।
गोत्रजैर्हृतराज्योऽसौ गन्धमादनमाविशत् ।। ४८.६ ।।
तस्य द्रोण्यां महाराज बदरीं प्राप्य शोभनाम् ।
हृतराज्यो विशेषेण गतश्रीको नरोत्तमः ।। ४८.७ ।।
कदाचिदागतौ तत्र पुराणावृषिसत्तमौ ।
नरनारायणौ देवौ सर्वदेवनमस्कृतौ ।। ४८.८ ।।
तौ दृष्ट्वा तत्र राजानं पूर्वागतमरिंदमौ ।
ध्यायन्तं परमं ब्रह्म विष्ण्वाख्यं परमं पदम् ।। ४८.९ ।।
तौ प्रीतावूचतुस्तं तु राजानं क्षीणकल्मषम् ।
वरं वृणीष्व राजेन्द्र वरदौ स्वस्तवागतौ ।। ४८.१० ।।
राजोवाच ।
भवन्तौ कौ न जानामि कस्य गृह्णाम्यहं वरम् ।
आराधयामि यत् तस्माद् वरमिच्छामि शोभनम् ।। ४८.११ ।।
एवमुक्तौ तु तौ राज्ञा कमाराधयसे प्रभो ।
कं वा वरं वृणुष्व त्वं कथयस्व कुतूहलात् ।। ४८.१२ ।।
एवमुक्तस्ततो राजा विष्णुमाराधयाम्यहम् ।
कथयित्वा स्थितस्तूष्णीं ततस्तावूचतुः पुनः ।। ४८.१३ ।।
राजन् तस्यैव देवस्य प्रसादादावयोर्वरः ।
दातव्यस्ते वरं ब्रूहि कस्ते मनसि वर्त्तते ।। ४८.१४ ।।
राजोवाच ।
यथा यज्ञेश्वरं देवं यज्ञैर्विविधदक्षिणैः ।
यष्टुं समर्थता मे स्यात् तथा मे ददतं वरम् ।। ४८.१५ ।।
नर उवाच ।
स्वयं नारायणो देवो लोकमार्गप्रदर्शकः ।
मया सह तपः कुर्याद् बदर्यां लोकभावनः ।। ४८.१६ ।।
अयं मत्स्योऽभवत् पूर्वं पुनः कूर्म्मस्वरूपवान् ।

वराहश्चाभवद् देवो नरसिंहस्ततोऽभवत् ।। ४८.१७ ।।
वामनस्तु ततो जातो जामदग्न्यो महाबलः ।
पुनर्दाशरथिर्भूत्वा वासुदेवः पुनर्बभौ ।। ४८.१८ ।।
बुद्धो भूत्वा जनं ह्येष मोहयामास पार्थिव ।
सपत्नान् दस्यवो म्लेच्छान् पुनर्हत्वा महीमिमाम् ।
प्रकृतिस्थां चकारायं स एष भगवान् हरिः ।। ४८.१९ ।।
पूज्यते मत्स्यरूपेण सर्वज्ञत्वमभीप्सुभिः ।
स्ववंशोद्धरणार्थाय कूर्मरूपी तु पूज्यते ।। ४८.२० ।।
भवोदधिनिमग्नेन वाराहः पूज्यते हरिः ।
नारसिंहेण रूपेण तद्वत् पापभयान्नरैः ।। ४८.२१ ।।
वामनं मोहनाशाय वित्तार्थे जगदग्निजम् ।
क्रूरशत्रुविनाशाय यजेद् दाशरथिं बुधः ।। ४८.२२ ।।
बलकृष्णौ यजेद् धीमान् पुत्रकामो न संशयः ।
रूपकामो यजेद् बुद्धं कल्किनं शत्रुघातने ।। ४८.२३ ।।
एवमुक्त्वा नरस्तस्य इमामेवाब्रवीन्मुनिः ।
द्वादशीं कृतवान् सोऽपि चक्रवर्ती बभूव ह ।
तस्यैव नाम्ना बदरी विशालाख्याऽभवन्मुने ।। ४८.२४ ।।
इह जन्मनि राजाऽसौ राज्यं कृत्वा इयाद् वनम् ।
यज्ञैश्च विविधैरिष्ट्वा परं निर्वाणमाप्तवान् ।। ४८.२५ ।।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे अष्टचत्वारिंशोऽध्यायः ।। ४८ ।।

**दुर्वासा उवाच ।**

तद्वदाश्वयुजे मासि द्वादशीं शुक्लपक्षतः ।
संकल्प्याभ्यर्चयेद् देवं पद्मनाभं सनातनम् ।। ४९.१ ।।

पद्मनाभाय पादौ तु कटिं वै पद्मयोनये ।
उदरं सर्वदेवाय पुष्कराक्षाय वै उरः ।
अव्ययाय तथा पाणिं प्राग्वदस्त्राणि पूजयेत् ।। ४९.२ ।।

प्रभवाय शिरः पूज्य प्राग्वदग्रे घटं न्यसेत् ।
तस्मिन् सौवर्णकं देवं पद्मनाभं तु विन्यसेत् ।। ४९.३ ।।

तमेव देवं संपूज्य गन्धपुष्पादिभिः क्रमात् ।
प्रभातायां तु शर्वर्यां ब्राह्मणाय निवेदयेत् ।
एवं कृते तु यत् पुण्यं तन्निबोध महामुने ।। ४९.४ ।।

आसीत् कृतयुगे राजा भद्राश्वो नाम वीर्यवान् ।
यस्य नाम्नाऽभवद् वर्षं भद्राश्वं नाम नामतः ।। ४९.५ ।।

तस्यागस्त्यः कदाचित् तु गृहमागत्य सत्तम ।
उवाच सप्तरात्रं तु वसामि भवतो गृहे ।। ४९.६ ।।

तं राजा शिरसा भूत्वा स्थीयतामित्यभाषत ।
तस्य कान्तिमती नाम भार्या परमशोभना ।। ४९.७ ।।

तस्यास्तेजः समभवद् द्वादशादित्यसंनिभम् ।
शतानि पञ्च तस्यासन् सपत्नीनां यतव्रत ।। ४९.८ ।।

ता दास्य इव कर्माणि कुर्वन्त्यहरहः शुभाः ।
कान्तिमत्या महाभाग भयात् त्रस्ता विचेतसः ।। ४९.९ ।।

तामगस्त्यस्तथा दृष्ट्वा रूपतेजोऽन्वितां शुभाम् ।
सपत्न्यश्च भयात् तस्याः कुर्वन्त्यः कर्म शोभनम् ।
राजा तु तस्या मुदितं मुखमेवावलोकयन् ।। ४९.१० ।।

एवंभूतामथो दृष्ट्वा राज्ञीं परमशोभनाम् ।
साधु साधु जगन्नाथेत्यगस्त्यः प्राह हर्षितः ।। ४९.११ ।।

द्वितीये दिवसेऽप्येवं राज्ञीं दृष्ट्वा महाप्रभाम् ।
अहो मुष्टमहो मुष्टं जगदेतच्चराचरम् ।
इत्यगस्त्यो द्वितीयेऽह्नि राज्ञीं दृष्ट्वाऽभ्युवाच ह ।। ४९.१२ ।।

तृतीयेऽहनि तां दृष्ट्वा पुनरेवमुवाच ह ।

अहो मूढा न जानन्ति गोविन्दं परमेश्वरम् ।
य एकेऽह्नि फलं चैतद् राज्ञे तुष्टः प्रदत्तवान् ।। ४९.१३ ।।

चतुर्थे दिवसे हस्तावुत्क्षिप्य पुनरब्रवीत् ।
साधु साधु जगन्नाथ स्त्री शूद्राः साधु साध्विति ।
द्विजाः साधु नृपाः साधु वैश्याः साधु पुनः पुनः ।। ४९.१४ ।।

साधु भद्राश्व साधु त्वं भोऽगस्त्य साधु साधु ते ।
साधु प्रह्लाद ते साधु ध्रुव साधो महाव्रत ।
एवमुक्त्वा ननर्तोच्चैरगस्त्यो राजसंनिधौ ।। ४९.१५ ।।

एवंभूतं च तं दृष्ट्वा सपत्नीको नृपोत्तमः ।
किं हर्षकारणं ब्रह्मन् येनेत्थं नृत्यते भवान् ।। ४९.१६ ।।

**अगस्त्य उवाच ।**
अहो मूर्खः कुराजा त्वमहो मूर्खाऽनुगास्त्वमी ।
अहो पुरोहिता मूर्खा ये न जानन्ति मे मतम् ।। ४९.१७ ।।

एवमुक्ते ततो राजा कृताञ्जलिरभाषत ।
न जानीमो वयं ब्रह्मन् प्रश्नमेतत् त्वयेरितम् ।
कथयस्व महाभाग यद्यनुग्रहकृद् भवान् ।। ४९.१८ ।।

**अगस्त्य उवाच ।**
इयं राज्ञी त्वया याऽभूद् दासी वैश्यस्य वैदिशे ।
नगरे हरिदत्तस्य त्वमस्याः पतिरेव च ।
तस्यैव कर्मकारोऽभूच्छूद्रः सेवनतत्परः ।। ४९.१९ ।।

स वैश्योऽश्वयुजे मासि द्वादश्यां नियतः स्थितः ।
स्वयं विष्ण्वालयं गत्वा पुष्पधूपादिभिर्हरिम् ।। ४९.२० ।।

अभ्यर्च्य स्वगृहं प्रायाद् भवन्तौ रक्षपालकौ ।
स्थाप्य द्वावपि दीपानां ज्वलनार्थं महामते ।। ४९.२१ ।।

गते वैश्ये भवन्तौथ दीपान् प्रज्वाल्य संस्थितौ ।
यावत् प्रभाता रजनी निशामेकां नरोत्तम ।। ४९.२२ ।।

ततः काले मृतौ तौ तु उभौ द्वावपि दम्पती ।
तेन पुण्येन ते जन्म प्रियव्रतगृहेऽभवत् ।। ४९.२३ ।।

इयं तु पत्नी ते जाता पुरा वैश्यस्य दासिका ।
पारक्यस्यापि दीपस्य ज्वालितस्य हरेर्गृहे ।। ४९.२४ ।।

यः पुनः स्वेन वित्तेन विष्णोरग्रे प्रदीपकम् ।
ज्वालयेत् तस्य यत् पुण्यं तत् संख्यातुं न शक्यते ।
तेन साधो हरे साधु इत्युक्तं वचनं मया ।। ४९.२५ ।।

कृते संवत्सरे भक्तिं हरेः कृत्वा विचक्षणः ।
संवत्सरार्धं त्रेतायां सममेतन्न संशयः ।। ४९.२६ ।।

त्रिमासे द्वापरे भक्त्या पूजयँल्लभते फलम् ।
नमो नारायणायेत्युक्त्वा कलौ तु लभते फलम् ।
तेन मुष्टं जगद् विष्णोर्भक्तिमात्रं मयेरितम् ।। ४९.२७ ।।

पारक्यदीपस्योत्कर्षाद् वै देवाग्रे फलमीदृशम् ।
प्राप्तं फलं त्वया राजन् फलमेतन् मयेरितम् ।
अहो मूढा न जानन्ति हरेर्दीपक्रियाफलम् ।। ४९.२८ ।।

एवं विधं द्विजा ये च राजानो ये च भक्तितः ।
यजन्ते विविधैर्यज्ञैस्तेन ते साधवः स्मृताः ।। ४९.२९ ।।

अहं तमेव मुक्त्वाऽन्यं न पश्यामि महीतले ।
तेन साधो अगस्त्येति मया चात्मा प्रशंसितः ।
हर्षेण महता राजन् व्याक्षिप्तेन मयेरितम् ।। ४९.३० ।।

सा स्त्री धन्या स शूद्रस्तु तथा धन्यतरो मतः ।
भर्तुः सुश्रूषणं कृत्वा तत्परोक्षे हरेरिति ।। ४९.३१ ।।

सा स्त्री धन्या तथा शूद्रो द्विजसुश्रूषणे रतः ।
तदनुज्ञया हरेर्भक्तिः स्त्री शूद्रो तेन साध्विति ।। ४९.३२ ।।

आसुरं भावमास्थाय प्रह्लादः पुरुषोत्तमम् ।
मुक्त्वा चान्यं न जानाति तेनासौ साधुरुच्यते ।। ४९.३३ ।।

प्रजापतिकुले भूत्वा बाल एव वनं गतः ।
आराध्य विष्णुं प्राप्तं तत् स्थानं परमशोभनम् ।
तेन साधो ध्रुवेत्येवं मयोक्तं राजसत्तम ।। ४९.३४ ।।

इति राजा वचः श्रुत्वा अगस्त्यस्य महात्मनः ।
अल्पोपदेशराजाऽसौ पप्रच्छ मुनिपुंगवम् ।। ४९.३५ ।।

अगस्त्यश्च महाभागः कार्तिक्यां पुष्करं व्रजन् ।
गतेऽगस्त्ये प्रगच्छन् वै भद्राश्वस्य निवेशनम् ।। ४९.३६ ।।

पृष्टश्च राज्ञा तामेव द्वादशीं मुनिसत्तमः ।

**दुर्वासा उवाच ।**
इदमेव मया तुभ्यं कथितं ते तपोधन ।। ४९.३७ ।।

कथयित्वा पुनर्वाक्यमगस्त्यो नृपसत्तमम् ।
उवाच पुष्करं यामि पुनरेष्यामि ते गृहम् ।
एवमुक्त्वा जगामाशु सद्योऽदर्शनतां मुनिः ।। ४९.३८ ।।

राजाऽपि तेन विधिना पद्मनाभस्य द्वादशीम् ।.
उपोष्य परमं काममिह जन्मनि चाप्तवान् ।। ४९.३९ ।।

सपत्नीको नृपवरो द्वादशीं समुपोष्य च ।
इह जन्मनि राजाऽसौ पुत्रपौत्रांस्तथाऽऽप्तवान् ।। ४९.४० ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे एकोनपञ्चाशोऽध्यायः ।। ४९ ।।

**दुर्वासा उवाच ।**
गत्वा तु पुष्करं तीर्थमगस्त्यो मुनिपुंगवः ।
कार्तिक्यामाजगामाशु पुनर्भद्राश्वमन्दिरम् ।। ५०.१ ।।

तमागतं मुनिं प्रेक्ष्य राजा परमधार्मिकः ।
अर्घपाद्यादिभिः पूज्य कृतासनपरिग्रहम् ।
उवाच हर्षितो राजा तमृषिं संशितव्रतम् ।। ५०.२ ।।

**राजोवाच ।**
भगवन् कथितं पूर्वं त्वया ऋषिवरोत्तम ।
द्वादश्याश्वयुजे मासि विधानं तत् कृतं मया ।
इदानीं कार्तिके मासि यत् स्यात् पुण्यं वदस्व मे ।। ५०.३ ।।

**अगस्त्य उवाच ।**
श्रृणु राजन् महाबाहो कार्तिके मासि द्वादशीम् ।
उपोष्य विधिना येन यच्चास्याः प्राप्यते फलम् ।। ५०.४ ।।

प्राग्विधानेन संकल्प्य तद्वत् स्नानं तु कारयेत् ।
विभुमेवार्चयेद् देवं नारायणमकल्मषम् ।। ५०.५ ।।

नमः सहस्त्रशिरसे शिरः संपूजयेद्धरेः ।
पुरुषायेति च भुजौ कण्ठं वै विश्वरूपिणे ।
ज्ञानास्त्रायेति चास्त्राणि श्रीवत्साय तथा उरः ।। ५०.६ ।।

जगद्ग्रसिष्णवे पूज्य उदरं दिव्यमूर्त्तये ।
कटिं सहस्त्रपादाय पादौ देवस्य पूजयेत् ।। ५०.७ ।।

अनुलोमेन देवेशं पूजयित्वा विचक्षणः ।
नमो दामोदरायेति सर्वाङ्गं पूजयेद्धरेः ।। ५०.८ ।।

एवं संपूज्य विधिना तस्याग्रे चतुरो घटान् ।
स्थापयेद् रत्नगर्भांस्तु सितचन्दनचर्चितान् ।। ५०.९ ।।

स्त्रग्दामबद्धग्रीवांस्तु सितवस्त्रावगुण्ठितान् ।
स्थापितान् ताम्रपात्रैस्तु तिलपूर्णैः सकाञ्चनैः ।। ५०.१० ।।

चत्वारः सागराश्चैव कल्पिता राजसत्तम ।
तन्मध्ये प्राग्विधानेन सौवर्णं स्थापयेद्धरिम् ।
योगीश्वरं योगनिद्रां चरन्तं पीतवाससम् ।। ५०.११ ।।

तमप्येवं तु संपूज्य जागरं तत्र कारयेत् ।

कुर्याच्च वैष्णवं यज्ञं यजेद् योगीश्वरं हरिम् ।। ५०.१२ ।।

षोडशारे तथा चक्रे राजभिर्बहुभिः कृते ।
एवं कृत्वा प्रभाते तु ब्राह्मर्णाय च दापयेत् ।। ५०.१३ ।।

चत्वारः सागरा देयाश्चतुर्णां पञ्चमस्य ह ।
योगीश्वरं तु संपूर्णं दापयेत् प्रयतः शुचिः ।। ५०.१४ ।।

वेदाढ्ये तु समं दत्तं द्विगुणं तद्विदे तथा ।
आचार्ये पञ्चरात्राणां सहस्त्रगुणितं भवेत् ।। ५०.१५ ।।

यस्त्विमं सरहस्यं तु समन्त्रं चोपपादयेत् ।
विधानं तस्य वै दत्तं कोटिकोटिगुणोत्तरम् ।। ५०.१६ ।।

गुरवे सति यस्त्वन्यमाश्रयेत् पूजयेत् कुधीः ।
स दुर्गतिमवाप्नोति दत्तमस्य च निष्फलम् ।
प्रयत्नेन गुरौ पूर्वं पश्चादन्यस्य दापयेत् ।। ५०.१७ ।।

अविद्यो वा सविद्यो वा गुरुरेव जनार्दनः ।
मार्गस्थो वाप्यमार्गस्थो गुरुरेव परा गतिः ।। ५०.१८ ।।

प्रतिपद्य गुरुं यस्तु मोहाद् विप्रतिपद्यते ।
स जन्मकोटि नरके पच्यते पुरुषाधमः ।। ५०.१९ ।।

एवं दत्त्वा विधानेन द्वादश्यां विष्णुमर्च्य च ।
विप्राणां भोजनं कुर्याद् यथाशक्त्या सदक्षिणम् ।। ५०.२० ।।

धरणीव्रतमेतद्धि पुरा कृत्वा प्रजापतिः ।
प्रजापत्यं तथा लेभे मुक्तिं ब्रह्म च शाश्वतम् ।। ५०.२१ ।।

युवनाश्वोऽपि राजर्षिरनेन विधिना पुरा ।
मान्धातारं सुतं लेभे परं ब्रह्म च शाश्वतम् ।। ५०.२२ ।।

तथा च हैहयो राजा कृतवीर्यो नराधिपः ।
कार्त्तवीर्यं सुतं लेभे परं ब्रह्म च शाश्वतम् ।। ५०.२३ ।।

शकुन्तलाऽप्येवमेव तपश्चीर्त्वा महामुने ।
लेभे शाकुन्तलं पुत्रं दौष्यन्तिं चक्रवर्तिनम् ।। ५०.२४ ।।

तथा पौराणराजानो वेदोक्ताश्चक्रवर्त्तिनः ।
अनेन विधिना प्राप्ताश्चक्रवर्तित्वमुत्तमम् ।। ५०.२५ ।।

धरण्या अपि पाताले मग्नया चरितं पुरा ।
व्रतमेतत् ततो नाम्ना धरणीव्रतमुत्तमम् ।। ५०.२६ ।।

समाप्तेऽस्मिन् धरा देवी हरिणा क्रोडरूपिणा ।
उद्धृताऽद्यापि तुष्टेन स्थापिता नौरिवाम्भसि ।। ५०.२७ ।।

धरणीव्रतमेतद्धि कीर्तितं ते मया मुने ।
य इदं श्रृणुयाद् भक्त्या यश्च कुर्यान्नरोत्तमः ।
सर्वपापविनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् ।। ५०.२८ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे पञ्चाशोऽध्यायः ।। ५० ।।

**श्रीवराह उवाच ।**

श्रुत्वा दुर्वाससो वाक्यं धरणीव्रतमुत्तमम् ।
ययौ सत्यतपाः सद्यो हिमवत्पार्श्वमुत्तमम् ।। ५१.१ ।।

पुष्पभद्रा नदी यत्र शिला चित्रशिला तथा ।
वटो भद्रवटो यत्र तत्र तस्याश्रमो बभौ ।
तत्रोपरि महत् तस्य चरितं संभविष्यति ।। ५१.२ ।।

**धरण्युवाच ।**

बहुकल्पसहस्त्राणि व्रतस्यास्य सनातन ।
मया कृतस्य तपसस्तन्मया विस्मृतं प्रभो ।। ५१.३ ।।

इदानीं त्वत्प्रसादेन स्मरणं प्राक्तनं मम ।
जातं जातिस्मरा चास्मि विशोका परमेश्वर ।। ५१.४ ।।

यदि नाम परं देव कौतुकं हृदि वर्तते ।
अगस्त्यः पुनरागत्य भद्राश्वस्य निवेशनम् ।
यच्चकार स राजा च तन्ममाचक्ष्व भूधर ।। ५१.५ ।।

**श्रीवराह उवाच ।**

प्रत्यागतमृषिं दृष्ट्वा भद्राश्वः श्वेतवाहनः ।
वरासनगतं दृष्ट्वा कृत्वा पूजां विशेषतः ।
अपृच्छन्मोक्षधर्माख्यं प्रश्नं सकलधारिणि ।। ५१.६ ।।

**भद्राश्व उवाच ।**

भगवन् कर्मणा केन छिद्यते भवसंसृतिः ।
किं वा कृत्वा न शोचन्ति मूर्तामूर्तोपपत्तिषु ।। ५१.७ ।।

**अगस्त्य उवाच ।**

श्रृणु राजन् कथां दिव्यां दूरासन्नव्यवस्थिताम् ।
दृश्यादृश्यविभागोत्थां समाहितमना नृप ।। ५१.८ ।।

नाहो न रात्रिर्न दिशोऽदिशश्च
न द्यौर्न देवा न दिनं न सूर्यः ।
तस्मिन् काले पशुपालेति राजा
स पालयामास पशूननेकान् ।। ५१.९ ।।

तान् पालयन् स कदाचिद् दिदृक्षुः
पूर्वं समुद्रं च जगाम तूर्णम् ।
अनन्तपारस्य महोदधेस्तु
तीरे वनं तत्र वसन्ति सर्पाः ।। ५१.१० ।।

अष्टौ द्रुमाः कामवहा नदी च
तुर्यक् चोद्र्ध्वं बभ्रमुस्तत्र चान्ये ।
पञ्च प्रधानाः पुरुषास्तथैकां
स्त्रियं बिभ्रते तेजसा दीप्यमानाम् ।। ५१.११ ।।

साऽपि स्त्री स्वे वक्षसि धारयन्ती
सहस्त्रसूर्यप्रतिमं विशालम् ।
तस्याधरस्त्रिर्विकारस्त्रिवर्ण-
स्तं राजानं पश्य परिभ्रमन्तम् ।। ५१.१२ ।।

तूष्णींभूता मृतकल्पा इवासन्
नृपोऽप्यसौ तद्वनं संविवेश ।
तस्मिन् प्रविष्टे सर्व एते विविशु-
र्भयादैक्यं गतवन्तः क्षणेन ।। ५१.१३ ।।

तैः सर्पैः स नृपो दुर्विनीतैः
संवेष्टितो दस्युभिश्चिन्तयानः ।
कथं चैतेन भविष्यन्ति येन
कथं चैते संसृताः संभवेयुः ।। ५१.१४ ।।

एवं राज्ञश्चिन्तयतस्त्रिवर्णः पुरुषः परः ।
श्वेतं रक्तं तथा कृष्णं त्रिवर्णं धारयन्नरः ।। ५१.१५ ।।

स संज्ञां कृतवान् मह्यमपरोऽथ क्व यास्यसि ।
एवं तस्य ब्रुवाणस्य महन्नाम व्यजायत ।। ५१.१६ ।।

तेनापि राजा संवीतः स बुध्यस्वेति चाब्रवीत् ।
एवमुक्ते ततः स्त्री तु तं राजानं रुरोध ह ।। ५१.१७ ।।

मायाततं तं मा भैष्ट ततोऽन्यः पुरुषो नृपम् ।
संवेष्ट्य स्थितवान् वीरस्ततः सर्वेश्वरेश्वरः ।। ५१.१८ ।।

ततोऽन्ये पञ्च पुरुषा आगत्य नृपसत्तमम् ।
संविष्ट्य संस्थिताः सर्वे ततो राजा विरोधितः ।। ५१.१९ ।।

रुद्धे राजनि ते सर्वे एकीभूतास्तु दस्यवः ।
मथितुं शस्त्रमादाय लीनाऽन्योऽन्यं ततो भयात् ।। ५१.२० ।।

तैर्लीनैर्नृपतेर्वेश्म बभौ परमशोभनम् ।
अन्येषामपि पापानां कोटिः साग्राभवन्नृप ।। ५१.२१ ।।

गृहे भूसलिलं वह्निः सुखशीतश्च मारुतः ।
सावकाशानि शुभ्राणि पञ्चैकोनगुणानि च ।। ५१.२२ ।।

एकैव तेषां सुचिरं संवेष्ट्यासज्यसंस्थिता ।
एवं स पशुपालोऽसौ कृतवानञ्जसा नृप ।। ५१.२३ ।।

तस्य तल्लाघवं दृष्ट्वा रूपं च नृपतेर्मृधे ।
त्रिवर्णः पुरुषो राजन्नब्रवीद् राजसत्तमम् ।। ५१.२४ ।।

त्वत्पुत्रोऽस्मि महाराज ब्रूहि किं करवाणि ते ।
अस्माभिर्बन्धुमिच्छद्भिर्भवन्तं निश्चयः कृतः ।। ५१.२५ ।।

यदि नाम कृताः सर्वे वयं देव पराजिताः ।
एवमेव शरीरेषु लीनास्तिष्ठाम पार्थिव ।। ५१.२६ ।।

मय्येके तव पुत्रत्वं गते सर्वेषु संभवः ।
एवमुक्तस्ततो राजा तं नरं पुनरब्रवीत् ।। ५१.२७ ।।

पुत्रो भवति मे कर्त्ता अन्येषामपि सत्तम ।
युष्मत्सुखैर्नरैर्भावैर्नाहं लिप्ये कदाचन ।। ५१.२८ ।।

एवमुक्त्वा स नृपतिस्तमात्मजमथाकरोत् ।
तैर्विमुक्तः स्वयं तेषां मध्ये स विरराम ह ।। ५१.२९ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे एकपञ्चाशोऽध्यायः ।। ५१ ।।

**अगस्त्य उवाच ।**

स त्रिवर्णो नृपोत्सृष्टः स्वतन्त्रत्वाच्च पार्थिव ।
अहं नामानमसृजत् पुत्रं पुत्रस्त्रिवर्णकम् ।। ५२.१ ।।

तस्यापि चाभवत् कन्या अवबोधस्वरूपिणी ।
सा तु विज्ञानदं पुत्रं मनोह्वं विससर्ज ।। ५२.२ ।।

तस्यापि सर्वरूपाः स्युस्तनयाः पञ्चभोगिनः ।
यथासंख्येन पुत्रास्तु तेषामक्षाभिधानकाः ।। ५२.३ ।।

एते पूर्वं दस्यवः स्युस्ततो राज्ञा वशीकृताः ।
अमूर्त्ता इव ते सर्वे चक्रुरायतनं शुभम् ।। ५२.४ ।।

नवद्बारं पुरं तस्य त्वेकस्तम्भं चतुष्पथम् ।
नदीसहस्त्रसंकीर्णं जलकृत्य समास्थितम् ।। ५२.५ ।।

तत्पुरं ते प्रविविशुरेकीभूतास्ततो नव ।
पुरुषो मूर्त्तिमान् राजा पशुपालोऽभवत् क्षणात् ।। ५२.६ ।।

ततस्तत्पुरसंस्थस्तु पशुपालो महानृपः ।
संसूच्य वाचकाञ्छब्दान् वेदान् सस्मार तत्पुरे ।। ५२.७ ।।

आत्मस्वरूपिणो नित्यास्तदुक्तानि व्रतानि च ।
नियमान् क्रतवश्चैव सर्वान् राजा चकार ह ।। ५२.८ ।।

स कदाचिन्नृपः खिन्नः कर्मकाण्डं प्ररोचयन् ।
सर्वज्ञो योगनिद्रायां स्थित्वा पुत्रं ससर्ज ह ।। ५२.९ ।।

चतुर्वक्त्रं चतुर्बाहुं चतुर्वेदं चतुष्पथम् ।
तस्मादारभ्य नृपतेर्वशे पश्वादयः स्थिताः ।। ५२.१० ।।

तस्मिन् समुद्रे स नृपो वने तस्मिंस्तथैव च ।
तृणादिषु नृपस्सैव हस्त्यादिषु तथैव च ।
समोभवत् कर्मकाण्डादनुज्ञाय महामते ।। ५२.११ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे द्वापञ्चाशोऽध्यायः ।। ५२ ।।

**भद्राश्व उवाच ।**

मत्प्रश्नविषये ब्रह्मन् कथेयं कथिता त्वया ।
तस्या विभूतिरभवत् कस्य केन कृतेन ह ।। ५३.१ ।।

**अगस्त्य उवाच ।**

आगतेयं कथा चित्रा सर्वस्य विषये स्थिता ।
त्वद्देहे मम देहे च सर्वजन्तुषु सा समा ।। ५३.२ ।।

तस्यां संभूतिमिच्छन् यस्तस्योपायं स्वयं परम् ।
पशुपालात् समुत्पन्नो यश्चतुष्पाच्चतुर्मुखः ।। ५३.३ ।।

स गुरुः स कथायास्तु तस्याश्चैव प्रवर्त्तकः ।
तस्य पुत्रः स्वरो नाम सप्तमूर्तिरसौ स्मृतः ।। ५३.४ ।।

तेन प्रोक्तं तु यत्किंचित् चतुर्णां साधनं नृप ।
ऋगर्थानां चतुर्भिस्ते तद्भक्त्याराध्यतां ययुः ।। ५३.५ ।।

चतुर्णां प्रथमो यस्तु चतुःश्रृङ्गसमास्थितः ।
वृषद्वितीयस्तत्प्रोक्तमार्गेणैव तृतीयकः ।
चतुर्थस्तत्प्रणीतस्तां पूज्य भक्त्या सुतं व्रजेत् ।। ५३.६ ।।

सप्तमूर्त्तेस्तु चरितं शुश्रुंवुः प्रथमं नृप ।
ब्रह्मचर्येण वर्त्तेत द्वितीयोऽस्य सनातनः ।। ५३.७ ।।

ततो भृत्यादिभरणं वृषभारोहणं त्रिषु ।
वनवासश्च निर्द्दिष्ट आत्मस्थे वृषभे सति ।। ५३.८ ।।

अहमस्मि वदत्यन्यश्चतुर्द्धा एकधा द्विधा ।
भेदभिन्नसहोत्पन्नास्तस्यापत्यानि जज्ञिरे ।। ५३.९ ।।

नित्यानित्यस्वरूपाणि दृष्ट्वा पूर्वं चतुर्मुखः ।
चिन्तयामास जनकं कथं पश्याम्यहं नृप ।। ५३.१० ।।

मदीयस्य पितुर्ये हि गुणा आसन् महात्मनः ।
न ते सम्प्रति दृश्यन्ते स्वरापत्येषु केषुचित् ।। ५३.११ ।।

पितुः पुत्रस्य यः पुत्रः स पितामहनामवान् ।
एवं श्रुतिः स्थिता चेयं स्वरापत्येषु नान्यथा ।। ५३.१२ ।।

क्वापि संपत्स्यते भावो द्रष्टव्यश्चापि ते पिता ।
एवं नीतेऽपि किं कार्यमिति चिन्तापरोऽभवत् ।। ५३.१३ ।।

तस्य चिन्तयतः शस्त्रं पितृकं पुरतो बभौ ।
तेन शस्त्रेण तं रोषान्ममन्थ स्वरमन्तिके ।। ५३.१४ ।।

तस्मिन् मथितमात्रे तु शिरस्तस्यापि दुर्ग्रहम् ।
नालिकेरफलाकारं चतुर्वक्त्रोऽन्वपश्यत ।। ५३.१५ ।।

तच्चावृतं प्रधानेन दशधा संवृतो बभौ ।
चतुष्पादेन शस्त्रेण चिच्छेद तिलकाण्डवत् ।। ५३.१६ ।।

प्रकामं तिलसंच्छिन्ने तदमूलौ न मे बभौ ।
अहं त्वहं वदन् भूतं तमप्येवमथाच्छिनत् ।। ५३.१७ ।।

तस्मिन् छिन्ने तदस्यांसे ह्रस्वमन्यमवेक्षत ।
अहं भूतादि वः पञ्च वदन्तं भूतिमन्तिकात् ।। ५३.१८ ।।

तमप्येवमथो छित्त्वा पञ्चाशून्यममीक्षत ।
कृत्वावकाशं ते सर्वे जल्पन्त इदमन्तिकात् ।। ५३.१९ ।।

तमप्यसङ्गशस्त्रेण चिच्छेद तिलकाण्डवत् ।
तस्मिंच्छिन्ने दशांशेन ह्रस्वमन्यमपश्यत ।। ५३.२० ।।

पुरुषं रूपशस्त्रेण तं छित्त्वाऽन्यमपश्यत ।
तद्वद् ह्रस्वं सितं सौम्यं तमप्येवं तदाऽकरोत् ।। ५३.२१ ।।

एवं कृते शरीरं तु ददर्श स पुनः प्रभुः ।
स्वकीयमेवाकस्यान्तः पितरं नृपसत्तम ।। ५३.२२ ।।

त्रसरेणुसमं मूर्त्या अव्यक्तं सर्वजन्तुषु ।
समं दृष्ट्वा परं हर्षं उभे विसस्वरार्त्तवित् ।। ५३.२३ ।।

एवंविधोऽसौ पुरुषः स्वरनामा महातपाः ।
मूर्त्तिस्तस्य प्रवृत्ताख्यं निवृत्ताख्यं शिरो महत् ।। ५३.२४ ।।

एतस्मादेव तस्याशु कथया राजसत्तम ।
संभूतिरभवद् राजन् विवृत्तेस्त्वेष एव तु ।। ५३.२५ ।।

एषेतिहासः प्रथमः सर्वस्य जगतो भृशम् ।
य इमं वेत्ति तत्त्वेन साक्षात् कर्मपरो भवेत् ।। ५३.२६ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे त्रिपञ्चाशोऽध्यायः ।। ५३ ।।

**भद्राश्व उवाच ।**

विज्ञानोत्पत्तिकामस्य क आराध्यो भवेद् द्विज ।
कथं चाराध्यतेऽसौ हि एतदाख्याहि मे द्विज ।। ५४.१ ।।

**अगस्त्य उवाच ।**

विष्णुरेव सदाराध्यः सर्वदेवैरपि प्रभुः ।
तस्योपायं प्रवक्ष्यामि येनासौ वरदो भवेत् ।। ५४.२ ।।

रहस्यं सर्वदेवानां मुनीनां मनुजांस्तथा ।
नारायणः परो देवस्तं प्रणम्य न सीदति ।। ५४.३ ।।

श्रूयते च पुरा राजन् नारदेन महात्मना ।
कथितं तुष्टिदं विष्णोर्व्रतमप्सरसां तथा ।। ५४.४ ।।

नारदस्तु पुरा कल्पे गतवान् मानसं सरः ।
स्नानार्थं तत्र चजापश्यत् सर्वमप्सरसां गणम् ।। ५४.५ ।।

तास्तं दृष्ट्वा विलासिन्यो जटामुकुटधारिणम् ।
अस्थिचर्मावशेषं तु छत्रदण्डकपालिनम् ।। ५४.६ ।।

देवासुरमनुष्याणां दिदृक्षुं कलहप्रियम् ।
ब्रह्मपुत्रं तपोयुक्तं पप्रच्छुस्ता वराङ्गनाः ।। ५४.७ ।।

**अप्सरस ऊचुः ।**

भगवन् ब्रह्मतनय भर्तृकामा वयं द्विज ।
नारायणश्च भर्त्ता नो यथा स्यात् तत् प्रचक्ष्व नः ।। ५४.८ ।।

**नारद उवाच ।**

प्रणामपूर्वकः प्रश्नः सर्वत्र विहितः शुभः ।
स च मे न कृतो गर्वाद् युष्माभिर्यौवनस्मयात् ।। ५४.९ ।।

तथापि देवदेवस्य विष्णोर्यन्नामकीर्तितम् ।
भवतीभिस्तथा भर्त्ता भवत्विति हरिः कृतः ।
तन्नामोच्चारणादेव कृतं सर्वं न संशयः ।। ५४.१० ।।

इदानीं कथयाम्याशु व्रतं येन हरिः स्वयम् ।
वरदत्वमवाप्नोति भर्तृत्वं च नियच्छति ।। ५४.११ ।।

**नारद उवाच ।**

वसन्ते शुक्लपक्षस्य द्वादशी या भवेच्छुभा ।
तस्यामुपोष्य विधिवन् निशायां हरिमर्च्चयेत् ।। ५४.१२ ।।

पर्यङ्कास्तरणं कृत्वा नानाचित्रसमन्वितम् ।
तत्र लक्ष्म्या युतं रौप्यं हरिं कृत्वा निवेशयेत् ।। ५४.१३ ।।

तस्योपरि ततः पुष्पैर्मण्डपं कारयेद् बुधः ।
नृत्यवादित्रगेयैश्च जागरं तत्र कारयेत् ।। ५४.१४ ।।

मनोभवायेति शिर अनङ्गायेति वै कटिम् ।
कामाय बाहुमूले तु सुशास्त्रायेति चोदरम् ।। ५४.१५ ।।

मन्मथायेति पादौ तु हरयेति च सर्वतः ।
पुष्पैः संपूज्य देवेशं मल्लिकाजातिभिस्तथा ।। ५४.१६ ।।

पश्चाच्चतुर आदाय इक्षुदण्डान् सुशोभनान् ।
चतुर्दिक्षु न्यसेत् तस्य देवस्य प्रणतो नृप ।। ५४.१७ ।।

एवं कृत्वा प्रभाते तु प्रदद्याद् ब्राह्मणाय वै ।
वेदवेदाङ्गयुक्ताय संपूर्णाङ्गाय धीमते ।। ५४.१८ ।।

ब्राह्मणांश्च तथा पूज्य व्रतमेतत् समापयेत् ।
एवं कृते तथा विष्णुर्भर्त्ता वो भविता ध्रुवम् ।। ५४.१९ ।।

अकृत्वा मत्प्रणामं तु पृष्टो गर्वेण शोभनाः ।
अवमानस्य तस्यायं विपाको वो भविष्यति ।। ५४.२० ।।

एतस्मिन्नेव सरसि अष्टावक्रो महामुनिः ।
तस्योपहासं कृत्वा तु शापं लप्स्यथ शोभनाः ।। ५४.२१ ।।

व्रतेनानेन देवेशं पतिं लब्ध्वाऽभिमानतः ।
अवमानेऽपहरणं गोपालैर्वो भविष्यति ।
पुरा हर्त्ता च कन्यानां देवो भर्त्ता भविष्यति ।। ५४.२२ ।।

**अगस्त्य उवाच ।**
एवमुक्त्वा स देवर्षिः प्रययौ नारदः क्षणात् ।
ता अप्येतद् व्रतं चक्रुस्तुष्टश्चासां स्वयं हरिः ।। ५४.२३ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे चतुःपञ्चाशोऽध्यायः ।। ५४ ।।

**अगस्त्य उवाच ।**

श्रृणु राजन् महाभाग व्रतानामुत्तमं व्रतम् ।
येन संप्राप्यते विष्णुः शुभेनैव न संशयः ।। ५५.१ ।।

मार्गशीर्षेऽथ मासे तु प्रथमाह्नात् समारभेत् ।
एकभक्तं सिते पक्षे यावत् स्याद् दशमी तिथिः ।। ५५.२ ।।

ततो दशम्यां मध्याह्ने स्नात्वा विष्णुं समर्च्य च ।
भक्त्या संकल्पयेत् प्राग्वद् द्वादशीं पक्षतो नृप ।। ५५.३ ।।

तामप्येवमुषित्वा च यवान् विप्राय दापयेत् ।
कृष्णायेति हरिर्वाच्यो दाने होमे तथार्च्चने ।। ५५.४ ।।

चातुर्मास्यमथैवं तु क्षपित्वा राजसत्तम ।
चैत्रादिषु पुनस्तद्वदुपोष्य प्रयतः सुधीः ।
सक्तुपात्राणि विप्राणां सहिरण्यानि दापयेत् ।। ५५.५ ।।

श्रावणादिषु मासेषु तद्वच्छालिं प्रदापयेत् ।
त्रिषु मासेषु यावच्च कार्त्तिकस्यादिरागतः ।। ५५.६ ।।

तमप्येवं क्षपित्वा तु दशम्यां प्रयतः शुचिः ।
अर्चयित्वा हरिं भक्त्या मासनाम्ना विचक्षणः ।। ५५.७ ।।

संकल्पं पूर्ववद् भक्त्या द्वादश्यां संयतेन्द्रियः ।
एकादश्यां यथाशक्त्या कारयेत् पृथिवीं नृप ।। ५५.८ ।।

काञ्चनाङ्गां च पातालकुलपर्वतसंयुताम् ।
भूमिन्यासविधानेन स्थापयेत् तां हरेः पुरः ।। ५५.९ ।।

सितवस्त्रयुगच्छन्नां सर्वबीजसमन्विताम् ।
संपूज्य प्रियदत्तेति पञ्चरत्नैर्विचक्षणः ।। ५५.१० ।।

जागरं तत्र कुर्वीत प्रभाते तु पुनर्द्विजान् ।
आमन्त्र्यं संख्यया राजंश्चतुर्विंशति यावतः ।। ५५.११ ।।

तेषां एकैकशो गां च अनड्वाहं च दापयेत् ।
एकैकं वस्त्रयुग्मं च अङ्गुलीयकमेव च ।। ५५.१२ ।।

कटकानि च सौवर्णकर्णाभरणकानि च ।
एकैकं ग्राममेतेषां राजा राजन् प्रदापयेत् ।। ५५.१३ ।।

तन्मध्यमं सयुग्मं तु सर्वमाद्यं प्रदापयेत् ।

स्वशक्त्याभरणं चैव दरिद्रस्य स्वशक्तितः ।। ५५.१४ ।।

यथाशक्त्या महीं कृत्वा काञ्चनीं गोयुगं तथा ।
वस्त्रयुग्मं च दातव्यं यथाविभवशक्तितः ।। ५५.१५ ।।

गां युग्माभरणात् सर्वं सहिरण्यं च कारयेत् ।
एवं कृते तथा कृष्णशुक्लद्वादश्यमेव च ।। ५५.१६ ।।

रौप्यां वा पृथिवीं कृत्वा यथाविभवशक्तितः ।
दापयेद् ब्राह्मणानां तु तथा तेषां च भोजनम् ।
उपानहौ यथाशक्त्या पादुके छत्रिकां तथा ।। ५५.१७ ।।

एतान् दत्त्वा वदेदेवं कृष्णो दामोदरो मम ।
प्रीयतां सर्वदा देवो विश्वरूपो हरिर्मम ।। ५५.१८ ।।

दाने च भोजने चैव कृत्वा यत् फलमाप्यते ।
तन्न शक्यं सहस्त्रेण वर्षाणामपि कीर्तितुम् ।। ५५.१९ ।।

तथाप्युद्देशतः किञ्चित् फलं वक्ष्यामि तेऽनघ ।
व्रतस्यास्य पुरा वृत्तं शुभान्यस्य श्रृणुष्व तत् ।। ५५.२० ।।

आसीदादियुगे राजा ब्रह्मवादी दृढव्रतः ।
स पुत्रकामः पप्रच्छ ब्रह्माणं परमेष्ठिनम् ।
तस्येदं व्रतमाचख्यौ ब्रह्मा स कृतवांस्तथा ।। ५५.२१ ।।

तस्य व्रतान्ते विश्वात्मा स्वयं प्रत्यक्षतां ययौ ।
तुष्टश्चोवाच भो राजन् वरो मे व्रियतां वरः ।। ५५.२२ ।।

**राजोवाच ।**
पुत्रं मे देहि देवेश वेदमन्त्रविशारदम् ।
याजकं यजनासक्तं कीर्त्या युक्तं चिरायुषम् ।
असंख्यातगुणं चैव ब्रह्मभूतमकल्मषम् ।। ५५.२३ ।।

एवमुक्त्वा ततो राजा पुनर्वचनमब्रवीत् ।
ममाप्यन्ते शुभं स्थानं प्रयच्छ परमेश्वर ।
यत्तन्मुनिपदं नाम यत्र गत्वा न शोचति ।। ५५.२४ ।।

एवमस्त्विति तं देवः प्रोक्त्वा चादर्शनं गतः ।
तस्यापि राज्ञः पुत्रोऽभूद् वत्सप्रीर्नाम नामतः ।। ५५.२५ ।।

वेदवेदाङ्गसंपन्नो यज्ञयाजी बहुश्रुतः ।
तस्य कीर्त्तिर्महाराज विस्तृता धरणीतले ।। ५५.२६ ।।

राजाऽपि तं सुतं लब्ध्वा विष्णुदत्तं प्रतापिनम् ।
जगाम तपसे युक्तः सर्वद्वन्द्वान् प्रहाय सः ।। ५५.२७ ।।

आराधयामास हरिं निराहारो जितेन्द्रियः ।
हिमवत्पर्वते रम्ये स्तुतिं कुर्वंस्तदा नृपः ।। ५५.२८ ।।

**भद्राश्व उवाच ।**
कीदृशी सा स्तुतिर्ब्रह्मन् यां चकार स पार्थिवः ।
किं च तस्याभवद् देवं स्तुवतः पुरुषोत्तमम् ।। ५५.२९ ।।

**दुर्वासा उवाच ।**
हिमवन्तं समाश्रित्य राजा तद्गतमानसः ।
स्तुतिं चकार देवाय विष्णवे प्रभविष्णवे ।। ५५.३० ।।

**राजोवाच ।**
क्षराक्षरं क्षीरसमुद्रशायिनं
क्षितीधरं मूर्तिमतां परं पदम् ।
अतीन्द्रियं विश्वभुजां पुरः कृतं
निराकृतं स्तौमि जनार्दनं प्रभुम् ।। ५५.३१ ।।

त्वमादिदेवः परमार्थरूपी
विभुः पुराणः पुरुषोत्तमश्च ।
अतीन्द्रियो वेदविदां प्रधानः
प्रपाहि मां शङ्खगदास्त्रपाणे ।। ५५.३२ ।।

कृतं त्वया देव सुरासुराणां
संकीर्त्यतेऽसौ च अनन्तमूर्ते ।
सृष्ट्यर्थमेतत् तव देव विष्णो
न चेष्टितं कूटगतस्य तत्स्यात् ।। ५५.३३ ।।

तथैव कूर्मत्वमृगत्वमुच्चै -
स्त्वया कृतं रूपमनेकरूप ।
सर्वज्ञभावादसकृच्च जन्म
संकीर्त्त्यते तेऽच्युत नैतदस्ति ।। ५५.३४ ।।

नृसिंह नमो वामन जमदग्निनाम
दशास्यगोत्रान्तक वासुदेव ।
नमोऽस्तु ते बुद्ध कल्किन् खगेश
शंभो नमस्ते विबुधारिनाशन ।। ५५.३५ ।।

नमोऽस्तु नारायण पद्मनाभ
नमो नमस्ते पुरुषोत्तमाय ।
नमः समस्तामरसङ्घपूज्य
नमोऽस्तु ते सर्वविदां प्रधान ।। ५५.३६ ।।

नमः करालास्य नृसिंहमूर्त्ते
नमो विशालाद्रिसमान कूर्म ।
नमः समुद्रप्रतिमान मत्स्य
नमामि त्वां क्रोडरूपिननन्त ।। ५५.३७ ।।

सृष्ट्यर्थमेतत् तव देव चेष्टितं
न मुख्यपक्षे तव मूर्त्तिता विभो ।
अजानता ध्यानमिदं प्रकाशितं
नैभिर्विना लक्ष्यसे त्वं पुराण ।। ५५.३८ ।।

आद्यो मखस्त्वं स्वयमेव विष्णो
मखाङ्गभूतोऽसि हविस्त्वमेव ।
पशुर्भवान् ऋत्विगिज्यं त्वमेव
त्वां देवसङ्घा मुनयो यजन्ति ।। ५५.३९ ।।

यदेतस्मिन् जगध्रुवं चलाचलं
सुरादिकालानलसंस्थमुत्तमम् ।
न त्वं विभक्तोऽसि जनार्दनेश
प्रयच्छ सिद्धिं हृदयेप्सितां मे ।। ५५.४० ।।

नमः कमलपत्राक्ष मूर्त्तामूर्त्त नमो हरे ।
शरणं त्वां प्रपन्नोऽस्मि संसारान्मां समुद्धर ।। ५५.४१ ।।

एवं स्तुतस्तदा देवस्तेन राज्ञा महात्मना ।
विशालाम्रतलस्थेन तुतोष परमेश्वरः ।। ५५.४२ ।।

कुब्जरूपी ततो भूत्वा आजगाम हरिः स्वयम् ।
तस्मिन्नागतमात्रे तु सीप्याम्रः कुब्जकोऽभवत् ।। ५५.४३ ।।

तं दृष्ट्वा महदाश्चर्यं स राजा संशितव्रतः ।
विशालस्य कथं कौब्ज्यमिति चिन्तापरोभवत् ।। ५५.४४ ।।

तस्य चिन्तयतो बुद्धिर्बभौ तं ब्राह्मणं प्रति ।
अनेनागतमात्रेण कृतमेतन्न संशयः ।। ५५.४५ ।।

तस्मादेषैव भविता भगवान् पुरुषोत्तमः ।

एवमुक्त्वा नमश्चक्रे तस्य विप्रस्य स नृपः ।। ५५.४६ ।।

अनुग्रहाय भगवन् नूनं त्वं पुरुषोत्तमः ।
आगतोऽसि स्वरूपं मे दर्शयस्वाधुना हरे ।। ५५.४७ ।।

एवमुक्तस्तदा देवः शङ्खचक्रगदाधरः ।
बभौ तत्पुरतः सौम्यो वाक्यं चेदमुवाच ह ।। ५५.४८ ।।

वरं वृणीष्व राजेन्द्र यत्ते मनसि वर्तते ।
मयि प्रसन्ने त्रैलोक्य तिलमात्रमिदं नृप ।। ५५.४९ ।।

एवमुक्तस्ततो राजा हर्षोत्फुल्लितलोचनः ।
मोक्षं प्रयच्छ देवेशेत्युक्त्वा नोवाच किंचन ।। ५५.५० ।।

एवमुक्तः स भगवान् पुनर्वाक्यमुवाच ह ।
मय्यागते विशालोऽयमाम्रः कुब्जत्वमागतः ।
यस्मात् तस्मात् तीर्थमिदं कुब्जकाम्रं भविष्यति ।। ५५.५१ ।।

तिर्यग्योन्यादयोऽप्यस्मिन् ब्राह्मणान्ता यदि स्वकम् ।
कलेवरं त्यजिष्यन्ति तेषां पञ्चशतानि च ।
विमानानि भविष्यन्ति योगिनां मुक्तिरेव च ।। ५५.५२ ।।

एवमुक्त्वा नृपं देवः शङ्खाग्रेण जनार्दनः ।
पस्पर्श स्पृष्टमात्रोऽसौ परं निर्वाणमाप्तवान् ।। ५५.५३ ।।

तस्मात्त्वमपि राजेन्द्र तं देवं शरणं व्रज ।
येन भूयः पुनः शोच्यपदवीं नो प्रयास्यसि ।। ५५.५४ ।।

य इदं श्रृणुयान्नित्यं प्रातरुत्थाय मानवः ।
पठेद् यश्चरितं ताभ्यां मोक्षधर्मार्थदो भवेत् ।। ५५.५५ ।।

शुभव्रतमिदं पुण्यं यश्च कुर्याज्जनेश्वर ।
स सर्वसम्पदं चेह भुक्त्वेते तल्लयं व्रजेत् ।। ५५.५६ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे पञ्चपञ्चाशोऽध्यायः ।। ५५ ।।

**अगस्त्य उवाच ।**

अतः परं प्रवक्ष्यामि धन्यव्रतमनुत्तमम् ।
येन सद्यो भवेद् धन्य अधन्योऽपि हि यो भवेत् ।। ५६.१ ।।

मार्गशीर्षे सिते पक्षे प्रतिपद् या तिथिर्भवेत् ।
तस्यां नक्तं प्रकुर्वीत विष्णुमग्निं प्रपूजयेत् ।। ५६.२ ।।

वैश्वानराय पादौ तु अग्नयेत्युदरं तथा ।
हविर्भुजाय च उरो द्रविणोदेति वै भुजो ।। ५६.३ ।।

संवर्त्तायेति च शिरो ज्वलनायेति सर्वतः ।
अभ्यर्च्यैवं विधानेन देवदेवं जनार्दनम् ।। ५६.४ ।।

तस्यैव पुरतः कुण्डं कारयित्वा विघानतः ।
होमं तत्र प्रकुर्वीत एभिर्मन्त्रैर्विचक्षणः ।। ५६.५ ।।

ततः संयावकं चान्नं भुञ्जीयाद् घृतसंयुतम् ।
कृष्णपक्षेऽप्येवमेव चातुर्मास्यं तु यावतः ।। ५६.६ ।।

चैत्रादिषु च भुञ्जीत पायसं सघृतं बुधः ।
श्रावणादिषु सक्तूंश्च ततश्चैतत् समाप्यते ।। ५६.७ ।।

समाप्ते तु व्रते वह्निं काञ्चनं कारयेद् बुधः ।
रक्तवस्त्रयुगच्छन्नं रक्तपुष्पानुलेपनम् ।। ५६.८ ।।

कुङ्कुमेन तथा लिप्य ब्राह्मणं देवदेव च ।
सर्वावयवसंपूर्णं ब्राह्मणं प्रियदर्शनम् ।। ५६.९ ।।

पूजयित्वा विधानेन रक्तवस्त्रयुगेन च ।
पश्चात् तं दापयेत् तस्य मन्त्रेणानेन बुद्धिमान् ।। ५६.१० ।।

धन्योऽस्मि धन्यकर्माऽस्मि धन्यचेष्टोऽस्मि धन्यवान् ।
धन्येनानेन चीर्णेन व्रतेन स्यां सदा सुखी ।। ५६.११ ।।

एवमुच्चार्य तं विप्रे न्यस्य कोशं महात्मनः ।
सद्यो धन्यत्वमाप्नोति योऽपि स्याद् भाग्यवर्जितः ।। ५६.१२ ।।

इह जन्मनि सौभाग्यं धनं धान्यं च पुष्कलम् ।

अनेन कृतमात्रेण जायते नात्र संशयः ।। ५६.१३ ।।

प्राग्जन्मजनितं पापमग्निर्दहति तस्य ह ।
दग्धे पापे विमुक्तात्मा इह जन्मन्यसौ भवेत् ।। ५६.१४ ।।

योऽपीदं श्रृणुयान्नित्यं यश्च भक्त्या पठेद् द्विजः ।
उभौ ताविह लोके तु धन्यौ सद्यो भविष्यतः ।। ५६.१५ ।।

श्रूयते च व्रतं चैतच्चीर्णमासीन्महात्मना ।
धनदेन पुरा कल्पे शूद्रयोनौ स्थितेन तु ।। ५६.१६ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे षट्पञ्चाशोऽध्यायः ।। ५६ ।।

**अगस्त्य उवाच ।**

अतः परं प्रवक्ष्यामि कान्तिव्रतमनुत्तमम् ।
यत्कृत्वा तु पुरा सोमः कान्तिमानभवत् पुनः ।। ५७.१ ।।

यक्ष्मणा दक्षशापेन पुराक्रान्तो निशाकरः ।
एतच्चीर्त्वा व्रतं सद्यः कान्तिमानभवत् किल ।। ५७.२ ।।

द्वितीयायां तु राजेन्द्र कार्त्तिकस्य सिते दिने ।
नक्तं कुर्वीत यत्नेन अर्चयन् बलकेशवम् ।। ५७.३ ।।

बलदेवाय पादौ तु केशवाय शिरोऽर्चयेत् ।
एवमभ्यर्च्य मेधावी वैष्णवं रूपमुत्तमम् ।। ५७.४ ।।

परस्वरूपं सोमाख्यं द्विकलं तद्दिने हि यत् ।
तस्यार्घं दापयेद् धीमान् मन्त्रेण परमेष्ठिनः ।। ५७.५ ।।

नमोऽस्त्वमृतरूपाय सर्वौषधिनृपाय च ।
यज्ञलोकाधिपतये सोमाय परमात्मने ।। ५७.६ ।।

अनेनैव च मार्गेण दत्त्वार्घ्यं परमेष्ठिनः ।
रात्रौ सविप्रो भुञ्जीत यवान्नं सघृतं नरः ।। ५७.७ ।।

फाल्गुनादिचतुष्के तु पायसं भोजयेच्छुचिः ।
शालिहोमं तु कुर्वीत कार्त्तिके तु यवैस्तथा ।। ५७.८ ।।

आषाढादिचतुष्के तु तिलहोमं तु कारयेत् ।
तद्वत् तिलान्नं भुञ्जीत एष एव विधिक्रमः ।। ५७.९ ।।

ततः संवत्सरे पूर्णे शशिनं कृतराजतम् ।
सितवस्त्रयुगच्छन्नं सितपुष्पानुलेपनम् ।
एवमेव द्विजं पूज्य ततस्तं प्रतिपादयेत् ।। ५७.१० ।।

कान्तिमानपि लोकेऽस्मिन् सर्वज्ञः प्रियदर्शनः ।
त्वत्प्रसादात् सोमरूपिन् नारायण नमोऽस्तु ते ।। ५७.११ ।।

अनेन किल मन्त्रेण दत्त्वा विप्राय वाग्यतः ।
दत्तमात्रे ततस्तस्मिन् कान्तिमान् जायते नरः ।। ५७.१२ ।।

आत्रेयेणापि सोमेन कृतमेतत् पुरा नृप ।
तस्य व्रतान्ते संतुष्टः स्वयमेव जनार्दनः ।
यक्ष्माणमपनीयाशु अमृताख्यां कलां ददौ ।। ५७.१३ ।।

तां कलां सोमराजाऽसौ तपसा लब्धवानिति ।
सोमत्वं चागमत् सोऽस्य ओषधीनां पतिर्बभौ ।। ५७.१४ ।।

द्वितीयामश्विनौ सोमभुजौ कीर्त्यते तद्दिने नृप ।
तौ शेषविष्णू विख्यातौ मुख्यपक्षौ न संशयः ।। ५७.१५ ।।

न विष्णोर्व्यतिरिक्तं स्याद् दैवतं नृपसत्तम ।
नामभेदेन सर्वत्र संस्थितः परमेश्वरः ।। ५७.१६ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे सप्तपञ्चाशोऽध्यायः ।। ५७ ।।

**अगस्त्य उवाच ।**

अतः परं महाराज सौभाग्यकरणं व्रतम् ।
श्रृणु येनाशु सौभाग्यं स्त्रीपुंसामुपजायते ।। ५८.१ ।।

फाल्गुनस्य तु मासस्य तृतीया शुक्लपक्षतः ।
उपासितव्या नक्तेन शुचिना सत्यवादिना ।। ५८.२ ।।

सश्रीकं च हरिं पूज्य रुद्रं वा चोमया सह ।
या श्रीः सा गिरिजा प्रोक्ता यो हरिः स त्रिलोचनः ।। ५८.३ ।।

एवं सर्वेषु शास्त्रेषु पुराणेषु च पठ्यते ।
एतस्मादन्यथा यस्तु ब्रूते शास्त्रं पृथक्तया ।। ५८.४ ।।

रुद्रो जनानां मर्त्यानां काव्यं शास्त्रं न तद्भवेत् ।
विष्णुं रुद्रकृतं ब्रूयात् श्रीगौरी न तु पार्थिव ।
तन्नास्तिकानां मर्त्यानां काव्यं ज्ञेयं विचक्षणैः ।। ५८.५ ।।

एवं ज्ञात्वा सलक्ष्मीकं हरिं संपूज्य भक्तितः ।
मन्त्रेणानेन राजेन्द्र ततस्तं परमेश्वरम् ।। ५८.६ ।।

गम्भीरायेति पादौ तु सुभगायेति वै कटिम् ।
उदरं देवदेवेति त्रिनेत्रायेति वै मुखम् ।
वाचस्पतये च शिरो रुद्रायेति च सर्वतः ।। ५८.७ ।।

एवमभ्यर्च्य मेधावी विष्णुं लक्ष्म्या समन्वितम् ।
हरं वा गौरिसंयुक्तं गन्धपुष्पादिभिः क्रमात् ।। ५८.८ ।।

ततस्तस्याग्रतो होमं कारयेन्मधुसर्पिषा ।
तिलैः सह महाराज सौभाग्यपतयेति च ।। ५८.९ ।।

ततस्त्वक्षारविरसं निस्नेहं धरणीतले ।
गोधूमान्नं तु भुञ्जीत कृष्णेप्येवं विधिः स्मृतः ।
आषाढादिद्वितीयां तु पारणं तत्र भोजनम् ।। ५८.१० ।।

यवान्नं तु ततः पश्चात् कार्त्तिकादिषु पार्थिव ।
श्यामाकं तत्र भुञ्जीत त्रीन् मासान् नियतः शुचिः ।। ५८.११ ।।

ततो माघसिते पक्षे तृतीयायां नराधिप ।
सौवर्णां कारयेद् गौरीं रुद्रं चैकत्र बुद्धिमान् ।। ५८.१२ ।।

सलक्ष्मीकं हरिं चापि यथाशक्त्या प्रसन्नधीः ।
ततस्तं ब्राह्मणे दद्यात् पात्रभूते विचक्षणे ।। ५८.१३ ।।

अन्नेन हीने वेदानां पारगे साधुवर्तिनि ।
सदाचारेति वा दद्यादल्पवित्ते विशेषतः ।। ५८.१४ ।।

षड्भिः पात्रैरुपेतं तु ब्राह्मणाय निवेदयेत् ।
एकं मधुमयं पात्रं द्वितीयं घृतपूरितम् ।। ५८.१५ ।।

तृतीयं तिलतैलस्य चतुर्थं गुडसंयुतम् ।
पञ्चमं लवणैः पूर्णं षष्ठं गोक्षीरसंयुतम् ।। ५८.१६ ।।

एतानि दत्त्वा पात्राणि सप्तजन्मान्तरं भवेत् ।
सुभगो दर्शनीयश्च नारी वा पुरुषोऽपि वा ।। ५८.१७ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे अष्टपञ्चाशोऽध्यायः ।। ५८ ।।

**अगस्त्य उवाच ।**

अथाविघ्नकरं राजन् कथयामि श्रृणुष्व मे ।
येन सम्यक् कृतेनापि न विघ्नमुपजायते ।। ५९.१ ।।

चतुर्थ्यां फाल्गुने मासि ग्रहीतव्यं व्रतं त्विदम् ।
नक्ताहारेण राजेन्द्र तिलान्नं पारणं स्मृतम् ।
तदेवाग्नौ तु होतव्यं ब्राह्मणाय च तद् भवेत् ।। ५९.२ ।।

चातुर्मास्यं व्रतं चैतत् कृत्वा वै पञ्च मे तथा ।
सौवर्णं गजवक्त्रं तु कृत्वा विप्राय दापयेत् ।। ५९.३ ।।

पायसैः पञ्चभिः पात्रैरुपेतं तु तिलैस्तथा ।
एवं कृत्वा व्रतं चैतत् सर्वविघ्नैर्विमुच्यते ।। ५९.४ ।।

हयमेधस्य विघ्ने तु संजाते सगरः पुरा ।
एतदेव चरित्वा तु हयमेधं समाप्तवान् ।। ५९.५ ।।

तथा रुद्रेण देवेन त्रिपुरं निघ्नता पुरा ।
एतदेव कृतं तस्मात् त्रिपुरं तेन पातितम् ।
मया समुद्रं पिबता एतदेव कृतं व्रतम् ।। ५९.६ ।।

अन्यैरपि महीपालैरेतदेव कृतं पुरा ।
तपोऽर्थिभिर्ज्ञानकृतैर्निर्विघ्नार्थे परंतप ।। ५९.७ ।।

शूराय धीराय गजाननाय
लम्बोदरायैकदंष्ट्राय चैव ।
एवं पूज्यस्तद्दिने तत् पुनश्च
होमं कुर्याद् विघ्नविनाशहेतोः ।। ५९.८ ।।

अनेन कृतमात्रेण सर्वविघ्नैर्विमुच्यते ।
विनायकस्य कृपया कृतकृत्यो नरो भवेत् ।। ५९.९ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे नवपञ्चाशोऽध्यायः ।। ५९ ।।

**अगस्त्य उवाच ।**
शान्तिव्रतं प्रवक्ष्यामि तव राजन् श्रृणुष्व तत् ।
येन चीर्णेन शान्तिः स्यात् सर्वदा गृहमेधिनाम् ।। ६०.१ ।।

पञ्चम्यां शुक्लपक्षस्य कार्त्तिके मासि सुव्रत ।
आरभेद् वर्षमेकं तु भुञ्जीयादम्लवर्जितम् ।। ६०.२ ।।

नक्तं देवं तु संपूज्य हरिं शेषोपरि स्थितम् ।
अनन्तायेति पादौ तु वासुकायेति वै कटिम् ।। ६०.३ ।।

तक्षकायेति जठरमुरः कर्कोटकाय च ।
पद्माय कण्ठं संपूज्य महापद्माय दोर्युगम् ।। ६०.४ ।।

शङ्खपालाय वक्त्रं तु कुटिलायेति वै शिरः ।
एवं विष्णुगतं पूज्य पृथक्त्वेन च पूजयेत् ।। ६०.५ ।।

क्षीरेण स्नपनं कुर्यात् तानुद्दिश्य हरेः पुनः ।
तदग्रे होमयेत् क्षीरं तिलैः सह विचक्षणः ।। ६०.६ ।।

एवं संवत्सरस्यान्ते कुर्याद् ब्राह्मणभोजनम् ।
नागं तु काञ्चनं कुर्याद् ब्राह्मणाय निवेदयेत् ।। ६०.७ ।।

एवं यः कुरुते भक्त्या व्रतमेतन्नराधिपः ।
तस्य शान्तिर्भवेन्नित्यं नागानां न भयं तथा ।। ६०.८ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे षष्टितमोऽध्यायः ।। ६० ।।

**अगस्त्य उवाच ।**

कामव्रतं महाराज श्रृणु मे गदतोऽधुना ।
येन कामाः समृद्ध्यन्ते मनसा चिन्तिता अपि ।। ६१.१ ।।

षष्ठ्यां फलाशनो यस्तु वर्षमेकं व्रतं चरेत् ।
पौषमाससिते पक्षे चतुर्थ्यां कृतभोजनः ।। ६१.२ ।।

षष्ठ्यां तु पारयेद् धीमान् प्रथमं तु फलं नृप ।
ततो भुञ्जीत यत्नेन वाग्यतः शुद्धमोदनम् ।। ६१.३ ।।

ब्राह्मणैः सह राजेन्द्र अथवा केवलैः फलैः ।
तमेकं दिवसं स्थित्वा सप्तम्यां पारयेन्नृप ।। ६१.४ ।।

अग्निकार्यं तु कुर्वीत गुहरूपेण केशवम् ।
पूजयित्वाभिधानेन वर्षमेकं व्रतं चरेत् ।। ६१.५ ।।

षड्वक्त्र कार्त्तिक गुह सेनानी कृत्तिकासुत ।
कुमार स्कन्द इत्येवं पूज्यो विष्णुः स्वनामभिः ।। ६१.६ ।।

समाप्तौ तु व्रतस्यास्य कुर्याद् ब्राह्मणभोजनम् ।
षण्मुखं सर्वसौवर्णं ब्राह्मणाय निवेदयेत् ।। ६१.७ ।।

सर्वे कामाः समृद्ध्यन्तां मम देव कुमारक ।
त्वत्प्रसादादिमं भक्त्या गृह्यतां विप्र माचिरम् ।। ६१.८ ।।

अनेन दत्त्वा मन्त्रेण ब्राह्मणाय सयुग्मकम् ।
ततः कामाः समृद्ध्यन्ते सर्वे वै इह जन्मनि ।। ६१.९ ।।

अपुत्रो लभते पुत्रमधनो लभते धनम् ।
भ्रष्टराज्यो लभेद् राज्यं नात्र कार्या विचारणा ।। ६१.१० ।।

एतद् व्रतं पुरा चीर्णं नलेन नृपसत्तम ।
ॠतुपर्णस्य विषये वसता व्रतचर्यया ।। ६१.११ ।।

तथा राज्यच्युतैरन्यैर्बहुभिर्नृपसत्तमैः ।
पौराणिकं व्रतं चैव सिद्ध्यर्थं नृपसत्तम ।। ६१.१२ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे एकषष्टितमोऽध्यायः ।। ६१ ।।

**अगस्त्य उवाच ।**
अथापरं महाराज व्रतमारोग्यसंज्ञितम् ।
कथयामि परं पुण्यं सर्वपापप्रणाशनम् ।। ६२.१ ।।

तस्यैव माघमासस्य सप्तम्यां समुपोषितः ।
पूजयेद् भास्करं देवं विष्णुरूपं सनातनम् ।। ६२.२ ।।

आदित्य भास्कर रवे भानो सूर्य दिवाकर ।
प्रभाकरेति संपूज्य एवं संपूज्यते रविः ।। ६२.३ ।।

षष्ठ्यां चैव कृताहारः सप्तम्यां भानुमर्चयेत् ।
अष्टम्यां चैव भुञ्जीत एष एव विधिक्रमः ।। ६२.४ ।।

अनेन वत्सरं पूर्णं विधिना योऽर्चयेद् रविम् ।
तस्यारोग्यं धनं धान्यमिह जन्ममि जायते ।
परत्र च शुभं स्थानं यद् गत्वा न निवर्तते ।। ६२.५ ।।

सार्वभौमः पुरा राजा अनरण्यो महाबलः ।
तेनायमर्चितो देवो व्रतेनानेन पार्थिव ।
तस्य तुष्टो वरं देवः प्रादादारोग्यमुत्तमम् ।। ६२.६ ।।

**भद्राश्व उवाच ।**
किमसौ रोगवान् राजा येनारोग्यमवाप्तवान् ।
सार्वभौमस्य च कथं ब्रह्मन् रोगस्य संभवः ।। ६२.७ ।।

**अगस्त्य उवाच ।**
स राजा सार्वभौमोऽभूद् यशस्वी च सुरूपवान् ।
स कदाचिन्नृपश्रेष्ठो नृपश्रेष्ठ महाबलः ।।६२.८ ।।

गतवान् मानसं दिव्यं सरो देवगणान्वितम् ।
तत्रापश्यद् बृहद् पद्मं सरोमध्यगतं सितम् ।। ६२.९ ।।

तत्र चाङ्गुष्ठमात्रं तु स्थितं पुरुषसत्तमम् ।
रक्तवासोभिराछन्नं द्विभुजं तिग्मतेजसम् ।। ६२.१० ।।

तं दृष्ट्वा सारथिं प्राह पद्ममेतत् समानय ।
इदं तु शिरसा बिभ्रत् सर्वलोकस्य सन्निधौ ।
श्लाघनीयो भविष्यामि तस्मादाहर माचिरम् ।। ६२.११ ।।

एवमुक्तस्तदा तेन सारथिः प्रविवेश ह ।
ग्रहीतुमुपचक्राम तं पद्मं नृपसत्तम ।। ६२.१२ ।।

स्पृष्टमात्रे ततः पद्मे हुङ्कारः समजायत ।
तेन शब्देन स त्रस्तः पपात च ममार च ।। ६२.१३ ।।

राजा च तत्क्षणात् तेन शब्देन समपद्यत ।
कुष्ठी विगतवर्णश्च बलवीर्यविवर्जितः ।। ६२.१४ ।।

तथागतमथात्मानं दृष्ट्वा स पुरुषर्षभः ।
तस्थौ तत्रैव शोकार्त्तः किमेतदिति चिन्तयन् ।। ६२.१५ ।।

तस्य चिन्तयतो धीमानाजगाम महातपाः ।
वसिष्ठो ब्रह्मपुत्रोऽथ तं स पप्रच्छ पार्थिवम् ।। ६२.१६ ।।

कथं ते राजशार्दूल तव देहस्य शासनम् ।
इदानीमेव किं कार्यं तन्ममाचक्ष्व पृच्छतः ।। ६२.१७ ।।

एवमुक्तस्ततो राजा वसिष्ठेन महात्मना ।
सर्वं पद्मस्य वृत्तान्तं कथयामास स प्रभुः ।। ६२.१८ ।।

तं श्रुत्वा स मुनिस्तत्र साधु राजन्नथाब्रवीत् ।
असाधुरथ वा तिष्ठ तस्मात् कुष्ठित्वमागतः ।। ६२.१९ ।।

एवमुक्तस्तदा राजा वेपमानः कृताञ्जलिः ।
पप्रच्छ साध्वहं विप्र कथं वाऽसाध्वहं मुने ।
कथं च कुष्ठं मे जातमेतन्मे वक्तुमर्हसि ।। ६२.२० ।।

**वसिष्ठ उवाच ।**
एतद् ब्रह्मोद्भवं नाम पद्मं त्रैलोक्यविश्रुतम् ।
दृष्टमात्रेण चानेन दृष्टाः स्युः सर्वदेवताः ।
एतस्मिन् दृश्यते चैतत् षण्मासं क्वापि पार्थिव ।। ६२.२१ ।।

एतस्मिन् दृष्टमात्रे तु यो जलं विशते नरः ।
सर्वपापविनिर्मुक्तः परं निर्वाणमर्हति ।। ६२.२२ ।।

ब्रह्मणः प्रागवस्थाया मूर्तिरप्सु व्यवस्थिता ।
एतां दृष्ट्वा जले मग्नः संसाराद् विप्रमुच्यते ।। ६२.२३ ।।

इमं च दृष्ट्वा ते सूतो जले मग्नो नरोत्तम ।
प्रविष्टश्च पुनरिमं हर्तुमिच्छन्नराधिप ।
प्राप्तवानसि दुर्बुद्धे कुष्ठित्वं पापपूरुष ।। ६२.२४ ।।

दृष्टमेतत् त्वया यस्मात् त्वं साध्विति ततः प्रभो ।
मयोक्तो मोहमापन्नस्तेनासाधुरितीरितः ।। ६२.२५ ।।

ब्रह्मपुत्रो ह्यहं चेमं पश्यामि परमेश्वरम् ।
अहन्यहनि चागच्छंस्तं पुनर्दृष्टवानसि ।। ६२.२६ ।।

देवा अपि वदन्त्येते पद्मं काञ्चनमुत्तमम् ।
मानसे ब्रह्मपद्मं तु दृष्ट्वा चात्र गतं हरिम् ।
प्राप्स्यामस्तत् परं ब्रह्म यद् गत्वा न पुनर्भवेत् ।। ६२.२७ ।।

इदं च कारणं चान्यत् कुष्ठस्य श्रृणु पार्थिव ।
आदित्यः पद्मगर्भेऽस्मिन् स्वयमेव व्यवस्थितः ।। ६२.२८ ।।

तं दृष्ट्वा तत्त्वतो भावः परमात्मैष शाश्वतः ।
धारयामि शिरस्येनं लोकमध्ये विभूषणम् ।। ६२.२९ ।।

एवं ते जल्पता पापमिदं देवेन दर्शितम् ।
इदानीमिममेव त्वमाराधय महामते ।। ६२.३० ।।

**अगस्त्य उवाच ।**
एवमुक्त्वा वसिष्ठस्तु इममेव व्रतं तदा ।
आदित्याराधनं दिव्यमारोग्याख्यं जगाद ह ।। ६२.३१ ।।

सोऽपि राजाऽकरोच्चेमं व्रतं भक्तिसमन्वितः ।
सिद्धिं च परमां प्राप्तो विरोगश्चाभवत् क्षणात् ।। ६२.३२ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे द्विषष्टितमोऽध्यायः ।। ६२ ।।

**अगस्त्य उवाच ।**

अथापरं महाराज पुत्रप्राप्तिव्रतं शुभम् ।
कथयामि समासेन तन्मे निगदतः श्रृणु ।। ६३.१ ।।

मासे भाद्रपदे या तु कृष्णपक्षे नरेश्वर ।
अष्टम्यामुपवासेन पुत्रप्राप्तिव्रतं हि तत् ।। ६३.२ ।।

षष्ठ्यां चैव तु संकल्प्य सप्तम्यामर्चयेद् हरिम् ।
देवक्युत्सङ्गगं देवं मातृभिः परिवेष्टितम् ।। ६३.३ ।।

प्रभाते विमलेऽष्टम्यामर्चयेत् प्रयतो हरिम् ।
प्राग्विधानेन गोविन्दमर्चयित्वा विधानतः ।। ६३.४ ।।

ततो यवैः कृष्णतिलैः सघृतैर्होमयेद् दधि ।
ब्राह्मणान् भोजयेद् भक्त्या यथाशक्त्या सदक्षिणान् ।। ६३.५ ।।

ततः स्वयं तु भुञ्जीत प्रथमं बिल्वमुत्तमम् ।
पश्चाद् यथेष्टं भुञ्जीत स्नेहैः सर्वरसैर्युतम् ।। ६३.६ ।।

प्रतिमासमनेनैव विधिनोपोष्य मानवः ।
कृष्णाष्टमीमपुत्रोऽपि लभेत् पुत्रं न संशयः ।। ६३.७ ।।

श्रूयते च पुरा राजा शूरसेनः प्रतापवान् ।
स ह्यपुत्रस्तपस्तेपे हिमवत्पर्वतोत्तमे ।। ६३.८ ।।

तस्यैवं कुर्वतो देवो व्रतमेतज्जगाद ह ।
सोऽप्येतत् कृतवान् राजा पुत्रं चैवोपलब्धवान् ।। ६३.९ ।।

वसुदेवं महाभागमनेकक्रतुयाजिनम् ।
तं लब्ध्वा सोऽपि राजर्षिः परं निर्वाणमापत्वान् ।। ६३.१० ।।

एवं कृष्णाष्टमी राजन् मया ते परिकीर्तिता ।
संवत्सरान्ते दातव्यं कृष्णयुग्मं द्विजातये ।। ६३.११ ।।

एतत् पुत्रव्रतं नाम मया ते परिकीर्तितम् ।
एतत् कृत्वा नरः पापैः सर्वैरेव प्रमुच्यते ।। ६३.१२ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे त्रिषष्टितमोऽध्यायः ।। ६३ ।।

**अगस्त्य उवाच ।**

अथापरं प्रवक्ष्यामि शौर्यव्रतमनुत्तमम् ।
येन भीरोरपि महच्छौर्यं भवति तत्क्षणात् ।। ६४.१ ।।

मासि चाश्वयुजे शुद्धां नवमीं समुपोषयेत् ।
सप्तम्यां कृतसंकल्पः स्थित्वाऽष्टम्यां निरोदनः ।। ६४.२ ।।

नवम्यां पारयेत् पिष्टं प्रथमं भक्तितो नृप ।
ब्राह्मणान् भोजयेद् भक्त्या देवीं चैव तु पूजयेत् ।
दुर्गां देवीं महाभागां महामायां महाप्रभाम् ।। ६४.३ ।।

एवं संवत्सरं यावदुपोष्येति विधानतः ।
व्रतान्ते भोजयेद् धीमान् यथाशक्त्या कुमारिकाः ।। ६४.४ ।।

हेमवस्त्रादिभिस्तास्तु भूषयित्वा तु शक्तितः ।
पश्चात् क्षमापयेत् तास्तु देवी मे प्रीयतामिति ।। ६४.५ ।।

एवं कृते भ्रष्टराज्यो लभेद् राज्यं न संशयः ।
अविद्यो लभते विद्यां भीतः शौर्यं च विदन्ति ।। ६४.६ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे चतुःषष्टितमोऽध्यायः ।। ६४ ।।

**अगस्त्य उवाच ।**

सार्वभौमव्रतं चान्यत् कथयामि समासतः ।
येन सम्यक्कृतेनाशु सार्वभौमो नृपो भवेत् ।। ६५.१ ।।

कार्तिकस्य तु मासस्य दशमी शुक्लपक्षिका ।
तस्यां नक्ताशनो नित्यं दिक्षु शुद्धबलिं हरेत् ।। ६५.२ ।।

विचित्रैः कुसुमैर्भक्त्या पूजयित्वा द्विजोत्तमान् ।
दिशां तु प्रार्थनां कुर्यान् मन्त्रेणानेन सुव्रतः ।
सर्वा भवन्त्यः सिद्ध्यन्तु मम जन्मनि जन्मनि ।। ६५.३ ।।

एवमुक्त्वा बलिं तासु दत्त्वा शुद्धेन चेतसा ।
ततो रात्रौ तु भुञ्जीत दध्यन्नं तु सुसंस्कृतम् ।। ६५.४ ।।

पूर्वं पश्चाद् यथेष्टं तु एवं संवत्सरं नृप ।
यः करोति नरो नित्यं तस्य दिग्विजयो भवेत् ।। ६५.५ ।।

एकादश्यां तु यत्नेन नरः कुर्याद् यथाविधि ।
मार्गशीर्षे शुक्लपक्षादारभ्याब्दं विचक्षणः ।
तद् व्रत धनदस्येष्टं कृतं वित्तं प्रयच्छति ।। ६५.६ ।।

एकादश्यां निराहारो यो भुङ्क्ते द्वादशीदिने ।
शुक्ले वाऽप्यथवा कृष्णे तद् व्रतं वैष्णवं महत् ।। ६५.७ ।।

एवं चीर्ण सुघोराणि हन्ति पापानि रपार्थिव ।
त्रयोदश्यां तु नक्तेन धर्मव्रतमथोच्यते ।। ६५.८ ।।

शुक्लपक्षे फाल्गुनस्य तथारभ्य विचक्षणः ।
रौद्रं व्रतं चतुर्दश्यां कृष्णपक्षे विशेषतः ।
माघमासादथारभ्य पूर्ण संवत्सरं नृप ।। ६५.९ ।।

इन्दुव्रतं पञ्चदश्यां शुक्लायां नक्तभोजनम् ।
पितृव्रतममावास्यामिति राजन तथेरितम् ।। ६५.१० ।।

दश पञ्च च वर्षाणि य एवं कुरुते नृप ।
तिथिव्रतानि कस्तस्य फलं व्रतप्रमाणतः ।। ६५.११ ।।

अश्वमेधसहस्त्राणि राजसूयशतानि च ।
यष्टानि तेन राजेन्द्र कल्पोक्ताः क्रतवस्तथा ।। ६५.१२ ।।

एकमेव कृतं हन्ति व्रतं पापानि नित्यशः ।
यः पुनः सर्वमेतद्धि कुर्यान्नरवरात्मज ।

स शुद्धो विरजो लोकानाप्नोति सकलं नृप ।। ६५.१३ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे पञ्चषष्टितमोऽध्यायः ।। ६५ ।।

**भद्राश्व उवाच ।**
आश्चर्यं यदि ते किंचिद् विदितं दृष्टमेव वा ।
तन्मे कथय धर्मज्ञ मम कौतूहलं महत् ।। ६६.१ ।।

**अगस्त्य उवाच ।**
आश्चर्यभूतो भगवानेष एव जनार्दनः ।
तस्याश्चर्याणि दृष्टानि बहूनि विविधानि वै ।। ६६.२ ।।

श्वेतद्वीपं गतः पूर्वं नारदः किल पार्थिव ।
सोऽपश्यच्छङ्खचक्राब्जान् पुरुषांस्तिग्मतेजसः ।। ६६.३ ।।

अयं विष्णुरयं विष्णुरेष विष्णुः सनातनः ।
चिन्ताऽभूत्तस्यतान्दृष्ट्वा कोऽस्मिन्विष्णुरिति प्रभुः ।। ६६.४ ।।

एवं चिन्तयतस्तस्य चिन्ता कृष्णं प्रति प्रभो ।
आराधयामि च कथं शङ्खचक्रगदाधरम् ।। ६६.५ ।।

येन वेद्मि परं तेषां देवो नारायणः प्रभुः ।
एवं संचिन्त्य दध्यौ स तं देवं परमेश्वरम् ।। ६६.६ ।।

दिव्यं वर्षसहस्त्रं तु साग्रं ब्रह्मसुतस्तदा ।
ध्यायतस्तस्य देवोऽसौ परितोषं जगाम ह ।। ६६.७ ।।

उवाच च प्रसन्नात्मा प्रत्यक्षत्वं गतः प्रभुः ।
वरं ब्रह्मसुत ब्रूहि किं ते दद्मि महामुने ।। ६६.८ ।।

**नारद उवाच ।**
सहस्त्रमेकं वर्षाणां ध्यातस्त्वं भुवनेश्वर ।
त्वत्प्राप्तिर्येन तद् ब्रूहि यदि तुष्टोऽसि मेऽच्युत ।। ६६.९ ।।

**देवदेव उवाच ।**
पौरुषं सूक्तमास्थाय ये यजन्ति द्विजास्तु माम् ।
संहितामाद्यमास्थाय ते मां प्राप्स्यन्ति नारद ।। ६६.१० ।।

अलाभे वेदशास्त्राणां पञ्चरात्रोदितेन ह ।
मार्गेण मां प्रपश्यन्ते ते मां प्राप्स्यन्ति मानवाः ।। ६६.११ ।।

ब्राह्मणक्षत्रियविशां पञ्चरात्रं विधीयते ।
शूद्रादीनां न तच्छ्रोत्रपदवीमुपयास्यति ।। ६६.१२ ।।

एवं मयोक्तं विप्रेन्द्र पुराकल्पे पुरातनम् ।
पञ्चरात्रं सहस्त्राणां यदि कश्चिद् ग्रहीष्यति ।। ६६.१३ ।।

कर्मक्षये च मां कश्चिद् यदि भक्तो भविष्यति ।
तस्य चेदं पञ्चरात्रं नित्यं हृदि वसिष्यति ।। ६६.१४ ।।

इतरे राजसैर्भावैस्तामसैश्च समावृताः ।
भविष्यन्ति द्विजश्रेष्ठ मच्छासनपराङ्मुखाः ।। ६६.१५ ।।

कृतं त्रेता द्वापरं च युगानि त्रीणि नारद ।
सत्त्वस्थां मां समेष्यन्ति कलौ रजस्तमोऽधिकाः ।। ६६.१६ ।।

अन्यच्च ते वरं दद्मि श्रृणु नारद साम्प्रतम् ।
यदिदं पञ्चरात्रं मे शास्त्रं परमदुर्लभम् ।
तद्भवान् वेत्स्यते सर्वं मत्प्रसादान्न संशयः ।। ६६.१७ ।।

वेदेन पञ्चरात्रेण भक्त्या यज्ञेन च द्विज ।
प्राप्योऽहं नान्यथा वत्स वर्षकोट्यायुतैरपि ।। ६६.१८ ।।

एवमुक्त्वा स भगवान् नारदं परमेश्वरः ।
जगामादर्शनं सद्यो नारदोऽपि ययौ दिवम् ।। ६६.१९ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे षट्षष्टितमोऽध्यायः ।। ६६ ।।

**भद्राश्व उवाच ।**

भगवन् सितकृष्णे द्वे भिन्ने जगति केशवान् ।
स्त्रियौ बभूवतुः के द्वे सितकृष्णा च का शुभा ।। ६७.१ ।।

कश्चासौ पुरुषो ब्रह्मन् य एकः सप्तधा भवेत् ।
कोऽसौ द्वादशधा विप्र द्विदेहः षट्शिराः शुभः ।। ६७.२ ।।

दम्पत्यं च द्विजश्रेष्ठ कृतसूर्योदयादनम् ।
कस्मादेतज्जगदिदं विततं द्विजसत्तम ।। ६७.३ ।।

**अगस्त्य उवाच ।**

सितकृष्णे स्त्रियौ ये ते ते भगिन्यौ प्रकीर्तिते ।
सत्यासत्ये द्विवर्णा च नारी रात्रिरुदाहृता ।। ६७.४ ।।

यः पुमान् सप्तधा जात एको भूत्वा नरेश्वर ।
स समुद्रस्तु विज्ञेयः सप्तधैको व्यवस्थितः ।। ६७.५ ।।

योऽसौ द्वादशधा राजन् द्विदेहः षट्शिराः प्रभुः ।
संवत्सरः स विज्ञेयः शरीरे द्वे गती स्मृते ।
ऋतवः षट् च वक्त्राणि एष संवत्सरः स्मृतः ।। ६७.६ ।।

दम्पत्यं तदहोरात्रं सूर्याचन्द्रमसौ ततः ।
ततो जगत् समुत्तस्थौ देवस्यास्य नृपोत्तम ।। ६७.७ ।।

स विष्णुः परमो देवो विज्ञेयो नृपसत्तम ।
न च वेदक्रियाहीनः पश्यते परमेश्वरम् ।। ६७.८ ।।

।। इति वराहपुराणे भगवच्छास्त्रे सप्तषष्टितमोऽध्यायः ।। ६७ ।।

**भद्राश्व उवाच ।**
योऽसौ परापरो देवो विष्णुः सर्वगतो मुने ।
चतुर्युगे त्वसौ कीदृग् विज्ञेयः परमेश्वरः ।। ६८.१ ।।

युगे युगे क आचारो वर्णानां भविता मुने ।
कथं च शुद्धिर्विप्राणामन्यस्त्रीसंकरैर्मुने ।। ६८.२ ।।

**अगस्त्य उवाच ।**
कृते युगे मही देवैर्भुज्यते वेदकर्मणा ।
यजद्भिरसुरैस्त्रेतां तद्वद् देवैश्च सत्तम ।। ६८.३ ।।

द्वापरे सत्त्वरजसी बहुले नृपसत्तम ।
यावद् धर्मसुतो राजा भविष्यति महामते ।। ६८.४ ।।

ततस्तमः प्रभविता कलिरूपो नरेश्वर ।
तस्मिन् कलौ वर्त्तमाने स्वमार्गाच्च्यवते द्विजः ।। ६८.५ ।।

राजानो वैश्यशूद्राश्च प्रायशो हीनजातयः ।
भविष्यन्ति नृपश्रेष्ठ सत्यशौचविवर्जिताः ।। ६८.६ ।।

अगम्यागमनं तत्र करिष्यन्ति द्विजातयः ।
अनृतं च वदिष्यन्ति वेदमार्गबहिष्कृताः ।
विवाहांश्च करिष्यन्ति सगोत्रानसमांस्तथा ।। ६८.७ ।।

राजानो ब्राह्मणान् हिंस्युर्वित्तलोभान्विताः शठाः ।
अन्त्यजा अपि वैश्यत्वं करिष्यन्ति पणे रताः ।
अभिमानिनो भविष्यन्ति शूद्रजातिषु गर्विताः ।। ६८.८ ।।

सर्वाशिनो भविष्यन्ति ब्राह्मणाः शौचवर्जिताः ।
सुरा पेयमिति प्राहुः सत्यशौचविवर्जिताः ।। ६८.९ ।।

ततो विनश्यते लोको वर्णधर्मश्च नश्यते ।। ६८.१० ।।

**भद्राश्व उवाच ।**
अगम्यागमनं कृत्वा ब्राह्मणः क्षत्रियोऽपि वा ।
शूद्रोऽपि शुद्ध्यते केन किं वाऽगम्यं तु शंस मे ।। ६८.११ ।।

**अगस्त्य उवाच ।**
चातुर्गामी भवेद् विप्रस् त्रिगामी क्षत्रियो भवेत् ।
द्विगामी तु भवेद् वैश्यः शूद्र एकगमः स्मृतः ।। ६८.१२ ।।

अगम्यां ब्राह्मणीं प्राहुः क्षत्रियस्य नरेश्वर ।

क्षत्राणीं चैव वैश्यस्य वैश्यां शूद्रस्य पार्थिव ।
अधमस्योत्तमा नारी अगम्या मनुरब्रवीत् ।। ६८.१३ ।।

माता मातृष्वसा श्वश्रूर्भातृपत्नी च पार्थिव ।
स्नुषा च दुहिता चैव मित्रपत्नी स्वगोत्रजा ।। ६८.१४ ।।

राजजायाऽऽत्मजा चैव अगम्या मुख्यतः स्त्रियः ।
रजकादिषु चान्याश्च स्त्रियोऽगम्याः प्रकीर्तिताः ।
अगम्यागमनं चैतत् कृतं पापाय जायते ।। ६८.१५ ।।

वियोनिगमनायाशु ब्राह्मणाय भवत्यलम् ।
शेषस्य शुद्धिरेषैव प्राणायामशतं भवेत् ।। ६८.१६ ।।

बहुनाऽपि हि कालेन यत् पापं समुपार्जितम् ।
वर्णसंकरसंगत्या ब्राह्मणेन नरर्षभ ।। ६८.१७ ।।

दशप्रणवगायत्रीं प्राणायामशतैस्त्रिभिः ।
मुच्यते ब्रह्महत्यायाः किं पुनः शेषपातकैः ।। ६८.१८ ।।

अथवा पररूपं यो वेद ब्राह्मणपुंगवः ।
वेदाध्यायी पापशतैः कृतैरपि न लिप्यते ।। ६८.१९ ।।

स्मरन् विष्णुं पठन् वेदं ददद् दानं यजन् हरिम् ।
ब्राह्मणः शुद्ध एवास्ते विरुद्धमपि तारयेत् ।। ६८.२० ।।

एतत् ते सर्वमाख्यातं यत् पृष्टोऽहं त्वया नृप ।
मन्वादिभिर्विस्तरशः कथ्यते येन पार्थिव ।
समासतस्तेन मया कथितं ते नृपोत्तम ।। ६८.२१ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रेऽष्टषष्टितमोऽध्यायः ।। ६८ ।।

**भद्राश्व उवाच ।**

भगवन् त्वच्छरीरे तु यद् वृत्तं द्विजसत्तम ।
चिरजीवी भवांस्तन्मे वक्तुमर्हसि सत्तम ।। ६९.१ ।।

**अगस्त्य उवाच ।**

मच्छरीरमिदं राजन् बहुकौतूहलान्वितम् ।
अनेककल्पसंस्थायि वेदविद्याविशोधितम् ।। ६९.२ ।।

अटन् महीमहं सर्वां गतवानस्मि पार्थिव ।
इलावृतं महावर्षं मेरोः पार्श्वे व्यवस्थितम् ।। ६९.३ ।।

तत्र रम्यं सरो दृष्टं तस्य तीरे महाकुटी ।
तत्रोपवासशिथिलं दृष्टवानस्मि तापसम् ।
अस्थिचर्मावशेषं तु चीरवल्कलधारिणम् ।। ६९.४ ।।

तं दृष्ट्वाऽहं नृपश्रेष्ठ क एष नृपसत्तम ।
विश्वास्य प्रतिपत्त्यर्थं विधेयं मे नरोत्तम ।। ६९.५ ।।

एवं चित्तयतो मह्यं स मां प्राह महामुनिः ।
स्थीयतां स्थीयतां ब्रह्मन्नातिथ्यं करवाणि ते ।। ६९.६ ।।

एतच्छ्रुत्वा वचस्तस्य प्रविष्टोऽहं कुटीं तु ताम् ।
तावत् पश्याम्यहं विप्रं ज्वलन्तमिव तेजसा ।। ६९.७ ।।

भूमौ स्थितं तु मां दृष्ट्वा हुङ्कारमकरोद् द्विजः ।
तद्धुङ्कारात् तु पातालं भित्त्वा पञ्च हि कन्यकाः ।। ६९.८ ।।

निर्ययुः काञ्चनं पीठमेका तासां प्रगृह्य वै ।
सा मां प्रादात् तदाऽन्याऽदात् सलिलं करसंस्थितम् ।। ६९.९ ।।

गृहीत्वाऽन्या तु मे पादौ क्षालितुं चोपचक्रमे ।
अन्ये द्वे व्यजने गृह्य मत्पक्षाभ्यां व्यवस्थिते ।। ६९.१० ।।

ततो हुङ्कारमकरोत् पुनरेव महातपाः ।
तच्छब्दादनन्तरं हैमद्रोणीं योजनविस्तृताम् ।
गृह्याजगाम मकरोत्प्लवं सरसि पार्थिव ।। ६९.११ ।।

तस्यां तु कन्याः शतशो हेमकुम्भकराः शुभाः ।
आययुस्तमथो दृष्ट्वा स मुनिः प्राह मां नृप ।। ६९.१२ ।।

स्नानार्थं कल्पितं ब्रह्मन्निदं ते सर्वमेव तु ।
द्रोणीं प्रविश्य चेमां त्वं स्नातुमर्हसि सत्तम ।। ६९.१३ ।।

ततोऽहं तस्य वचनात् तस्यां द्रोण्यां नराधिप ।
विशामि तावत् सरसि सा द्रोणी प्रत्यमज्जत ।। ६९.१४ ।।

द्रोण्यां जले निमग्नोऽहम् इति मत्वा नरेश्वर ।
उन्मग्नोऽहं ततो लोकमपूर्वं दृष्टवांस्ततः ।। ६९.१५ ।।

सुहर्म्यकक्ष्यायतनं विशालं
रथ्यापथं शुद्धजनानुकीर्णम् ।
नीत्युत्तमैः सेवितमात्मविद्भि -
र्नृभिः पुराणैर्नयमार्गसंस्थैः ।। ६९.१६ ।।

संसारचर्यापरिघाभिरुग्रं
गम्भीरपातालतलस्थमाद्यम् ।
सितैर्नृभिः पाशवराग्रहस्तैः
द्विपाश्वसंघैर्विविधैरुपेतम् ।। ६९.१७ ।।

विचित्रपद्मोत्पलसंवृतानि
सरांसि नानाविहगाकुलानि ।
अम्भोजपत्रस्थितभृङ्गनादै-
रुद्गीतवन्तीव लयैरनैकैः ।
कैलासश्रृङ्गप्रतिमानि तीरे -
ष्वनेकरत्नोत्पलसंचितानि ।
गृहाणि धन्याध्युषितानि नीचै -
रुपासितानि द्विजदेवविप्रैः ।। ६९.१८ ।।

कैलासश्रृङ्गप्रतिमानि तीरे -
ष्वनेकरत्नोत्पलसंचितानि ।
गृहाणि धन्याध्युषितानि नीचै -
रुपासितानि द्विजदेवविप्रैः ।। ६९.१९ ।।

पद्मानि भृङ्गावनतानि चेलु -
स्तेषां पुनर्गुरुभारादजस्त्रम् ।
जलेषु येषां सुस्वरास्यो द्विजाति-
र्वेदोदितानाह विचित्रमन्त्रान् ।। ६९.२० ।।

सिताब्जमालार्चितगात्रवन्ति
वासोत्तरीयाणि खगप्रवारैः ।
सरांस्यनेकानि तथा द्विजास्तु
पठन्ति यज्ञार्थविधिं पुराणम् ।। ६९.२१ ।।

भ्रमन्नहं तेषु सरःस्वपश्यं
वृन्दान्यनेकानि सुराङ्गनानाम् ।
विद्याधराणां च तथैव कन्याः
स्नानाय तं देशमुपागताश्च ।। ६९.२२ ।।

ततः कदाचिद् भ्रमता नृपोत्तम
प्रदृष्टमन्यत्सुसरः सुतोयम् ।
प्राग् दृष्टमेकं तु तथैव तीरे
कुटीं प्रपश्यामि यथा पुराऽहम् ।। ६९.२३ ।।

यावत् कुटीं तां प्रविशामि राजन्
तपस्विनं तं स्थितमेकदेशे ।
दृष्ट्वाभिगम्याभिवदामि यावत्
स्मयन्नुवाचाप्रतिमप्रभावः ।। ६९.२४ ।।

**तापस उवाच ।**
किं मां विप्र न जानीषे प्राग्दृष्टमपि सत्तम ।
येन त्वं मूढवल्लोकमिममप्यनुपश्यसि ।। ६९.२५ ।।

दृष्टं मत्कमिदं देवैर्भुवनं यन्न दृश्यते ।
त्वत्प्रियार्थं मया लोको दर्शितः स द्विजोत्तम ।। ६९.२६ ।।

संपदं पश्य लोकस्य मदीयस्य महामुने ।
दधिक्षीरवहा नद्यस्तथा सर्पिर्मयान् ह्रदान् ।। ६९.२७ ।।

गृहाणां हेमरत्नानां स्तम्भान् हेममयान् गृहे ।
रत्नोत्पलचितां भूमिं पद्मरागसमप्रभाम् ।
पारिजातप्रसूनाढ्यां सेवितां यक्षकिन्नरैः ।। ६९.२८ ।।

एवमुक्तस्तदा तेन तापसेन नराधिप ।
विस्मयापन्नहृदयस्तमेवाहं तु पृष्टवान् ।। ६९.२९ ।।

भगवंस्तव लोकोऽयं सर्वलोकवरोत्तमः ।
सर्वलोका मया दृष्टा ब्रह्मशक्रादिसंस्थिताः ।। ६९.३० ।।

अयं त्वपूर्वो लोको मे प्रतिभाति तपोधन ।
संपदैश्वर्यतेजोभिर्हर्म्यरत्नचयैस्तथा ।। ६९.३१ ।।

सरोभिः सूदकैः पुण्यैर्जलजैश्च विशेषतः ।
अत्यद्भुतमिदं लोकं दृष्टवानस्मि ते मुने ।। ६९.३२ ।।

इत्थंभूतं कथं लोको भवांश्चेत्थं व्यवस्थितः ।

कथयस्वैतस्य हेतुं मे कश्च त्वं मुनिपुंगव ।। ६९.३३ ।।

कथमिलावृते वर्षे सरस्तीरे महामुने ।
दृष्टवानस्मि सोऽहं त्वं सरस्तत् सा कुटी मुने ।
हेमहर्म्याकुले लोके किं वा स्थानं तु ते कुटिः ।। ६९.३४ ।।

एवमुक्तः स भगवात् मयाऽसौ मुनिपुंगवः ।
प्राह मह्यं यथावृत्तं यत् तु राजेन्द्र तच्छृणु ।। ६९.३५ ।।

**तापस उवाच ।**
अहं नारायणो देवो जलरूपी सनातनः ।
येन व्याप्तमिदं विश्वं त्रैलोक्यं सचराचरम् ।। ६९.३६ ।।

या सा त्वाप्याकृतिस्तस्य देवस्य परमेष्ठिनः ।
सोऽहं वरुण इत्युक्तः स्वयं नारायणः परः ।। ६९.३७ ।।

त्वया च सप्त जन्मानि अहमाराधितः पुरा ।
तेन त्रैलोक्यनाशेऽपि त्वमेकस्त्वभिलक्षितः ।। ६९.३८ ।।

एवमुक्तस्तदा तेन निद्रामीलितलोचनः ।
पतितोऽहं धरापृष्ठे तत्क्षणात् पुनरुत्थितः ।। ६९.३९ ।।

यावत्पश्याम्यहं राजन् तमृषिं तच्च वै पुरम् ।
तावन्मेरुगिरेर्मूर्ध्नि पश्याम्यात्मानमात्मना ।। ६९.४० ।।

समुद्रान् सप्त पश्यामि तथैव कुलपर्वतान् ।
सप्तद्वीपवतीं पृथ्वीं दृष्टवानस्मि पार्थिव ।। ६९.४१ ।।

अद्यापि तं लोकवरं ध्यायंस्तिष्ठामि सुव्रत ।
कदा प्राप्स्येऽथ तं लोकमिति चिन्तापरोऽभवम् ।। ६९.४२ ।।

एवं ते कौतुकं राजन् कथितं परमेष्ठिनः ।
यद् वृत्तं मम देहे तु किमन्यच्छ्रोतुमिच्छसि ।। ६९.४३ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे एकोनसप्ततितमोऽध्यायः ।। ६९ ।।

**भद्राश्व उवाच ।**

भगवन् किं कृतं लोकं त्वया तमनुपश्यता ।
व्रतं तपो वा धर्मो वा प्राप्त्यर्थं तस्य वै मुने ।। ७०.१ ।।

अनाराध्य हरिं भक्त्या को लोकान् कामयेद् बुधः ।
आराधिते हरौ लोकाः सर्वे करतलेऽभवन् ।। ७०.२ ।।

एवं संचिन्त्य राजेन्द्र मया विष्णुः सनातनः ।
आराधितो वर्षशतं क्रतुभिर्भूरिदक्षिणैः ।। ७०.३ ।।

ततः कदाचिद् बहुना कालेन नृपनन्दन ।
यजतो मम देवेशं यज्ञमूर्तिं जनार्दनम् ।
आहूता आगता देवाः सममेव सवासवाः ।। ७०.४ ।।

स्वे स्वे स्थाने स्थिता आसन् यावद् देवाः सवासवाः ।
तावत् तत्रैव भगवानागतो वृषभध्वजः ।। ७०.५ ।।

महादेवो विरूपाक्षस्त्र्यम्बको नीललोहितः ।
सोऽपि रौद्रे स्थितः स्थाने बभूव परमेश्वरः ।। ७०.६ ।।

तान् सर्वानागतान् दृष्ट्वा देवानृषिमहोरगान् ।
सनत्कुमारो भगवानाजगामाब्जसंभवः ।। ७०.७ ।।

त्रसरेणुप्रमाणेन विमाने सूर्यसन्निभे ।
अवस्थितो महायोगी भूतभव्यभविष्यवित् ।। ७०.८ ।।

आगम्य शिरसा रुद्रं स ववन्दे महामुनिः ।
मया प्रणमितस्तस्थौ समीपे शूलपाणिनः ।। ७०.९ ।।

तानहं संस्थितान् देवान् नारदादीनृषींस्तथा ।
सनत्कुमाररुद्रौ च दृष्ट्वा मे मनसि स्थितम् ।। ७०.१० ।।

क एषां भवते याज्यो वरिष्ठश्च नृपोत्तम ।
केन तुष्टेन तुष्टाः स्युः सर्व एते सरुद्रकाः ।। ७०.११ ।।

एवं कृत्वा स्थिते राजन् रुद्रः पृष्टो मयाऽनघ ।
एवमर्थं क इज्योऽत्र युष्माकं सुरसत्तमाः ।। ७०.१२ ।।

एवमुक्ते तदोवाच रुद्रो मां सुरसन्निधौ ।। ७०.१३ ।।

**रुद्र उवाच ।**

श्रृण्वन्तु बिबुधाः सर्वे तथा देवर्षयोऽमलाः ।

ब्रह्मर्षयश्च विख्याता सर्वे श्रृण्वन्तु मे वचः ।
त्वं चागस्त्य महाबुद्धे श्रृणु मे गदतो वचः ।। ७०.१४ ।।

यो यज्ञैरीड्यते देवो यस्मात् सर्वमिदं जगत् ।
उत्पन्नं सर्वदा यस्मिंल्लीनं भवति सामरम् ।। ७०.१५ ।।

नारायणः परो देवः सत्त्वरूपो जनार्दनः ।
त्रिधात्मानं स भगवान् ससर्ज परमेश्वरः ।। ७०.१६ ।।

रजस्तमोभ्यां युक्तोऽभूद् रजः सत्त्वाधिकं विभुः ।
ससर्ज नाभिकमले ब्रह्माणं कमलासनम् ।। ७०.१७ ।।

रजसा तमसा युक्तः सोऽपि मां त्वसृजत् प्रभुः ।
यत्सत्त्वं स हरिर्देवो यो हरिस्तत्परं पदम् ।। ७०.१८ ।।

ये सत्त्वरजसी सोऽपि ब्रह्मा कमलसंभवः ।
यो ब्रह्मा सैव देवस्तु यो देवः सः चतुर्मुखः ।
यद्रजस्तमसोपेतं सोऽहं नास्त्यत्र संशयः ।। ७०.१९ ।।

सत्त्वं रजस्तमश्चैव त्रितयं चैतदुच्यते ।
सत्त्वेन मुच्यते जन्तुः सत्त्वं नारायणात्मकम् ।। ७०.२० ।।

रजसा सत्त्वयुक्तेन भवेत् सृष्टी रजोऽधिका ।
तच्च पैतामहं वृत्तं सर्वशास्त्रेषु पठ्यते ।। ७०.२१ ।।

यद्वेदबाह्यं कर्म स्याच्छास्त्रमुद्दिश्य सेव्यते ।
तद्रौद्रमिति विख्यातं कनिष्ठं गदितं नृणाम् ।। ७०.२२ ।।

यद्धीनं रजसा कर्म केवलं तामसं तु यत् ।
तद् दुर्गतिपरं नृणामिह लोके परत्र च ।। ७०.२३ ।।

सत्त्वेन मुच्यते जन्तुः सत्त्वं नारायणात्मकम् ।
नारायणश्च भगवान् यज्ञरूपी विभाव्यते ।। ७०.२४ ।।

कृते नारायणः शुद्धः सूक्ष्ममूर्तिरुपास्यते ।
त्रेतायां यज्ञरूपेण पञ्चरात्रैस्तु द्वापरे ।। ७०.२५ ।।

कलौ मत्कृतमार्गेण बहुरूपेण तामसैः ।
इज्यते द्वेषबुद्ध्या स परमात्मा जनार्दनः ।। ७०.२६ ।।

न तस्मात् परतो देवो भविता न भविष्यति ।
यो विष्णुः स स्वयं ब्रह्मा यो ब्रह्मा सोऽहमेव च ।। ७०.२७ ।।

वेदत्रयेऽपि यज्ञेऽस्मिन् याज्यं वेदेषु निश्चयः ।
यो भेदं कुरुतेऽस्माकं त्रयाणां द्विजसत्तम ।
स पापकारी दुष्टात्मा दुर्गतिं गतिमाप्नुयात् ।। ७०.२८ ।।

इदं च श्रृणु मेऽगस्त्य गदतः प्राक्तनं तथा ।
यथा कलौ हरेर्भक्तिं न कुर्वन्तीह मानवाः ।। ७०.२९ ।।

भूर्लोकवासिनः सर्वे पुरा यष्ट्वा जनार्दनम् ।
भुवर्लोकं प्रपद्यन्ते तत्रस्था अपि केशवम् ।
आराध्य स्वर्गतिं यान्ति क्रमान्मुक्तिं व्रजन्ति च ।। ७०.३० ।।

एवं मुक्तिपदे व्याप्ते सर्वलोकैस्तथैव च ।
मुक्तिभाजस्ततो देवास्तं दध्युः प्रयता हरिम् ।। ७०.३१ ।।

सोऽपि सर्वगतत्वाच्च प्रादुर्भूतः सनातनः ।
उवाच ब्रूत किं कार्यं सर्वयोगिवराः सुराः ।। ७०.३२ ।।

ते तं प्रणम्य देवेशमूचुश्च परमेश्वरम् ।
देवदेव जनः सर्वो मुक्तिमार्गे व्यवस्थितः ।
कथं सृष्टिः प्रभविता नरकेषु च को वसेत् ।। ७०.३३ ।।

एवमुक्तस्ततो देवैस्तानुवाच जनार्दनः ।
युगानि त्रीणि बहवो मामुपेष्यन्ति मानवाः ।। ७०.३४ ।।

अन्त्ये युगे प्रविरला भविष्यन्ति मदाश्रयाः ।
एष मोहं सृजाम्याशु यो जनं मोहयिष्यति ।। ७०.३५ ।।

त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ।
अल्पायासं दर्शयित्वा फलं दीर्घं प्रदर्शय ।। ७०.३६ ।।

कुहकं चेन्द्रजालानि विरुद्धाचरणानि च ।
दर्शयित्वा जनं सर्वं मोहयाशु महेश्वर ।। ७०.३७ ।।

एवमुक्त्वा तदा तेन देवेन परमेष्ठिना ।
आत्मा तु गोपितः सद्यः प्रकाश्योऽहं कृतस्तदा ।। ७०.३८ ।।

तस्मादारभ्य कालं तु मत्प्रणीतेषु सत्तम ।
शास्त्रेष्वभिरतो लोको बाहुल्येन भवेदतः ।। ७०.३९ ।।

वेदानुवर्तिनं मार्गं देवं नारायणं तथा ।
एकीभावेन पश्यन्तो मुक्तिभाजो भवन्ति ते ।। ७०.४० ।।

मां विष्णोर्व्यतिरिक्तं ये ब्रह्माणं च द्विजोत्तम ।
भजन्ते पापकर्माणस्ते यान्ति नरकं नराः ।। ७०.४१ ।।

ये वेदमार्गनिर्मुक्तास्तेषां मोहार्थमेव च ।
नयसिद्धान्तसंज्ञाभिर्मया शास्त्रं तु दर्शितम् ।। ७०.४२ ।।

पाशोऽयं पशुभावस्तु स यदा पतितो भवेत् ।
तदा पाशुपतं शास्त्रं जायते वेदसंज्ञितम् ।। ७०.४३ ।।

वेदमूर्तिरहं विप्र नान्यशास्त्रार्थवादिभिः ।
ज्ञायते मत्स्वरूपं तु मुक्त्वा वेदमनादिमत् ।
वेदवेद्योऽस्मि विप्रर्षे ब्राह्मणैश्च विशेषतः ।। ७०.४४ ।।

युगानि त्रीण्यहं विप्र ब्रह्मा विष्णुस्तथैव च ।
त्रयोऽपि सत्त्वादिगुणास्त्रयो वेदास्त्रयोऽग्नयः ।। ७०.४५ ।।

त्रयो लोकास्त्रयः संध्यास्त्रयो वर्णास्तथैव च ।
सवनानि तु तावन्ति त्रिधा बद्धमिदं जगत् ।। ७०.४६ ।।

य एवं वेत्ति विप्रर्षे परं नारायणं तथा ।
अपरं पद्मयोनिं तु ब्रह्माणं त्वपरं तु माम् ।
गुणतो मुख्यतस्त्वेक एवाहं मोह इत्युत ।। ७०.४७ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे सप्ततितमोऽध्यायः ।। ७० ।।

**अगस्त्य उवाच ।**
एवमुक्तस्ततो देवा ऋषयश्च पिनाकिना ।
अहं च नृपते तस्य देवस्य प्रणतोऽभवम् ।। ७१.१ ।।

प्रणम्य शिरसा देवं यावत् पश्यामहे नृप ।
तावत् तस्यैव रुद्रस्य देहस्थं कमलासनम् ।। ७१.२ ।।

नारायणं च हृदये त्रसरेणुसुसूक्ष्मकम् ।
ज्वलद्भास्करवर्णाभं पश्याम भवदेहतः ।। ७१.३ ।।

तं दृष्ट्वा विस्मिताः सर्वे याजका ऋषयो मम ।
जयशब्दरवांश्चक्रुः सामऋग्यजुषां स्वनम् ।। ७१.४ ।।

कृत्वोचुस्ते तदा देवं किमिदं परमेश्वर ।
एकस्यामेव मूर्तौ ते लक्ष्यन्ते च त्रिमूर्तयः ।। ७१.५ ।।

**रुद्र उवाच ।**
यज्ञेऽस्मिन् यद्धुतं हव्यं मामुद्दिश्य महर्षयः ।
ते त्रयोऽपि वयं भागं गृहणीमः कविसत्तमाः ।। ७१.६ ।।

नास्माकं विविधो भावो वर्तते मुनिसत्तमाः ।
सम्यग्दृशः प्रपश्यन्ति विपरीतेष्वनेकशः ।। ७१.७ ।।

एवमुक्ते तु रुद्रेण सर्वे ते मुनयो नृप ।
पप्रच्छुः शंकरं देवं मोहशास्त्रप्रयोजनम् ।। ७१.८ ।।

**ऋषय ऊचुः ।**
मोहनार्थं तु लोकानां त्वया शास्त्रं पृथक् कृतम् ।
तत् त्वया हेतुना केन कृतं देव वदस्व नः ।। ७१.९ ।।

**रुद्र उवाच ।**
अस्ति भारतवर्षेण वनं दण्डकसंज्ञितम् ।
तत्र तीव्रं तपो घोरं गौतमो नाम वै द्विजः ।। ७१.१० ।।

चकार तस्य ब्रह्मा तु परितोषं गतः प्रभुः ।
उवाच तं मुनिं ब्रह्मा वरं ब्रूहि तपोधन ।। ७१.११ ।।

एवमुक्तस्तदा तेन ब्रह्मणा लोककर्तृणा ।
उवाच सद्यः पङ्क्तिं मे धान्यानां देहि पद्मज ।। ७१.१२ ।।

एवमुक्तो ददौ तस्य तमेवार्थं पितामहः ।
लब्ध्वा तु तं वरं विप्रः शतश्रृङ्गे महाश्रमम् ।। ७१.१३ ।।

चकार तस्योषसि च पाकान्ते शालयो द्विजाः ।
लूयन्ते तेन मुनिना मध्याह्ने पच्यते तथा ।
सर्वातिथ्यमसौ विप्रो ब्राह्मणेभ्यो ददात्यलम् ।। ७१.१४ ।।

कस्यचित् त्वथ कालस्य महति द्वादशाब्दिका ।
अनावृष्टिर्द्विजवरा अभवल्लोमहर्षिणी ।। ७१.१५ ।।

तां दृष्ट्वा मुनयः सर्वे अनावृष्टिं वनेचराः ।
क्षुधया पीड्यमामास्तु प्रययुर्गौतमं तदा ।। ७१.१६ ।।

अथ तानागतान् दृष्ट्वा गौतमः शिरसा नतः ।
उवाच स्थीयतां मह्यं गृहे मुनिवरात्मजाः ।। ७१.१७ ।।

एवमुक्तास्तु ते तेन तस्थुर्विविधभोजनम् ।
भुञ्जमाना अनावृष्टिर्यावत् सा निवृताऽभवत् ।। ७१.१८ ।।

निवृत्तायां तु वै तस्यामनावृष्ट्यां तु ते द्विजाः ।
तीर्थयात्रानिमित्तं तु प्रयातुं मनसोऽभवन् ।। ७१.१९ ।।

तत्र शाण्डिल्यनामानं तापसं मुनिसत्तमम् ।
प्रत्युवाचेति संचिन्त्य मीरीचः परमो मुनिः ।। ७१.२० ।।

**मारीच उवाच ।**
शाण्डिल्य शोभनं वक्ष्ये पिता ते गौतमो मुनिः ।
तमनुक्त्वा न गच्छामस्तपश्चर्तुं तपोवनम् ।। ७१.२१ ।।

एवमुक्तेऽथ जहसुः सर्वे ते मुनयस्तदा ।
किमस्माभिः स्वको देहो विक्रीतोऽस्यान्नभक्षणात् ।। ७१.२२ ।।

एवमुक्त्वा पुनश्चोचुः सोपाधिगमनं प्रति ।
कृत्वा मायामयीं गां तु तच्छालौ ते व्यसर्जयन् ।। ७१.२३ ।।

तां चरन्तीं ततो दृष्ट्वा शालौ गां गौतमो मुनिः ।
गृहीत्वा सलिलं पाणौ याहि रुद्रेत्यभाषत ।
ततो मायामयी सा गौः पपात जलबिन्दुभिः ।। ७१.२४ ।।

निहतां तां ततो दृष्ट्वा मुनीन् जिगमिषूंस्तथा ।
उवाच गौतमो धीमांस्तान् मुनीन् प्रणतः स्थितः ।। ७१.२५ ।।

किमर्थं गम्यते विप्राः साधु शंसत माचिरम् ।
मां विहाय सदा भक्तं प्रणतं च विशेषतः ।। ७१.२६ ।।

**ऋषय ऊचुः ।**
गोवध्येयमिह ब्रह्मन् यावत् तव शरीरगा ।
तावदन्नं न भुञ्जामो भवतोऽन्नं महामुने ।। ७१.२७ ।।

एवमुक्तो गौतमोऽथ तान् मुनीन् प्राह धर्मवित् ।
प्रायश्चित्तं गोवध्याया दीयतां मे तपोधनाः ।। ७१.२८ ।।

इयं गौरमृता ब्रह्मन् मूर्च्छितेव व्यवस्थिता ।
गङ्गाजलप्लुता चेयमुत्थास्यति न संशयः ।। ७१.२९ ।।

प्रायश्चित्तं मृतायाः स्यादमृतायाः कृतं त्विदम् ।
व्रतं वा मा कृथाः कोपमित्युक्त्वा प्रययुस्तु ते ।। ७१.३० ।।

गतैस्तैर्गौतमो धीमान् हिमवन्तं महागिरिम् ।
मामाराधयिषुः प्रायात् तप्तुं चाशु महत् तपः ।। ७१.३१ ।।

शतमेकं तु वर्षाणामहमाराधितोऽभवम् ।
तुष्टेन च मया प्रोक्तो वरं वरय सुव्रत ।। ७१.३२ ।।

सोऽब्रवीन्मां जकटासंस्थां देहि गङ्गां तपस्विनीम् ।
मया सार्धं प्रयात्वेषा पुण्या भागीरथी नदी ।। ७१.३३ ।।

एवमुक्ते जटाखण्डमेकं स प्रददौ शिवः ।
तां गृह्य गतवान् सोऽपि यत्रास्ते सा तु गौर्मृता ।। ७१.३४ ।।

तज्जलप्लाविता सा गौर्गता चोत्थाय भामिनी ।
नदी च महती जाता पुण्यतोया शुचिह्रदा ।। ७१.३५ ।।

तं दृष्ट्वा महदाश्चर्यं तत्र सप्तर्षयोऽमलाः ।
आजग्मुः खे विमानस्थाः साधुः साध्विति वादिनः ।। ७१.३६ ।।

साधु गौतम साधूनां कोन्योऽस्ति सदृशस्तव ।
यदेवं जाह्नवीं देवीं दण्डके चावतारयत् ।। ७१.३७ ।।

एवमुक्तस्तदा तैस्तु गौतमः किमिदं त्विति ।
गोवध्याकारणं मह्यं तावत् पश्यति गौतमः ।। ७१.३८ ।।

ऋषीणां मायया सर्वमिदं जातं विचिन्त्य वै ।
शशाप तान् जटाभस्ममिथ्याव्रतधरास्तथा ।
भविष्यथ त्रयीबाह्या वेदकर्मबहिष्कृताः ।। ७१.३९ ।।

तच्छ्रुत्वा क्रूरवचनं गौतमस्य महामुनेः ।
ऊचुः सप्तर्षयो मैवं सर्वकालं द्विजोत्तमाः ।
भवन्तु किं तु ते वाक्यं मोघं नास्त्यत्र संशयः ।। ७१.४० ।।

यदि नाम कलौ सर्वे भविष्यन्ति द्विजोत्तमाः ।
उपकारिणि ये ते हि अपकर्तार एव हि ।
इत्थंभूता अपि कलौ भक्तिभाजो भवन्तु ते ।। ७१.४१ ।।

त्वद्वाक्यवह्निनिर्दग्धाः सदा कलियुगे द्विजाः ।
भविष्यन्ति क्रियाहीना वेदकर्मबहिष्कृताः ।। ७१.४२ ।।

अस्याश्च गौणं नामेह नदी गोदावरीति च ।
गौर्दत्ता वरदानाच्च भवेद् गोदावरी नदी ।। ७१.४३ ।।

एतां प्राप्य कलौ ब्रह्मन् गां ददन्ति जनाश्च ये ।
यथाशक्त्या तु दानानि मोदन्ते त्रिदशैः सह ।। ७१.४४ ।।

सिंहस्थे च गुरौ तत्र यो गच्छति समाहितः ।
स्नात्वा च विधिना तत्र पितॄं स्तर्पयते तथा ।। ७१.४५ ।।

स्वर्गं गच्छन्ति पितरो निरये पतिता अपि ।
स्वर्गस्थाः पितरस्तस्य मुक्तिभाजो न संशयः ।। ७१.४६ ।।

त्वं ख्यातिं महतीं प्राप्य मुक्तिं यास्यसि शाश्वतीम् ।
एवमुक्त्वाऽथ मुनयो ययुः कैलासपर्वतम् ।

यत्राहमुमया सार्धं सदा तिष्ठामि सत्तमाः ।। ७१.४७ ।।

ऊचुर्मां ते च मुनयो भवितारो द्विजोत्तमाः ।
कलौ त्वद्रूपिणः सर्वे जटामुकुटधारिणः ।
स्वेच्छया प्रेतवेषाश्च मिथ्यालिङ्गधराः प्रभो ।। ७१.४८ ।।

तेषामनुग्रहार्थाय किंचिच्छास्त्रं प्रदीयताम् ।
येनास्मद्वंशजाः सर्वे वर्तेयुः कलिपीडिताः ।। ७१.४९ ।।

एवमभ्यर्थितस्तैस्तु पुराऽहं द्विजसत्तमाः ।
वेदक्रियासमायुक्तां कृतवानस्मि संहिताम् ।। ७१.५० ।।

निःश्वासाख्यां ततस्तस्यां लीना बाभ्रव्यशाण्डिलाः ।
अल्पापराधाच्छ्रुत्वैव गता बैडालिका भवन् ।। ७१.५१ ।।

मयैव मोहितास्ते हि भविष्यं जानता द्विजाः ।
लौल्यार्थिनस्तु शास्त्राणि करिष्यन्ति कलौ नराः ।। ७१.५२ ।।

निःश्वाससंहितायां हि लक्षमात्रं प्रमाणतः ।
सैव पाशुपती दीक्षा योगः पाशुपतस्त्विह ।। ७१.५३ ।।

एतस्माद् वेदमार्गाद्धि यदन्यदिह जायते ।
तत् क्षुद्रकर्म विज्ञेयं रौद्रं शौचविवर्जितम् ।। ७१.५४ ।।

ये रुद्रमुपजीवन्ति कलौ वैडालिका नराः ।
लौल्यार्थिनः स्वशास्त्राणि करिष्यन्ति कलौ नराः ।
उच्छुष्मरुद्रास्ते ज्ञेया नाहं तेषु व्यवस्थितः ।। ७१.५५ ।।

भैरवेण स्वरूपेण देवकार्ये यदा पुरा ।
नर्तितं तु मया सोऽयं संबन्धः क्रूरकर्मणाम् ।। ७१.५६ ।।

क्षयं निनीषता दैत्यानट्टहासो मया कृतः ।
यः पुरा तत्र ये मह्यं पतिता अश्रुबिन्दवः ।
असंख्यातास्तु ते रौद्रा भवितारो महीतले ।। ७१.५७ ।।

उच्छुष्मनिरता रौद्राः सुरामांसप्रियाः सदा ।
स्त्रीलोलाः पापकर्माणः संभूता भूतलेषु ते ।। ७१.५८ ।।

तेषां गौतमशापाद्धि भविष्यन्त्यन्वये द्विजाः ।
तेषां मध्ये सदाचारा ये ते मच्छासने रताः ।। ७१.५९ ।।

स्वर्गं चैवापवर्गं च इति वै संशयात् पुरा ।
वैडालिकाऽधो यास्यन्ति मम संततिदूषकाः ।। ७१.६० ।।

प्राग् गौतमाग्निना दग्धाः पुनर्मद्वचनाद् द्विजाः ।
नरकं तु गमिष्यन्ति नात्र कार्या विचारणा ।। ७१.६१ ।।

**रुद्र उवाच ।**
एवं मया ब्रह्मसुताः प्रोक्ता जग्मुर्यथागतम् ।
गौतमोऽपि स्वकं गेहं जगामाशु परंतपः ।। ७१.६२ ।।

एतद् वः कथितं विप्रा मया धर्मस्य लक्षणम् ।
एतस्माद् विपरीतो यः स पाषण्डरतो भवेत् ।। ७१.६३ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे एकसप्ततितमोऽध्यायः ।। ७१ ।।

**श्रीवराह उवाच ।**
सर्वज्ञं सर्वकर्त्तारं भवं रुद्रं पुरातनम् ।
प्रणम्य प्रयतोऽगस्त्यः पप्रच्छ परमेश्वरम् ।। ७२.१ ।।

**अगस्त्य उवाच ।**
भवान् ब्रह्मा च विष्णुश्च त्रयमेतत् त्रयी स्मृता ।
दीपोऽग्निर्दोपसंयोगैः सर्वशास्त्रेषु सर्वतः ।। ७२.२ ।।

कस्मिन् प्रधानो भगवान् काले कस्मिन्नधोक्षजः ।
ब्रह्मा वा एतदाचक्ष्व मम देव त्रिलोचन ।। ७२.३ ।।

**रुद्र उवाच ।**
विष्णुरेव परं ब्रह्म त्रिभेदमिह पठ्यते ।
वेदसिद्धान्तमार्गेषु तन्न जानन्ति मोहताः ।। ७२.४ ।।

विशप्रवेशने धातुस्तत्र ष्णु प्रत्ययादनु ।
विष्णुर्यः सर्वदेवेषु परमात्मा सनातनः ।। ७२.५ ।।

योऽयं विष्णुस्तु दशधा कीर्त्यते चैकधा द्विजाः ।
स आदित्यो महाभाग योगैश्वर्यसमन्वितः ।। ७२.६ ।।

स देवकार्याणि सदा कुरुते परमेश्वरः ।
मनुष्यभावमाश्रित्य स मां स्तौति युगे युगे ।
लोकमार्गप्रवृत्त्यर्थं देवकार्यार्थसिद्धये ।। ७२.७ ।।

अहं च वरदस्तस्य द्वापरे द्वापरे द्विज ।
अहं च तं सदा स्तौमि श्वेतद्वीपे कृते युगे ।। ७२.८ ।।

सृष्टिकाले चतुर्वक्त्रं स्तौमि कालो भवामि च ।
ब्रह्मा देवासुरा स्तौति मां सदा तु कृते युगे ।
लिङ्गमूर्तिं च मां देवा यजन्ते भोगकाङ्क्षिणः ।। ७२.९ ।।

सहस्त्रशीर्षकं देवं मनसा तु मुमुक्षवः ।
यजन्ते यं स विश्वात्मा देवो नारायणः स्वयम् ।। ७२.१० ।।

ब्रह्मयज्ञेन ये नित्यं यजन्ते द्विजसत्तमाः ।
ते ब्रह्माणं प्रीणयन्ति वेदो ब्रह्मा प्रकीर्तितः ।। ७२.११ ।।

नारायणः शिवो विष्णुः शंकर पुरुषोत्तमः ।
एतैस्तु नामभिर्ब्रह्म परं प्रोक्तं सनातनम् ।
तं च चिन्तामयं योगं प्रवदन्ति मनीषिणः ।। ७२.१२ ।।

पशूनां शमनं यज्ञे होमकर्म च यद्भवेत् ।
तदोमिति च विख्यातं तत्राहं संव्यवस्थितः ।। ७२.१३ ।।

कर्मवेदयुजां विप्र ब्रह्मा विष्णुर्महेश्वरः ।
वयं त्रयोऽपि मन्त्राद्या नात्र कार्या विचारणा ।। ७२.१४ ।।

अहं विष्णुस्तथा वेदा ब्रह्म कर्माणि चाप्युत ।
एतत् त्रयं त्वेकमेव न पृथग् भावयेत् सुधीः ।। ७२.१५ ।।

योऽन्यथा भावयेदेतत् पक्षपातेन सुव्रत ।
स याति नरकं घोरं रौरवं पापपूरुषः ।। ७२.१६ ।।

अहं ब्रह्मा च विष्णुश्च ऋग्यजुः साम एव च ।
नैतस्मिन् भेदमस्यास्ति सर्वेषां द्विजसत्तम ।। ७२.१७ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे द्विसप्ततितमोऽध्यायः ।। ७२ ।।

**रुद्र उवाच ।**
श्रृणु चान्यद् द्विजश्रेष्ठ कौतूहलसमन्वितम् ।
अपूर्वभूतं सलिले मग्नेन मुनिपुंगव ।। ७३.१ ।।

ब्रह्माणाऽहं पुरा सृष्टः प्रोक्तश्च सृज वै प्रजाः ।
अविज्ञानसमर्थोऽहं निमग्नः सलिले द्विज ।। ७३.२ ।।

तत्र यावत् क्षणं चैकं तिष्ठामि परमेश्वरम् ।
अङ्गुष्ठमात्रं पुरुषं ध्यायन् प्रयतमानसः ।। ७३.३ ।।

तावज्जलात् समुत्तस्थुः प्रलयाग्निसमप्रभाः ।
पुरुषा दश चैकश्च तापयन्तोंशुभिर्जलम् ।। ७३.४ ।।

मया पृष्टाः के भवन्तो जलादुत्तीर्य तेजसा ।
तापयन्तो जलं चेदं क्व वा यास्यथ संशत ।। ७३.५ ।।

एवमुक्ता मया ते तु नोचुः किंचन सत्तमाः ।
एवमेव गतास्तूष्णीं ते नरा द्विजपुंगव ।। ७३.६ ।।

ततस्तेषामनु महापुरुषोऽतीवशोभनः ।
स तस्मिन् मेघसंकाशः पुण्डरीकनिभेक्षणः ।। ७३.७ ।।

तमहं पृष्टवान् कस्त्वं के चेमे पुरुषा गाताः ।
किं वा प्रयोजनमिह कथ्यतां पुरुषर्षभ ।। ७३.८ ।।

**पुरुष उवाच ।**
य एते वै गताः पूर्वं पुरुषा दीप्ततेजसः ।
आदित्यास्ते त्वरं यान्ति ध्याता वै ब्रह्मणा भव ।। ७३.९ ।।

सृष्टिं सृजति वै ब्रह्मा तदर्थं यान्त्यमी नराः ।
प्रतिपालनाय तस्यास्तु सृष्टेर्देव न संशयः ।। ७३.१० ।।

**शम्भुरुवाच ।**
भगवन् कथं जानीषे महापुरुषसत्तम ।
भवेति नाम्ना तत्सर्वं कथयस्व परो ह्यहम् ।। ७३.११ ।।

एवमुक्तस्तु रुद्रेण स पुमान् प्रत्यभाषत ।
अहं नारायणो देवो जलशायी सनातनः ।। ७३.१२ ।।

दिव्यं चक्षुर्भवतु वै तव मां पश्य यत्नतः ।
एवमुक्तस्तदा तेन यावद् पश्याम्यहं तु तम् ।। ७३.१३ ।।

तावदङ्गुष्ठमात्रं तु ज्वलद्भास्करतेजसम् ।
तमेवाहं प्रपश्यामि तस्य नाभौ तु पङ्कजम् ।। ७३.१४ ।।

ब्रह्माणं तत्र पश्यामि आत्मानं च तदङ्कतः ।
एवं दृष्ट्वा महात्मानं ततो हर्षमुपागतः ।
तं स्तोतुं द्विजशार्दूल मतिर्मे समजायत ।। ७३.१५ ।।

तस्य मूर्तौ तु जातायां सक्तोत्रेणानेन सुव्रत ।
स्तुतो मया स विश्वात्मा तपसा स्मृतकर्मणा ।। ७३.१६ ।।

**रुद्र उवाच ।**
नमोऽस्त्वनन्ताय विशुद्धचेतसे
सरूपरूपाय सहस्त्रबाहवे ।
सहस्त्ररश्मिप्रवराय वेधसे
विशालदेहाय विशुद्धकर्मिणे ।। ७३.१७ ।।

समस्तविश्वार्तिहराय शम्भवे
सहस्त्रसूर्यानिलतिग्मतेजसे ।
समस्तविद्याविधृताय चक्रिणे
समस्तगीर्वाणनुते सदाऽनघ ।। ७३.१८ ।।

अनादिदेवोऽच्युत शेषशेखर
प्रभो विभो भूतपते महेश्वर ।
मरुत्पते सर्वपते जगत्पते
भुवः पते भुवनपते सदा नमः ।। ७३.१९ ।।

जलेश नारायण विश्वशंकर
क्षितीश विश्वेश्वर विश्वलोचन ।
शशाङ्कसूर्याच्युत वीर विश्वगा -
प्रतर्क्यमूर्तेऽमृतमूर्तिरव्ययः ।। ७३.२० ।।

ज्वलद्हुताशार्चिविरुद्धमण्डल
प्रपाहि नारायण विश्वतोमुख ।
नमोऽस्तु देवार्त्तिहरामृताव्यय
प्रपाहि मां शरणगतं सदाच्युत ।। ७३.२१ ।।

वक्त्राण्यनेकानि विभो तवाहं
पश्यामि मध्यस्थगतं पुराणम् ।
ब्रह्माणमीशं जगतां प्रसूतिं
नमोऽस्तु तुभ्यं तु पितामहाय ।। ७३.२२ ।।

संसारचक्रभ्रमणैरनेकैः
क्वचिद् भवान् देववरादिदेव ।
सन्मार्गिभिर्ज्ञानविशुद्धसत्त्वै -
रुपास्यसे किं प्रलपाम्यहं त्वाम् ।। ७३.२३ ।।

एकं भवन्तं प्रकृतेः परस्ताद्
यो वेत्त्यसौ सर्वविदादिबोद्धा ।
गुणा न तेषु प्रसभं विभेद्या
विशालमूर्तिर्हि सुसूक्ष्मरूपः ।। ७३.२४ ।।

निर्वाक्यो निर्मनो विगतेन्द्रियोऽसि
कर्माभवान्नो विगतैककर्मा ।
संसारवांस्त्वं हि न तादृशोऽसि
पुनः कथं देववरासि वेद्यः ।। ७३.२५ ।।

मूर्तामूर्तं त्वतुलं लभ्यते ते
परं वपुर्देव विशुद्धभावैः ।
संसारविच्छित्तिकरैर्यजद्भि -
रतोऽवसीयेत चतुर्भुजस्त्वम् ।। ७३.२६ ।।

परं न जानन्ति यतो वपुस्ते
देवादयोऽप्यद्भुतकारणं तत् ।
अतोऽवतारोक्ततनुं पुराण -
माराधयेयुः कमलासनाद्याः ।। ७३.२७ ।।

न ते वपुर्विश्वसृगब्जयोनि-
रेकान्ततो वेद महानुभावः ।
परं त्वहं वेद्मि कविं पुराणं
भवन्तमाद्यं तपसा विशुद्धः ।। ७३.२८ ।।

पद्मासनो मे जनकः प्रसिद्ध -
श्चैतत् प्रसूतावसकृत्पुराणैः ।
संबोध्यते नाथ न मद्विधोऽपि
विदुर्भवन्तं तपसा विहीनाः ।। ७३.२९ ।।

ब्रह्मादिभिस्तत्प्रवरैरबोध्यं
त्वां देव मूर्खाः स्वमनन्तनत्या ।
प्रबोधमिच्छन्ति न तेषु बुद्धि -
रुदारकीर्त्तिष्वपि वेदहीनाः ।। ७३.३० ।।

जन्मान्तरैर्वेदविदां विवेक -

बुद्धिर्भवेन्नाथ तव प्रसादात् ।
त्वल्लब्धलाभस्य न मानुषत्वं
न देवगन्धर्वगतिः शिवं स्यात् ।। ७३.३१ ।।

त्वं विष्णुरूपोऽसि भवान् सुसूक्ष्मः
स्थूलोऽसि चेदं कृतकृत्यतायाः ।
स्थूलः सुसूक्ष्मः सुलभोऽसि देव
त्वद्वाह्यवृत्त्या नरके पतन्ति ।। ७३.३२ ।।

किमुच्यते वा भवति स्थितेऽस्मिन्
खात्म्येन्दुवह्न्यर्कमहीमरुद्भिः ।
तत्त्वैः सतोयैः समरूपधारि -
ण्यात्मस्वरूपे विततस्वभावे ।। ७३.३३ ।।

इति स्तुतिं मे भगवन्ननन्त
जुषस्व भक्तस्य विशेषतश्च ।
सृष्टिं सृजस्वेति तवोदितस्य
सर्वज्ञतां देहि नमोऽस्तु विष्णो ।। ७३.३४ ।।

चतुर्मुखो यो यदि कोटिवक्त्रो
भवेन्नरः क्वापि विशुद्धचेताः ।
स ते गुणानामयुतैरनेकै -
र्वदेत् तदा देववर प्रसीद ।। ७३.३५ ।।

समाधियुक्तस्य विशुद्धबुद्धे -
स्त्वद्भावभावैकमनोऽनुगस्य ।
सदा हृदिस्थोऽसि भवान्नमस्ते
न सर्वगस्यास्ति पृथग्व्यवस्था ।। ७३.३६ ।।

इति प्रकाशं कृतमेतदीश
स्तवं मया सर्वगतं विबुद्ध्वा ।
संसारचक्रक्रमणायुक्त्या
भीतं पुनीह्यच्युत केवलत्वम् ।। ७३.३७ ।।

**श्रीवराह उवाच ।**
इति स्तुतस्तदा देवो रुद्रेणामिततेजसा ।
उवाच वाक्यं संतुष्टो मेघगम्भीरनिःस्वनः ।। ७३.३८ ।।

**विष्णुरुवाच ।**
वरं वरय भद्रं ते देव देव उमापते ।
न भेदश्चावयोर्देव एकावावामुभावपि ।। ७३.३९ ।।

**रुद्र उवाच ।**

ब्रह्मणाऽहं नियुक्तस्तु प्रजाः सृज इति प्रभो ।
तत्र ज्ञानं प्रयच्छस्व त्रिविधं भूतभावनम् ।। ७३.४० ।।

**विष्णुरुवाच ।**

सर्वज्ञस्त्वं न संदेहो ज्ञानराशिः सनातनः ।
देवानां च परं पूज्यः सर्वदा त्वं भविष्यसि ।। ७३.४१ ।।

एवमुक्तः पुनर्वाक्यमुवाचोमापतिर्मुदा ।
अन्यं देहि वरं देव प्रसिद्धं सर्वजन्तुषु ।। ७३.४२ ।।

मूर्तो भूत्वा भवानेव मामाराधय केशव ।
मां वहस्व च देवेश वरं मत्तो गृहाण च ।
येनाहं सर्वदेवानां पूज्यात् पूज्यतरो भवे ।। ७३.४३ ।।

**विष्णुरुवाच ।**

देवकार्यावतारेषु मानुषत्वमुपागतः ।
त्वामेवाराधयिष्यामि त्वं च मे वरदो भव ।। ७३.४४ ।।

यत् त्वयोक्तं वहस्वेति देवदेव उमापते ।
सोऽहं वहामि त्वां देवं मेघो भूत्वा शतं समाः ।। ७३.४५ ।।

एवमुक्त्वा हरिर्मेघः स्वयं भूत्वा महेश्वरम् ।
उज्जहार जलात् तस्माद् वाक्यं चेदमुवाच ह ।। ७३.४६ ।।

य एते दश चैकश्च पुरुषाः प्राकृताः प्रभो ।
ते वैराजा महीं याता आदित्या इति संज्ञिताः ।। ७३.४७ ।।

मदंशो द्वादशो यस्तु विष्णुनामा महीतले ।
अवतीर्णो भवन्तं तु आराधयति शंकर ।। ७३.४८ ।।

एवमुक्त्वा स्वकादंशात् सृष्ट्वादित्यं घनं तथा ।
नारायणः शब्दवच्च न विद्मः क्व लयं गतः ।। ७३.४९ ।।

**रुद्र उवाच ।**

एवमेष हरिर्देवः सर्वगः सर्वभावनः ।
वरदोऽभूत् पुरा मह्यं तेनाहं दैवतैर्वरः ।। ७३.५० ।।

नारायणात् परो देवो न भूतो न भविष्यति ।
एतद् रहस्यं वेदानां पुराणानां च सत्तम ।
मया वः कीर्तितं सर्वं यथा विष्णुरिहेज्यते ।। ७३.५१ ।।

**श्रीवराह उवाच ।**
पुनस्ते ऋषयः सर्वे तं पप्रच्छुः सनातनम् ।
रुद्रं पुराणपुरुषं शाश्वतं ध्रुवमव्ययम् ।
विश्वरूपमजं शंभुं त्रिनेत्रं शूलपाणिनम् ।। ७४.१ ।।

**ऋषय ऊचुः ।**
त्वं परः सर्वदेवानामस्माकं च सुरेश्वर ।
पृच्छाम तेन त्वां प्रश्नमेकं तद् वक्तुमर्हसि ।। ७४.२ ।।

भूमिप्रमाणसंस्थानं पर्वतानां च विस्तरम् ।
समुद्राणां नदीनां च ब्रह्माण्डस्य च विस्तरम् ।
अस्माकं ब्रूहि कृपया देवदेव उमापते ।। ७४.३ ।।

**रुद्र उवाच ।**
सर्वेष्वेव पुराणेषु भूर्लोकः परिकीर्त्यते ।
ब्रह्मविष्णुभवादीनां वायव्ये च सविस्तरम् ।। ७४.४ ।।

इदानीं च प्रवक्ष्यामि समासाद् वः क्ष्मान्तरम् ।
तन्निबोधत धर्मज्ञा गदतो मम सत्तमाः ।। ७४.५ ।।

योऽसौ सकलविद्यावबोधितपरमात्मरूपी विगतकल्मषः
परमाणुरचिन्त्त्यात्मा नारायणः सकललोकालोकव्यापी
पीताम्बरोरुवक्षः क्षितिधरो गुणतोमुख्यतस्तु -
अणुमहद्दीर्घह्रस्वमकृशमलोहितमित्येवमाद्योपलक्षित -
विज्ञानमात्ररूपम् । स भगवांस्त्रिप्रकारः सत्त्व -{५}
रजस्तमोद्रिक्तः सलिलं ससर्ज । तच्च सृष्ट्वा -
नादिपुरुषः परमेश्वरो नारायणः सकलजगन्मयः
सर्वमयो देवमयो यज्ञमय आपोमय आपोमूर्त्तिर्योगनिद्रया
सुप्तस्य तस्य नाभौ सदब्जं निःससार । तस्मिन्सकल -
वेदनिधिरचिन्त्यात्मा परमेश्वरो ब्रह्मा प्रजापतिर -{१०}
भवत् स च सनकसनन्दनसनत्कुमारादीन् ज्ञानधर्मिणः
पूर्वमुत्पाद्य पश्चान्मनुं स्वायंभुवं मरीच्यादीन्
दक्षान्तान् ससर्ज । यः स्वयंभुवो मनुर्भगवता
सृष्टस्तस्मादारभ्य भुवनस्यातिविस्तरो वर्ण्यते ।
तस्य च मनोर्द्वौ पुत्रौ बभूवतुः प्रियव्रतोत्तानपादौ । {१५}
प्रियव्रतस्य दश पुत्रा बभूवुः । आग्नीघ्रोऽग्निबाहु -
र्मेधो मेधातिथिर्ध्रुवो ज्योतिष्मान् द्युतिमान्
हव्यवपुष्मत्सवनान्ताः ।
स च प्रियव्रतः सप्तद्वीपेषु सप्त पुत्रान् स्थापयामास ।

तत्र चाग्नीध्रं जम्बूद्वीपेश्वरं चक्रे। {२०}
शाकद्वीपेश्वरं मेधातिथिं कुशे ज्योतिष्मन्तं
क्रौञ्चे द्युतिमन्तं शाल्मले वपुष्मन्तं
गोमेदस्येश्वरं हव्यं पुष्कराधिपतिं सवनमिति ।
पुष्करेशस्यापि सवनस्य द्वौ पुत्रौ
महावीतधातकी भवेताम् ।। {२५}
तयोर्देशौ गोमेदश्च नाम्ना व्यवस्थितौ ।
धातकेर्धातकीखण्डं कुमुदस्य च कौमुदम् ।
शाल्मलाधिपतेरपि वपुष्मन्तस्य त्रयः पुत्राः
सकुशवैद्युतजीमूतनामानः ।
सकुशस्य सकुशनामा देशः वैद्युतस्य वैद्युतः {३०}
जीमूतस्य जीमूत इति एते शाल्मलेर्देशा इति
तथा च द्युतिमतः सप्त पुत्रकाः कुशलो मनुगोष्ठौष्णः
पीवरोद्यान्धकारकमुनिदुन्दुभिश्चेति । तन्नाम्ना
क्रौञ्चे सप्त महादेशनामानि । कुशद्वीपेश्वरस्यापि
ज्योतिष्मतः सप्तैव पुत्रास्तद्यथा उद्भिदो वेणुमां - {३५}
श्चैव रथोपलम्बनो धृतिः प्रभाकरः - कपिल
इति। तन्नामान्येव वर्षाणि द्रष्टव्यानि
शाकाधिपस्यापि सप्त पुत्रा मेधातिथेस्तद्यथा
शान्तभयशिशिरसुखोदयंनन्दशिवक्षेमकध्रुवा इति
एते सप्त पुत्राः एतन्नामान्येव वर्षाणि । {४०}
अथ जम्बूद्वीपेश्वरस्यापि आग्नीध्रस्य नव पुत्रा बभूवुः ।
तद्यथा नाभिः किंपुरुषो हरिवर्ष इलावृतो रम्यको
हिरण्मयः कुरुर्भद्राश्वः केतुमालश्चेति । एतन्नामान्येव
वर्षाणि । नाभेर्हेमवन्तं हेमकूटं किंपुरुषं नैषधं हरिवर्षं
मेरुमध्यमिलावृत्तं नीलं रम्यकं श्वेतं हिरण्मयं {४५}
उत्तरं च श्रृङ्गवतः कुरवो माल्यवन्तं भद्राश्वं
गन्धमादनं केतुमालमिति । एवं स्वायंभुवेऽन्तरे भुवन-
प्रतिष्ठा । कल्पे कल्पे चैवमेव सप्त सप्त पार्थिवैः
क्रियते भूमेः पालनं व्यवस्था च ।
एष स्वभावः कल्पस्य सदा भवतीति । {५०}
अत्र नाभेः सर्गं कथयामि । नाभिर्मेरुदेव्यां पुत्रमजनयद्
ऋषभनामानं तस्य भरतो जज्ञे पुत्रश्च तावदग्रजः ।
तस्य भरतस्य पिता ऋषभो हिमाद्रेर्दक्षिणं
वर्षमदाद् भारतं नाम । भरतस्यापि पुत्रः सुमतिर्नामा ।
तस्य राज्यं दत्त्वा भरतोऽपि वनं ययौ । {५५}
सुमतेस्तेजस्तत्पुत्रः सत्सुर्नामा । तस्यापीन्द्रद्युम्नो नाम ।
तस्यापि परमेष्ठी तस्यापि प्रतिहर्त्ता तस्य निखातः

निखातस्य उन्नेता उन्नेतुरप्यभावस्तस्योद्गाता तस्य
प्रस्तोता प्रस्तोतुश्च विभुः विभोः पृथुः पृथोरनन्तः
अनन्तस्यापि गयः गयस्य नयस्तस्य विराटः {६०}
तस्यापि महावीर्यस्ततः सुधीमान् धीमतो महान्
महतो भौमनो भौमनस्य त्वष्टा त्वष्टुर्विरजाः
तस्य राजो राजस्य शतजित् । {६३}
तस्य पुत्रशतं जज्ञे तेनेमा वर्द्धिताः प्रजाः ।
तैरिदं भारतं वर्षं सप्तद्वीपं समाङ्कितम् ।। ७४.६ ।।

तेषां वंशप्रसूत्या तु भुक्तेयं भारती प्रजा ।
कृतत्रेतादियुक्त्या तु युगाख्या ह्येकसप्ततिः ।। ७४.७ ।।

भुवनस्य प्रसङ्गेन मन्वन्तरमिदं शुभम् ।
स्वायंभुवं च कथितं मनोर्द्वीपान्निबोधत ।। ७४.८ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे चतुःसप्तस्तितमोऽध्यायः ।। ७४ ।

**रुद्र उवाच ।**

अत ऊर्ध्वं प्रवक्ष्यामि जम्बूद्वीपं यथातथम् ।
संख्यां चापि समुद्राणां द्वीपानां चैव विस्तरम् ।। ७५.१ ।।

यावन्ति चैव वर्षाणि तेषु नद्यश्च याः स्मृताः ।
महाभूतप्रमाणं च गतिं चन्द्रार्कयोः पृथक् ।। ७५.२ ।।

द्वीपभेदसहस्त्राणि सप्तस्वन्तर्गतानि च ।
न शक्यन्ते क्रमेणेह वक्तुं यैर्विततं जगत् ।। ७५.३ ।।

सप्तद्वीपान् प्रवक्ष्यामि चन्द्रादित्यग्रहैः सह ।
येषां मनुष्यास्तर्केण प्रमाणानि प्रचक्षते ।। ७५.४ ।।

अचिन्त्याः खलु ये भावा न तांस्तर्केण साधयेत् ।
प्रकृतिभ्यः परं यच्च तदचिन्त्यं विभाव्यते ।। ७५.५ ।।

नव वर्षं प्रवक्ष्यामि जम्बूद्वीपं यथातथम् ।
विस्तरान्मण्डलाच्चैव योजनैस्तन्निबोधत ।। ७५.६ ।।

शतमेकं सहस्त्राणां योजनानां समन्ततः ।
नानाजनपदाकीर्णं योजनैर्विविधैः शुभैः ।। ७५.७ ।।

सिद्धचारणसंकीर्णं पर्वतैरुपशोभितम् ।
सर्वधातुविवृद्धैश्च शिलाजालसमुद्भवैः ।
पर्वतप्रभवाभिश्च नदीभिः सर्वतश्चितम् ।। ७५.८ ।।

जम्बूद्वीपः पृथुः श्रीमान् सर्वतः परिमण्डलः ।
नवभिश्चावृतः श्रीमान् भुवनैर्भूतभावनः ।। ७५.९ ।।

लवणेन समुद्रेण सर्वतः परिवारितः ।
जम्बूद्वीपस्य विस्तारात् समेन तु समन्ततः ।। ७५.१० ।।

तस्य प्रागायता दीर्घा षडेते वर्षपर्वताः ।
उभयत्रावगाढाश्च समुद्रौ पूर्वपश्चिमौ ।। ७५.११ ।।

हिमप्रायश्च हिमवान् हेमकूटश्च हेमवान् ।
सर्वत्र सुसुखश्चापि निषधः पर्वतो महान् ।। ७५.१२ ।।

चतुर्वर्णःस सौवर्णो मेरुश्चोल्बमयो गिरिः ।
वृत्ताकृतिप्रमाणश्च चतुरस्त्रः समुच्छ्रितः ।। ७५.१३ ।।

नानावर्णस्तु पार्श्वेषु प्रजापतिगुणान्वितः ।

नाभिमण्डलसंभूतो ब्रह्मणः परमेष्ठिनः ।। ७५.१४ ।।

पूर्वतः श्वेतवर्णस्तु ब्रह्मण्यं तेन तस्य तत् ।
पीतश्च दक्षिणेनासौ तेन वैश्यत्वमिष्यते ।। ७५.१५ ।।

भृङ्गपत्रनिभश्चासौ पश्चिमेन यतोऽथ सः ।
तेनास्य शूद्रता प्रोक्ता मेरोर्नामार्थकर्मणः ।। ७५.१६ ।।

पार्श्वमुत्तरतस्तस्य रक्तवर्णं विभाव्यते।
तेनास्य क्षत्रभावः स्यादिति वर्णाः प्रकीर्तिताः ।। ७५.१७ ।।

वृत्तः स्वभावतः प्रोक्तो वर्णतः परिमाणतः ।
नीलश्च वैदूर्यमयः श्वेतशुक्लो हिरण्मयः ।
मयूरबर्हिवर्णस्तु शातकौम्भश्च श्रृङ्गवान् ।। ७५.१८ ।।

एते पर्वतराजानः सिद्धचारणसेविताः ।
तेषामन्तरविष्कम्भो नवसाहस्त्र उच्यते ।। ७५.१९ ।।

मध्ये त्विलावृतं नाम महामेरोः स संभवः ।
नवैव तु सहस्त्राणि विस्तीर्णः सर्वतश्च सः ।। ७५.२० ।।

मध्यं तस्य महामेरुर्विधूम इव पावकः ।
वेद्यर्द्धं दक्षिणं मेरोरुत्तरार्द्धं तथोत्तरम् ।। ७५.२१ ।।

वर्षाणि यानि षडत्र तेषां ते वर्षपर्वताः ।
योजनाग्रं तु वर्षाणां सर्वेषां तद् विधीयते ।। ७५.२२ ।।

द्वे द्वे वर्षे सहस्त्राणां योजनानां समुच्छ्रयः ।
जम्बूद्वीपस्य विस्तारस्तेषामायाम उच्यते ।। ७५.२३ ।।

योजनानां सहस्त्राणि शतौ द्वौ चायतौ गिरी ।
नीलश्च निषधश्चैव ताभ्यां हीनाश्च ये परे ।
श्वेतश्च हेमकूटश्च हिमवाञ्छृङ्गवांश्च यः ।। ७५.२४ ।।

जम्बूद्वीपप्रमाणेन निषधः परिकीर्तितः ।
तस्माद् द्वादशभागेन हेमकूटः प्रहीयते ।
हिमवान् विंशभागेन हेमकूटात् प्रहीयते ।। ७५.२५ ।।

अष्टाशीतिसहस्त्राणि हेमकूटो महागिरिः ।
अशीतिर्हिमवान् शैल आयतः पूर्वपश्चिमे ।। ७५.२६ ।।

द्वीपस्य मण्डलीभावाद् ह्रासवृद्धी प्रकीर्त्यते ।

वर्षाणां पर्वतानां च यथा चेमे तथोत्तरम् ।। ७५.२७ ।।

तेषां मध्ये जनपदास्तानि वर्षाणि चैव तत् ।
प्रपातविषमैस्तैस्तु पर्वतैरावृतानि तु ।। ७५.२८ ।।

संततानि नदीभेदैरगम्यानि परस्परम् ।
वसन्ति तेषु सत्त्वानि नानाजातीनि सर्वशः ।। ७५.२९ ।।

एतद्धैमवतं वर्षं भारती यत्र सन्ततिः ।
हेमकूटं परं यत्र नाम्ना किंपुरुषोत्तमः ।। ७५.३० ।।

हेमकूटात् तु निषधं हरिवर्षं तदुच्यते ।
हरिवर्षात् परं चैव मेरुपार्श्वे इलावृतम् ।। ७५.३१ ।।

इलावृतात् परं नीलं रम्यकं नाम विश्रुतम् ।
रम्यकाच्च परं श्वेतं विश्रुतं तद्धिरण्मयम् ।
हिरण्मयात् परं चैव श्रृङ्गवन्तं कुरु स्मृतम् ।। ७५.३२ ।।

धनुःसंस्थे तु द्वे वर्षे विज्ञेये दक्षिणोत्तरे ।
द्वीपानि खलु चत्वारि चतुरस्त्रमिलावृतम् ।। ७५.३३ ।।

अर्वाक् च निषधस्याथ वेद्यर्धं दक्षिणं स्मृतम् ।
परं श्रृङ्गवतो यच्च वेद्यर्धं हि तदुत्तरम् ।। ७५.३४ ।।

वेद्यर्द्धे दक्षिणे त्रीणि वर्षाणि त्रीणि चोत्तरे ।
तयोर्मध्ये तु विज्ञेयो यत्र मेरुस्त्विलावृतः ।। ७५.३५ ।।

दक्षिणेन तु नीलस्य निषधस्योत्तरेण च ।
उदगायतो महाशैलो माल्यवान्नाम पर्वतः ।। ७५.३६ ।।

योजनानां सहस्त्रे द्वे विष्कम्भोच्छ्रय एव च ।
आयामतश्चतुस्त्रिंशत् सहस्त्राणि प्रकीर्तितः ।। ७५.३७ ।।

तस्य प्रतीच्यां विज्ञेयः पर्वतो गन्धमादनः ।
आयामोच्छ्रयविस्तारात् तुल्यो माल्यवता तु सः ।। ७५.३८ ।।

परिमण्डलस्तयोर्मध्ये मेरुः कनकपर्वतः ।
चतुर्वर्णः ससौवर्णश्चतुरस्त्रः समुच्छ्रितः ।। ७५.३९ ।।

अव्यक्ता धातवः सर्वे समुत्पन्ना जलादयः ।
अव्यक्तात् पृथिवीपद्मं मेरुस्तस्य च कर्णिका ।। ७५.४० ।।

चतुष्पत्रं समुत्पन्नं व्यक्तं पञ्चगुणं महत् ।
ततः सर्वाः समुद्भूता वितता हि प्रवृत्तयः ।। ७५.४१ ।।

अनेककल्पजीवद्भिः पुरुषैः पुण्यकारिभिः ।
कृतात्मभिर्महात्मभिः प्राप्यते पुरुषोत्तमः ।। ७५.४२ ।।

महायोगी महादेवो जगद्ध्येयो जनार्दनः ।
सर्वलोकगतोऽनन्तो व्यापको मूर्त्तिरव्ययः ।। ७५.४३ ।।

न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसंभवा ।
योगित्वाच्चेश्वरत्वाच्च सत्त्वरूपधरो विभुः ।। ७५.४४ ।।

तन्निमित्तं समुत्पन्नं लोके पद्मं सनातनम् ।
कल्पशेषस्य तस्यादौ कालस्य गतिरीदृशी ।। ७५.४५ ।।

तस्मिन् पद्मे समुत्पन्नो देवदेवश्चतुर्मुखः ।
प्रजापतिपतिर्देव ईशानो जगतः प्रभुः ।। ७५.४६ ।।

तस्य बीजनिसर्गं हि पुष्करस्य यथार्थवत् ।
कृत्स्नं प्रजानिसर्गेण विस्तरेणैव वर्ण्यते ।। ७५.४७ ।।

तदम्बु वैष्णवः कायो यतो रत्नविभूषितः ।
पद्माकारा समुत्पन्ना पृथिवी सवनद्रुमा ।। ७५.४८ ।।

तत् तस्य लोकपद्मस्य विस्तरं सिद्धभाषितम् ।
वर्ण्यमानं विभागेन क्रमशः श्रृणुत द्विजाः ।। ७५.४९ ।।

महावर्षाणि ख्यातानि चत्वार्यत्र च संस्थिताः ।
तत्र पर्वतसंस्थानो मेरुर्नाम महाबलः ।। ७५.५० ।।

नानावर्णः स पार्श्वेषु पूर्वतः श्वेत उच्यते ।
पीतं च दक्षिणं तस्य भृङ्गवर्णं तु पश्चिमम् ।। ७५.५१ ।।

उत्तरं रक्तवर्णं तु तस्य पार्श्वं महात्मनः ।
मेरुस्तु शोभते शुक्लो राजवंशे तु धिष्ठितः ।। ७५.५२ ।।

तरुणादित्यसंकाशो विधूम इव पावकः ।
योजनानां सहस्त्राणि चतुराशीतिरुच्छ्रितः ।। ७५.५३ ।।

प्रविष्टः षोडशाधस्ताद्विस्तृतः षोडशैव तु ।
शरावसंस्थितत्वाच्च द्वात्रिंशन्मूर्ध्नि विस्तृतः ।। ७५.५४ ।।

विस्तारस्त्रिगुणश्चास्य परिणाहः समन्ततः ।
मण्डलेन प्रमाणेन व्यस्यमानं तदिष्यते ।। ७५.५५ ।।

नवतिश्च सहस्त्राणि योजनानां समन्ततः ।
ततः षट्काधिकानां च व्यस्यमानं प्रकीर्त्तितम् ।
चतुरस्त्रेण मानेन परिणाहः समन्ततः ।। ७५.५६ ।।

स पर्वतो महादिव्यो दिव्यौषधिसमन्वितः ।
सवनैरावृतः सर्वो जातरूपमयैः शुभैः ।। ७५.५७ ।।

तत्र देवगणाः सर्वे गन्धर्वोरगराक्षसाः ।
शैलराजे प्रमोदन्ते तथैवाप्सरसां गणाः ।। ७५.५८ ।।

स तु मेरुः परिवृतो भवनैर्भूतभावनैः ।
चत्वारो यस्य देशास्तु नानापार्श्वेषु धिष्ठिताः ।। ७५.५९ ।।

भद्राश्वो भारतश्चैव केतुमालश्च पश्चिमे ।
उत्तरे कुरवश्चैव कृतपुण्यप्रतिश्रयाः ।। ७५.६० ।।

कर्णिका तस्य पद्मस्य समन्तात् परिमण्डला ।
योजनानां सहस्त्राणि योजनानां प्रमाणतः ।। ७५.६१ ।।

तस्य केसरजालानि नवषट् च प्रकीर्त्तिताः ।
चतुरशीतिरुत्सेधो विवरान्तरगोचराः ।। ७५.६२ ।।

त्रिंशच्चापि सहस्त्राणि योजनानां प्रमाणतः ।
तस्य केसरजालानि विकीर्णानि समन्ततः ।। ७५.६३ ।।

शतसाहस्त्रमायाममशीतिः पृथुलानि च ।
चत्वारि तत्र पर्णानि योजनानां चतुर्दश ।। ७५.६४ ।।

तत्र या सा मया तुभ्यं कर्णिकेत्यभिविश्रुता ।
तां वर्ण्यमानामेकाग्र्यात् समासेन निबोधत ।
मणिपर्णशतैश्चित्रां नानावर्णप्रभासिताम् ।। ७५.६५ ।।

अनेकपर्णनिचयं सौवर्णमरुणप्रभम् ।
कान्तं सहस्त्रपर्वाणं सहस्त्रोदरकन्दरम् ।
सहस्त्रशतपत्रं च वृत्तमेकं नगोत्तमम् ।। ७५.६६ ।।

मणिरत्नार्पितश्वभ्रैर्मणिभिश्चित्रवेदिकम् ।
सुवर्णमणिचित्राङ्गैर्मणिचर्चिततोरणैः ।। ७५.६७ ।।

तत्र ब्रह्मसभा रम्या ब्रह्मर्षिजनसंकुला ।
नाम्ना मनोव्रती नाम सर्वलोकेषु विश्रुता ।। ७५.६८ ।।

तत्रेशानस्य देवस्य सहस्त्रादित्यवर्चसः ।
महाविमानसंस्थस्य महिमा वर्त्तते सदा ।। ७५.६९ ।।

तत्र सर्वे देवगणाश्चतुर्वक्त्रं स्वयं प्रभुम् ।
इष्ट्वा पूज्यनमस्कारैरर्चनीयमुपस्थिताः ।। ७५.७० ।।

यैस्तदा दिहसंकल्पैर्ब्रह्मचर्यं महात्मभिः ।
चीर्णं चारुमनोभिश्च सदाचारपथि स्थितैः ।। ७५.७१ ।।

सम्यगिष्ट्वा च भुक्त्वा च पितृदेवार्चने रताः ।
गृहाश्रमपरास्तत्र विनीता अतिथिप्रियाः ।। ७५.७२ ।।

गृहिणः शुक्लकर्मस्था विरक्ताः कारणात्मकाः ।
यमैर्नियमदानैश्च दृढनिर्दग्धकिल्बिषाः ।। ७५.७३ ।।

तेषां निवसनं शुक्लब्रह्मलोकमनिन्दितम् ।
उपर्युपरि सर्वासां गतीनां परमा गतिः ।
चतुर्दशसहस्त्राणि योजनानां तु कीर्त्तितम् ।। ७५.७४ ।।

ततोर्द्धरुचिरे कृष्णे तरुणादित्यवर्चसि ।
महागिरौ ततो रम्ये रत्नधातुविचित्रिते ।। ७५.७५ ।।

नैकरत्नसमावासे मणितोरणमन्दिरे ।
मेरोः सर्वेषु पार्श्वेषु समन्तात् परिमण्डले ।। ७५.७६ ।।

त्रिंशद्योजनसाहस्त्रं चक्रपाटो नगोत्तमः ।
जारुधिश्चैव शैलेन्द्र इत्येते उत्तराः स्मृताः ।। ७५.७७ ।।

एतेषां शैलमुख्यानामुत्तरेषु यथाक्रमः ।
स्थलीरन्तरद्रोण्यश्च सरांसि च निबोधत ।। ७५.७८ ।।

दशयोजनविस्तीर्णा चक्रपाटोपनिर्गता ।
सा तूर्द्ध्ववाहिनी चापि नदी भूमौ प्रतिष्ठिता ।। ७५.७९ ।।

सा पुर्याममरावत्यां क्रममाणेन्दुरा प्रभौ ।
तया तिरस्कृता वाऽपि सूर्येन्दुज्योतिषां गणाः ।। ७५.८० ।।

उदयास्तमिते सन्ध्ये ये सेवन्ते द्विजोत्तमाः ।
तान् तुष्यन्ते द्विजाः सर्वानष्टावप्यचलोत्तमान् ।। ७५.८१ ।।

परिभ्रमज्ज्योतिषां या सा रुद्रेन्द्रमता शुभा ।। ७५.८२ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे पञ्चसप्ततितमोऽध्यायः ।। ७५ ।।

**रुद्र उवाच ।**

तस्यैव मेरोः पूर्वे तु देशे परमवर्चसे ।
चक्रवाटपरिक्षिप्ते नानाधातुविराजिते ।। ७६.१ ।।

तत्र सर्वामरपुरं चक्रवाटसमुद्धतम् ।
दुर्धर्षं बलदृप्तानां देवदानवरक्षसाम् ।
तत्र जाम्बूनदमयः सुप्राकारः सुतोरणः ।। ७६.२ ।।

तस्याप्युत्तरपूर्वे तु देशे परमवर्चसे ।
अलोकजनसंपूर्णा विमानशतसंकुला ।। ७६.३ ।।

महावापिसमायुक्ता नित्यं प्रमुदिता शुभा ।
शोभिता पुष्पशबलैः पताकाध्वजमालिनी ।। ७६.४ ।।

देवैर्यक्षोप्सरोभिश्च ऋषिभिश्च सुशोभिता ।
पुरन्दरपुरी रम्या समृद्धा त्वमरावती ।। ७६.५ ।।

तस्या मध्येऽमरावत्या वज्रवैदूर्यवेदिका ।
त्रैलोक्यगुणविख्याता सुधर्मा नाम वै सभा ।। ७६.६ ।।

तत्रास्ते श्रीपतेः श्रीमान् सहस्त्राक्षः शचीपतिः ।
सिद्धादिभिः परिवृतः सर्वाभिर्देवयोनिभिः ।। ७६.७ ।।

तत्र चैव सुवंशः स्याद् भास्करस्य महात्मनः ।
साक्षात् तत्र सुराध्यक्षः सर्वदेवनमस्कृतः ।। ७६.८ ।।

तस्याश्च दिक्षु विस्तीर्णा तत्तद्गुणसमन्विता ।
तेजोवती नाम पुरी हुताशस्य महात्मनः ।। ७६.९ ।।

तत्तद्गुणवती रम्या पुरी वैवस्वतस्य च ।
नाम्ना संयमनी नाम पुरी त्रैलोक्यविश्रुता ।। ७६.१० ।।

तथा चतुर्थे दिग्भागे नैर्ऋताधिपतेः शुभा ।
नाम्ना कृष्णावती नाम विरूपाक्षस्य धीमतः ।। ७६.११ ।।

पञ्चमे ह्युत्तरपुटे नाम्ना शुद्धवती पुरी ।
उदकाधिपतेः ख्याता वरुणस्य महात्मनः ।। ७६.१२ ।।

तथा पञ्चोत्तरे देवस्वस्योत्तरपुटे पुरी ।
वायोर्गन्धवती नाम ख्याता सर्वगुणोत्तरा ।। ७६.१३ ।।

तस्योत्तरपुटे रम्या गुह्यकाधिपतेः पुरी ।

नाम्ना महोदया नाम शुभा वैदूर्यवेदिका ।। ७६.१४ ।।

तथाष्टमेऽन्तरपुटे ईशानस्य महात्मनः ।
पुरी मनोहरा नाम भूतैर्नानाविधैर्युता ।
पुष्पैर्धन्यैश्च विविधैर्वनैराश्रमसंस्थितैः ।। ७६.१५ ।।

प्रार्थ्यते देवलोकोऽयं स स्वर्ग इति कीर्तितः ।। ७६.१६ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे षट्सप्ततितमोऽध्यायः ।। ७६ ।।

**रुद्र उवाच ।**

यदेतत् कर्णिकामूलं मेरोर्मध्यं प्रकीर्तितम् ।
तद् योजनसहस्त्राणि संख्ययया मानतः स्मृतम् ।। ७७.१ ।।

चत्वारिंशत् तथा चाष्टौ सहस्त्राणि तु मण्डलैः ।
शैलराजस्य तत्तत्र मेरुमूलमिति स्मृतम् ।। ७७.२ ।।

तेषां गिरिसहस्त्राणामनेकानां महोच्छ्रयः ।
दिगष्टौ च पुनस्तस्य मर्यादापर्वताः शुभाः ।। ७७.३ ।।

जठरो देवकूटश्च पूर्वस्यां दिशि पर्वतौ ।
पूर्वपश्चायतावेतावर्णवान्तर्व्यवस्थितौ ।
मर्यादापर्वतानेतानष्टानाहुर्मनीषिणः ।। ७७.४ ।।

योऽसौ मेरुर्द्विजश्रेष्ठाः प्रोक्तः कनकपर्वतः ।
विष्कम्भांस्तस्य वक्ष्यामि श्रृणुध्वं गदतस्तु तान् ।। ७७.५ ।।

महापादास्तु चत्वारो मेरोरथ चतुर्दिशम् ।
यैर्न चचाल विष्टब्धा सप्तद्वीपवती मही ।। ७७.६ ।।

दशयोजनसाहस्त्रं व्यायामस्तेषु शङ्क्यते ।
तिर्यगूर्ध्वं च रचिता हरितालतटैर्वृताः ।। ७७.७ ।।

मनःशिलादरीभिश्च सुवर्णमणिचित्रिताः ।ऽ
अनेकसिद्धभवनैः क्रीडास्थानैश्च सुप्रभाः ।। ७७.८ ।।

पूर्वेण मन्दरस्तस्य दक्षिणे गन्धमादनः ।
विपुलः पश्चिमे पार्श्वे सुपार्श्वश्चोत्तरे स्थितः ।। ७७.९ ।।

तेषां श्रृङ्गेषु चत्वारो महावृक्षाः प्रतिष्ठिताः ।
देवदैत्याप्सरोभिश्च सेविता गुणसंचयैः ।। ७७.१० ।।

मन्दरस्य गिरेः श्रृङ्गे कदम्बो नाम पादपः ।
प्रलम्बशाखाशिखरः कदम्बश्चैत्यपादपः ।। ७७.११ ।।

महाकुम्भप्रमाणेश्च पुष्पैर्विकचकेसरैः ।
महागन्धबनोज्ञेश्च शोभितः सर्वकालजैः ।। ७७.१२ ।।

समासेन परिवृतो भुवनैर्भूतभावनैः ।
सहस्त्रमधिकं सोऽथ गन्धेनापूरयन् दिशः ।। ७७.१३ ।।

भद्राश्वो नाम वृक्षोऽयं वर्षाद्रेः केतुसंभवः ।

कीर्तिमान् रूपवाञ्छ्रीमान् महापादपपादपः ।
यत्र साक्षाद्धृषीकेशः सिद्धसङ्घैर्निषेव्यते ।। ७७.१४ ।।

तस्य भद्रकदम्बस्य तथाश्ववदनो हरिः ।
प्राप्तवांश्चामरश्रेष्ठः स हि सानुं पुनः पुनः ।। ७७.१५ ।।

तेन चालोकितं वर्षं सर्वद्विपदनायकाः ।
यस्य नाम्ना समाख्यातो भद्राश्वेति न संशयः ।। ७७.१६ ।।

दक्षिणस्यापि शैलस्य शिखरे देवसेविते ।
जम्बूः सद्यः पुष्पफला महाशाखोपशोभिता ।। ७७.१७ ।।

तस्या ह्यतिप्रमाणानि स्वादूनि च मृदूनि च ।
फलान्यमृतकल्पानि पतन्ति गिरिमूर्धनि ।। ७७.१८ ।।

तस्माद् गिरिवरश्रेष्ठात् फलप्रस्यन्दवाहिनी ।
दिव्या जाम्बूनदी नाम प्रवृत्ता मधुवाहिनी ।। ७७.१९ ।।

तत्र जाम्बूनदं नाम सुवर्णमनलप्रभम् ।
देवालङ्कारमतुलमुत्पन्नं पापनाशनम् ।। ७७.२० ।।

देवदानवगन्धर्वयक्षराक्षसगुह्यकाः ।
पपुस्तदमृतप्रख्यं मधु जम्बूफलस्त्रवम् ।। ७७.२१ ।।

सा केतुर्दक्षिणे वर्षे जम्बूर्लोकेषु विश्रुता ।
यस्या नाम्ना समाख्याता जम्बूद्वीपेति मानवैः ।। ७७.२२ ।।

विपुलस्य च शैलस्य दक्षिणेन महात्मनः ।
जातः श्रृङ्गेति सुमहानश्वत्थश्चेति पादपः ।। ७७.२३ ।।

महोच्छ्रायो महास्कन्धो नैकसत्त्वगुणालयः ।
कुम्भप्रमाणै रुचिरैः फलैः सर्वर्त्तुकैः शुभैः ।। ७७.२४ ।।

स केतुः केतुमालानां देवगन्धर्वसेवितः ।
केतुमालेति विख्यातो नाम्ना तत्र प्रकीर्तितः ।
तन्निबोधत विप्रेन्द्रा निरुक्तं नामकर्मणः ।। ७७.२५ ।।

क्षीरोदमथने वृत्ते माला स्कन्धे निवेशिताः ।
इन्द्रेण चैत्यकेतोस्तु केतुमालस्ततः स्मृतः ।
तेन तच्चिह्नितं वर्षं केतुमालेति विश्रुतम् ।। ७७.२६ ।।

सुपार्श्वस्योत्तरे श्रृङ्गे वटो नाम महाद्रुमः ।

न्यग्रोधो विपुलस्कन्धो यस्त्रियोजनमण्डलः ।। ७७.२७ ।।

माल्यदामकलापैश्च विविधैस्तु समन्ततः ।
शाखाभिर्लम्बमानाभिः शोभितः सिद्धसेवितः ।। ७७.२८ ।।

प्रलम्बकुम्भसदृशैर्हेमवर्णैः फलैः सदा ।
स ह्युत्तरकुरूणां तु केतुवृक्षः प्रकाशते ।। ७७.२९ ।।

सनत्कुमारावरजा मानसा ब्रह्मणः सुताः ।
सप्त तत्र महाभागाः कुरवो नाम विश्रुताः ।। ७७.३० ।।

तत्र स्थिरगतैर्ज्ञानैर्विरजस्कैर्महात्मभिः ।
अक्षयः क्षयपर्यन्तो लोकः प्रोक्तः सनातनः ।। ७७.३१ ।।

तेषां नामाङ्कितं वर्षं सप्तानां वै महात्मनाम् ।
दिवि चेह च विख्याता उत्तराः कुरवः सदा ।। ७७.३२ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे सप्तसप्ततितमोऽध्यायः ।। ७७ ।।

**रुद्र उवाच ।**

तथा चतुर्णां वक्ष्यामि शैलेन्द्राणां यथाक्रमम् ।
अनुविध्यानि रम्याणि विहङ्गैः कूजितानि च ।। ७८.१ ।।

अनेकपक्षियुक्तात्मश्रृङ्गाणि सुबहूनि च ।
देवानां दिव्यनारीभिः समं क्रीडामयानि च ।। ७८.२ ।।

किन्नरोद्गीतघुष्टानि शीतमन्दसुगन्धिभिः ।
पवनैः सेव्यमानानि रमणीयतराणि च ।। ७८.३ ।।

चतुर्द्दिक्षु विराजन्ते नामतः श्रृणुतानघाः ।
पूर्वे चैत्ररथं नाम दक्षिणे गन्धमादनम् ।
प्रभावेण सुतोयानि नवखण्डयुतानि च ।। ७८.४ ।।

वनषण्डांस्तथाक्रम्य देवता ललनायुताः ।
यत्र क्रीडन्ति चोद्देशे मुदा परमया युताः ।। ७८.५ ।।

अनुबन्धानि रम्याणि विहगैः कूजितानि च ।
रत्नोपकीर्णतिर्थानि महापुण्यजलानि च ।। ७८.६ ।।

अनेकजलयन्त्रैश्च नादितानि महान्ति च ।
शाखाभिर्लम्बमानाभी रुवत्पक्षिकुलालिभिः ।। ७८.७ ।।

कमलोत्पलकह्लारशोभितानि सरांसि च ।
चतुर्षु तेषु गिरिषु नानागुणयुतेषु च ।। ७८.८ ।।

अरुणोदं तु पूर्वेण दक्षिणे मानसं स्मृतम् ।
असितोदं पश्चिमे च महाभद्रं तथोत्तरे ।
कुमुदैः श्वेतकपिलैः कह्लारैर्भूषितानि च ।। ७८.९ ।।

अरुणोदयस्य ये शैलाः प्राच्या वै नामतः स्मृताः ।
तान् कीर्त्यमानांस्तत्त्वेन श्रृणुध्वं गदतो मम ।। ७८.१० ।।

विकङ्को मणिश्रृङ्गश्च सुपात्रश्चोपलो महान् ।
महानीलोऽथ कुम्भश्च सुबिन्दुर्मदनस्तथा ।। ७८.११ ।।

वेणुनद्धः सुमेदाश्च निषधो देवपर्वतः ।
इत्येते पर्वतवराः पुण्याश्च गिरयोऽपरे ।। ७८.१२ ।।

पूर्वेण मन्दरात् सिद्धाः पर्वताश्च मदायुताः ।
सरसो मानसस्येह दक्षिणेन महाचलाः ।। ७८.१३ ।।

ये कीर्त्तिता मया तुभ्यं नामतस्तान् निबोधत ।
शैलस्त्रिशिरश्चैव शिशिरश्चाचलोत्तमः ।। ७८.१४ ।।

कपिश्च शतमक्षश्च तुरगश्चैव सानुमान् ।
ताम्राहश्च विषश्चैव तथा श्वेतोदनो गिरिः ।। ७८.१५ ।।

समूलश्चैव सरलो रत्नकेतुश्च पर्वतः ।
एकमूलो महाश्रृङ्गो गजमूलोऽपि शावकः ।। ७८.१६ ।।

पञ्चशैलश्च कैलासो हिमवानचलोत्तमः ।
उत्तरा ये महाशैलास्तान् वक्ष्यामि निबोधत ।। ७८.१७ ।।

कपिलः पिङ्गलो भद्रः सरसश्च महाचलः ।
कुमुदो मधुमांश्चैव गर्जनो मर्कटस्तथा ।। ७८.१८ ।।

कृष्णश्च पाण्डवश्चैव सहस्त्रशिरसस्तथा ।
पारियात्रश्च शैलेन्द्रः श्रृङ्गवानचलोत्तमः ।
इत्येते पर्वतवराः श्रीमन्तः पश्चिमे स्मृताः ।। ७८.१९ ।।

महाभद्रस्य सरस उत्तरेण द्विजोत्तमाः ।
ये पर्वताः स्थिता विप्रास्तान् वक्ष्यामि निबोधत ।। ७८.२० ।।

हंसकूटो महाशैलो वृषहंसश्च पर्वतः ।
कपिञ्जलश्च शैलेन्द्र इन्द्रशैलश्च सानुमान् ।। ७८.२१ ।।

नीलः कनकश्रृङ्गश्च शतश्रृङ्गश्च पर्वतः ।
पुष्करो मेघशैलोऽथ विरजाश्चाचलोत्तमः ।
जारुचिश्चैव शैलेन्द्र इत्येते उत्तराः स्मृताः ।। ७८.२२ ।।

इत्येतेषां तु मुख्यानामुत्तरेषु यथाक्रमम् ।
स्थलीरन्तरद्रोण्यश्च सरांसि च निबोधत ।। ७८.२३ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे अष्टसप्ततितमोऽध्यायः ।। ७८ ।।

**रुद्र उवाच ।**

सीतान्तस्याचलेन्द्रस्य कुमुदस्यान्तरेण च ।
द्रोण्यां विहङ्गपुष्टायां नानासत्त्वनिषेवितम् ।। ७९.१ ।।

त्रियोजनशतायामं शतयोजनविस्तृतम् ।
सुरसामलपानीयं रम्यं तत्र सुरोचनम् ।। ७९.२ ।।

द्रोणमात्रप्रमाणैश्च पुण्डरीकैः सुगन्धिभिः ।
सहस्त्रशतपत्रैश्च महापद्मैरलङ्कृतम् ।। ७९.३ ।।

देवदानवगन्धर्वैर्महासर्पैरधिष्ठितम् ।
पुण्यं तच्छ्रीसरो नाम सप्रकाशमिहेह च ।। ७९.४ ।।

प्रसन्नसलिलैः पूर्णं शरण्यं सर्वदेहिनाम् ।
तत्र त्वेकं महापद्मं मध्ये पद्मवनस्य च ।। ७९.५ ।।

कोटिपत्रप्रकलितं तरुणादित्यवर्चसम् ।
नित्यं व्याकोशमधुरं चलत्वादतिमण्डलम् ।। ७९.६ ।।

चारुकेसरजालाढ्यं मत्तभ्रमरनादितम् ।
तस्मिन् मध्ये भगवती साक्षात् श्रीर्नित्यमेव हि ।
लक्ष्मीस्तु तं तदावासं मूर्त्तिमन्तं न संशयः ।। ७९.७ ।।

सरसस्तस्य तीरे तु तस्मिन् सिद्धनिषेवितम् ।
सदा पुष्पफलं रम्यं तत्र बिल्ववनं महत् ।। ७९.८ ।।

शतयोजनविस्तीर्णं द्वियोजनशतायतम् ।
अर्द्धक्रोशोच्चशिखरैर्महावृक्षैः समन्ततः ।
शाखासहस्त्रकलितैर्महास्कन्धैः समाकुलम् ।। ७९.९ ।।

फलैः सहस्त्रसङ्काशैः हरितैः पाण्डुरैस्तथा ।
अमृतस्वादुसदृशैर्भेरीमात्रैः सुगन्धिभिः ।। ७९.१० ।।

शीर्यद्भिश्च पतद्भिश्च कीर्णभूमिवनान्तरम् ।
नाम्ना तच्छ्रीवनं नाम सर्वलोकेषु विश्रुतम् ।। ७९.११ ।।

देवादिभिः समाकीर्णमष्टाभिः ककुभिः शुभम् ।
बिल्वाशिभिश्च मुनिभिः सेवितं पुण्यकारिभिः ।
तत्र श्रीः संस्थिता नित्यं सिद्धसङ्घनिषेविता ।। ७९.१२ ।।

एकैकस्याचलेन्द्रस्य मणिशैलस्य चान्तरम् ।
शतयोजनविस्तीर्णं द्वियोजनशतायतम् ।। ७९.१३ ।।

विमलं पङ्कजवनं सिद्धचारणसेवितम् ।
पुष्पं लक्ष्म्या धृतं भाति नित्यं प्रज्वलतीव ह ।। ७९.१४ ।।

अर्द्धक्रोशं च शिखरैर्महास्कन्धैः समावृतम् ।
प्रफुल्लशाखाशिखरं पिञ्जरं भाति तद्वनम् ।। ७९.१५ ।।

द्विबाहुपरिणाहैस्तैस्त्रिहस्तायामविस्तृतैः ।
मनःशिलाचूर्णनिभैः पाण्डुकेसरशालिभिः ।। ७९.१६ ।।

पुष्पैर्मनोहरैर्व्याप्तं व्याकोशैर्गन्धशोभिभिः ।
विराजति वनं सर्वं मत्तभ्रमरनादितम् ।। ७९.१७ ।।

तद्वनं दानवैर्दैत्यैर्गन्धर्वैर्यक्षराक्षसैः ।
किन्नरैरप्सरोभिश्च महाभोगैश्च सेवितम् ।। ७९.१८ ।।

तत्राश्रमो भगवतः कश्यपस्य प्रजापतेः ।
सिद्धसाधुगणाकीर्णं नानाश्रमसमाकुलम् ।। ७९.१९ ।।

महानीलस्य मध्ये तु कुम्भस्य च गिरेस्तथा ।
मध्ये सुखा नदी नाम तस्यास्तीरे महद्वनम् ।। ७९.२० ।।

पञ्चाशद्योजनायामं त्रिंशद्योजनमण्डलम् ।
रम्यं तालवनं श्रीमत् क्रोशार्द्धोच्छ्रितपादपम् ।। ७९.२१ ।।

महाबलैर्महासारैः स्थिरैरविचलैः शुभैः ।
महदञ्जनसंस्थानैः परिवृत्तैर्महाफलैः ।। ७९.२२ ।।

मृष्टगन्धगुणोपेतैरुपेतं सिद्धसेवितम् ।
ऐरावतस्य करिणस्तत्रैव समुदाहृतम् ।। ७९.२३ ।।

ऐरावतस्य रुद्रस्य देवशैलस्य चान्तरे ।
सहस्त्रयोजनायामा शतयोजनविस्तृता ।। ७९.२४ ।।

सर्वा ह्येकशिला भूमिर्वृक्षवीरुधवर्जिता ।
आप्लुता पादमात्रेण सलिलेन समन्ततः ।। ७९.२५ ।।

इत्येताभ्यन्तरद्रोण्यो नानाकाराः प्रकीर्त्तिताः ।
मेरोः पार्श्वेन विप्रेन्द्रा यथावदनुपूर्वशः ।। ७९.२६ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे एकोनाशीतितमोऽध्यायः ।। ७९ ।।

**रुद्र उवाच ।**
अथ दक्षिणदिग्व्यवस्थिताः पर्वतद्रोण्यः सिद्धाचरिताः
कीर्त्यन्ते । शिशिरपतङ्गयोर्मध्ये शुक्लभूमिस्त्रिया मुक्तलतागलितपादपम् ।
इक्षुक्षेपे च शिखरे पादपैरुपशोभितम् ।
उदुम्बरवनं रम्यं पक्षिसङ्घनिषेवितम् ।। ८०.१ ।।

फलितं तद् वनं भाति महाकूर्मोपमैः फलैः ।।

तद् वनं देवयोन्योऽष्टौ सेवन्ते सर्वदैव ।। ८०.२ ।।

तत्र प्रसन्नस्वादुसलिला बहूदका नद्यो वहन्ति । तत्राश्रमो भगवतः कर्दमस्य प्रजापतेः । नानामुनिजनाकीर्णस्तच्च शतयोजनमेकं परिमण्डलं वनं च ।
तथा च ताम्राभस्य शैलस्य पतङ्गस्य चान्तरे शतयोजनविस्तीर्णं द्विगुणायतं बालार्कसदृशराजीवपुण्रीकैः समन्ततः सहस्त्रपत्रैरविरलैरलंकृतं महत् सरोऽनेकसिद्धगन्धर्वाध्युषितम् । ।। ८०.३ ।।

तस्य च मध्ये महाशिखरः शतयोजनायामस्त्रिंशद्योजनविस्तीर्णोऽनेकधातुरत्नभूषितस्तस्य चोपरि महती रथ्या रत्नप्राकारतोरणा ।
तस्यां महद् विद्याधरपुरम् । तत्र पुलोमनामा विद्याधरराजः शतसहस्त्रपरीवारः ।
तथा च विखाखाचलेन्द्रस्य श्वेतस्य चान्तरे सरः ।
तस्य च पूर्वतीरे महदाम्रवनं कनकसंकाशैः फलैरतिसुगन्धिभिर्महाकुम्भमात्रैः सर्वतश्चितम् ।
देवगन्धर्वादयश्च तत्र निवसन्ति । ।।४।।

सुमुलस्याचलेन्द्रस्य वसुधारस्य चान्तरे त्रिंशद्योजनविस्तीर्णे पञ्चाशद्योजनायते ।।।५।।

बिल्वस्थली नाम । तत्र फलानि विद्रुमसंकाशानि तैश्च पतद्भिः स्थलमृत्तिका क्लिन्ना । तां च स्थलीं सुगुह्यकादयः सेवन्ते बिल्वफलाशिनः ।
तथा च वसुधाररत्नधारयोरन्तरे त्रिंशद्योजनविस्तीर्णं शतयोजनमायतं सुगन्धिकिंशुकवनं सदाकुसुमं यस्य गन्धेन वास्यते योजनशतम् ।
तत्र सिद्धाध्युषितं जलोपेतं च । ।।६।।

तत्र चादित्यस्य देवस्य महदायतनम् ।
समासे मासे च भगवानवतरति सूर्यः प्रजापतिः ।
कालजनकं देवादयो नमस्यन्ति ।
तथा च पञ्चकूटस्य कैलासस्य चान्तरे सहस्त्रयोजनायामं विस्तीर्णं शतयोजनं हंसपाण्डुरं क्षुद्रसत्त्वैरनाधृष्यं स्वर्गसोपानमिव भूमण्डलम् । ।।७।।

अथ पश्चिमदिग्भागे व्यवस्थिता गिरिद्रोण्यः कीर्त्यन्ते । सुपार्श्वशिखिशैलयोर्मध्ये समन्ताद् योजनशतमेकं भौमशिलातलं नित्यतप्तं दुःस्पर्शम् ।
तस्य मध्ये त्रिंशद्योजनविस्तीर्णं मण्डलं वह्निस्थानम् । स च सर्वकालमनिन्धनो भगवान् लोकक्षयकारी संवर्तको ज्वलते ।

अन्तरे च शैलवरयोः कुमुदाञ्जनयोः शतयोजनविस्तीर्णामातुलुङ्गस्थली सर्वसत्त्वानामगम्या। पीतवर्णैः फलैरावृता सती सा स्थली शोभते।
तत्र च पुण्यो ह्रदः सिद्धैरुपेतः। बृहस्पतेस्तद्वनम्।। तथा च शैलयोः पिञ्जरगौरयोरन्तरेण सरोद्रोणी ह्यनेकशतयोजनायता महद्भिश्च षट्पदोद्घुष्टैः कुमुदैरुपशोभिता। ।।८।।

तत्र च भगवतो विष्णोः परमेश्वरस्यायतनम्।
तथा च शुक्लपाण्डुरयोरपि महागिर्योरन्तरे त्रिंशद्योजनविस्तीर्णो नवत्यायत एकः शिलोद्देशोवृक्षविवर्जितः। तत्र निष्पङ्का दीर्घिका सवृक्षा च स्थलपद्मिनी अनेकजातीयैश्च पद्मैः शोभिता।
तस्याश्च मध्ये पञ्चयोजनप्रमाणो महान्यग्रोधवृक्षः। तस्मिंश्चन्द्रशेखरोमापतिर्नीलवासाश्च देवो निवसति यक्षादिभिरीड्यमानः।
सहस्त्रशिखरस्य गिरेः कुमुदस्य चान्तरे पञ्चाशद्योजनायामं
विंशद्योजनविस्तृतमिक्षुक्षेपोच्चशिखरमनेकपक्षिसेवितम्।
अनेकवृक्षफलैर्मधुरस्त्रवैरुपशोभितम्।
तत्र चेन्द्रस्य महानाश्रमो दिव्याभिप्रायनिर्मितः।
तथा च शङ्खकूटऋषभयोर्मध्ये पुरुषस्थलीरम्याऽनेकगुणानेकयोजनायता बिल्वप्रमाणैः कङ्कोलकैः सुगन्धिभिरुपेता।
तत्र पुरुषकरसोन्मत्ता नागाद्याः प्रतिवसन्ति। ।।९।।

तथा कपिञ्जलनागशैलयोरन्तरे द्विशतयोजनमायामविस्तीर्णा शतयोजनस्थली नानावनविभूषिता द्र्ाक्षाखर्जूरखण्डैरुपेता अनेकवृक्षवल्लीभिरनेकैश्च सरोभिरुपेता सा स्थली।
तथा च पुष्करमहामेघयोरन्तरे षष्टियोजनविस्तीर्णा शतायामा पाणितलप्रख्या महती स्थली वृक्षवीरुधविवर्जिता।
तस्याश्च पार्श्वे चत्वारि महावनानि सरांसि चानेकयोजनानाम्।दश पञ्च सप्त तथाष्टौ त्रिंशद् विंशति योजनानां स्थल्यो द्रोण्यश्च। तत्र काश्चिन्महाघोराः पर्वतक्षयाः। ।।१०।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे अशीतितमोऽध्यायः ।। ८० ।।

**रुद्र उवाच ।**

अतः परं पर्वतेषु देवानामवकाशा वर्ण्यन्ते ।

तत्र योऽसौ शान्ताख्यः पर्वतस्तस्योपरि महेन्द्रस्य क्रीडास्थानम् ।

तत्र देवराजस्य पारिजातकवृक्षवनम् ।

तस्य पूर्वपार्श्वे कुञ्जरो नाम गिरिः ।

तस्योपरि दानवानामष्टौ पुराणि च । १

तथा वज्रके पर्वतवरे राक्षसानामनेकानि पुराणि ।

ते च नाम्ना नीलकाः कामरूपिणः ।

महानीलेऽपि शैलेन्द्रपुराणि ।

पञ्चदशसहस्त्राणि किन्नराणां ख्यातानि ।

तत्र देवदत्तचन्द्रादयो राजानः ।

पञ्चदशकिन्नराणां गर्विताः ।

तानि सौवर्णानि बिलप्रवेशनानि च पुराणि ।

चन्द्रोदये च पर्वतवरे नागानामधिवासः ।

ते च बिलप्रवेशाः बिलेषु वैनतेयविषयावर्त्तिनो व्यवस्थितानुरागे च दानवेन्द्रा व्यवस्थिताः ।

वेणुमत्यपि विद्याधरपुरत्रयं ।

त्रिंशद्योजनशतविस्तीर्णमेकैकं तावदायतम् ।

उलूकरोमशमहावेत्रादयश्च राजानो विद्याधराणाम् । २

एकैके च शैलराजनि स्वयमेव गरुडो व्यवस्थितः ।

कुञ्जरे तु पर्वतवरे नित्यं पशुपतिः स्थितः ।

वृषभाङ्को महादेवः शंकरो योगिनां वरः अनेकगणभूतकोटिसहस्त्रवारो भगवान् अनादिपुरुषो व्यवस्थितः ।

वसुधारे च पुष्पवतां वसूनां च समावासः । ३

वसुधाररत्नधारयोर्मूर्ध्नि अष्टौ सप्त च संख्यया । पुराणि वसुसप्तर्षीणां चेति ।

एकश्रृङ्गे च पर्वतोत्तमे प्रजापतेः स्थानं चतुर्वक्त्रस्य ब्रह्मणः।

गजपर्वते च महाभूतपरिवृता स्वयमेव भगवती तिष्ठति । ४

वसुधारे च पर्वतवरे मुनिसिद्धविद्याधराणामायतनम् ।

चतुराशीत्यपरपुर्यो महाप्राकारतोरणाः ।

तत्र चानेकपर्वता नाम गन्धर्वा युद्धशालिनो वसन्ति ।

तेषां चाधिपतिर्देवो राजराजैकपिङ्गलः ।

सुरराक्षसाः पञ्चकूटेदानवाः शतश्रृङ्गेयक्षाणां पुरशतम् । ५

ताम्राभे तक्षकस्यपुरशतम् । विशखपर्वते गुहस्यायतनम् ।

श्वेतोदये गिरिवरे महागन्धर्वभवनम् ।

हरिकूटे हरिर्देवः । कुमुदे किन्नरावासः । अञ्जने महोरगाः ।
सहस्त्रशिखरे च दैत्यानामुग्रकर्मिणामावासः ।
पुराणां सहस्त्रमेकं हेममालिनाम् मुकुटे पन्नप्रपक्षे पर्वतवरे चत्वार्यायतनानि तु।
एवं मेरुपर्वतेषु देवानामधिवासः ।
मर्यादापर्वते देवकूटे पुरविन्यासः कीर्त्यते ।
तस्योपरि योजनशतं गरुडस्य जातं क्षेत्रम् ।
तस्यैव पार्श्वतस्त्रिंशद्योजनविस्तीर्णाश्चत्वारिंशदायताः सप्तगन्धर्वनगराः ।
आग्नेयाश्च नाम्ना गन्धर्वातिबलिनः ।
तत्र चान्यत् त्रिंशद्योजनमण्डलं पुरम् सैंहिकेयानाम् ।
तत्र च देवर्षिचरितानि देवकूटे दृश्यन्ते ।
पुरं च कालकेयानां तत्रैव ।
तथा चान्तरतटेऽन्येसुनान्नाम तस्यैव दक्षिणे त्रिंशद्योजनविस्तृतं द्विषष्टियोजनायामं पुरम्
कामरूपिणां दृप्तानां मध्यमे च तस्य हेमकूटे महादेवस्य न्यग्रोधः ।
अथातः कैलासवर्णको भवति।
कैलासस्य तटे योजनशतमायामवस्तृतम् भुवनमालाभिव्याप्तम् ।
तस्याश्च मध्ये सभा ।
तत्र च तत्पुष्करं नाम विमानं तिष्ठति ।
धनदस्य च तद्विमानमधिवासश्च । तत्र पद्ममहापद्ममकरकच्छपकुमुदशङ्खनीलनन्दमहानिधयः प्रतिवसन्ति ।
तत्र चन्द्रादीनां लोकपालानामावासः ।
तत्र च मन्दाकिनी नाम नदी ।
तथा कनकमन्दा मन्दा चेति नामभिः सरितः ।
तत्रान्या अपि नद्यः सन्ति ।
पूर्वपार्श्वे च शतयोजनमायामास्त्रिंशद्योजनविस्तृता दशगन्धर्वपुर्यः तासु च सकुबाहुहरिकेशचित्रसेनादयो राजानः ।
तस्यैव च पश्चिमकूटे अशीतियोजनायामं चत्वारिंशद्विस्तृतमेकैकं यक्षनगरम् ।
तेषु च महामालिसुनेत्र चक्रादयो नायकाः ।
तस्यैव दक्षिणे पार्श्वे कुञ्जदरीषु गुहासु समुद्राः समुद्रं यावत्किन्नराणां पुरशतम् ।
तेषु च द्रुमसुग्रीवादिभगदत्तप्रमुखं राजशतम् ।
तत्र च रुद्रस्योमया सार्द्धं विवाहस्संवृत्तः ।
तपश्च कृतवती गौरी । किरातरूपिणा च रुद्रेण स्थितम् ।
तत्रैव तत्र स्थितेन सोमेन शंकरेण जम्बूद्वीपावलोकनं कृतम् ।
तत्र चानेककिन्नरगन्धर्वोपगीतमुमावनं नामाप्सरोभिरनेकपुष्पलतावल्लीभिरुपेतम् ।

यत्र भगवता महेश्वरेणार्द्धनारीनरवपुः प्राप्तम् ।
तत्र च कार्तिकेयस्य शरद्वनम् ।
पुष्पचित्रक्रौञ्चयोर्मध्ये कार्तिकेयाभिषेकः कृतः तस्य च पूर्वतटे सिद्धमुनिगणावासः कलापग्रामो नाम ।
तथा च मार्कण्डेयवसिष्ठपराशरनलविश्वामित्रोद्दालकादीनां महर्षीणामनेकानि सहस्त्राण्याश्रमाणां हि भवति ।
तथा च पश्चिमस्याचलेन्द्रस्य निषधस्य भागं श्रृणुत ।
तस्य च मध्यमकूटे विष्ण्वायतनं महादेवस्य ।
तस्यैवोत्तरतटे त्रिंशद्योजनविस्तृतं महत्पुरं लम्बाख्यातं राक्षसानाम् ।
तस्यैव दक्षिणे पार्श्वे बिलप्रवेशनगरम् ।
प्रभेदकस्य पश्चिमेन देवदानवसिद्धादीनां पुराणि ।
तस्य गिरेर्मूर्ध्नि महती सोमशिला तिष्ठति ।
तस्यां च पर्वणि सोमः स्वयमेवावतरति ।
तस्यैवोत्तरपार्श्वे त्रिकूटं नाम ।
तत्र ब्रह्मा तिष्ठति क्वचित् । तथा च वह्न्यायतनम् ।
मूर्त्तिमान् वह्निरुपास्यते देवैः । ६
उत्तरे च श्रृङ्गाख्ये पर्वतवरे देवतानामायतनानि ।
पूर्वे नारायणस्यायतनम् । मध्ये ब्रह्मणः ।
शंकरस्य पश्चिमे ।
तत्र च यक्षादीनां केचित् पुराणि तस्य चोत्तरतीरे जातुछे महापर्वते त्रिंशद्योजनमण्डलं नन्दजलं नाम सरस् तत्र नन्दो नाम नागराजा वसति शतशीर्षप्रचण्ड इति।।७
इत्येतेऽष्टौ देवपर्वता विज्ञेयाः ।
तेनानुक्रमेण हेमरजतरत्नवैदूर्यमानः शिलाहिङ्गुलादिवर्णाः ।
इयं च पृथ्वी लक्षकोटिशतानेकसंख्यातानां पूर्णा तेषु च सिद्धविद्याधराणां निलयाः ते च मेरोः पार्श्वतः केसरवलयालवालं सिद्धलोकेति कीर्त्त्यते ।
इयं पृथ्वी पद्माकारेण व्यवस्थिता ।
एष च सर्वपुराणेषु क्रमः सामान्यतः प्रतिपाद्यते । ८
।। इति श्रीवराहपुराणे भगवच्छास्त्रे एकाशीतितमोऽध्यायः ।। ८१ ।।

**रुद्र उवाच ।**

अथ नदीनामवतारं श्रृणुत ।

आकाशसमुद्रो यः कीर्त्यते सामाख्यस् तस्मादाकाशगामिनी नदी प्रवृत्ता । सा चानवरतमिन्द्रगजेन क्षोभ्यते । सा च चतुरशीतिसहस्त्रोच्छ्राया । सा मेरोः सुदर्शनं करोति । सा च मेरुकूटतटान्तेभ्यः प्रस्खलिता चतुर्धा संजाता । षष्टिं च योजनसहस्त्रं निरालम्बा पतमाना प्रदक्षिणमनुसरन्ती चतुर्द्धा जगाम । सीता चालकनन्दा चक्षुर्भद्रा चेति नामभिः । यथोद्देशं सा चानेकशतसहस्त्रपर्वतानां दारयन्ती गां गतेति गङ्गेत्युच्यते अथ गन्धमादनपार्श्वेऽमरगण्डिका वर्ण्यते । एकत्रिंशद्योजनसहस्त्राणि आयामः चतुःशतविस्तीर्णम्। तत्र केतुमालाः सर्वे जनपदाः । कृष्णवर्णाः पुरुषा महाबलिनः । उत्पलवर्णाः स्त्रियः शुभदर्शनाः । तत्र च महावृक्षाः पनसाः सन्ति । तत्रेश्वरो ब्रह्मपुत्रस्तिष्ठति । तत्रोदपानाच्च जरारोगविवर्जिता वर्षायुतायुषश्च नराः । माल्यवतः पूर्वपार्श्वे पूर्वगण्डिका एकश्रृङ्गाद्योजनसहस्त्राणि मानतस्तत्र च भद्राश्वा नाम जनपदाः भद्रसालवनं च तत्र व्यवस्थितम् । कालाम्रवृक्षाः पुरुषाः श्वेताः पद्मवर्णिनः स्त्रियः कुमुदवर्णा दशवर्षसहस्त्राणि तेषामायुः । तत्र च पञ्च कुलपर्वताः । तद्यथा शैलवर्णः मालाख्यः कोरजश्च त्रिपर्णः नीलश्चेति तद्विनिर्गताः। तदम्भःस्थितानां देशानां तान्येव नामानि । ते च देशा एता नदीः पिबन्ति। तद्यथा सीता सुवाहिनी हंसवती कासा महाचक्रा चन्द्रवती कावेरी सुरसा शाखावती इन्द्रवती अङ्गारवाहिनी हरितोया सोमावर्ता शतह्रदा वनमाला वसुमती हंसा सुपर्णा पञ्चगङ्गा धनुष्मती मणिवप्रा सुब्रह्मभागा विलासिनी कृष्णतोया पुण्योदा नागवती शिवा शेवालिनी मणितटा क्षीरोदा वरुणावती विष्णुपदी महानदी हिरण्यस्कन्धवाहा सुरावती कामोदा पताकाश्चेत्येता महानद्यः । एताश्च गङ्गासमाः कीर्तिताः। आजन्मान्तं पापं विनाशयन्ति । क्षुद्रनद्यश्च कोटिशः। ताश्च नदीर्ये पिबन्ति ते दशवर्षसहस्त्रायुषः। रुद्रोमाभक्ता इति।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे द्व्यशीतितमोऽध्यायः ।। ८२ ।।

**रुद्र उवाच ।**

निसर्ग एष भद्राश्वानां कीर्तितः केतुमालानां विस्तरेण कथितं । नैषधस्याचलेनद्रस्य पश्चिमेन कुलाचलजनपदनद्यः कीर्त्यन्ते । तथा च विशाखकम्बलजयन्तकृष्णहरिताशोकवर्द्धमाना इत्येतेषां सप्तकुलपर्वतानां कोटिशः प्रसूतिः । तन्निवासिनो जनपदास्तन्नामान एव द्रष्टव्याः । तद्यथा सौरग्रामात्तसांतपो कृतसुराश्रवण कम्बलमाहेयाचलकूटवासमूलतपक्रौञ्चकृष्णाङ्गमणिपङ्कजचूडमलसोमीयसमुद्रान्तक कुरकुञ्चसुवर्णः तटककुह श्वेताङ्गकृष्णपाटविदकपिलकर्णिकमहिषकुब्जकरनाटमहोत्कटशुकनासगजभूमककुरञ्जन मनाहकिंकिसपार्णभौमकचोरकधूमजन्म अङ्गारजतीवनजीवलौकिलवाचां सहाङ्गमधुरेयशुकेचकेयश्रवणमत्त कासिकगोदावामकुलपञ्जावर्ज्जहमोदशअलक एते जनपदास्तत्पर्वतोत्था नदीः पिबन्ति । तद्यथा प्लक्षा महाकदम्बा मानसी श्यामा सुमेधा बहुला विवर्णा पुङ्खा माला दर्भवती भद्रानदी शुकनदी पल्लवा भीमा प्रभञ्जना काम्बा कुशावती दक्षा कासवती तुङ्गा पुण्योदा चन्द्रावती सुमूलावती ककुद्मिनी विशाला करण्टका पीवरी महामाया महिषी मानुषी चण्डा एता नदीः प्रधानाः। शेषाः क्षुद्रनद्यः सहस्त्रशश्चेति ।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे त्र्यशीतितमोऽध्यायः ।। ८३ ।।

**रुद्र उवाच ।**
उत्तराणां च वर्षाणां दक्षिणानां च सर्वशः ।
आचक्षते यथान्यायं ये च पर्वतवासिनः ।
तच्छृणुध्वं मया विप्राः कीर्त्त्यमानं समाहिताः ।। ८४.१ ।।

दक्षिणेन तु श्वेतस्य नीलस्य चोत्तरेण च ।
वायव्यां रम्यकं नाम जायन्ते तत्र मानवाः ।
मतिप्रधाना विमला जरादौर्गन्ध्यवर्जिताः ।। ८४.२ ।।

तत्रापि सुमहान् वृक्षो न्यग्रोधो रोहितः स्मृतः ।
तत्फलाद् रसपानाद्धि दशवर्षसहस्त्रिणः ।
आयुषा सर्वमनुजा जायन्ते देवरूपिणः ।। ८४.३ ।।

उत्तरेण च श्वेतस्य त्रिश्रृङ्गस्य च दक्षिणे ।
वर्षं हिरण्मयं नाम तत्र हैरण्वती नदी ।
यक्षा वसन्ति तत्रैव बलिनः कामरूपिणः ।। ८४.४ ।।

एकादशहस्त्राणि समानां तेन जीवते ।
शतान्यन्यानि जीवन्ते वर्षाणां दश पञ्च च ।। ८४.५ ।।

लकुचाः क्षुद्रसा वृक्षास्तस्मिन् देशे व्यवस्थिताः ।
तत्फलप्राशमाना हि तेन जीवन्ति मानवाः ।। ८४.६ ।।

तथा त्रिश्रृङ्गे च मणिकाञ्चनसर्वरत्नशिखरानुक्रमेण तस्य चोत्तरश्रृङ्गाद्दक्षिणसमुद्रान्ते चोत्तरकुरवः । वस्त्राण्याभरणानि च वृक्षेष्वेव जायन्ते क्षीरवृक्षाः क्षीरासवाः सन्ति। मणिभूमिः सुवर्णबालुका। तस्मिन् स्वर्गच्युताश्च पुरुषा वसन्ति त्रयोदशवर्षसहस्त्रायुषः । तस्यैव द्वीपस्य पश्चिमेन चतुर्योजनसहस्त्रमतिक्रम्य देवलोकाच्चन्द्रद्वीपो भवति योजनसहस्त्रपरिमण्डलः । तस्य मध्ये चन्द्रकान्तसूर्यकान्तनामानौ गिरिवरौ। तयोश्च मध्ये चन्द्रावती नाम महानदी अनेकवृक्षफलानेकनदीसमाकुला। एतत्कुरुवर्षं च । तस्योत्तरपार्श्वे समुद्रोर्मिमालाढ्यं पञ्चयोजनसहस्त्रमतिक्रम्य देवलोकात् सूर्यद्वीपो भवति योजनसहस्त्रपरिमण्डलः। तस्य मध्ये गिरिवरः शतयोजनविस्तीर्णस्तावदुच्छ्रितः। तस्मात्सूर्यावर्त्तनामा नदी निर्गता। तत्र च सूर्यस्याधिष्ठितम् तत्र सूर्यदैवत्यास्तद्वर्णाश्च प्रजा दशवर्षसहस्त्रायुषः। तस्य च द्वीपस्य पश्चिमेन चतुर्योजनसहस्त्रमतिक्रम्य समुद्रं दशयोजनसहस्त्रं परिमण्डलत्वेन द्वीपो रुद्राकरो नाम । तत्र च भद्रासनं वायोरनेकरत्नशोभितम्। तत्र विग्रहवान् वायुस्तिष्ठति। तपनीयवर्णाश्च प्रजाः पञ्चवर्षसहस्त्रायुषः ।। ८४.७ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे चतुरशीतितमोऽध्यायः ।। ८४ ।।

**रुद्र उवाच ।**

इयं भूपद्मव्यवस्था कथिता। इदानीं भारतं नवभेदं श्रृणुत। तद्यथा। इन्द्रः कसेरुः ताम्रवर्णो गभस्तिः नागद्वीपः सौम्यः गन्धर्वः वारुणः भातरं चेति। सागरसंवृतमेकैकं योजनसहस्त्रप्रमाणम्। तत्र च सप्त कुलपर्वता भवन्ति। तद्यथा। महेन्द्रो मलयः सह्यः शुक्तिमान्नृक्षपर्वतः। विन्ध्यश्च पारियात्रश्च इत्येते कुलपर्वताः। अन्ये च मन्दरशारदर्दुरकोलाहलसुरमैनाकवैद्युतवारन्धमपाण्डुरतुङ्गप्रस्थकृष्णगिरिजयन्तरैवतऋष्यमूकगोमन्तचित्रकूटश्रीचकोरकूटशैलकृतस्थल इत्येते क्षुद्रपर्वताः। शेषाः क्षुद्रतराः। तेषामार्या म्लेच्छा जनपदा वसन्ति। पिबन्ति चैतासु नदीषु पानीयम्। तद्यथा गङ्गा सिन्धु सरस्वती शतद्रु वितस्ता विपाशा चन्द्रभागा सरयू यमुना इरावती देविका कुहू गोमती धूतपापा बाहुदा दृषद्वती कौशिकी निस्वरा गण्डकी चक्षुष्मती लोहिता इत्येता हिमवत्पादनिर्गताः।।

वेदस्मृतिर्वेदवती सिन्धुपर्णा सचन्दना सदाचारा रोहिपारा चर्मण्वती विदिशा वेदत्रयी इत्येता पारियात्रोद्भवाः।।४।। शोणा ज्योतीरथा नर्मदा सुरसा मन्दाकिनी दशार्णा चित्रकूटा तमसा पिप्पला करतोया पिशाचिका चित्रोत्पला विशाला वञ्जुला बालुका वाहिनी शुक्तिमती विरजा पङ्किनी रिरी कुहू इत्येता ऋक्षप्रसूताः। मणिजाला शुभा तापी पयोष्णीं शीघ्रोदा वेष्णा पाशा वैतरणी वेदी पाली कुमुद्वती तोया दुर्गा अन्त्या गिरा एता विन्ध्यपादोद्भवाः। गोदावरी भीमरथी कृष्णा वेणा वञ्जुला तुङ्गभद्रा सुप्रयोगा वाह्या कावेरी इत्येताः सह्यपादोद्भवाः।५।। शतमाला ताम्रपर्णी पुष्पावती उत्पलावती इत्येता मलयजाः।
त्रियामा ऋषिकुल्या इक्षुला त्रिविदा लाङ्गूलिनी वंशवरा महेन्द्रतनयाः। ऋषिका लूमती मन्दगामिनी पलाशिनी इत्येताः शुक्तिमत्प्रभवाः। एताः प्राधान्येन कुलपर्वतनद्यः। शेषाः क्षुद्रनद्यः। एष जम्बूद्वीपो योजनलक्षप्रमाणतः।

अध्यायः ८६

अतः परं शाकद्वीपं निबोधत। जम्बूद्वीपस्य विस्ताराद् द्विगुणपरिणाहाल्लवणोदकश्च जम्बूद्वीपसमस्तेन द्विगुणावृतः। तत्र च पुण्या जनपदाश्चिरान्म्रियन्ते दुर्भिक्षजराव्याधिरहितश्च देशोऽयम्। सप्तैव कुलपर्वतास्तावत् तिष्ठन्ति तस्य चोभयतो लवणक्षीरोदधी व्यवस्थितौ। तत्र च प्रागायतः शैलेन्द्र उदयो नाम पर्वतः। तस्यापरेण जलधारो नाम गिरिः। सैव चन्द्रेति कीर्त्तितः। तस्य च जलमिन्द्रो गृहीत्वा वर्षति। तस्य पारे रैवतको नाम गिरिः। सैव नारदो वर्ण्यते तस्मिंश्च नारदपर्वतादुत्पन्नो तस्य चापरेण श्यामो नाम गिरिः। तस्मिंश्च प्रजाः श्यामत्वमापन्नाः सैव दुन्दुभिर्वर्ण्यते। तस्मिन् सिद्धा इति कीर्तिताः प्रजानेकविधाः क्रीडन्तस्तस्यापरे रजतो नाम गिरिः सैव शाकोच्यते। तस्यापरेणाम्बिकेयः स च विभ्राजसो भण्यते। स एव केसरीत्युच्यते। ततश्च वायुः प्रवर्त्तते। गिरिनामान्येव वर्षाणि तद्यथा। उदयसुकुमारो जलधारक्षेमकमहाद्रुमेति प्रधानानि द्वितीयपर्वतनामभिरपि वक्तव्यानि। तस्य च मध्ये शाकवृक्षस्तत्र च सप्तमहानद्यो द्विनाम्न्यः। तद्यथा सुकुमारी कुमारी नन्दा वेणिका धेनुः इक्षुमती गभस्ति इत्येता नद्यः।
।। इति श्रीवराहपुराणे भगवच्छास्त्रे पञ्चाशीतितमोऽध्यायः ।। ८५ ।।

अथ तृतीयं कुशद्वीपं श्रृणुत। कुशद्वीपेन क्षीरोदः परिवृतः शाकद्वीपस्य विस्ताराद् द्विगुणेन। तत्रापि सप्त कुलपर्वताः। सर्वे च द्विनामानः। तद् यथा --- कुमुदविद्रुमेति च सोच्यते। उन्नतो हेमपर्वतः सैव। बलाहको द्युतिमान् सैव। तथा द्रोणः सैव पुष्पवान्। कङ्कश्च पर्वतः सैव कुशेशयः। तथा षष्ठो महिषनामा स एव हरिरित्युच्यते। तत्राग्निर्वसति। सप्तमस्तु ककुद्मान् नाम सैव मन्दरः कीर्त्यते। इत्येते पर्वताः कुशद्वीपे व्यवस्थिताः एतेषां वर्षभेदो भवति द्विनामसंज्ञः। कुमुदस्य श्वेतमुद्भिदं तदेव कीर्त्यते। उन्नतस्य लोहितं वेणुमण्डलं तदेव भवति। बलाहकस्य जीमूतं तदेव रथाकार इति।द्रोणस्य हरितं तदेव बलाधनं भवति। कङ्कस्यापि ककुद्मान् नाम। वृत्तिमत् तदेव मानसं महिषस्य प्रभाकरम्। ककुद्मतः कपिलं तदेव संख्यातं नाम। इत्येतानि वर्षाणि। तत्र द्विनाम्न्यो नद्यः। प्रतपा प्रवेशा सैवोच्यते। द्वितीया शिवा यशोदा सा च भवति। तृतीया पित्रा नाम सैव कृष्णा भण्यते। चतुर्थी ह्लादिनी नाम सैव चन्द्रा निगद्यते। विद्युता च पञ्चमी शुक्ला सैव। वर्णा षष्ठी सैव विभावरी। महती सप्तमी सैव धृतिः। एताः प्रधानाः शेषाः क्षुदनद्यः। इत्येष कुशद्वीपस्य संनिवेशः। शाकद्वीपो द्विगुणः संनिविष्टश्च कथितः। तस्य च मध्ये महाकुशस्तम्बः। एष च कुशद्वीपो दधिमण्डोदेनावृतः क्षीरोदद्विगुणेन।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे षडशीतितमोऽध्यायः ।। ८६ ।।

**रुद्र उवाच ।**

अथ क्रौञ्चं भवति चतुर्थं कुशद्वीपाद् द्विगुणमानतः समुद्रः क्रौञ्चेन द्विगुणेनावृतः। तस्मिंश्च सप्तैव प्रधानपर्वताः। प्रथमः कौञ्चो विद्युल्लतो रैवतो मानसः सैव पावकः। तथैवान्धकारः सैवाच्छोदकः। देवावृत्तो स च सुरापो भण्यते। ततो देविष्ठः स एव काञ्चनश्रृङ्गो भवति। देवनन्दात्परो गोविन्दः, द्विविन्द इति। ततः पुण्डरीकः सैव तोषाशयः। एते सप्त रत्नमयाः पर्वताः क्रीञ्चद्वीपे व्यवस्थिताः। सर्वे च परस्परेणोच्छ्रयाः। तत्र वर्षाणि तथा क्रौञ्चस्य कुशलो देशः सैव माधवः स्मृतः वामनस्य मनोऽनुगः सैव संवर्तकस्ततोष्णवान् सोमप्रकाशः। ततः पावकः सैव सुदर्शनः। तथा चान्धकारः सैव संमोहः। ततो मुनिदेशः स च प्रकाशः। ततो दुन्दुभिः सैवानर्थ उच्यते। तत्रापि सप्तैव नद्यः।। ८७.१ ।।

गौरी कुमुद्वती चैव सन्ध्या रात्रिर्मनोजवा ख्यातिश्च पुण्डरीका च गङ्गा सप्तविधाः स्मृताः।
गौरी सैव पुष्पवहा कुमुद्वती ताम्रवती रोधसंध्या सुखावहा च मनोजवा च क्षिप्रोदा च ख्यातिः सैव गोबहुला पुण्डरीका चित्रवेगा शेषाः क्षुद्रनद्यः।। क्रौञ्चद्वीपो घृतोदेनावृतः। घृतोदा शाल्मलेनेति।। ८७.२ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे सप्ताशीतितमोऽध्यायः ।। ८७ ।।

**रुद्र उवाच ।**

त्रिषु शिष्टेषु वक्ष्यामि द्वीपेषु मनुजान्युत ।
शाल्मलं पञ्चमं वर्षं प्रवक्ष्ये तन्निबोधत ।
क्रौञ्चद्वीपस्य विस्ताराच्छाल्मलो द्विगुणो मतः ।। ८८.१ ।।

घृतसमुद्रमावृत्य व्यवस्थितस्तद्विस्तारो द्विगुणस्तत्र च सप्त पर्वताः प्रधानास्तावन्ति वर्षाणि तावत्यो नद्यः। तत्र च पर्वताः। सुमहान् पीतःशातकौम्भात् सार्वगुणसौवर्णरोहितसुमनसकुशल ----- जाम्बूनदवैद्युता इत्येते कुलपर्वता वर्षाणि चेति। अथ षष्ठं गोमेदं कथ्यते। शाल्मलं यथा सुरोदेनावृतं तद्वत् सुरोदोऽपि तद्विगुणेन गोमेदेनावृतः। तत्र च प्रधानपर्वतौ द्वावेव। एकस्य तावत्तावसरः। अपरश्च कुमुद इति। समुद्रश्चेक्षुरसस्तद्द्विगुणेन पुष्करेणावृतः। तत्र च पुष्कराख्ये मानसो नाम पर्वतः। तदपि द्विधा छिन्नं वर्षं तत्प्रमाणेन च। स्वादोदकेनावृतम्। ततश्च कटाहम्। एतत् पृथिव्याः प्रमाणम्। ब्रह्माण्डस्य च सकटाहविस्तारप्रमाणम्। एवंविधानामण्डानां परिसंख्या न विद्यते। एतानि कल्पे कल्पे भगवान् नारायणः क्रोडरूपी रसातलान्तःप्रविष्टानि दंष्ट्रैकैनोद्धृत्य स्थितौ स्थापयति।
एष वः कथितो मार्गो भूमेरायामविस्तरः । स्वस्ति वोऽस्तु गमिष्यामि कैलासं निलयं द्विजाः ।। ८८.२ ।।

श्रीवराह उवाच ।
एवमुक्त्वा गतो रुद्रः क्षणाददृश्यमूर्तिमान् ।
ते च सर्वे गता देवा ऋषयश्च यथागतम् ।। ८८.३ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे अष्टाशीतितमोऽध्यायः ।। ८८ ।।

**धरण्युवाच ।**
परमात्मा शिवः पुण्य इति केचिद् भवं विदुः ।
अपरे हरिमीशानमिति केचिच्चतुर्मुखम् ।। ८९.१ ।।

एतेषां कतमो देवः परः को वाऽथवाऽपरः ।
एतद्देव ममाचक्ष्व परं कौतूहलं विभो ।। ८९.२ ।।

**श्रीवराह उवाच ।**
परो नारायणो देवस्तस्माज्जातश्चतुर्मुखः ।
तस्माद् रुद्रोऽभवद् देवि स च सर्वज्ञतां गतः ।। ८९.३ ।।

तस्याश्चर्याण्यनेकानि विविधानि वरानने ।
श्रृणु सर्वाणि चार्वङ्गि कथ्यमानं मयाऽनघे ।। ८९.४ ।।

कैलासशिखरे रम्ये नानाधातुविचित्रिते ।
वसत्यनुदिनं देवः शूलपाणिस्त्रिलोचनः ।। ८९.५ ।।

सैकस्मिन् दिवसे देवः सर्वभूतनमस्कृतः ।
गणैः परिवृतो गौर्या महानासीत् पिनाकधृक् ।। ८९.६ ।।

तत्र सिंहमुखाः केचिद् गणा नर्दन्ति सिंहवत् ।
अपरे हस्तिवक्त्राश्च हयवक्त्रास्तथापरे ।। ८९.७ ।।

अपरे शिंशुमारास्या अपरे सूकराननाः ।
अपरेऽश्वामुखा रौद्रा खरास्याजाननास्तथा ।
छागमत्स्याननाः क्रूरा ह्यनन्ताः शस्त्रपाणयः ।। ८९.८ ।।

केचिद् गायन्ति नृत्यन्ति धावन्ति स्फोटयन्ति च ।
हसन्ति किलकिलायन्ति गर्जन्ति च महाबलाः ।। ८९.९ ।।

केचिल्लोष्टांस्तु संगृह्य युयुधुर्गणनायकाः ।
अपरे मल्लयुद्धेन युयुधुर्बलदर्पिताः ।
एवं गणसहस्त्रेण वृतो देवो महेश्वरः ।। ८९.१० ।।

यावदास्ते स्वयं देव्या क्रीडन् देववरः स्वयम् ।
तावद् ब्रह्मा स्वयं देवैरुपायात् सह सत्वरः ।। ८९.११ ।।

तमागतमथो दृष्ट्वा पूजयित्वा विधानतः ।
उवाच परमो देवो रुद्रो ब्रह्माणमव्ययम् ।। ८९.१२ ।।

किमागमनकृत्यं ते ब्रह्मन् ब्रूहि ममाचिरम् ।
किं च देवास्त्वरायुक्ता आगता मम सन्निधौ ।। ८९.१३ ।।

**ब्रह्मोवाच ।**
अस्त्यन्धको महादैत्यस्तेन सर्वे दिवौकसः ।
अर्दिता मत्समीपं तु बुद्ध्वा मां शरणैषिणः ।। ८९.१४ ।।

ततश्चैते मया सर्वे प्रोक्ता देवा भवं प्रति ।
गच्छाम इति देवेश ततस्त्वेते समागताः ।। ८९.१५ ।।

एवमुक्त्वा स्वयं ब्रह्मा वीक्षां चक्रे पिनाकिनम् ।
नारायणं च मनसा सस्मार परमेश्वरम् ।
ततो नारायणो देवो द्वाभ्यां मध्ये व्यवस्थितः ।। ८९.१६ ।।

ततस्त्वेकीगतास्ते तु ब्रह्मविष्णुमहेश्वराः ।
परस्परं सूक्ष्मदृष्ट्या वीक्षां चक्रुर्मुदायुताः ।। ८९.१७ ।।

ततस्तेषां त्रिधा दृष्टिर्भूत्वैका समजायत ।
तस्यां दृष्ट्यां समुत्पन्ना कुमारी दिव्यरूपिणी ।। ८९.१८ ।।

नीलोत्पलदलश्यामा नीलकुञ्चितमूर्द्धजा ।
सुनासा सुललाटान्ता सुवक्त्रा सुप्रतिष्ठिता ।। ८९.१९ ।।

त्वष्ट्रा यदग्निजिह्वं तु लक्षणं परिभाषितम् ।
तत्सर्वमेकतः संस्थं कन्यायां संप्रदृश्यते ।। ८९.२० ।।

अथ तां दृश्य कन्यां तु ब्रह्मविष्णुमहेश्वराः ।
ऊचुः काऽसि शुभे ब्रूहि किं वा कार्यं विपश्चितम् ।। ८९.२१ ।।

त्रिवर्णा च कुमारी सा कृष्णशुक्ला च पीतिका ।
उवाच भवतां दृष्टेर्योगाज्जाताऽस्मि सत्तमाः ।
किं मां न वेत्थ सुश्रोणीं स्वशक्तिं परमेश्वरीम् ।। ८९.२२ ।।

ततो ब्रह्मादयस्ते च तस्यास्तुष्टा वरं ददुः ।
नाम्नाऽसि त्रिकला देवी पाहि विश्वं च सर्वदा ।। ८९.२३ ।।

अपराण्यपि नामानि भविष्यन्ति तवानघे ।
गुणोत्थानि महाभागे सर्वसिद्धिकराणि च ।। ८९.२४ ।।

अन्यच्च कारणं देवि त्रिवर्णाऽसि वरानने ।
मूर्तित्रयं त्रिभिर्वर्णैः कुरु देवि स्वकं द्रुतम् ।। ८९.२५ ।।

एवमुक्ता तदा देवैरकरोत् त्रिविधां तनुम् ।
सितां रक्तां तथा कृष्णां त्रिमूर्तित्वं जगाम ह ।। ८९.२६ ।।

या सा ब्राह्मी शुभा मूर्त्तिस्तया सृजति वै प्रजाः ।
सौम्यरूपेण सुश्रोणी ब्रह्मसृष्ट्या विधानतः ।। ८९.२७ ।।

या सा रक्तेन वर्णेन सुरूपा तनुमध्यमा ।
शङ्खचक्रधरा देवी वैष्णवी सा कला स्मृता ।
सा पाति सकलं विश्वं विष्णुमायेति कीर्त्यते ।। ८९.२८ ।।

या सा कृष्णेन वर्णेन रौद्री मूर्त्तिस्त्रिशूलिनी ।
दंष्ट्राकरालिनी देवी सा संहरति वै जगत् ।। ८९.२९ ।।

या सृष्टिर्ब्रह्मणो देवी श्वेतवर्णा विभावरी ।
सा कुमारी महाभागा विपुलाब्जदलेक्षणा ।
सद्यो ब्रह्माणमामन्त्र्य तत्रैवान्तरधीयत ।। ८९.३० ।।

साऽन्तर्हिता ययौ देवी वरदा श्वेतपर्वतम् ।
तपस्तप्तुं महत् तीव्रं सर्वगत्वमभीप्सती ।। ८९.३१ ।।

या वैष्णवी कुमारी तु साप्यनुज्ञाय केशवम् ।
मन्दराद्रिं ययौ तप्तुं तपः परमदुश्चरम् ।। ८९.३२ ।।

या सा कृष्णा विशालाक्षी रौद्री दंष्ट्राकरालिनी ।
सा नीलपर्वतवरं तपश्चर्तुं ययौ शुभा ।। ८९.३३ ।।

अथ कालेन महता प्रजाः स्त्रष्टुं प्रजापतिः ।

आरब्धवान् तदा तस्य ववृधे सृजतो बलम् ।। ८९.३४ ।।

यदा न ववृधे तस्य ब्रह्मणो मानसी प्रजा ।
तदा दध्यौ किमेतन्मे न तथा वर्द्धते प्रजा ।। ८९.३५ ।।

ततो ब्रह्मा हृदा दध्यौ योगाभ्यासेन सुव्रते ।
चिन्तयन् बुबुधे देवस्तां कन्यां श्वेतपर्वते ।
तपश्चरन्ती सुमहत् तपसा दग्धकिल्बिषाम् ।। ८९.३६ ।।

ततो ब्रह्मा ययौ तत्र यत्र सा कमलेक्षणा ।
तपश्चरति तां दृष्ट्वा वाक्यमेतदुवाच ह ।। ८९.३७ ।।

**ब्रह्मोवाच ।**
किं तपः क्रियते भद्रे कार्यमावेक्ष्य शोभते ।
तुष्टोऽस्मि ते विशालाक्षि वरं किं ते ददाम्यहम् ।। ८९.३८ ।।

**सृष्टिरुवाच ।**
भगवन्नेकदेशस्था नोत्सहे स्थातुमञ्जसा ।
अतोऽर्थं त्वां वरं याचे सर्वगत्वमभीप्सती ।। ८९.३९ ।।

एवमुक्तस्तदा देव्या सृष्ट्या ब्रह्मा प्रजापतिः ।
उवाच तां तदा देवीं सर्वगा त्वं भविष्यसि ।। ८९.४० ।।

एवमुक्ता तदा तेन सृष्टिः सा कमलेक्षणा ।
तस्य ह्यङ्के लयं प्राप्ता सा देवी पद्मलोचना ।
तस्मादारभ्य कालात् तु ब्राह्मी सृष्टिर्व्यवर्द्धत ।। ८९.४१ ।।

ब्रह्मणो मानसाः सप्त तेषामन्ये तपोधनाः ।
तेषामन्ये ततस्त्वन्ये चतुर्द्धा भूतसंग्रहः ।
सस्थाणुजङ्गमानां च सृष्टिः सर्वत्र संस्थिता ।। ८९.४२ ।।

यत्किंचिद् वाङ्मयं लोके जगत्स्थावरजङ्गमम् ।
तत्सर्वं स्थापितं सृष्ट्या भूतं भव्यं च सर्वदा ।। ८९.४३ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे एकोननवतितमोऽध्यायः ।। ८९ ।।

**श्रीवराह उवाच ।**

श्रृणु चान्यं वरारोहे तस्या देव्या महाविधिम् ।
या सा त्रिशक्तिरुद्दिष्टा शिवेन परमेष्ठिना ।। ९०.१ ।।

तत्र सृष्टिः पुरा प्रोक्ता श्वेतवर्णा स्वरूपिणी ।
एकाक्षरेति विख्याता सर्वाक्षरमयी शुभा ।। ९०.२ ।।

वागीशेति समाख्याता क्वचिद् देवी सरस्वती ।
सैव विद्येश्वरी देवी सैव क्वाप्यमिताक्षरा ।
सैव ज्ञानविधिः क्वापि सैव देवी विभावरी ।। ९०.३ ।।

यानि सौम्यानि नामानि यानि ज्ञानोद्भवानि च ।
तानि तस्या विशालाक्षि द्रष्टव्यानि वरानने ।। ९०.४ ।।

या वैष्णवी विशालाक्षी रक्तवर्णा सुरूपिणी ।
अपरा सा समाख्याता रौद्री चैव परापरा ।। ९०.५ ।।

एतास्त्रयोऽपि सिद्ध्यन्ते यो रुद्रं वेत्ति तत्त्वतः ।
सर्वगेयं वरारोहे एकैव त्रिविधा स्मृता ।। ९०.६ ।।

एषा सृष्टिर्वरारोहे कथिता ते पुरातनी ।
तया सर्वमिदं व्याप्तं जगत् स्थावरजङ्गमम् ।। ९०.७ ।।

या साऽऽदौ वर्द्धिता सृष्टिर्ब्रह्मणोऽव्यक्तजन्मनः ।
तया तुल्यां स्तुतिं चक्रे तस्या देव्याः पितामहः ।। ९०.८ ।।

**ब्रह्मोवाच ।**

जयस्व सत्यसंभूते ध्रुवे देवि वराक्षरे ।
सर्वगे सर्वजननि सर्वभूतमहेश्वरि ।। ९०.९ ।।

सर्वज्ञे त्वं वरारोहे सर्वसिद्धिप्रदायिनी ।
सिद्धिबुद्धिकरी देवि प्रसूतिः परमेश्वरि ।। ९०.१० ।।

त्वं स्वाहा त्वं स्वधा देवि त्वमुत्पत्तिर्वरानने ।
त्वमोङ्कारस्थिता देवि वेदोत्पत्तिस्त्वमेव च ।। ९०.११ ।।

देवानां दानवानां च यक्षगन्धर्वरक्षसाम् ।
पशूनां वीरुधां चापि त्वमुत्पत्तिर्वरानने ।। ९०.१२ ।।

विद्या विद्येश्वरी सिद्धा प्रसिद्धा त्वं सुरेश्वरि ।
सर्वज्ञा त्वं वरारोहे सर्वसिद्धिप्रदायिनी ।। ९०.१३ ।।

सर्वगा गतसंदेहा सर्वशत्रुनिबर्हिणी ।
सर्वविद्येश्वरी देवी नमस्ते स्वस्तिकारिणि ।। ९०.१४ ।।

ऋतुस्नातां स्त्रियं गच्छेद् यस्त्वां स्तुत्वा वरानने ।
तस्यावश्यं भवेत् सृष्टिस्त्वत्प्रसादात् प्रजेश्वरि ।
स्वरूपा विजया भद्रा सर्वशत्रुप्रमोहिनि ।। ९०.१५ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे नवतितमोऽध्यायः ।। ९० ।।

**श्रीवराह उवाच ।**

या मन्दरगता देवी तपस्तप्तुं तु वैष्णवी ।
राजसी परमा शक्तिः कौमारव्रतधारिणी ।। ९१.१ ।।

सैकाकिनी तपस्तेपे विशालायां तु शोभने ।
तस्यास्तपन्त्याः कालेन महता क्षुभितं मनः ।। ९१.२ ।।

तस्मात् क्षोभात् समुत्तस्थुः कुमार्यः सौम्यलोचनाः ।
नीलकुञ्चितकेशान्ता बिम्बोष्ठायतलोचनाः ।
नितम्बरशनोद्दामा नूपुराढ्याः सुवर्चसः ।। ९१.३ ।।

एवंविधाः स्त्रियो देव्या क्षोभिते मनसि द्रुतम् ।
उत्तस्थुः शतसाहस्त्राः कोटिशो विविधाननाः ।। ९१.४ ।।

दृष्ट्वा कुमार्यः सा देवी तस्मिन्नेव गिरौ शुभा ।
तपसा निर्ममे देवी पुरं हर्म्यशताकुलम् ।। ९१.५ ।।

विशालरथ्यं सौवर्णप्रासादैरुपशोभितम् ।
अन्तर्जलानि वेश्मानि मणिसोपानवन्ति च ।
रत्नजालगवाक्षाणि आसन्नोपवनानि च ।। ९१.६ ।।

असंख्यातानि हर्म्याणि तथा कन्या धराधरे ।
प्राधान्येन प्रवक्ष्यामि कन्यानामानि शोभने ।। ९१.७ ।।

विद्युत्प्रभा चन्द्रकान्तिः सूर्यकान्तिस्तथाऽपरा ।
गम्भीरा चारुकेशी च सुजाता मुञ्जकेशिनी ।। ९१.८ ।।

घृताची चोर्वशी चान्या शशिनी शीलमण्डिता ।
चारुकन्या विशालाक्षी धन्या पीनपयोधरा ।। ९१.९ ।।

चन्द्रप्रभा गिरिसुता तथा सूर्यप्रभाऽमृता ।
स्वयंप्रभा चारुमुखी शिवदूती विभावरी ।। ९१.१० ।।

जया च विजया चैव जयन्ती चापराजिता ।
एताश्चान्याश्च शतशः कन्यास्तस्मिन् पुरोत्तमे ।। ९१.११ ।।

देव्या अनुचराः सर्वाः पाशाङ्कुशधराः शुभाः ।
ताभिः परिवृता देवी सिंहासनगता शुभा ।। ९१.१२ ।।

सुसितैश्चामरैः स्त्रीभिर्वीज्यमाना विलासिनी ।
कौमारं व्रतमास्थाय तपः कर्तुं समुद्यता ।। ९१.१३ ।।

यौवनस्था महाभागा पीनवृत्तपयोधरा ।
चम्पकाशोकपुन्नागनागकेसरदामभिः ।। ९१.१४ ।।

सर्वाङ्गेष्वर्चिता देवी ऋषिदेवनमस्कृता ।
पूज्यमाना वरस्त्रीभिः कुमारीभिः समन्ततः ।। ९१.१५ ।।

सर्वाङ्गभोगिनी देवी यावदास्ते तपोऽन्विता ।
तावदागतवांस्तत्र नारदो ब्रह्मणः सुतः ।। ९१.१६ ।।

तं दृष्ट्वा सहसा देवी ब्रह्मपुत्रं तपोधनम् ।
विद्युत्प्रभामुवाचेदमासनं दीयतामिति ।
पाद्यमाचमनीयं च क्षिप्रमस्मै प्रदीयताम् ।। ९१.१७ ।।

एवमुक्ता तदा देव्या कन्या विद्युप्रभा शुभा ।
आसनं पाद्यमर्घ्यं च नारदाय न्यवेदयत् ।। ९१.१८ ।।

ततः कृतासनं दृष्ट्वा प्रणतं नारदं मुनिम् ।
उवाच वचनं देवी हर्षेण महताऽन्विता ।। ९१.१९ ।।

स्वागतं भो मुनिश्रेष्ठ कस्माल्लोकादिहागतः ।
किं कार्यं वद ते कृत्यं मा ते कालात्ययो भवेत् ।। ९१.२० ।।

एवमुक्तस्तदा देव्या नारदः प्राह लोकवित् ।
ब्रह्मलोकादिन्द्रलोकं तस्माद् रौद्रमथाचलम् ।। ९१.२१ ।।

ततस्त्वामिह देवेशि द्रष्टुमभ्यागतः शुभे ।
एवमुक्त्वा मुनिः श्रीमांस्तां देवीमन्ववेक्षत ।। ९१.२२ ।।

दृष्ट्वा मुहूर्तं देवेशि विस्मितो नारदोऽभवत् ।
अहो रूपमहो कान्तिरहो धैर्यमहो वयः ।। ९१.२३ ।।

अहो निष्कामता देव्या इति खेदमुपाययौ ।
देवगन्धर्वसिद्धानां यक्षकिन्नररक्षसाम् ।। ९१.२४ ।।

न रूपमीदृशं क्वापि स्त्रीष्वन्यासु प्रदृश्यते ।
एवं संचिन्त्य मनसा नारदो विस्मयान्वितः ।। ९१.२५ ।।

प्रणम्य देवीं वरदामुत्पपात नभस्तलम् ।
गतश्च त्त्वरया युक्तः पुरीं दैत्येन्द्रपालिताम् ।। ९१.२६ ।।

महिषाख्येन भूतेशि समुद्रान्तःस्थितां पुरीम् ।
तत्राससाद भगवानसुरं महिषाकृतिम् ।। ९१.२७ ।।

दृष्ट्वा लब्धवरं वीरं देवसैन्यान्तकं महत् ।
स तेन पूजितो भक्त्या तदा लोकचरो मुनिः ।। ९१.२८ ।।

प्रीतात्मा नारदस्तस्मै देव्या रूपमनुत्तमम् ।
आचचक्षे यथान्यायं यद् दृष्टं देवतापुरे ।। ९१.२९ ।।

**नारद उवाच ।**
असुरेन्द्र श्रृणुष्वेकं कन्यारत्नं समाहितः ।
येन लब्धं तु त्रैलोक्यं वरदानाच्चराचरम् ।। ९१.३० ।।

ब्रह्मलोकादहं दैत्य मन्दराद्रिमुपागतः ।
तत्र देवीपुरं दृष्टं कुमारीशतसङ्कुलम् ।। ९१.३१ ।।

तत्र प्रधाना या कन्या तापसी व्रतधारिणी ।
सा देवदैत्ययक्षाणां मध्ये काचिन्न दृश्यते ।। ९१.३२ ।।

यादृशी सा शुभा दैत्य तादृश्येकाण्डमध्यतः ।
भ्रमता तादृशी दृष्ट्वा न कदाचिन्मया सती ।। ९१.३३ ।।

तस्याश्च देवगन्धर्वा ऋषयः सिद्धचारणाः ।
उपासांचक्रिरे सर्वे येऽप्यन्ये दैत्यनायकाः ।। ९१.३४ ।।

तां दृष्ट्वा वरदां देवीमहं तूर्णमिहागतः ।
अजित्वा देवगन्धर्वान् न तां जयति कश्चन ।। ९१.३५ ।।

एवमुक्त्वा क्षणं स्थित्वा तमनुज्ञाप्य नारदः ।
यथागतं ययौ धीमानन्तर्धानेन तत्क्षणात् ।। ९१.३६ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे एकनवतितमोऽध्यायः ।। ९१ ।।

**श्रीवराह उवाच ।**

गते तु नारदे दैत्यश्चिन्तयामास तां शुभाम् ।
कथितां नारदमुखाच्छ्रुत्वा विस्मितमानसः ।। ९२.१ ।।

तामेव चिन्तयन् शर्म न लेभे दैत्यसत्तमः ।
अलंशर्मा महामन्त्री आनिनाय महाबलः ।। ९२.२ ।।

तस्याष्टौ मन्त्रिणः शूरा नीतिमन्तो बहुश्रुताः ।
प्रघसो विघसश्चैव शङ्कुकर्णो विभावसुः ।
विद्युन्माली सुमाली च पर्जन्यः क्रूर एव च ।। ९२.३ ।।

एते मन्त्रिवरास्तस्य प्राधान्येन प्रकीर्तिताः ।
ते दानवेन्द्रमासीनमूचुः कृत्यं विधीयताम् ।। ९२.४ ।।

तेषां तद्वचनं श्रुत्वा दानवेन्द्रो महाबलः ।
उवाच कन्यालाभार्थं नारदावाप्तनिश्चयः ।। ९२.५ ।।

**महिष उवाच ।**

मह्यं तु कथिता बाला नारदेन महर्षिणा ।
सा चाजित्य सुराध्यक्षं न लभ्येत वराङ्गना ।। ९२.६ ।।

एतदर्थं भवन्तो वै कथयन्तु विमृश्य वै ।
कथं सा लभ्यते बाला कथं देवाश्च निर्जिताः ।
भवेयुरिति तत्सर्वं कथयन्तु द्रुतं मम ।। ९२.७ ।।

एवमुक्तास्ततः सर्वे कथयामासुरञ्जसा ।
ऊचुः संमन्त्र्य ते सर्वे कथयामो वयं प्रभो ।। ९२.८ ।।

एवमुक्तस्तथोवाच प्रघसो दानवेश्वरम् ।
या सा ते कथिता दैत्य नारदेन महासती ।
सा शक्तिः परमा देवी वैष्णवी लोकधारिणी ।। ९२.९ ।।

गुरुपत्नी राजपत्नी तथा सामन्तयोषितः ।
जिघृक्षन् नश्यते राजा तथागम्यागमेन च ।। ९२.१० ।।

प्रघसेनैवमुक्तस्तु विघसो वाक्यमब्रवीत् ।
सम्यगुक्तं प्रघसेन तां देवीं प्रति पार्थिव ।। ९२.११ ।।

यदि नाम मतैक्यं तु बुद्धिः स्मरणमागता ।
वरणीया कुमारी तु सर्वदा विजिगीषुभिः ।
न स्वतन्त्रेण कन्यायाः कार्यं क्वापि प्रकर्षणम् ।। ९२.१२ ।।

यदि वो रोचते वाक्यं मदीयं मन्त्रिसत्तमाः ।
तदानीं तां शुभां देवीं गत्वा याचन्तु मन्त्रिणः ।। ९२.१३ ।।

यो महात्मा भवेत् तस्या बन्धुस्तं याचयामहे ।
साम्नैवादौ ततः पश्चात् करिष्यामः प्रदानकम् ।
ततो भेदं करिष्यामस्ततो दण्डं क्रमेण च ।। ९२.१४ ।।

अनेन क्रमयोगेन यदि सा नैव लभ्यते ।
ततः सन्नह्य गच्छामो बलाद् गृह्णीम तां शुभाम् ।। ९२.१५ ।।

विघसेनैवमुक्ते तु शेषास्तु मन्त्रिणो वचः ।
शुभमूचुः प्रशंसन्तः सर्वे हर्षितया गिरा ।। ९२.१६ ।।

साधूक्तं विघसेनेदं यत् तां प्रति वराननाम् ।
तदेव क्रियतां शीघ्रं दूतस्तत्र विसर्ज्यताम् ।। ९२.१७ ।।

यः सर्वशास्त्रनीतिज्ञः शुचिः शौर्यसमन्वितः ।
तस्माज् ज्ञात्वा तु तां देवीं वर्णतो रूपतो गुणैः ।। ९२.१८ ।।

पराक्रमेण शौर्येण शौण्डीर्येण बलेन च ।
बन्धुवर्गेण सामग्र्य स्थानेन करणेन च ।
एवं ज्ञात्वा तु तां देवीं ततः कार्यं विधीयताम् ।। ९२.१९ ।।

ततः सपदि दैत्यस्य तद्वचः साधु साध्विति ।
प्रशशंसुर्वरारोहे विघसं मन्त्रिसत्तमम् ।। ९२.२० ।।

प्रशस्य सर्वे तं दूतं संदेष्टुमुपचक्रमुः ।
विद्युत्प्रभं महाभागं महामायाविदं शुभम् ।। ९२.२१ ।।

विसर्जयित्वा तं दूतं विघसो वाक्यमब्रवीत् ।
संनह्यन्तां दानवेन्द्राश्चतुरङ्गबलेन ह ।
क्रियतां विजयस्तावद् देवसैन्यं प्रति प्रभो ।। ९२.२२ ।।

असुरेन्द्र सुरैर्भग्नैस्तत् पराक्रमभीषिता ।
सा कन्या वशतामेति त्वयि शक्रसमागते ।। ९२.२३ ।।

लोकपालैर्जितैः सर्वैस्तथैव मरुतां गणैः ।
नागैर्विद्याधरैः सिद्धैर्गन्धर्वैः सर्वतो जितैः ।
रुद्रैर्वसुभिरादित्यैस्त्वमेवेन्द्रो भविष्यसि ।। ९२.२४ ।।

इन्द्रस्य ते शतं कन्या देवगन्धर्वयोषितः ।
वशमायान्ति साऽपि स्यात् सर्वथा वशमागता ।। ९२.२५ ।।

एवमुक्तस्तदा दैत्यः सेनापतिमुवाच ह ।
विरूपाक्षं महामेघवर्णं नीलाञ्जनप्रभम् ।। ९२.२६ ।।

आनीयतां द्रुतं सैन्यं हस्त्यश्वरथपत्तिनाम् ।
येन देवान् सगन्धर्वान् जयामि युधि दुर्ज्जयान् ।। ९२.२७ ।।

एवमुक्ते विरूपाक्षस्तदा सेनापतिर्द्रुतम् ।
आनिनाय महत्सैन्यमनन्तमपराजितम् ।। ९२.२८ ।।

एकैको दानवस्तत्र वज्रहस्तसमो युधि ।
एकैकं स्पर्धते देवं जेतुं स्वेन बलेन ह ।। ९२.२९ ।।

तेषां प्रधानभूतानामर्बुदं नवकोटयः ।
येषामेकस्यानुयाति तावद् बलमर्थोर्ज्जितम् ।। ९२.३० ।।

तेषां नैकसहस्त्राणि दैत्यानां तु महात्मनाम् ।
समितिं चक्रुरव्यग्रास्तदा दैत्याः प्रहारिणः ।
प्रयाणं कारयामासुर्देवसैन्यजिघांसया ।। ९२.३१ ।।

विचित्रयाना विविधध्वजाग्रा
विचित्रशस्त्रा विविधोग्ररूपाः ।
दैत्या सुरात्र् जेतुमिच्छन्त उच्चैर्
ननर्त्तुरात्तायुधभीमहस्ताः ।। ९२.३२ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे द्विनवतितमोऽध्यायः ।। ९२ ।।

**श्रीवराह उवाच ।**

ततो महिषदैत्यस्तु कामरूपी महाबलः ।
मत्तहस्तिनामारुह्य यियासुर्मेरुपर्वतम् ।। ९३.१ ।।

तत्रैन्द्रं पुरमासाद्य देवैः सह शतक्रतुम् ।
अभिदुद्राव दैत्येन्द्रस्ततो देवाः क्रुधान्विताः ।। ९३.२ ।।

आदाय स्वानि शस्त्राणि वाहनानि विशेषतः ।
अधिष्ठायासुरानाजौ दुद्रुवुर्मुदिता भृशम् ।। ९३.३ ।।

तेषां प्रववृते युद्धं तुमुलं लोमहर्षणम् ।
घोरं प्रचण्डयोधानामन्योन्यमभिगर्जताम् ।। ९३.४ ।।

तत्राञ्जनो नीलकुक्षिर्मेघवर्णो बलाहकः ।
उदराक्षो ललाटाक्षः सुभीमो भीमविक्रमः ।
स्वर्भानुश्चेति दैत्याष्टौ वसून् दुद्रुवुराहवे ।। ९३.५ ।।

यथासंख्येन तद्वच्च दैत्या द्वादश चापरे ।
आदित्यान् दैत्यवर्यास्तु तेषां प्राधान्यतः श्रृणु ।। ९३.६ ।।

भीमो ध्वङ्क्षो ध्वस्तकर्णः शङ्कुकर्णस्तथैव च ।
वज्रकायोऽतिवीर्यश्च विद्युन्माली तथैव च ।। ९३.७ ।।

रक्ताक्षो भीमदंष्ट्रस्तु विद्युज्जिह्वस्तथैव च ।
अतिकायो महाकायो दीर्घबाहुः कृतान्तकः ।। ९३.८ ।।

एते द्वादश दैत्येन्द्रा आदित्यान् युधि दुद्रुवुः ।
स्वकं सैन्यमुपादाय तद्वदन्येऽपि दानवाः ।
रुद्रान् दुद्रुवुरव्यग्रा यथासंख्येन कोपिताः ।। ९३.९ ।।

कालः कृतान्तो रक्ताक्षो हरणो मित्रहाऽनिलः ।
यज्ञहा ब्रह्महा गोघ्नः स्त्रीघ्नः संवर्त्तकस्तथा ।। ९३.१० ।।

इत्येते दश चैकश्च दैत्येन्द्रा युद्धदुर्मदाः ।
यथासंख्येन रुद्रांस्तु दुद्रुवुर्भीमविक्रमाः ।। ९३.११ ।।

शेषान् देवान् शेषदैत्या यथायोगमुपाद्रवन् ।
स्वयं महिषदैत्यस्तु इन्द्रं दुद्राव वेगितः ।। ९३.१२ ।।

स चापि बलवान् दैत्यो ब्रह्मणो वरदर्पितः ।
अवध्यः पुरुषेणाजौ यद्यपि स्यात् पिनाकधृक् ।। ९३.१३ ।।

आदित्यैर्वसुभिः साध्यै रुद्रैश्च निहता भृशम् ।
असुरा यातुधानाश्च संख्यापूरणकेवलाः ।। ९३.१४ ।।

देवानामपि सैन्यानि निहतान्यसुरैर्युधि ।
एवं भूते तदा भग्ने देवेन्द्रे विद्रुताः सुराः ।। ९३.१५ ।।

अर्दिता विविधैः शस्त्रैः शूलपट्टिशमुद्गरैः ।
गतवन्तो ब्रह्मलोकमसुरैरर्दिताः सुराः ।। ९३.१६ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे त्रिनवतितमोऽध्यायः ।। ९३ ।।

**श्रीवराह उवाच ।**

अथ विद्युत्प्रभो दैत्यस्तथा दूतो विसर्जितः ।
देव्याः सकाशं गत्वाऽसौ तामुवाच सुमध्यमाम् ।। ९४.१ ।।

प्रणम्य प्रयतो भूत्वा कुमारीशतसंकुलाम् ।
आस्थाने विनयापन्नस्ततो वचनमब्रवीत् ।। ९४.२ ।।

**विद्युत्प्रभ उवाच ।**

देवि पूर्वमृषिस्त्वासीदादिसर्गे कसंभवः ।
सखा सारस्वतो जातः सुपार्श्वो नाम वै विभुः ।। ९४.३ ।।

तस्याभवन्महातेजाः सिन्धुद्वीपः प्रतापवान् ।
स हि तीव्रं तपस्तेपे माहिष्मत्यां पुरोत्तमे ।। ९४.४ ।।

कुर्वतस्तु तपो घोरं निराहारस्य शोभने ।
आद्या तु विप्रचित्तेस्तु सुता सुरसुतोपमा ।
माहिष्मतीति विख्याता रूपेणासदृशी भुवि ।। ९४.५ ।।

सा सखीभिः परिवृता विहरन्ती यदृच्छया ।
आगता मन्दरद्रोणीं तत्रापश्यत् तपोवनम् ।
मुनेरम्बरसंज्ञस्य विविधद्रुममालिनम् ।। ९४.६ ।।

लतागृहैस्तु विविधैर्वकुलैर्लकुचैस्तथा ।
चन्दनैः स्पन्दनैः शालैः सरलैरुपशोभितम् ।
विचित्रवनखण्डैश्च भूषितं तु महात्मनः ।। ९४.७ ।।

दृष्ट्वाश्रमपदं रम्यं सासुरी कन्यका शुभम् ।
माहिष्मती वरारोहा चिन्तयामास भामिनी ।। ९४.८ ।।

भीषयित्वाहमेनं तु तापसं त्वाश्रमे स्वयम् ।
तिष्ठामि क्रीडती सार्धं सखीभिः परमार्चिता ।। ९४.९ ।।

एवं संचिन्त्य सा देवी महिषी संबभूव ह ।
सखीभिः सह विश्वेशि तीक्ष्णश्रृङ्गाग्रधारिणी ।। ९४.१० ।।

तमृषिं भीषितुं ताभिः सह गत्वा वरानना ।

असौ बिभीषितस्ताभिस्तां ज्ञात्वा ज्ञानचक्षुषा ।
आसुरीं क्रोधसंपन्नः शशाप शुभलोचनाम् ।। ९४.११ ।।

यस्माद् भीषयसे मां त्वं महिषीरूपधारिणी ।
अतो भव महिष्येव पापकर्मे शतं समाः ।। ९४.१२ ।।

एवमुक्ता ततः सा तु सखीभिः सह वेपती ।
पादयोर्न्यपतत् तस्य शापान्तं कुरु जल्पती ।। ९४.१३ ।।

तस्यास्तद् वचनं श्रुत्वा स मुनिः करुणान्वितः ।
शापान्तमकरोत् तस्या वाक्यं चेदमुवाच ह ।। ९४.१४ ।।

अनेनैव स्वरूपेण पुत्रमेकं प्रसूय वै ।
शापान्तो भविता भद्रे मद्वाक्यं न मृषा भवेत् ।। ९४.१५ ।।

एवमुक्ता गता सा तु नर्मदातीरमुत्तमम् ।
यत्र तेपे तपो घोरं सिन्धुद्वीपो महातपाः ।। ९४.१६ ।।

तत्र चेन्दुमती नाम दैत्यकन्याऽतिरूपिणी ।
सा दृष्टा तेन मुनिना विवस्त्रा मज्जती जले ।। ९४.१७ ।।

चस्कन्द स मुनिः शुक्रं शिलाद्रोण्यां महातपाः ।
तच्च माहिष्मती दृष्ट्वा दिव्यगन्धि सुगन्धि च ।
ततः सखीरुवाचेदं पिबामीदं जलं शुभम् ।। ९४.१८ ।।

एवमुक्त्वा तु सा पीत्वा तच्छुक्रं मुनिसंभवम् ।
प्राप्ता गर्भं मुनेर्बीजात् सुषाव च तदा सतो ।। ९४.१९ ।।

तस्याः पुत्रोऽभवद् धीमान् महाबलपराक्रमः ।
महिषेति स्मृतो नाम्ना ब्रह्मवंशविवर्धनः ।
स त्वां वरयते देवि देवसैन्यविमर्दनः ।। ९४.२० ।।

स सुरानपि जित्वाऽऽजौ त्रैलोक्यं च तवानघे ।
दास्यते देवि सुप्रोतस्तव सर्वं महासुरः ।
तस्यात्मोपप्रदानेन कुरु देवि महत् कृतम् ।। ९४.२१ ।।

एवमुक्ता तदा देवी तेन दूतेन शोभना ।

जहास परमा देवी वाक्यं नोवाच किञ्चन ।। ९४.२२ ।।

तस्या हसन्त्या दूतोऽसौ त्रैलोक्यं सचराचरम् ।
ददर्श कुक्षौ संभ्रान्तस्तत्क्षणात् समपद्यत ।। ९४.२३ ।।

ततो देव्याः प्रतीहारी जया नामातितेजना ।
देव्या हृदि स्थितं वाक्यमुवाच तनुमध्यमा ।। ९४.२४ ।।

**जया उवाच ।**
कन्यार्थी वदते यद्धि तत्त्वया समुदीरितम् ।
यदि नाम व्रतं चास्याः कौमारं सार्वकालिकम् ।
अपि चान्याः कुमार्योऽत्र सन्ति देव्याः पदानुगाः ।। ९४.२५ ।।

तासामेकाऽपि नो लभ्या किमु देवी स्वयं शुभा ।
याहि दूत त्वरन् मा ते किञ्चिदन्यद् भविष्यति ।। ९४.२६ ।।

एवमुक्तो गतो दूतस्तावद् व्योम्नि महामुनिः ।
आयातो नारदस्तूर्णं नृत्यन्नुच्चैर्महातपाः ।। ९४.२७ ।।

दिष्ट्या दिष्ट्येति वदतस्तां देवीं शुभलोचनाम् ।
उपविष्टो जगादाथ आसने परमेऽर्चितः ।। ९४.२८ ।।

प्रणम्य देवीं सर्वेशीमुवाच च महातपाः ।
देवि देवैरहं प्रीतैः प्रेषितोऽस्मि तवान्तिकम् ।। ९४.२९ ।।

विजिता देवि दैत्येन महिषाख्येन निर्जराः ।
त्वां गृहीतुं प्रयत्नं स कृतवान् देवि दैत्यराट् ।। ९४.३० ।।

एवमुक्तोऽस्मि देवैस्त्वां बोधयामि वरानने ।
स्थिरीभूता महादेवि तं दैत्यं प्रतिघातय ।। ९४.३१ ।।

उक्त्वैवान्तर्हितः सद्यो नारदः स्वेच्छया ययौ ।
देवी च कन्यास्ताः सर्वाः सन्नह्यन्तामुवाच ह ।। ९४.३२ ।।

ततः कन्या महाभागाः सर्वास्ता देविशासनात् ।
बभूवुर्घोररूपिण्यः खड्गचर्मधनुर्धराः ।
संग्रामहेतोः संतस्थुर्दैत्यविध्वंसनाय ताः ।। ९४.३३ ।।

तावद् दैत्यबलं सर्वं मुक्त्वा देवचमूं द्रुतम् ।
आययौ यत्र तद् देव्याः संनद्धं स्त्रीबलं महत् ।। ९४.३४ ।।

ततस्ता युयुधुः कन्या दानवैः सह दर्पिताः ।
क्षणेन तद् बलं ताभिश्चतुरङ्गं निपातितम् ।। ९४.३५ ।।

शिरांसि तत्र केषांचिच्छिन्नानि पतितानि च ।
अपरेषां विदार्योरः क्रव्यादाः पान्ति शोणितम् ।। ९४.३६ ।।

अन्ये कबन्धभूतास्तु ननृतुर्दैत्यनायकाः ।
एवं क्षणेन ते सर्वे विध्वस्ताः पापचेतसः ।
अपरे विद्रुताः सर्वे यत्रासौ महिषासुरः ।। ९४.३७ ।।

ततो हाहाकृतं सर्वं यथा दैत्यबलं महत् ।
एवं तदाकुलं दृष्ट्वा महिषो वाक्यमब्रवीत् ।
सेनापते किमेतद्धि बलं भग्नं ममाग्रतः ।। ९४.३८ ।।

ततो यज्ञहनुर्नामा दैत्यो हस्तिस्वरूपवान् ।
उवाच भग्नमेतद्धि कुमारीभिः समन्ततः ।। ९४.३९ ।।

ततो दुद्राव महिषस्ताः कन्याः शुभलोचनाः ।
गदामादाय तरसा कन्या दुद्राव वेगवान् ।। ९४.४० ।।

यत्र तिष्ठति सा देवी देवगन्धर्वपूजिता ।
तत्रैव सोऽसुरः प्रायाद् यत्र देवी व्यवस्थिता ।
सा च दृष्ट्वा तमायान्तं विंशद्धस्ता बभूव ह ।। ९४.४१ ।।

धनुः खड्गं तथा शक्तिं शरान् शूलं गदां तथा ।
परशुं डमरुं चैव तथा घण्टां विशालिनीम् ।
शतघ्नीं मुद्गरं घोरं भुशुण्डीं कुन्तमेव च ।। ९४.४२ ।।

मुसलं च तथा चक्रं भिन्दिपालं तथैव च ।
दण्डं पाशं ध्वजं चैव पद्मं चेति च विंशतिः ।। ९४.४३ ।।

भूत्वा विंशभुजा देवी सिंहमास्थाय दंशिता ।
सस्मार रुद्रं देवेशं रौद्रं संहारकारणम् ।। ९४.४४ ।।

ततो वृषध्वजः साक्षाद् रुद्रस्तत्रैव आययौ ।
तया प्रणम्य विज्ञप्तः सर्वान् दैत्यान् जयाम्यहम् ।। ९४.४५ ।।

त्वयि सन्निधिमात्रे तु देवदेव सनातन ।
एवमुक्त्वाऽसुरान् सर्वान् जिगाय परमेश्वरी ।। ९४.४६ ।।

मुक्तवा तमेकं महिषं शेषं हत्वा तमभ्ययात् ।
यावद् देवी ततः साऽपि तां दृष्ट्वा सोऽपि दुद्रुवे ।। ९४.४७ ।।

क्वचिद् युध्यति दैत्येन्द्रः क्वचिच्चैव पलायति ।
क्वचित् पुनर्मृधं चक्रे क्वचित् पुनरुपारमत् ।। ९४.४८ ।।

एवं वर्षहस्त्राणि दश तस्य तया सह ।
दिव्यानि विगतानि स्युर्युध्यतस्तस्य शोभने ।
बभ्राम सकलं त्वाजौ ब्रह्माण्डं भीतमानसम् ।। ९४.४९ ।।

ततः कालेन महता शतश्रृङ्गे महागिरौ ।
पद्भ्यामाक्रम्य शूलेन निहतो दैत्यसत्तमः ।। ९४.५० ।।

शिरश्चिच्छेद खड्गेन तत्र चान्तःस्थितः पुमान् ।
निर्गत्य विगतः स्वर्गं देव्याः शस्त्रनिपातनात् ।। ९४.५१ ।।

ततो देवगणाः सर्वे महिषं वीक्ष्य निर्जितम् ।
सब्रह्मका स्तुतिं चक्रुर्देव्यास्तुष्टेन चेतसा ।। ९४.५२ ।।

**देवा ऊचुः ।**
नमो देवि महाभागे गम्भीरे भीमदर्शने ।
जयस्थे स्थितिसिद्धान्ते त्रिनेत्रे विश्वतोमुखि ।। ९४.५३ ।।

विद्याविद्ये जये याज्ये महिषासुरमर्दिनि ।
सर्वगे सर्वदेवेशि विश्वरूपिणि वैष्णवि ।। ९४.५४ ।।

वीतशोके ध्रुवे देवि पद्मपत्रशुभेक्षणे ।
शुद्धसत्त्वव्रतस्थे च चण्डरूपे विभावरि ।। ९४.५५ ।।

ऋद्धिसिद्धिप्रदे देवि विद्येऽविद्येऽमृते शिवे ।

शांकरी वैष्णवी ब्राह्मी सर्वदेवनमस्कृते ।। ९४.५६ ।।

घण्टाहस्ते त्रिशूलास्त्रे महामहिषमर्दिनि ।
उग्ररूपे विरूपाक्षि महामायेऽमृतस्त्रवे ।। ९४.५७ ।।

सर्वसत्त्वहिते देवि सर्वसत्त्वमये ध्रुवे ।
विद्यापुराणशिल्पानां जननी भूतधारिणी ।। ९४.५८ ।।

सर्वदेवरहस्यानां सर्वसत्त्ववतां शुभे ।
त्वमेव शरणं देवि विद्येऽविद्ये श्रियेऽम्बिके ।
विरूपाक्षि तथा क्षान्ति क्षोभितान्तर्जलेऽविले ।। ९४.५९ ।।

नमोऽस्तु ते महादेवि नमोऽस्तु परमेश्वरि ।
नमस्ते सर्वदेवानां भावनित्येऽक्षयेऽव्यये ।। ९४.६० ।।

शरणं त्वां प्रपद्यन्ते ये देवि परमेश्वरि ।
न तेषां जायते किञ्चिदशुभं रणसङ्कटे ।। ९४.६१ ।।

यश्च व्याघ्रभये घोरे चौरराजभये तथा ।
स्तबवमेनं सदा देवि पठिष्यति यतात्मवान् ।। ९४.६२ ।।

निगडस्थोऽपि यो देवि त्वां स्मरिष्यति मानवः ।
सोऽपि बन्धैर्विमुक्तस्ते सुसुखं वसते सुखी ।। ९४.६३ ।।

**श्रीवराह उवाच ।**
एवं स्तुता तदा देवी देवैः प्रणतिपूर्वकम् ।
उवाच देवान् सुश्रोणी वृणुध्वं वरमुत्तमम् ।। ९४.६४ ।।

**देवा ऊचुः ।**
देवि स्तोत्रमिदं ये हि पठिष्यन्ति तवानघे ।
सर्वकामसमापन्नान् कुरु देवि स नो वरः ।। ९४.६५ ।।

एवमस्त्विति तान् देवानुक्त्वा देवी पराऽपरा ।
विससर्ज ततो देवान् स्वयं तत्रैव संस्थिता ।। ९४.६६ ।।

एतद् द्वितीयं यो जन्म वेद देव्या धराधरे ।
स वीतशोको विरजाः पदं गच्छत्यनामयम् ।। ९४.६७ ।।

**श्रीवराह उवाच ।**

या सा नीलगिरिं याता तपसे धृतमानसा ।
रौद्री तमोद्भवा शक्तिस्तस्याः श्रृणु धरे व्रतम् ।। ९५.१ ।।

तपः कृत्वा चिरं कालं पालयाम्यखिलं जगत् ।
एवमुद्दिश्य पञ्चाग्निं साधयामास भामिनी ।। ९५.२ ।।

तस्याः कालान्तरे देव्यास्तपन्त्यास्तप उत्तमम् ।
रुरुर्नाम महातेजा ब्रह्मदत्तवरोऽसुरः ।। ९५.३ ।।

समुद्रमध्ये रत्नाढ्यं पुरमस्ति महावनम् ।
तत्र राजा स दैत्येन्द्रः सर्वदेवभयंकरः ।। ९५.४ ।।

अनेकशतसाहस्त्रकोटिकोटिशतोत्तरैः ।
असुरैरन्वितः श्रीमान् द्वितीयो नमुचिर्यथा ।। ९५.५ ।।

कालेन महता चासौ लोकपालपुराण्यथ ।
जिगीषुः सैन्यसंवीतो देवैर्भयमरोचयत् ।। ९५.६ ।।

उत्तिष्ठतस्तस्य महासुरस्य
समुद्रतोयं ववृधेऽतिमात्रम् ।
अनेकनक्रग्रहमीनजुष्ट -
माप्लावयत् पर्वतसानुदेशान् ।। ९५.७ ।।

अन्तः स्थितानेकसुरारिसंघं
विचित्रचर्मायुधचित्रशोभम् ।
भीमं बलं बलिनं चारुयोधं
विनिर्ययौ सिन्धुजलाद् विशालम् ।। ९५.८ ।।

तत्र द्विपा दैत्यवरैरुपेता
समानघण्टासुसमूहयुक्ताः ।
विनिर्ययुः स्वाकृतिभीषणानि
समन्तमुच्चैः खलु दर्शयन्तः ।। ९५.९ ।।

अश्वास्तथा काञ्चनपीडनद्धा
रोहीतमत्स्यैः समतां जलान्तः ।
व्यवस्थितास्ते सममेव तूर्णं
विनिर्ययुः लक्षशः कोटिशश्च ।। ९५.१० ।।

रथा रविस्यन्दनतुल्यवेगाः
सुचक्रदण्डाक्षत्रिवेणुयुक्ताः ।

सुशस्त्रयन्त्राः परिपीडिताङ्गा -
श्चलत्पताकास्त्वरितं विशङ्काः ।। ९५.११ ।।

तथैव योधाः स्थगितेतरेतरा -
स्तितीर्षवः प्रवरास्तूर्णपाणयः ।
रणे रणे लब्धजयाः प्रहारिणो
विरेजुरुच्चैरसुरानुगा भृशम् ।। ९५.१२ ।।

देवेषु चैव भग्नेषु विनिर्गत्य जलात् ततः ।
चतुरङ्गबलोपेतः प्रायादिन्द्रपुरं प्रति ।। ९५.१३ ।।

युयोध च सूरैः सार्द्धं रुरुर्दैत्यपतिस्तथा ।
मुद्गरैर्मुशलैः शूलैः शरैर्दण्डायुधैस्तथा ।
जघ्नुर्दैत्याः सुरान् संख्ये सुराश्चैव तथाऽसुरान् ।। ९५.१४ ।।

एवं क्षणमथो युद्धं तदा देवाः सवासवाः ।
असुरैर्निर्जिताः सद्यो दुद्रुवुर्विमुखा भृशम् ।। ९५.१५ ।।

देवेषु चैव भग्नेषु विद्रुतेषु विशेषतः ।
असुरः सर्वदेवानामन्वधावत वीर्यवान् ।। ९५.१६ ।।

ततो देवगणाः सर्वे द्रवन्तो भयविह्वलाः ।
नीलं गिरिवरं जग्मुर्यत्र देवी व्यवस्थिता ।। ९५.१७ ।।

ौद्री तपोरता देवी तामसी शक्तिरुत्तमा ।
संहारकारिणी देवी कालरात्रीति तां विदुः ।। ९५.१८ ।।

सा दृष्ट्वा तान् तदा देवान् भयत्रस्तान् विचेतसः ।
मा भैष्टेत्युच्चकैर्देवी तानुवाच सुरोत्तमान् ।। ९५.१९ ।।

**देव्युवाच ।**
किमियं व्याकुला देवा गतिर्व उपलक्ष्यते ।
कथयध्वं द्रुतं देवाः सर्वथा भयकारणम् ।। ९५.२० ।।

**देवा ऊचुः ।**
अयमायाति दैत्येन्द्रो रुरुर्भीमपराक्रमः ।
एतस्य भीतान् रक्षस्व त्वं देवान् परमेश्वरि ।। ९५.२१ ।।

एवमुक्ता तदा देवैर्देवी भीमपराक्रमा ।
जहास परया प्रीत्या देवानां पुरतः शुभा ।। ९५.२२ ।।

तस्या हसन्त्या वक्त्रात् तु बह्व्यो देव्यो विनिर्ययुः ।

याभिर्विश्वमिदं व्याप्तं विकृताभिरनेकशः ।। ९५.२३ ।।

पाशाङ्कुशधराः सर्वाः सर्वाः पीनपयोधराः ।
सर्वाः शूलधरा भीमाः सर्वाश्चापधराः शुभाः ।। ९५.२४ ।।

ताः सर्वाः कोटिशो देव्यस्तां देवीं वेष्ट्य संस्थिताः ।
युयुधुदर्निवैः सार्द्धं बद्धतूणा महाबलाः ।
क्षणेन दानवबलं तत्सर्वं निहतं तु तैः ।। ९५.२५ ।।

देवाश्च सर्वे संयत्ता युयुधुर्दानवं बलम् ।
आदित्या वसवो रुद्रा विश्वेदेवास्तथाश्विनौ ।
सर्वे शस्त्राणि संगृह्य युयुधुर्दानवं बलम् ।। ९५.२६ ।।

कालरात्र्या बलं यच्च यच्च देवबलं महत् ।
तत्सर्वं दानवबलमनयद् यमसादनम् ।। ९५.२७ ।।

एक एव महादैत्यो रुरुस्तस्थौ महामृधे ।
स च मायां महारौद्रीं रौरवीं विससर्ज ह ।। ९५.२८ ।।

सा माया ववृधे भीमा सर्वदेवप्रमोहिनी ।
तया तु मोहिता देवाः सद्यो निद्रां तु भेजिरे ।। ९५.२९ ।।

देवी च त्रिशिखेनाजौ तं दैत्यं समताड्यत् ।
तया तु ताडितान्तस्य दैत्यस्य शुभलोचने ।
चर्ममुण्डे उभे सम्यक् पृथग्भूते बभूवतुः ।। ९५.३० ।।

रुरोस्तु दानवेन्द्रस्य चर्ममुण्डे क्षणाद् यतः ।
अपहृत्याहरद् देवी चामुण्डा तेन साभवत् ।। ९५.३१ ।।

सर्वभूतमहारौद्री या देवी परमेश्वरी ।
संहारिणी तु या चैव कालरात्रिः प्रकीर्तिता ।। ९५.३२ ।।

तस्या ह्यनुचरा देव्यो या ह्यसंख्यातकोटयः ।
तास्तां देवीं महाभागां परिवार्य व्यवस्थिताः ।। ९५.३३ ।।

या क्यामासुरव्यग्रास्तास्तां देवीं बुभुक्षिताः ।
बुभुक्षिता वयं देवि देहि नो भोजनं शुभे ।। ९५.३४ ।।

एवमुक्ता तदा देवी दध्यौ तासां तु भोजनम् ।
न चाध्यगच्छच्च यदा तासां भोजनमन्तिकात् ।। ९५.३५ ।।

ततो दध्यौ महादेवं रुद्रं पशुपतिं विभुम् ।

सोऽपि ध्यानात् समुत्तस्थौ परमात्मा त्रिलोचनः ।। ९५.३६ ।।

उवाच च द्रुतं देवीं किं ते कार्यं विवक्षितम् ।
ब्रूहि देवि वरारोहे यत् ते मनसि वर्त्तते ।। ९५.३७ ।।

**देव्युवाच ।**
भक्ष्यार्थमासां देवेश किञ्चिद् दातुमिहार्हसि ।
बलात्कुर्वन्ति मामेता भक्षार्थिन्यो महाबलाः ।
अन्यथा मामपि बलाद् भक्षयिष्यन्ति मां प्रभो ।। ९५.३८ ।।

**रुद्र उवाच ।**
एतासां श्रृणु देवेशि भक्षमेकं मयोद्यतम् ।
कथ्यमानं वरारोहे कालरात्रि महाप्रभे ।। ९५.३९ ।।

या स्त्री सगर्भा देवेशि अन्यस्त्रीपरिधानकम् ।
परिधत्ते स्पृशेच्चापि पुरुषस्य विशेषतः ।। ९५.४० ।।

स भागोऽस्तु महाभागे कासाञ्चित् पृथिवीतले ।
अन्याश्छिद्रेषु बालानि गृहीत्वा तत्र वै बलिम् ।
लब्ध्वा तिष्ठन्तु सुप्रीता अपि वर्षशतान्यपि ।। ९५.४१ ।।

अन्याः सूतिगृहे छिद्रं गृह्णीयुस्तत्र पूजिताः ।
निवसिष्यन्ति देवेशि तथान्या जातहारिकाः ।। ९५.४२ ।।

गृहे क्षेत्रे तडागेषु वाप्युद्यानेषु चैव हि ।
अन्यचित्ता रुदन्त्यो याः स्त्रियस्तिष्ठन्ति नित्यशः ।
तासां शरीराण्याविश्य काश्चित्तृप्तिमवाप्स्यथ ।। ९५.४३ ।।

एवमुक्त्वा तदा देवीं स्वयं रुद्रः प्रतापवान् ।
दृष्ट्वा रुरुं च सबलमसुरेन्द्रं निपातितम् ।
स्तुतिं चकार भगवान् स्वयं देवस्त्रिलोचनः ।। ९५.४४ ।।

**रुद्र उवाच ।**
जयस्व देवि चामुण्डे जय भूतापहारिणि ।
जय सर्वगते देवि कालरात्रि नमोऽस्तु ते ।। ९५.४५ ।।

विश्वमूर्त्ते शुभे शुद्धे विरूपाक्षि त्रिलोचने ।
भीमरूपे शिवे विद्ये महामाये महोदये ।। ९५.४६ ।।

मनोजवे जये जृम्भे भीमाक्षि क्षुभितक्षये ।
महामारि विचित्राङ्गे गेयनृत्यप्रिये शुभे ।। ९५.४७ ।।

विकराले महाकालि कालिके पापहारिणि ।
पाशहस्ते दण्डहस्ते भीमरूपे भयानके ।। ९५.४८ ।।

चामुण्डे ज्वलमानास्ये तीक्ष्णदंष्ट्रे महाबले ।
शवयानस्थिते देवि प्रेतासनगते शिवे ।। ९५.४९ ।।

भीमाक्षि भीषणे देवि सर्वभूतभयंकरि ।
कराले विकराले च महाकाले करालिनि ।
काली कराली विक्रान्ता कालरात्रि नमोऽस्तु ते ।। ९५.५० ।।

विकरालमुखी देवि ज्वालामुखि नमोऽस्तु ते ।
सर्वसत्त्वहिते देवि सर्वदेवि नमोऽस्तु ते ।। ९५.५१ ।।

इति स्तुता तदा देवी रुद्रेण परमेष्ठिना ।
तुतोष परमा देवी वाक्यं चेदमुवाच ह ।
वरं वृणीष्व देवेश यत् ते मनसि वर्त्तते ।। ९५.५२ ।।

**रुद्र उवाच ।**
स्तोत्रेणानेन ये देवि त्वां स्तुवन्ति वरानने ।
तेषां त्वं वरदा देवि भव सर्वगता सती ।। ९५.५३ ।।

यश्चेमं त्रिप्रकारं तु देवि भक्त्या समन्वितः ।
स पुत्रपौत्रपशुमान् समृद्धिमुपगच्छति ।। ९५.५४ ।।

यश्चेमं श्रृणुयाद् भक्त्या त्रिशक्तयास्तु समुद्भवम् ।
सर्वपापविनिर्मुक्तः पदं गच्छत्यनामयम् ।। ९५.५५ ।।

एवं स्तुत्वा भवो देवीं चामुण्डां परमेश्वरीम् ।
क्षणादन्तर्हितो देवस्ते च देवा दिवं ययुः ।। ९५.५६ ।।

य एतां वेद वै देव्या उत्पत्तिं त्रिविधां धरे ।
सर्वपापविनिर्मुक्तः परं निर्वाणमृच्छति ।। ९५.५७ ।।

भ्रष्टराज्यो यदा राजा नवम्यां नियतः शुचिः ।
अष्टम्यां च चतुर्दश्यामुपवासी नरोत्तमः ।
संवत्सरेण लभते राज्यं निष्कण्टकं नृपः ।। ९५.५८ ।।

एषा त्रिशक्तिरुद्दिष्टा नयसिद्धान्तगामिनी ।
एषा श्वेता परा सृष्टिः सात्त्विकी ब्रह्मसंस्थिता ।। ९५.५९ ।।

एषैव रक्ता रजसि वैष्णवी परिकीर्त्तिता ।
एषैव कृष्णा तमसि रौद्री देवी प्रकीर्त्तिता ।। ९५.६० ।।

परमात्मा यथा देव एक एव त्रिधा स्थितः ।
प्रयोजनवशाच्छक्तिरेकैव त्रिविधाऽभवत् ।। ९५.६१ ।।

य एतं श्रृणुयात् सर्गं त्रिशक्त्याः परमं शिवम् ।
सर्वपापविनिर्मुक्तः परं निर्वाणमाप्नुयात् ।। ९५.६२ ।।

यश्चेदं श्रृणुयाद् भक्त्या नवम्यां नियतः स्थितः ।
स राज्यमतुलं लेभे भयेभ्यश्च प्रमुच्यते ।। ९५.६३ ।।

यस्येदं लिखितं गेहे सदा तिष्ठति धारिणि ।
न तस्याग्निभयं घोरं सर्पचौरादिकं भवेत् ।। ९५.६४ ।।

यश्चैतत् पूजयेद् भक्तया पुस्तकेऽपि स्थितं बुधः ।
तेन यष्टं भवेत् सर्वं त्रैलोक्यं सचराचरम् ।। ९५.६५ ।।

जायन्ते पशवः पुत्रा धनं धान्यं वरस्त्रियः ।
रत्नान्यश्वा गजा भृत्या यानाश्चाशु भवन्त्युत ।
यस्येदं तिष्ठते गेहे तस्येदं जायते ध्रुवम् ।। ९५.६६ ।।

**श्रीवराह उवाच ।**
एतदेव रहस्यं ते कीर्त्तितं भूतधारिणि ।
रुद्रस्य खलु माहात्म्यं सकलं कीर्त्तितं मया ।। ९५.६७ ।।

नवकोट्यस्तु चामुण्डा भेदभिन्ना व्यवस्थिता ।
या रौद्री तामसी शक्तिः सा चामुण्डा प्रकीर्त्तिता ।। ९५.६८ ।।

अष्टादश तथा कोट्यो वैष्णव्या भेद उच्यते ।
या सा च राजसी शक्तिः पालनी चैव वैष्णवी ।
या ब्रह्मशक्तिः सत्त्वस्था अनन्तास्ताः प्रकीर्त्तिता ।। ९५.६९ ।।

एतासां सर्वभेदेषु पृथगेकैकशो धरे ।
सर्वासां भगवान् रुद्रः सर्वगश्च पतिर्भवेत् ।। ९५.७० ।।

यावन्त्यस्या महाशक्त्यास्तावद् रूपाणि शंकरः ।
कृतवांस्ताश्च भजते पतिरूपेण सर्वदा ।। ९५.७१ ।।

यश्चाराधयते तास्तु रुद्रस्तुष्टो भविष्यति ।
सिद्ध्यन्ते तास्तदा देव्यो मन्त्रिणो नात्र संशयः ।। ९५.७२ ।।

।। इति श्रीवराहपुराणे भगवच्छास्त्रे पञ्चनवतितमोऽध्यायः ।। ९५ ।।

**अथ त्रिशक्तिरहरये रौद्रीव्रतम्**

॥ श्रीवराह उवाच ॥
या सा नील गिरि याता तपसे धृतमानसा ॥
रोद्री तमोद्भवा शक्तिस्तस्याः शृणु धरे व्रतम् ॥ १ ॥
तपः कृत्वा चिरं कालं पालयाम्याखलं जगत् ॥
एवमुद्दिश्य पंचाग्निं साधयामास भामिनी ॥ २ ॥
तरयाः कालान्तरे देव्यास्तपन्यास्तप उत्तमम् ॥
रुरुनम महातेजाः ब्रह्मदत्तवरो ऽसुरः ॥ ३॥
समुद्रमध्ये रत्नाढ्यं पुरमस्ति महावनम् ॥
तत्र राजा स देत्येन्द्रः सर्वदेवभयङ्करः॥४॥
अनेकशतसाहस्रकेटिट्युत्तरोत्तरैः ॥
असुरैरन्वितः श्रीमान्द्रतीयो नमुचिर्यथा ॥५ ॥
कालेन महता चासौ लोकपालपुराण्यथ ॥
जिगीषुः सैन्यसंवीतो देवैर्युद्धमरोचयत् ॥ ६॥
उत्तिष्ठतस्तस्य महासुरस्य समुद्रतोयं ववृथेऽतिमात्रम् ॥
अनेकनकप्रदमीनजुष्टमालावयपर्वतसानुदेशान् ॥ ७॥
अन्तःस्थितानेकसुरारि सङ्कवाद्विचित्रवमयुधचित्रशोभम् ॥
भीमं बलं वर्मितचारुयोधं विनिर्ययौ सिन्धुजलादशालात् ॥८॥
तत्र द्विपा दैत्यवरैरुपेताः समानघण्टायुत किंकिणीकाः॥
विनर्ययुः स्वाकृतिभीपणाश्च समत्वमुच्चैः खलु दर्शयन्तः ॥ ९॥
अश्वास्तथा काञ्चनपीठनद्धा रोडैस्तु युक्ताः सितचामरैश्च ॥
व्यवस्थितास्ते सममेव तु विनिर्ययुर्लक्षशः कोटेशश्च ॥१०॥
रथा रविस्यन्दनतुल्यवेगाः सुचक्रदण्डाक्षत्रिवेणुयुक्ताः ॥
सुशखयन्त्राः परपीडताङ्गाश्चलत्यनन्तास्त्वरितं विशक्ताः ॥ ११ ॥
तथैव योधाः स्थगितेतरेतास्ततर्षिको ये वरतूणपणियः ॥
पदे पदे लब्धजयाः प्रहारिणो विरेजुरुचैरसुरानुगा भृशम् ॥ १२॥
देवेषु चैव भरेषु विनिर्गत्य ज्दात्ततः ॥
चतुरङ्गबलोपेतः प्रायादिन्द्रपुरं प्रति ॥ १३ ॥
युयोध च सुरैः साढे रुदैत्यपतिस्तथा ।
सुदूर्मुसलधैरैः शरैर्दण्डायुधैस्तथा ॥ १४ ॥
जनुदैरयाः सुरान्संख्य सुराश्चैव तथासुरान् ॥
एवं क्षणमथो युध्वा तदा देवाः सवासवाः ॥ १५ ॥
असुरैर्निर्जिताः सद्यो दुद्रुवुर्विमुखा भृशम् ॥
देवेषु चैवग्भग्रेषु विद्वतेषु विशेषतः ॥ १६ ॥
असुरः सर्वदेवानामन्वधावत वीर्यवान् ।
ततो देवगणाः सर्वे द्रवन्तो भयावह्वलाः॥१७॥
नीले गिरिवर जग्मुर्यत्र देवी व्यवास्थता ॥
रोदी तपोरता देवी तामसी शक्तिरुत्तमा ॥ १८ ॥

संहारकारिणी देवी कालरात्रीत तां विदुः ॥
सा दृष्ट्वा तान् तदा देवान भयत्रस्तान्विचेतसः ॥ १९ ॥
मा भेप्टेत्युच्चकैदेवी तानुवाच सुरोत्तमान् ॥
देव्युवाच ॥
किमियं व्याकुला देवा गतिर्व उपलक्ष्यते ॥ २० ॥
कथयध्वं द्रुतं देवाः सर्वथा भयकार णम् ।।
देवा ऊचुः ।
अयमायाति दैत्येन्द्रो रुरुभीमपराक्रमः ॥ २१॥
एतस्य भातान् रक्षस्व त्वं देवान्परमेश्वार ॥
एवमुक्तस तदा देवी भीम पराकमा ॥ २२ ॥
जहास परया प्रीत्या देवानां पुरतः शुभा ।।
तस्या हसुन्त्या वक्रात्तु बढ्यो देव्यो वार्नर्ययुः ॥ २३॥
याभिर्विश्वमिदं व्याप्तं विकृताभैरनेकशः ॥
पाशांकुशधराः सर्वाः सर्वाः पनि पयोधराः ॥ २४ ॥
सर्वाः शूलधरा भीमाः सर्वाश्चापधराः शुभाः ॥
ताः सः काटिशो देव्यस्त दे। वेष्टय संस्थिताः ॥ २५॥
युयुधुदानवैः सार्धं बद्धतूणा महाबलाः ॥
क्षणेन दानववलं तत्सर्वं निहतं तु तैः ॥२६॥
देवाश्च सर्वे सम्पन्ना युयुधुनगं बलम् ॥
कालराच्या बलं चैव यच्च देवबलं महत् ॥ २७ ॥
तत्सर्वं दानवबलमनयद्यमसादनम् ॥
एक एवं महादैत्यो रुरुस्तस्थौ महामृधे ॥ २८ ॥
स च मायां महारौद्री रौवीं विससर्ज है ॥
सा माया ववृधे भीमा सर्वदेवप्रमोदिनी ॥ २९ ॥
तया विमोहिता देवाः सर्वे निद्रा तु लेभिरे ॥
देवा च त्रिशिखेनाजौ तं दैत्यं समताडयत् ॥ ३० ॥
तया तु ताडितस्यास्य दैत्यस्य शुभलोचने ॥
चर्ममुण्डे उभे सम्यक् पृथग्भुते बभूवतुः॥३१॥
रुस्तु दानवेन्द्रस्य चर्ममुण्डे क्षणाद्यतः॥
अपहृत्याइरदेवी चामुण्डा तेन साऽभवतु ॥३२॥
वाश्च सर्व सम्पन्न युयुधुनिच ॥
स च मायां महा इथं समताडयत् ॥ ३३
सर्वभूतमहारौद्री या देवी परमेश्वरी ॥
संहारिणी तु या चैव कालरात्रिः प्रकीर्तिता ॥ ३३ ॥
तस्या अनुचरा देव्यो बढ्योऽसंख्यात कोटयः ॥
तास्तां देवीं महाभागों परिवार्य व्यवस्थिताः ॥ ३४ ॥
याचयामासुरव्यग्रास्तास्तां देवीं बुभुक्षिताः ॥
वयं देवि सुधार्ताः स्मो देहि नो भोजनं शुभे ॥ ३८॥

एवमुक्ता तदा देवी दध्या तासां तु भोजनम् ॥
न चाध्यगच्छच्च यदा तासां भोजनमन्तिकात्॥ ३६॥
ततो दध्यो महादेवं रुद्रं पशुपतिं विभुम् ।
सोऽपि ध्यानात्समुत्तस्थौ परमात्मा त्रिलोचनः ॥ ३७॥
उवाच च द्रुतं देवीं किं ते कार्य विवक्षितम् ॥
इहि देवि वरारोहे यत्ते मनसि वर्तते ॥ ३८ ॥
देव्युवाच ॥
भक्ष्यार्थमासां देवेश किञ्चिद्दातुमिहार्हसि ॥
बलात्कुर्वन्ति मामेता भक्षार्थिन्यो मः बलाः ॥ ३९ ॥
अन्यथा मामपि बलाद्भक्ष्यायष्यन्ति ताः प्रभो ॥
रुद्र उवाच ॥
एतासां शृणु देवेश भक्ष्यमेकं मयोदितम् ॥ ४०॥
कथ्य मानं वरारोहे कालरात्रे महाप्रभे ॥
या स्त्री सगर्भा देवेशि वन्यस्त्रीपरिधानकम् ॥ ४१ ॥
परिधत्ते स्पृशेचापि पुरुषस्य विशेषतः ॥
स भागोस्तु महाभागो कासाञ्चित्पृथिवीतले ॥ ४२ ॥
अन्याश्छिद्रेषु वाऽज्ञानां गृहीत्वा तत्र वै बालम् ॥
लब्ध्वा भवन्तु सुप्रीता अपि वर्षशता पि ॥ १३ ॥
अन्याः सुतिगृहे च्छिद्रं गृह्णीयुस्तत्र पूजिताः ॥
निवसिष्यन्ति देवेश तथान्या जातहारिकाः ॥ ४४ ।।
गृहे क्षेत्रे तडागेषु वाप्युद्यानेषु चैव हि ॥
अन्यचिता रुदन्त्य याः स्त्रियास्तष्ठन्ति नित्यशः ॥४५॥
तासां शरीराण्याविश्य कचित्तृप्तिमवाप्स्यथ ॥
एवमुक्त्वा तदा देवी स्वयं रुद्रः प्रतापवान् ॥ ४६॥
दृष्ट्वा रुरुच सबमसुरेन्द्र निपातितम् ॥
स्तुतिं चकार भगवान् स्वयं देवस्त्रिलोचनः॥ १७॥
रुद्र उवाच ॥
जयस्व देवि चामुण्डे जय भूतापहारिणि ॥
जय सर्वगते देवि कालरात्रे नमोऽस्तु ते ॥ १८ ॥
विश्वमुत्ते शुभे शुद्धे विरूपाक्ष त्रिलो चने ॥
भीमरूपे शिवे वेद्ये महामाये महोदये ॥ १९ ॥
मनोजवे जये जृम्भे भीमाक्ष क्षुभितक्षये ॥
महामारि विचित्राङ्गे जय नृत्यप्रिये शुभे ॥५०॥
विकराले महाकालि कालिके पापहारिणि ।
पाशहस्ते दण्डहस्ते भीमरूपे भयानके ॥५१॥
चामुण्डे ज्वमानास्ये तीक्ष्णदेष्टे महाबले॥
शतयानस्थिते देवि प्रेतासनगते शिवे॥५२॥
भीमाक्षि भीषणे देवि सर्वभूतभयङ्कार।

कराले विकराले च महाकाले करालिनि॥२३॥
काली कराली विक्रान्ता कालरात्रि नमोऽस्तु ते ॥
इति स्तुता तदा देवी रुद्रेण परमेष्ठिना ॥ २४ ॥
तुतोष परमा देवी वाक्यं चेद मुवाच ह ।
वरं वृणीष्व देवेश यत्ते मनास वर्तते ॥ ५५ ॥
रुद्र उवाच ॥
स्तोत्रेणानेन ये देवि त्वां स्तुवन्ति वरानने ॥
तेषां त्वं वरदा देवि भव सर्वगता सती ॥५६॥
यथेमं त्रिःप्रकारे तु देवि भक्त्या समान्यतः ॥
स पुत्रपौत्रपशुमान् समृद्धिमुपगच्छति ॥ ५७॥
यथेमं शृणुया इत्या त्रिशक्यास्तु समुद्भवम् ॥
सर्वपापविनिर्मुक्तो पदं गच्छत्यनामयम् ॥ २८ ॥
एवं स्तुत्वा भवो देवी चामुण्डां च सुरेश्वरीम् ॥
क्षणा दन्तर्हितो देवस्ते च देवा दिवं ययुः ॥३९॥
य एतां वेद वै देच्या उत्पत्ति त्रिविधां वरम् ॥
स कर्मपाशनिर्मुक्तः परं निर्वाणभृच्छात ॥ ६० ॥
भ्रष्टराज्यो यदा राजा नवम्यां नियतः शुचिः ॥
अष्टभ्यां च चतुर्दश्यामुफ्वासी नरोत्तमः ॥ ६१ ॥
संवत्सरेण लभते राज्यं निष्कण्टकं नृपः॥
एषां त्रिशक्तिंरुद्दिष्टा नयसिद्धान्तगामिनी ॥६२॥
एषा श्वेता परा सृष्टिः सात्त्विकी ब्रह्मसंस्थिता ॥
एषैव रक्ता रजसि वैष्णवी परिकीर्तिता ॥६३॥
एषैत्र कृष्णा तमसि रौद्री देवी प्रकीर्तिता ॥
परमात्मा यथा देव एक एव त्रिधा स्थितः ॥ ६४ ॥
प्रयोजनक्शाच्छक्तिरेकैव त्रिविधाऽभवत् ॥
य एतं शृणुयात्सगै त्रिशत्तयाः परमं शिवम् ॥ ६५ ॥
सर्वपापविनिर्मुक्तः परं निर्वाणमाप्नुयात् ॥
यश्चमं श्रुणुयान्नित्यं नवम्य नियतः स्थितः ॥ ६६ ॥
स राज्यमतुलं लेभे भयेभ्यश्च प्रमुच्यते ॥
यस्येदं लिखितं गेहे सदा तिष्ठति धारितम् ॥ १७॥
न तस्याग्निभयं घारं सर्पचौरादिनं भवेत् ॥
यश्चमं पूजयेद्भक्त्या पुस्तकेऽपि स्थितं बुधः ॥ ६८ ॥
तेन चेष्टुं भवेत्सर्वं त्रैलोक्यं सचराचरम् ॥
जायन्ते पशवः पुत्रा धन धान्यं वराः स्त्रियः ॥ ६९ ॥
रत्नान्यश्वास्तथा गावो दासा दास्यो भवन्ति हि ॥
यस्येदं तिष्ठते गेहे तस्य सम्पद्भवेधुवम् ॥ ७० ॥
श्रीवराह उषाच ॥
एतदेव रहस्यं ते कीर्तितं भूतधारिणे ॥

रुद्धस्य खलु माहात्म्यं सकलं कीर्तितं मया ॥ ७१ ॥
नवकोट्यस्तु चामुण्डा भभिन्ना व्यवस्थिताः ॥
या रौद्री तामसी शक्तिः सा चामुण्डा प्रकीर्तिता ।। ७२ ॥
अष्टादश तथा कोट्यो वैष्णव्या भेदू उच्यते ॥
या विष्णो राजसी शक्तिः पालनी चैव वैष्णवी ॥७३॥
या ब्रह्मशाक्तः सत्त्वस्था सा ह्यनन्ता प्रकार्तिता ॥
एतासां सर्वभेदेषु पृथगेकैकशी धरे ॥७४॥
सर्वस भगवान् रुखः सर्वगश्च पतिर्भवेत् ॥
यावन्त्यस्या महाशक्यास्तावद्रूपाणि शङ्करः ॥ ७५॥
कृतवांस्ताश्च भजते पतिरूपेण सर्वदा ।
यश्चाराधयते तस्य रुद्रस्तुष्टो भविष्यति॥
सिध्यन्ति तस्य कामाचे मनसा चिन्तिता अपि॥७३॥
इति श्रीवराहपुराणे त्रिशक्तिमाहात्म्ये त्रिशक्ति रहस्यं नाम षण्णवतितमोऽध्यायः॥९६॥

।। अथ रुद्रमाहात्म्यम् ।।

वराह उवाच ।।

अथ रुद्रव्रतोत्पत्तिं शृणु देवि वरानने ।।

येन ज्ञातेन पापेभ्यो मुच्यते नात्र संशयः ।।१।।

ब्रह्मणा तु यदा सृष्टः पूर्वं रुद्रो वरानने ।।

तृतीये जन्मनि विभुः पिङ्गाक्षो नीललोहितः ।।२।।

तदा कौतूहलाद्ब्रह्मा स्कन्धे तं जगृहे प्रभुः ।।

स्कन्धारूढस्तदा रुद्रो ब्रह्मणोऽव्यक्तजन्मनः ।। ३ ।।

जन्मतश्च शिरो यद्धि पंचमं तज्जगाद ह ।।

मन्त्रमाथर्वणं रुद्रो येन सद्यः प्रमुच्यते ।। ४ ।।

कपालिन् रुद्र बभ्रोऽथ भव कैरात सुव्रत ।।

पाहि विश्वं विशालाक्ष कुमार वरविक्रम ।। ५ ।।

एवमुक्तस्तदा रुद्रो भविष्यैर्नामभिर्भवः ।।

कपालशब्दात्कुपितस्तच्छिरो विचकर्त्त ह ।। ६ ।।

वामाङ्गुष्ठनखेनाद्यं प्राजापत्यं विचक्षणः ।।

तन्निकृत्तं शिरो धात्रि हस्तलग्नं बभूव ह।।७।।

तस्मिन्निकृत्ते शिरसि प्राजापत्यं त्रिलोचनः।।

ब्रह्माणं प्रयतो भूत्वा रुद्रो वचनमब्रवीत् ।।८।।

रुद्र उवाच ।।

कथं कपालं मे देव करात्पतति सुव्रत ।।

नश्यते च कथं पापं ममैतद्वद सुव्रत ।। ९ ।।

ब्रह्मोवाच ।।

इदमेव व्रतं देव चर कापालिकं विभो ।।

समयाचारसंयुक्तं कृत्वा स्वेनैव तेजसा ।।97.१० ।।

एवमुक्तस्तदा रुद्रो ब्रह्मणाऽव्यक्तमूर्त्तिना ।।

आजगाम गिरिं गन्तुं माहेन्द्रं पापनाशनम् ।। ११ ।।

तत्र स्थित्वा महादेवस्तच्छिरो बिभिदे त्रिधा ।।

तस्मिन् भिन्ने पृथक्केशान्गृहीत्वा भगवान्भवः ।। १२ ।।

यज्ञोपवीतं केशं तु महास्थ्नाक्षमणींस्तथा ।।

कपालशकलं चैकमसृक्पूर्णं करे स्थितम् ।। १३ ।।

अपरं खण्डशः कृत्वा जटाजूटे न्यवेशयत् ।।

एवं कृत्वा महादेवो बभ्रामेमां वसुन्धराम् ।। १४ ।।

सप्तद्वीपवतीं पुण्यां मज्जंस्तीर्थेषु नित्यशः ।।

समुद्रे प्रथमं स्नात्वा ततो गङ्गां व्यगाहत ।। १५ ।।
सरस्वतीं ततो गत्वा यमुनासङ्गमं ततः।।
शतद्रुं च ततो गत्वा देविकां च महानदीम् ।।४९।।
वितस्तां चन्द्रभागां च गोमतीं सिन्धुमेव च ।।
तुङ्गभद्रां तथा गोदामुत्तरे गण्डकीं तथा ।। १७ ।।
नेपालं च ततो गत्वा ततो रुद्रमहालयम् ।।
ततो दारुवनं गत्वा केदारगमनं पुनः ।। १८ ।।
महेश्वरं ततो गत्वा गयां पुण्यामथागमत् ।।
तत्र फल्गुकृतस्नानः पितॄन्सन्तर्प्य यत्नतः ।। १९ ।।
एवं वेगेन सकलं ब्रह्माण्डं भूतधारिणि ।।
बभ्राम सर्वदेवेशः षष्ठेऽब्दे तस्य चापतत् ।। 97.२० ।।
परिधानं तु कौपीनं नग्नः कापालिकोऽभवत् ।।
भ्रमतः परिधानं तु कौपीनं रशना गतम्।। २१ ।।
तस्मिंस्तु पतिते देवि नग्नः कापालिकोऽभवत् ।। २२ ।।
पुनरब्ददद्वयं भ्रान्तस्तीर्थे तीर्थे हरः स्वयम् ।।
कपालं त्यक्तुकामः सन्तद्धस्तात्तत्तु नापतत् ।२३।।
पुनरब्ददद्वयं भ्रान्तो ब्रह्माण्डं तीर्थकारणात् ।।
तीर्थेतीर्थे हरः स्नात्वा कपालं त्यक्तुमिच्छति।।२४।।
त्यजतोऽपि न तद्धस्ताच्च्यवते भूतधारिणि ।।
ततोऽब्दमेकं बभ्राम हिमवत्पर्वते शुभे ।।२५।।
ततोऽन्यद्वर्षमेकं तु वर्त्तते हिमवद्गिरौ ।।
भ्रमतो विभ्रमो जातस्त्रिणेत्रस्य महात्मनः ।। २६ ।।
पुनरब्ददद्वयं चान्यत्परमेष्ठी वृषाकपिः ।।
बभ्राम रुद्रस्तीर्थानि पुराणानि समन्ततः ।। २७ ।।
कस्यचित्त्वथ कालस्य द्वादशेऽब्दे धराधरे ।।
वाराणसीं गतो देवस्तत्र स्नानमथारभत् ।। २८ ।।
गङ्गायां देवदेवेशो यावन्मज्जति भामिनि ।।
भवेत्कपालं पतितं हस्ताग्राद्ब्रह्मणः पुरा ।। २९ ।।
कपालमोचनं नाम ततस्तीर्थमनुत्तमम् ।।
पृथिव्यां ख्यातिमगमद्वाराणस्यां धराधरे ।। 97.३० ।।
गत्वा हरिहरक्षेत्रं स्नात्वा देवाङ्गदे तथा ।।
सोमेश्वरं समभ्यर्च्य गतोऽसौ चक्रतीर्थकम् ।। ३१ ।।
तत्र स्नात्वा तथा नत्वा त्रिजलेश्वरसंज्ञितम् ।।

अयोध्यायां तथा गत्वा वाराणस्यां ततोऽगमत् ।। ३२ ।।
द्वादशाब्दैर्गतवतः सीमाचारिगणैस्तथा ।।
बलात्कारेण तद्धस्तात्कपालं पातितं भुवि ।। ३३ ।।
कपालमोचनं तीर्थं ततो जातमघापहम् ।।
गङ्गाम्भसि ततः स्नाप्य विश्वेशं पूज्य भक्तितः ।। ३४ ।।
रुद्रो विशुद्धिमापन्नो मुक्तः स ब्रह्महत्यया ।।
कपालमोचनं नाम तीर्थं त्रैलोक्यविश्रुतम् ।। ३५ ।।
यत्राप्लुतो नरो भक्त्या ब्रह्महा तु विशुध्यति ।।
कपालं पतितं दृष्ट्वा रुद्रहस्ताच्चतुर्मुखः ।। ३६ ।।
आगतो देवसहितो वाक्यं चेदमुवाच ह ।।
ब्रह्मोवाच ।।
भव रुद्र विशालाक्ष लोकमार्गव्यवस्थित ।। ३७ ।।
(भव रुद्र विरूपाक्ष लोकमार्गे व्यास्थितः ।।
व्रतानि कुरु ते देव त्वच्चीर्णानि महाप्रभो ।।)
कपालं गृह्य यद्भ्रान्तं कपालव्यग्रपाणिना ।।
तद्व्रतं नग्नकापालं भविष्यति नृणां भुवि ।। ३८ ।।
यच्च ते बभ्रुता जाता हिमवत्यचलोत्तमे ।।
भ्रमतस्तद्व्रतं देव बाभ्रव्यं तद्भविष्यति ।। ३९ ।।
यच्चेदानीं विशुद्धस्य तीर्थेऽस्मिन्देहशुद्धता ।।
तच्छुद्धशैवं भवतु व्रतं ते पापनाशनम् ।। 97.४० ।।
ये पुरस्कृत्य देवास्त्वां पूज्यं यद्विधिनान्विताः ।।
शास्त्राणि तानि सर्वेषां कथयिष्यामि नान्यथा ।। ४१ ।।
व्रतानि कुरुते देव त्वत्कृतानि हि पुत्रक ।।
स त्वत्प्रसाद्देवेश ब्रह्महापि विशुध्यति ।। ४२ ।।
यद्व्रतं नग्नकापालं यद्बाभ्रव्यं त्वया कृतम् ।।
यत्कृतं शुद्धशैवं च तत्तन्नाम्ना भविष्यति ।। ४३ ।।
मां पुरस्कृत्य देवस्त्वं पूज्यसे यैर्विधानतः ।।
तेषां शास्त्राणि सर्वाणि शास्त्रं पाशुपतं तथा ।। ४४ ।।
कथयस्व महादेव सविधानं समासतः ।।
एवमुक्तस्ततो रुद्रो ब्रह्मणाऽव्यक्तमूर्तिना ।।४५।।
देवैर्जयेति संतुष्टः कैलासनिलयं ययौ ।।
ब्रह्मा चापि सुरैः सार्द्धं गतः स्वर्लोकमुत्तमं ।।४६।।
देवा अपि ययुः खं च स्वस्थानं ते यथागतम् ।।

एतद्रुद्रस्य माहात्म्यं मया ते परिकीर्त्तितम् ।। ४७ ।।
चरितं यच्च देवस्य वित्तं समभवद्भुवि ।। ४८ ।।
इति श्रीवराहपुराणे रुद्रमाहात्म्यं नाम सप्तनवतितमोऽध्यायः ।। ९७ ।।

अथ पर्वाध्यायः ।।
धरण्युवाच ।।
योऽसौ सत्यतपा नाम लुब्धो भूत्वा द्विजो बभौ ।।
येनारुणिर्व्याघ्रभयाद्रक्षितो यः स्वशक्तितः ।। १ ।।
दुर्वासाः संश्रुतार्थश्च हिमवन्तं नगं ययौ ।।
तस्योपरि महच्चित्रं भवतीति त्वयेरितम् ।। २ ।।
कीदृशं तन्ममाचक्ष्व महत्कौतूहलं विभो ।।
श्रीवराह उवाच ।।
स हि सत्यतपा पूर्वं भृगुवंशोद्भवो द्विजः ।। ३ ।।
दस्युसंसर्गसम्भूतो दस्युवत्समजायत ।।
ततः कालेन महता ऋषिसङ्गात्पुनर्द्विजः ।। ४ ।।
बभौ दुर्वाससा सम्यग्बोधितश्च विशेषतः ।।
हिमाद्रेरुत्तरे पादे पुष्यभद्रा नदी शुभा ।। ५ ।।
तस्यास्तीरे शिला दिव्या नाम्ना चित्रशिला धरे ।।
न्यग्रोधश्च महांस्तत्र नाम्ना भद्रो महावटः ।। ६ ।।
तत्र सत्यतपाः स्थित्वा तपः कुर्वन्महातपाः ।।
स कदाचित्कुठारेण चकर्त्त समिधः किल ।। ७ ।।
चिच्छेद चांगुलीमेकां वामतर्जनिकां मुनिः ।।
छिन्नायामंगुलौ तस्य भस्मचूर्णं भवत्किल ।। ८ ।।
न लोहितं न मांसं तु न मज्जा तत्र दृश्यते ।।
अंगुली सन्धिता तेन पूर्ववच्चाभवत्कृते ।। ९ ।।
तस्मिन् भद्रवटे चैकं मिथुनं किन्नरं स्थितम् ।।
रात्रौ सुप्तमृषेस्तस्य दृष्ट्वा तन्महदद्भुतम्।। ९८.१० ।।
प्रभाते विमले प्राप्तमिन्द्रलोकमिति स्मृतिः ।।
अथेन्द्रेण सुराः सर्वे यक्षगन्धर्वकिन्नरैः ।। ११ ।।
पृष्टाः किंचिदिहाश्चर्यमपूर्वं कथ्यतामिति ।।
तत्र रुद्रसरस्तीरे यदेतन्मिथुनं शुभम् ।। १२ ।।
स्थितं किन्नरयोस्तच्च वाक्यं चेदमुवाच ह।।
दृष्टं तु मह दाश्चर्यं पुष्यभद्रातटे शुभे ।। १३ ।।
यदेतत्सत्यतपसः समवोचत्ततः शुभे ।।
दृष्टं किंचिदिहाश्चर्यं दृष्टिस्तु हिमवद्गिरौ ।। १४ ।।
पुष्यभद्रानदी तीरे महदाश्चर्यमुत्तमम् ।।
यदेतत्सत्यतपसः समवोचस्ततः शुभे ।। १५ ।।

स्रवणं भस्मनश्चैव श्रुतं सर्वं शशंस ह ।।
तच्छ्रुत्वा सहसा शक्रो विस्मितो विष्णुमब्रवीत् ।। १६ ।।
आगच्छ विष्णो गच्छामो हिमवत्पार्श्वमुत्तमम् ।।
तत्राश्चर्यमपूर्वं मे कथितं किन्नरेण ह ।। १७।।
एवमुक्तस्ततो विष्णुर्वाराहं रूपमग्रहीत् ।।
मृगयुश्च तथैवेन्द्रो जग्मतुस्तमृषिं प्रति ।। १८ ।।
विष्णुर्वाराहरूपेण ऋषिदृष्टिपथे स्थितः ।।
भूत्वा दृश्योऽप्यदृश्योऽभूत्पुनरेव च दृश्यते ।। १९ ।।
तावदिन्द्रो धनुष्पाणिस्तीक्ष्णसायकधृग्वने ।।
आगत्य सत्यतपतमृषिमेनमुवाच ह ।। ९८.२० ।।
भगवन्निह दृष्टस्ते वराहः पृथुलो महान् ।।
येन तं हन्मि भृत्यानां पोषणाय महामुने ।। २१।।
एवमुक्तो मुनिस्तेन चिन्तयामास तत्क्षणात् ।।
यदि तं दर्शयाम्यस्मै वराहं हन्यते तदा ।। २२ ।।
नो चेत्कुटुंबः क्षुधया सीदत्यस्य न संशयः ।।
जायापुत्रसमायुक्तो लुब्धकोऽयं क्षुधा न्वितः ।। २३ ।।
सशल्यश्च वराहोऽयं ममाश्रममुपागतः ।।
एवं गते तु किं कार्यमथासौ चिन्तयन् प्रभुः ।। २९ ।।
नाध्यगच्छत बुद्धिश्च क्षणात्तस्य व्यजायत ।। २५ ।।
दृष्टं चक्षुर्निहितं जङ्गमेषु जिह्वा वक्तुं मृगयौ तद्विसृष्टम् ।।
द्रष्टुं चक्षुर्नास्ति जिह्वेह वक्तुं जिह्वायाः स्यात्ततत्वतोऽस्तीह चक्षुः ।। २६ ।।
एवं श्रुत्वा द्वावपि तस्य तुष्टौ इन्द्राविष्णू दर्शयन्तौ स्वमूर्तिम् ।।
वाक्यं चेदमूचतुर्ब्रूहि नौ ते तुष्टौ धन्यं वरमेकं वदस्व ।।
तच्छ्रुत्वाऽसौ सत्यतपा उवाच १ ।।२७।।
न चातिरिक्तोऽस्ति वरः पृथिव्यां यद्दृष्टो मे पुरतो देवदेवाः ।।
बलं वरेणापि कृतार्थतासीत् तथापीदं ये सदा पर्वकाले ।। २८ ।।
विप्रा विप्राश्चार्चयन्तीह भक्त्या तेषां पापं नश्यतां मासमेकम् ।।
यत्सञ्चितं त्वेष एको वरोऽस्तु ह्यभीष्टो मे सांप्रतं देहि मह्यम् ।। २९ ।।
मुक्तिं चाहं व्रजामीति द्वितीयोऽस्तु वरो मम।।
तथेत्युक्त्वा तु तौ देवौ दत्त्वा तस्य वरं शुभम्।।९८.३०।। ।
अदर्शनं गतौ देवो सोऽपि तत्र व्यवस्थितः ।।
लब्ध्वा वरं सत्यतपा ब्रह्मभूतोऽभवद्धृदि ।। ३१ ।।
यावदास्ते शुभे देशे कृतकृत्यो महामुनिः ।।

तावत्तस्य गुरुस्तत्र त्वारुणिः समदृश्यत ।। ३२ ।।
पृथ्वीं प्रदक्षिणीकृत्य तीर्थहेतोर्विचक्षण ।।
तेन चासौ महाभक्त्या पूजितो मुनि पुङ्गवः ।। ३३ ।।
पाद्याचमनगोदानेः कृतासनपरिग्रहः ।।
ज्ञात्वा स शिष्यं सिद्धं तु तपसा दग्धकिल्बिषम् ।।३४।।
उवाच विनयापन्नं प्राञ्जलिं पुरतः स्थितम् ।।
आरुणिरुवाच ।।
पुत्र सिद्धोऽसि तपसा ब्रह्मभूतोऽसि सुव्रत ।।३९।।
इदानीमात्मना सार्द्धं मुक्तिकालो मतोऽस्ति ते ।।
उत्तिष्ठ गम्यतां पुत्र मया सार्द्धं परं पदम् ।।३६।।
यद्गत्वा न पुनर्जन्म भवतीति न संशयः ।।
एवमुक्त्वा तु तौ सिद्धौ उभौ सत्यतपारुणी ।। ३७ ।।
ध्यात्वा नारायणं देवं तद्देहे तौ लयं गतौ ।।
यश्चापि शृणुयात्पादं पर्वाध्यायं सविस्तरम् ।। ३८ ।।
श्रावयेद्वापि स नरो गतिमिष्टामवाप्नुयात् ।।
इति श्रीवराहपुराणे पर्वाध्यायो नाम अष्टनवतितमोऽध्यायः ।। ९८ ।।

अथ तिलधेनुमाहात्म्यम् ।।
धरण्युवाच ।।
या सा माया शरीरात्तु ब्रह्मणोऽव्यक्तजन्मनः ।।
गायत्र्यष्टभुजा भूत्वा चै (वे) त्रासुरमयोधयत् ।। १ ।।
सैव नन्दा भवेद्देवी देवकार्यचिकीर्षया ।।
महिषाख्यासुरवधं कुर्वती ब्रह्मणेरिता ।। २ ।।
वैष्णव्याख्या ततो देव कथमेतद्धि शंस मे ।।
श्रीवराह उवाच ।।
द्वयं जगद्धिता देवी गङ्गा शङ्करसुप्रिया ।। ३ ।।
क्वचित्किंचिद्भवेद्दत्तं स्वपदं वेद सर्ववित् ।।
स्वायम्भुवे हतो दैत्यो वैष्णव्या मन्दरे गिरौ ।। ४ ।।
महिषाख्यः परः पश्चात्स वै चैत्रासुरो हतः ।।
नन्दया निहतो विन्ध्ये महाबलपराक्रमः ।। ५ ।।
अथवा ज्ञानशक्तिः सा महिषोऽज्ञानमूर्त्तिमान् ।।
अज्ञानं ज्ञानसाध्यं तु भवतीति न संशयः ।। ६ ।।
मूर्त्तिपक्षे चेतिहासममूर्ते चैकवद्धृदि ।।
ख्याप्यते वेदवाक्यैश्च इह सा वेदवादिभिः ।। ७ ।।
इदानीं शृणु मे देवि पंचपातकनाशनम् ।।
यजनं देवदेवस्य विष्णोः पुत्रवसुप्रदम् ।। ८ ।।
इह जन्मनि दारिद्र्यव्याधिकुष्ठादिपीडितः ।।
अलक्ष्मीवानपुत्रस्तु यो भवेत्पुरुषो भुवि ।। ९ ।।
तस्य सद्यो भवेल्लक्ष्मीरायुर्वित्तं सुतः सुखम् ।।
दृष्ट्वा तु मण्डलगतं देवं देव्या समन्वितम् ।। 99.१० ।।
नारायणं परं देवं यः पश्यति विधानतः।।
आचार्यदर्शितं देवि मन्त्रमूर्तिमयोनिजम् ।। ११ ।।
कार्तिके मासि शुक्लायां द्वादश्यां तु विशेषतः ।।
सर्वासु वा यजेद्देवं द्वादशीषु विधानतः ।। १२ ।।
संक्रांत्यां वा महाभागं चन्द्रसूर्यग्रहे तथा ।।
यः पश्यति हरिं देवि पूजितं गुरुणा शुभे ।। १३ ।।
तस्य सद्यो भवेत्तुष्टिः पापध्वंसश्च जायते ।।
सामान्यदेवतानां च भवतीति न संशयः ।। १४ ।।
ब्राह्मणक्षत्रियविशां भक्तानां तु परीक्षणम् ।।
संवत्सरं गुरुः कुर्याज्जातिशौचक्रियादिभिः ।। १२ ।।

उपासन्नं ततो ज्ञात्वा हृदयेनावधारयेत् ।।
तेपि भक्तिमतो ज्ञात्वा त्वात्मानं परमेश्वरम् ।। १६ ।।
संवत्सरं गुरोर्भक्तिं कुर्युर्विष्णोरिवाचलाम् ।।
संवत्सरे ततः पूर्णे गुरुं चैव प्रसादयेत् ।। १७ ।।
भगवंस्त्वत्प्रसादेन संसारार्णवतारणम् ।।
इच्छामस्त्वैहिकीं लक्ष्मीं विशेषेण तपोधन ।। १८ ।।
एवमभ्यर्च्य मेधावी गुरुं विष्णुमिवाग्रतः ।।
अभ्यर्च्चितस्तैः सोऽप्याशु दशम्यां कार्त्तिकस्य तु ।।१९।।
क्षीरवृक्षसमुद्भूतं दन्तकाष्ठं समन्त्रकम् ।।
भक्षयित्वा स्वपेयुर्हि देवदेवस्य सन्निधौ ।।99.२०।।
स्वप्नान्दृष्ट्वा गुरोरग्रे श्रावयेत विचक्षणः ।।
ततः शुभाशुभे तत्र लक्षयेत्परमो गुरुः ।। २१ ।।
एकादश्यामुपोष्यैवं स्नात्वा देवालयं व्रजेत् ।।
गुरुश्च मण्डलं भूमौ कल्पितायां तु वर्त्तयेत् ।।२२।।
लक्षणैर्विविधैर्भूमिं लक्षयित्वा विधानतः ।।
षोडशारं लिखेच्चक्रं सर्वतोभद्रमेव च ।।२३।।
अथवा अष्टपत्रं च लिखित्वा दर्शयेद्बुधः।।
नेत्रबन्धं तु कुर्वीत सितवस्त्रेण यत्नतः।।२४।।
वर्णानुक्रमतः शिष्यान्पुष्पहस्तान्प्रवेशयेत्।।
नवनाभं यदा कुर्यान्मण्डलं वर्णकैर्बुधः।।२५।।
तदानीं पूर्वतो देवमिद्रपूर्वं तु पूजयेत् ।।
लोकपालैः समं पूज्य अग्निं सम्पूजयेच्छुभे।।२६।।
स्वदिक्षु तद्वद्याम्यायां नेर्ऋत्यां निर्ऋतिं न्यसेत् ।।
वरुणं वारुणायां च वायुं वायव्यतो न्यसेत्।।२७।।
धनदं चोत्तरे न्यस्य रुद्रमीशानगोचरे।
पूज्यैवं तु विधानेन दिक्क्षेत्रेषु व्यवस्थिताम्।।२८।।
पद्ममध्ये तथा विष्णुमर्च्चयेत्परमेश्वरम् ।।
पूर्वपत्रे बलं पूज्य प्रद्युम्नं दक्षिणे तथा ।।२९।।
अनिरुद्धं तथा पूज्य पश्चिमे चोत्तरे तथा ।।
पूजयेद्वासुदेवं तु सर्वपातकशान्तिदम् ।।99.३०।।
ऐशान्यां विन्यसेच्छंखमाग्नेय्यां चक्रमेव तु ।।
याम्यायां तु गदां पूज्य वायव्यां पद्ममेव च ।।३१।।
ऐशान्यां मुसलं पूज्य दक्षिणे गरुडं न्यसेत् ।।

वामतो विन्यसेल्लक्ष्मीं देवदेवस्य बुद्धिमान्।।३२।।
धनुश्चैव तु खड्गं तु देवस्य पुरतो न्यसेत्।
श्रीवत्सं कौस्तुभं चैव नवमं तत्र कल्पयेत्।।३३।।
एवं पूज्य यथान्यायं देवदेवं जनार्द्दनम्।।
दलेषु दिक्षु विन्यस्य अष्टौ कुम्भान्विधानतः ।।३४।।
वैष्णवं कलशं चैव नवमं तत्र कल्पयेत् ।।
स्नापयेन्मुक्तिकामं तु वैष्णवेन घटेन ह ।। ३२ ।।
श्रीकामं स्नापयेत्तद्वदैन्द्रेण तु घटेन ह ।।
प्राज्यप्रतापकामं च आग्नेयेन तु स्नापयेत् ।।३६।।
मृत्युञ्जयविधानाय याम्येन स्नपनं तथा ।।
दुष्टप्रध्वंसनायालं निर्ऋतेन विधीयते ।।३७।।
शान्तये वारुणेनाशु पापनाशाय वायवे ।।
द्रव्यसम्पत्तिकामस्य कौबेरेण विधीयते ।। ३८ ।।
रौद्रेण ज्ञानहेतोश्च लोकपालपदाप्तये ।।
एकैकेन नरः स्नातः सर्वपाप विवर्जितः ।।३९।।
भवेदव्याहतं ज्ञानं श्रीमान्विप्रो विचक्षणः ।।
किं पुनर्नवभिः स्नातो नरः पातकवर्जितः।।99.४०।।
जायते विष्णुसदृशः सद्यो राजाथवा भवेत् ।।
अथवा दिक्षु सर्वासु यथासंख्येन लोकपान् ।।
पूजयीत स्वशास्त्रोक्तविधानेन विधानवित् ।। ४१ ।।
एवं सम्पूज्य देवांश्च लोकपालान् प्रसन्नधीः ।।
पश्चात्प्रदक्षिणान् शिष्यान् बद्धनेत्रान् प्रवेशयेत् ।।
आग्नेयी वारुणी दग्धा वायुना विधिना ततः ।।४२।।
सौमेनाप्यायिता पश्चाच्छ्रावयेत्समयान्बुधः।।
अनिन्द्यान्ब्राह्मणान्वेदान्विष्णुं ब्रह्माणमेव च ।। ४३ ।।
रुद्रमादित्यमग्निं च लोकपालग्रहांस्ततः ।।
गुरूश्च वैष्णवांश्चापि पुरुषः पूर्वदीक्षितः ।। ४४ ।।
एवं तु समयं ख्याप्य पश्चाद्धोमं तु कारयेत् ।।
ओं नमो भगवते सर्वरूपिणे हुं फट् स्वाहा ।। ४५ ।।
षोडशाक्षरमन्त्रेण होमयेज्ज्वलिताग्नये ।।
गर्भाधानादिकाश्चैव क्रियाः समवधारयेत् ।।४६।।
त्रिभिराहुतिभिश्चापि देवदेवस्य सन्निधौ ।।
होमान्ते दीक्षितः पश्चाद्दद्याच्च गुरुदक्षिणाम् ।।४७।।

हस्त्यश्वकटकादीनि हेमग्रामादिकं नृपः।।
दद्याच्च गुरवे प्राज्ञो मध्यमे मध्यमं तथा ।।४८।।
एवं कृते तु यत्पुण्यं माहात्म्यं जायते धरे ।।
तत्र शक्यं तु गदितुमपि वर्षशतैरपि।।४९।।
दीक्षितात्मा पुनर्भूत्वा वराहं शृणुयाद्यदि ।।
तेन वेदपुराणानि सर्वे मन्त्राः ससंग्रहाः।।99.५०।।
जप्ताः स्युः पुष्करे तीर्थे प्रयागे सिन्धुसङ्गमे ।।
देवागारे कुरुक्षेत्रे वाराणस्यां विशेषतः ।।५१।।
ग्रहणे विषुवे चैव यत्फलं जपतां भवेत् ।।
तत्फलं द्विगुणं तस्य दीक्षितो यः शृणोति च ।।५२।।
देवा अपि तपः कृत्वा ध्यायंति च वदंति च ।।
कदा नो भारते वर्षे जन्म स्याद्व्रतधारिणि।।५३।।।
दीक्षिताश्च भविष्यामो वराहं शृणुमः कथम्।।
वराहं षोडशात्मानं त्यक्त्वा देहं कदा वयम्।।५४।।
यास्यामः परमं स्थानं यद्गत्वा न पुनर्भवेत् ।।
एवं जल्पन्ति विबुधा मनसा चिन्तयन्ति च।।५५।।
अत्राप्युदाहरन्तीममितिहासं पुरातनम्।।
वसिष्ठस्य च संवादं श्वेतस्य च महात्मनः ।।५६ ।।
स्वर्गवासे स्थितो ह्यासीच्छ्वेतो राजा महायशाः।।
आसीदिलावृते वर्षे श्वेतो राजा बृहत्तपाः।। ५७।।
स महीं सकलान्देवि सपल्लववनद्रुमाम् ।।
दातुमिच्छन्स चोवाच वसिष्ठं तपसां निधिम् ।। ५८ ।।
भगवन्दातुमिच्छामि ब्राह्मणेभ्यो वसुन्धराम्।।
देह्यनुज्ञां स चोवाच वसिष्ठो राजसत्तमम् ।।५९।।
अन्नं देहि सदा राजन् सर्वकालसुखावहम् ।।
अन्नेन चैव दत्तेन किं न दत्तं महीतले ।।99.६०।।
सर्वेषामेव दानानामन्नदानं विशिष्यते ।।
अन्नाद्भवंति भूतानि अन्नेनैव च वर्द्धते ।।६१।।
तस्मात्सर्वप्रयत्नेन अन्नदानं ददस्व भोः ।।
वसिष्ठस्य वचः श्रुत्वा स राजा न तथाकरोत् ।।६२।।
रत्नवस्त्रमलंकारान् श्रीमन्ति नगराणि च ।।
यत्किञ्चित्कोशजातं स द्विजानाहूय तद्ददौ ।।६३।।
प्रदत्तं ब्राह्मणस्याथ कुंजरानजिनानि च ।।

स कदाचिन्नृपः पृथ्वीं जित्वा परमधर्मवित् ।। ६४ ।।
पुरोहितमुवाचेदं वसिष्ठं जपतां वरम् ।।
भगवन्नश्वमेधानां सहस्रं कर्तुमुत्सहे ।।६५।।
सुवर्णरौप्यताम्राणि यागं कृत्वा द्विजातिषु ।।
दत्तानि तेन राज्ञा वै नान्नं दत्तं तथा जलम्।।६६।।
वस्तु स्वल्पमिति ज्ञात्वा प्रभुः सोऽन्नं तु नाददत् ।।
एवं विभवयुक्तस्य तस्य राज्ञो महात्मनः ।।६७ ।।
कालधर्मवशाद्देवि मृत्युः समभवत्तदा ।।
परलोके वर्तमानः स च राजा महामनाः ।।६८।।
क्षुधया पीडितो ह्यासीत्तृषया च विशेषतः ।।
आनिनायाप्सरोभागं गत्वा श्वेताख्यपर्वतम् ।।६९।।
तत्र प्राग्जन्ममूर्त्तिश्च पुरा दग्धा महात्मनः ।।
तत्रास्थीनि स संगृह्य लिहन्नास्ते स पार्थिवः ।। ११.७० ।।
पुनर्विमानमारुह्य दिवमाचक्रमे नृपः ।।
अथ कालेन महता स राजा संशितव्रतः ।।७१।।
तान्यस्थीनि लिहन्दृष्टो वसिष्ठेन महात्मना ।।
उक्तश्च तेन किञ्च त्वं स्वास्थि भुंक्षे नराधिप ।। ७२ ।।
एवमुक्तस्तदा राजा वसिष्ठेन महात्मना ।।
उवाच वचनं चेदं श्वेतो राजा मुनिं तदा ।। ७३ ।।
भगन्क्षुधितश्चास्मि अन्नपानं पुरा मया ।।
न दत्तं मुनिशार्दूल तेन मां बाधते क्षुधा ।। ७४ ।।
एवमुक्तस्ततो राज्ञा वसिष्ठो मुनिपुंगवः ।।
उवाच च मुनिर्भूयः श्वेतं वाक्यं महानृपम् ।। ७९ ।।
किं ते करोमि राजेंद्र क्षुधितस्य विशेषतः ।।
अदत्तं नोपतिष्ठेत कस्यचित्किञ्चिदुत्तमम् ।। ७६ ।।
रत्नहेमप्रदानेन भोगवान् जायते नरः ।।
अन्नपानप्रदानेन सर्वकामैस्तु तर्पितः ।। ७७ ।।
तन्न दत्तं त्वया राजन् स्तोकं मत्वा नराधिप ।।
श्वेत उवाच ।।
अदत्तस्य च सम्प्राप्तिस्तन्ममाचक्ष्व पृच्छतः ।। ७८ ।।
शिरसा भक्तियुक्तेन याचितोऽसि महामुने ।।
वसिष्ठ उवाच ।।
अस्त्येकं कारणं येन जायते तन्न संशयः ।। ७९ ।।

तच्छृणुष्व नरव्याघ्र कथ्यमानं मयाऽनघ ।।
आसीद्राजा पुराकल्पे विनीताश्वातिविश्रुतः ।। ୨୨.८० ।।
स सर्वमेधमारेभे स्वयं क्रतुवरं नृपः ।।
यजतानेन विप्रेभ्यो दत्ता गावो द्विपा वसु ।। ८१ ।।
नान्नं तेन तदा दत्तं स्वल्पं मत्वा यथा त्वया ।।
ततः कालेन महता मृतोऽसौ जाह्नवीजले ।। ८२ ।।
कृत्वा पुण्यं विनीताश्वः सार्वभौमो नृपोत्तमः ।।
स्वर्गं च गतवान्सोऽपि यथा राजन् भवान् प्रभो ।। ८३ ।।
असावपि क्षुधाविष्ट एवमेव गतो नृपः ।।
मर्त्यलोके नदीतीरे गंगायां नीलपवर्तम् ।। ८४ ।।
विमानेनार्कवर्णेन भास्वता देववन्नृपः ।।
ददर्श च तदा राजा क्षुधितः स्वं कलेवरम् ।। ८५ ।।
पुरोहितं ददर्शाथ होतारं जाह्नवीतटे ।।
तद्दृष्ट्वाऽसावपि नृपः पप्रच्छ मुनिसत्तमम् ।। ८६ ।।
क्षुधायाः कारणं किं मे स होता तमुवाच ह ।।
तिलधेनुं भवान्राजञ्जलधेनुं च सत्तम ।।८७ ।।
घृतधेनुं च धेनुं च रसधेनुं च पार्थिव ।।
देहि शीघ्रं येन भवान्क्षुधया वर्ज्जितो भवेः ।। ८८ ।।
तपते यावदादित्यस्तपते वापि चन्द्रमाः ।।
एवमुक्तस्ततो राजा तं पुनः पृष्टवानिदम् ।।८९।।
विनीताश्व उवाच ।।
कथं सा दीयते ब्रह्मंस्तिलधेनुर्जिगीषुभिः ।।
भुङ्क्ते स्वर्गं च विप्रेन्द्र तन्ममाचक्ष्व पृच्छतः ।।୨୨.९० ।।
होतोवाच ।।
विधानं तिलधेनोश्च त्वं शृणुष्व नराधिप ।।
चतुर्भिः कुडवैश्चैव प्रस्थ एकः प्रकीर्त्तितः ।।९१ ।।
सा तु षोडशभिः कार्या चतुर्भिर् वत्सको भवेत् ।।
नासा गन्धमयी तस्या जिह्वा गुडमयी शुभा ।। ९५ ।।
पुच्छे प्रकल्पनीया सा घण्टाभरणाभूषिता ।।
ईदृशीं कल्पयित्वा तु स्वर्णशृङ्गीं तु कारयेत् ।। ९३।।
कांस्यदोहां रौप्यखुरां पूर्वधेनुविधानतः ।।
कृत्वा तां ब्राह्मणायाशु दद्याच्चैव नराधिप ।। ९४ ।।
कृष्णाजिनं धेनुवासो नन्दितां कल्पितां शुभाम् ।।

सूत्रेण सूत्रितां कृत्वा सर्वरत्नसमन्विताम् ।। ९९ ।।
सर्वौषधिसमायुक्तां मन्त्रपूतां तु दापयेत् ।।
अन्नं मे जायतामन्यत्पानं सर्वरसास्तथा ।। ९६।।
सर्वं सम्पादयास्माकं तिलधेनो द्विजार्पिता ।।
गृहणामि देवि त्वां भक्त्या कुटुम्बार्थं विशेषतः ।।९७।।
भजस्व कामान्मां देवि तिलधेनो नमोऽस्तु ते ।।
एवंविधां ततो दद्यात्तिलधेनुं नृपोत्तम ।। ९८ ।।
सर्वकामसमावाप्तिं कुरुते नात्र संशयः ।।
यश्चेदं शृणुयाद्भक्त्या कुर्यात्कारयतेऽपि वा ।। ९९ ।।
सर्वपापविनिर्मुक्तो विष्णुलोकं च गच्छति ।।
गोमये मण्डले कृत्वा गोचर्म्म तदनन्तरम् ।। 99.१०० ।।
इति श्रीवराहपुराणे श्वेतविनीताश्वोपाख्याने तिलधेनुदानमाहात्म्यं नाम नवनवतितमोऽध्यायः ।। ९९ ।।

अथ जलधेनुदान विधिः ।।

होतोवाच ।।

जलधेनुं प्रवक्ष्यामि पुण्येऽह्नि विधिपूर्वकम् ।।

गोचर्म्ममात्रं भूभागं गोमयेनोपलेपयेत् ।। १ ।।

तत्र मध्ये तु राजेन्द्र पूर्णं कुम्भं च विन्यसेत् ।।

जलपूर्णं सुगन्धाढ्यं कर्पूरागुरुचन्दनैः ।। २ ।।

वासितं गन्धतोयेन तां धेनुं परिकल्पयेत् ।।

वत्सं तथापरं कल्प्य जलेन परिपूरितम् ।। ३।।

वर्द्धनीकं(वर्द्धनकिं) महाराज यन्त्रपुष्पैः समन्वितम् ।।

दूर्वांकुरैरुपस्तीर्य स्रग्भिश्चैव विभूषितम् ।। ४ ।।

पंचरत्नानि निःक्षिप्य तस्मिन् कुम्भे नराधिप ।।

मांसीमुशीरं कुष्ठं च तथा शैलेयबालुकम् ।। ५ ।।

धात्रीफलं सर्षपाश्च सर्वधान्यानि पार्थिव ।।

चतुर्दिक्ष्वपि पात्राणि चत्वार्येव प्रकल्पयेत् ।। ६ ।।

एकं घृतमयं पात्रं द्वितीयं दधिपूरितम् ।।

तृतीयं मधुनश्चैव चतुर्थं शर्करावृतम् ।। ७ ।।

सुवर्णमुखचक्षूंषि शृंगं कृष्णांगरेषु च ।।

प्रशस्तपत्रश्रवणां मुक्ताफलमयेक्षणाम् ।।८ ।।

ताम्रपृष्ठां कांस्यदोहां दर्भरोमसमन्विताम् ।।

पुच्छं सूत्रमयं कृत्वा कृष्णाभरण घण्टिकाम् ।। ९ ।।

कम्बले पुष्पमालां च गुडास्यां शुक्तिदन्तिकाम् ।।

जिह्वां शर्करया कृत्वा नवनीतेन च स्तनान् ।। 100.१० ।।

इक्षुपादां तु राजेन्द्र गन्धपुष्पोपशोभिताम् ।।

कृष्णाजिनोपरि स्थाप्य वस्त्रेणाच्छादितां तु ताम् ।। ११ ।।

गन्धपुष्पैः समभ्यर्च्य विप्राय विनिवेदयेत् ।।

एवं धेनुं तदा दत्त्वा ब्राह्मणे वेदपारगे ।। १२।।

साधुविप्राय राजेन्द्र श्रोत्रियायाहिताग्नये ।।

तपोवृद्धाय पात्राय दातव्या च कुटुम्बिने ।। १३ ।।

यो ददाति नरो राजन् यः पश्यति शृणोति च ।।

प्रतिगृह्णाति यो विप्रः सर्वे मुच्यन्ति पातकात् ।। १४ ।।

ब्रह्महा पितृहा गोघ्नः सुरापो गुरुतल्पगः ।।

मुक्ताः सर्वपापैस्तु गन्तारो विष्णुमंदिरे ।। १५ ।।

विमुक्तः सर्वपापैस्तु विष्णुलोकं स गच्छति ।।

योऽश्वमेधेन यजते समाप्तवरदक्षिणः ।। १६ ।।
जलधेनुं च यो दद्यात्सममेतन्नराधिप ।।
जलाहारस्त्वेकदिनं तिष्ठेच्च जलधेनुदः ।। १७ ।।
ग्राहकोऽपि त्रिरात्रं वै तिष्ठेदेवं न संशयः ।।
यत्र क्षीरवहा नद्यो मधुपायसकर्दमाः ।।१८।।
यत्र चाप्सरसां गीतं तत्र यान्ति जलप्रदाः ।।
दाता च दापकश्चैव प्रतिग्राही च यो द्विजः ।। १९ ।।
सर्वपापविनिर्मुक्तः विष्णुसायुज्यमाप्नुयुः ।।
जलधेनुविधानं यः शृणुयात्कीर्त्तयेदपि ।। 100.२० ।।
सर्वपापविनिर्मुक्तः स्वर्गमेति जितेन्द्रियः ।। २१ ।।
इति श्रीवराहपुराणे श्वेतविनीताश्वोपाख्याने जलधेनुविधिर्नाम शततमोऽध्यायः ।। १०० ।।

अथ रस धेनुदानमाहात्म्यम् ।।
होतोवाच ।।
रसधेनुविधानं ते कथयामि समासतः ।।
अनुलिप्ते महीपृष्ठे कृष्णाजिनकुशास्तरे ।। १ ।।
रसस्य तु घटं राजन् सम्पूर्णं त्वैक्षवस्य तु ।।
तद्वत्सङ्कल्पयेत्प्राज्ञश्चतुर्थांशेन वत्सकम् ।। २ ।।
तुरीयांशेन वत्सं तु तत्पार्श्वे स्थापयेत्सुधीः ।।
इक्षुदण्डमयाः पादा रजतस्य खुरैर्युताः ।। ३ ।।
एवं कार्या रसैर्धेनुरिक्षुपादसमन्विता ।। ४ ।।
सुवर्णशृंगाभरणा वस्त्रपुच्छा घृतस्तनी ।।
पुष्पकम्बलसंयुक्ता शर्करामुखजिह्वका ।। ५ ।।
दन्ताः फलमयास्तस्याः पृष्ठं ताम्रमयं शुभम् ।।
पुष्परोमां तु राजेन्द्र मुक्ताफलकृतेक्षणाम् ।। ६ ।।
सप्तव्रीहिसमायुक्तां चतुर्दिक्षु च दीपिताम् ।।
सर्वोपस्करसंयुक्तां सर्वगन्धादिवासिताम् ।। ७ ।।
चत्वारि तिलपात्राणि चतुर्दिक्षु निवेशयेत् ।।
सर्वलक्षणयुक्ताय श्रोत्रियाय कुटुम्बिने ।। ८ ।।
रसधेनुः प्रदातव्या स्वर्गकामेन नित्यदा ।।
दाता स्वर्गमवाप्नोति सर्वपापविवर्जितः ।। ९ ।।
दाता च ग्राहकश्चैव एककालमभोजनः ।।
सोमपानफलं तस्य सर्वत्र तु फलं भवेत् ।। 101.१० ।।
दीयमानां तु पश्यन्ति ते च यान्ति परां गतिम् ।।
धेनुं च पूजयित्वाग्रे गन्धधूपस्रगादिभिः ।। ११ ।।
पूर्वोक्तैरेव मन्त्रैस्तु ततस्तां प्रार्थयेत्सुधीः ।।
प्रार्थनापूर्वकं भक्त्या द्विजाग्र्याय निवेदयेत् ।। १२ ।।
दशपूर्वान्परांश्चैव आत्मानं चैकविंशकम् ।।
प्रापयेत्परमं स्थानं स्वर्गान्नावर्त्तते पुनः ।। १३ ।।
एषा ते कथिता राजन्रसधेनुरनुत्तमा ।।
ददस्व च महाराज परं स्थानमवाप्नुहि ।। १४ ।।
य इदं पठते नित्यं शृणुयादथ भक्तितः ।।
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ।। १५ ।।
इति श्रीवराहपुराणे श्वेतविनीताश्वोपाख्याने रसधेनुदानमाहात्म्यं नाम एकाधिकशततमोऽध्यायः ।।
१०१।।

गुडधेनुमाहात्म्यम्

होतोवाच -

गुडधेनुं प्रवक्ष्यामि सर्वकामार्थसाधिनीम् ।
अनुलिप्ते महीपृष्ठे कृष्णाजिनकुशास्तृते ॥ १ ॥
तस्योपरिकृतं वस्त्रं गुडमानीय पुष्कलम् ।
कृत्वा गुडमयीं धेनुं सवसाङ्कास्यदेहिनीम् ॥ २ ॥
सौवर्णे मुखशृङ्गे च दन्ताश्च मणिमौक्तिकैः ।
ग्रीवा रत्नमयी त्वस्या घ्राणं गन्धमयन्तथा ॥ ३ ॥
शृङ्गे त्वगुरुकाष्ठेन पृष्ठं ताम्रमयं तथा ।
पुच्छं क्षौममयं तस्याः सर्वाभरणभूषिताम् ॥ ४ ॥
इक्षुपादां रौप्यखुरां कम्बलं पट्टसूत्रकम् ।
आच्छाद्य पट्टवस्त्रेण घण्टाचामरभूषिताम् ॥ ५ ॥
प्रशस्तपत्रश्रवणां नवनीतस्तनीं बुधः ।
फलैर्नानाविधस्तस्या उपशोभाम्प्रकल्पयेत् ॥ ६ ॥
उत्तमा गुडधेनुः स्यात्सदा धारचतुष्टयम् ।
भागार्धेन तु तौल्येन चतुर्थांशेन वत्सकम् ॥ ७ ॥
मध्यमा च तदर्धेन भारेणैकेन चाधमा ।
वित्तहीनो यथाशक्त्या शतैरष्टाभिरेव च ॥ ८ ॥
अत ऊर्ध्वन्तु कर्तव्या गृहवित्तानुसारतः ।
गन्धपुष्पादिभिः पूज्य ब्राह्मणाय निवेदयेत् ॥
श्रोत्रियाय प्रदातव्या सहस्रकनकेन तु ।
तदर्धेन महाराज तस्याप्यर्धेन वा पुनः ॥ ९ ॥
शतेन वा शतार्धेन यथाशक्त्या निवेदयेत् ।
गन्धपुष्पदिभिः पूज्य मुद्रिकाकर्णपत्रकैः ॥ १० ॥
छत्रिकापादुके दत्त्वा इमं मन्त्रमुदीरयेत् ।
गुडधेनो महावीर्ये सर्वसम्पत्प्रदे शुभे ॥ ११ ॥
दानादस्माच्च भोदेवि भक्ष्यभोज्यं प्रयच्छ मे ।
प्राङ्मुखोवापि दाता च ब्राह्मणाय निवेदयेत् ॥ १२ ॥
वाचा कृतं कर्मकृतं मनसा यद्विचिन्तितम् ।
मानकूटं तुलाकूटं कन्यागोऽर्थे उदाहृतम् ॥ १३ ॥
अनृतं नाशमायाति गुडधेनो द्विजार्पिता ।
दीयमानां प्रपश्यन्ति ते यान्ति परमां गतिम् ॥
यत्र क्षोरवहा नद्यो घृतपायसकर्दमाः ।
ऋषयो मुनयः सिद्धास्तत्र गच्छन्ति धेनुदाः ॥ १५ ॥
दश पूर्वान्दश परानात्मानञ्चैकविंशतिम् ।
विष्णुलोकं नयत्याशु गुडधेनोः प्रसादतः ॥ १६ ॥
अयने विषुवे पुण्ये व्यतीपाते दिनक्षये ।
सर्वदैव प्रदातव्या पात्रं दृष्ट्वा महामते ॥ १७ ॥
श्रद्धान्वितेन दातव्या भुक्तिमुक्तिफलप्रदा ।
सर्वकामप्रदा नित्यं सर्वपापहरास्मृता ॥ १८ ॥
गुडधेनोः प्रसादात्तु सौभाग्यमखिलं भवेत् ।
वैष्णवं पदमाप्नोति दौर्गत्यन्तस्य नश्यति ॥ १९ ॥
दशद्वादशसाहस्रा दश चाष्टौ च जन्मनि ।
न शोकदुःखदौर्गत्यं तस्य सञ्जायते क्वचित् ॥ २० ॥
इति पठति शृणोति चेह सम्यक्

मतिमपि ददाति योजनानाम् ।

स इह विभवैश्चिरं वसित्वा

वसति चिरं दिवि देवतादिपूज्यः ॥ २१ ॥

इति वाराहपुराणे श्वेतोपाख्याने गुडधेनुमाहात्म्यं नाम द्व्यधिकशततमोऽध्यायः ॥

त्र्यधिकशततमोऽध्यायः

होतोवाच

तद्वच्च शर्कराधेनुं शृणु राजन् यथार्थतः ।
अनुलिप्ते महीपृष्ठे कृष्णाजिनकुशोत्तरे ॥ १ ॥
धेनुं शर्करया राजन्कृत्वा भारचतुष्टयम् ।
उत्तमा कथ्यते सद्भिश्चतुर्थांशेन वत्सकम् ॥ २ ॥
तदर्धं मध्यमा प्रोक्ता कनिष्ठा भारकेण तु ।
तद्वद्वत्सं प्रकुर्वीत चतुर्थांशेन तत्त्वतः ॥ ३ ॥
अथ कुर्यादष्टशतैरूर्ध्वं नृपतिसत्तम ।
स्वशक्त्या कारयेद्धेनुं तथात्मानं पीडयेत् ॥ ४ ॥
सर्वबीजानि संस्थाप्य चतुर्दिक्षु समन्ततः ।
सुवर्णस्य मुखं शृङ्गे मौक्तिकैर्नयने तथा ॥ ५ ॥
गुडेन तु मुख काये जिह्वा पिष्टमयी तथा ।
कम्बलं पट्टसूत्रेण कण्ठाभरणभूषिताम् ॥ ६ ॥
इक्षुपादां रौप्यखुरां तवनीतस्तनीं तथा ।
प्रशस्तपत्रश्रवणां सितचामरपभूषिताम् ॥ ७ ॥
पञ्चरत्नसमायुक्तां वस्त्रेणाच्छादितां तथा ।
गन्धपुष्पैरलंकृत्य ब्राह्मणाय निवेदयेत् ॥ ८ ॥
श्रोत्रियाय दरिद्राय साधुवृत्ताय धीमते ।
वेदवेदाङ्गविदुषे साग्निकाय कुटुम्बिने ।
अदुष्टाय प्रदातव्या न तु मत्सरिणे द्विजे ॥ ९ ॥
अयने विषुवे पुण्ये व्यतीपाते दिनक्षये ।
एषु पुण्येषु कालेषु थथाविभवशक्तितः ॥ १० ॥
सत्पात्रञ्च द्विजं दृष्ट्वा आगतं श्रोत्रियं गृहे ।
तादृशाय प्रदातव्या पुच्छदेशे विमृष्य च ॥ ११ ॥
पूर्वाभिमुखमास्थाय अथवा स उदङ्मुखः ।
गां पूर्वाभिमुखीं कृत्वा वत्समुत्तरतो न्यसेत् ॥ १२ ॥
दानकाले तु ये मन्त्रास्तान्पठित्वा समर्पयेत् ।
सम्पूज्य विधिवद्विप्रं मुद्रिकाकर्णभूषणैः ॥ १३ ॥
स्वशक्त्या दक्षिणा देया वित्तशाठ्यविवर्ज्जितः ।
हस्ते तु दक्षिणां दत्त्वा गन्धपुष्पसचन्दनाम् ।
धेनुं समर्पयेत्तस्य मुखञ्च च विलोकयेत् ॥ १४ ॥
एकाहं शर्कराहारो ब्राह्मणस्त्रिदिनं वसेत् ।
सर्वपापहरा धेनुः सर्वकामप्रदायिनी ॥ १५ ॥
सर्वकामसमृद्धस्तु जायते नात्र संशयः ।
दीयमानं प्रपश्यन्ति ते यान्ति परमां गतिम् ॥ १६ ॥
य इदं शृणुयाद् भक्त्या पठते वापि मानवः ।

मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ १७ ॥
इति वाराहपुराणे शर्कराधेनुमाहात्म्यं
नाम त्र्यधिकशततमोऽध्यायः ।

अथ मधुधेनुदानमाहात्म्यम्।।

होतोवाच।।

मधुधेनुं प्रवक्ष्यामि सर्वपातकनाशिनीम् ।।
अनुलिप्ते महीपृष्ठे कृष्णाजिनकुशोत्तरे।।१।।
धेनुं मधुमयीं कृत्वा सम्पूर्णघटषोडशाम्।।
चतुर्थेन तथांशेन वत्सकं परिकल्पयेत्।।२।।
सौवर्णं तु मुखं कृत्वा शृङ्गाण्यगुरुचंदनैः।।
पृष्ठं ताम्रमयं कृत्वा सास्नां पटमयीं तथा।।३।।
पादानिक्षुमयान्कृत्वा सितकम्बलसंवृतान्।।
मुखं गुडमयं कृत्वा जिह्वां शर्करया तथा।।४।।
ओष्ठौ पुष्पमयौ तस्या दन्ताः फलमयाः स्मृताः ।।
दर्भरोममयी देवी खुरैरौप्यैश्च भूषिता ।।५।।
प्रशस्तपत्रश्रवणा प्रमाणात्परितस्तता ।।
सर्वलक्षणसंयुक्ता सप्तधान्यान्विता तथा।।६।।
चत्वारि तिलपात्राणि चतुर्दिक्षु प्रकल्पयेत्।।
छादितां वस्त्रयुग्मेन कण्ठाभरणभूषिताम्।।७।।
कांस्योपदोहिनीं कृत्वा गन्धपुष्पैस्तु पूजिताम् ।।
अयने विषुवे पुण्ये व्यतीपाते दिनक्षये ।।८ ।।
संक्रांत्यामुपरागे च सर्वकाले यदृच्छया ।।
द्रव्यब्राह्मणसम्पत्तिं दृष्ट्वा तां प्रतिपादयेत् ।।९।।
ब्राह्मणाय दरिद्राय श्रोत्रियायाहिताग्नये ।।
आर्यावर्त्ते समुत्पन्ने वेदवेदाङ्गपारगे ।।104.१०।।
तादृशाय प्रदातव्या मधु धेनुर्नरोत्तमे ।।
पुच्छदेशे विमृश्याथ जलपूर्णां सदक्षिणाम् ।।११ ।।
दद्याद्विप्राय धेनुं तां मन्त्रपूर्वां विचक्षणः ।।
पुच्छदेशोपविष्टस्तु गन्धधूपादिपूजिता ।।
आच्छाद्य वस्त्रयुग्मेन मुद्रिकावर्णमात्रकैः ।।
स्वशक्त्या दक्षिणां दत्त्वा वित्तशाठ्यविवर्जितः ।।
जलपूर्वं तु कर्त्तव्यं पश्चाद्यानं समर्पयेत् ।।
रसज्ञा सर्वदेवानां सर्वभूतहिते रता।। १२।।
प्रीयन्तां पितरो देवा मधुधेनो नमोऽस्तु ते।।
एवमुच्चार्य तां धेनुं ब्राह्मणाय निवेदयेत्।।१३।।
अहं गृह्णामि त्वां देवि कुटुम्बार्थे विशेषतः ।।

कामं कामदुघे कामान्मधुधेनो नमोऽस्तु ते ।। १४।।
मधुवातेति मन्त्रेण दद्यादाशुचिकेन तु ।।
दत्त्वा धेनुं महाराज छत्रिकोपानहौ तथा ।।१५।।
एवं यः कुरुते भक्त्या मधुधेनुं नराधिप ।।
दत्त्वा दानं पायसेन मधुना च दिनं नयेत्।।१६।।
ब्राह्मणश्च त्रिरात्रं तु मधुपायससंयुतम् ।।
एवं कृते तु यत्पुण्यं तन्निबोध नराधिप ।। १७ ।।
यत्र नद्यो मधुवहा यत्र पायसकर्दमाः ।।
ऋषयो मुनयः सिद्धास्तत्र गच्छन्ति धेनुदाः ।।१८।।
तत्र भोगानथो भुङ्क्ते ब्रह्मलोकं स गच्छति ।।
क्रीडित्वा सुचिरं कालं पुनर्मर्त्यमुपागतः।।१९।।
स भुक्त्वा विपुलान्भोगान्विष्णुलोकं स गच्छति।।
दश पूर्वान्दश परानात्मानं चैकत्रिंशकम्।।104.२०।।
नयते विष्णुसायुज्यं मधुधेनुप्रदानतः ।।
य इदं शृणुयाद्भक्त्या श्रावयेद्वापि मानवः ।।
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ।।२१।।
इति श्रीवराहपुराणे श्वेतविनीताश्वोपाख्याने मधुधेनुमाहात्म्यं नाम चतुरधिकशततमोऽध्यायः ।।
१०४।।

अथ क्षीरधेनुदानविधिः ।।

होतोवाच ।।

क्षीरधेनुं प्रवक्ष्यामि तां निबोध नराधिप ।।

अनुलिप्ते महीपृष्ठे गोमयेन नृपोत्तम ।।१ ।।

गोचर्ममात्रमानेन कुशानास्तीर्य सर्वतः ।।

तस्योपरि महाराज न्यसेत्कृष्णाजिनं बुधः ।।२।।

तत्र कृत्वा कुण्डलिकां गोमयेन सुविस्तृताम् ।।

क्षीरकुम्भं ततः स्थाप्य चतुर्थांशेन वत्सकम् ।।३।।

सुवर्णमुखशृङ्गाणि चन्दनागुरुकाणि च ।।

प्रशस्तपत्रश्रवणां तिलपात्रोपरि न्यसेत् ।।४।।

मुखं गुडमयं तस्या जिह्वां शर्करया तथा ।।

फलप्रशस्तदशनां मुक्ताफलमयेक्षणाम् ।।९।।

इक्षुपादां दर्भरोमां सितकम्बलसंवृताम् ।।

ताम्रपृष्ठां कांस्यदोहां पट्टसूत्रमयीं शुभाम्।।६।।

पुच्छं च नृपशार्दूल नवनीतमयस्तनीम्।।

स्वर्णशृङ्गीं रौप्यखुरां पञ्चरत्नसमन्विताम् ।।७।।

चत्वारि तिलपात्राणि चतुर्दिक्ष्वपि विन्यसेत् ।।

सप्तधान्ययुतं पात्रे दिक्षु दिक्षु च विन्यसेत् ।।८ ।।

एवं लक्षणसंयुक्तां क्षीरधेनुं प्रकल्पयेत् ।।

आच्छाद्य वस्त्रयुग्मेन गन्धपुष्पैः समर्चयेत् ।। ९ ।।

धूपदीपादिकं कृत्वा ब्राह्मणाय निवेदयेत् ।।

वस्त्रादिभिरलंकृत्य मुद्रिकाकर्णकुण्डलैः ।।105.१० ।।

पादुकोपानहौ छत्रं दत्त्वा दानं समर्पयेत् ।।

दद्यादनेन मन्त्रेण क्षीरधेनुं प्रयत्नतः ।।११।।

आप्यायस्वेति मन्त्रेण वेदोक्तेन विधानतः ।।

आश्रयः सर्वभूतानामित्यादि नरपुङ्गव।।१२।।

आप्यायस्वेति मन्त्रेण क्षीरधेनुं प्रसादयेत् ।।

प्रतिग्राही पठेन्मन्त्रमेष दानविधिः स्मृतः ।।१३।।

दीयमानां प्रपश्यन्ति ते यान्ति परमां गतिम् ।।

एतां हेमसहस्रेण शतेनाथ स्वशक्तितः।।१४।।

दत्वा धेनुं महाराज शृणु तस्यापि यत्फलम् ।।

षष्टिवर्षसहस्रं तु इन्द्रलोके महीयते।।१५।।

पित्रादिभिश्च सहितो ब्रह्मणो भवनं व्रजेत् ।।

दिव्यं विमानमारूढो दिव्यस्रगनुलेपनः ।।१६।।
क्रीडित्वा सुचिरं कालं विष्णुलोकं स गच्छति ।।
द्वादशादित्यसंकाशे विमानवरमण्डिते ।। १७ ।।
गीतवादित्रनिर्घोषैरप्सरोभिश्च सेविते ।।
तत्रोष्य विष्णोर्भवने विष्णुसायुज्यमाप्नुयात् ।।१८।
यं इमं शृणुयाद्राजन्पठेद्वा भक्तिभावतः।।
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ।।१९ ।।
इति श्रीवराहपुराणे श्वेतविनीताश्वापोख्याने क्षीरधेनुदानविधिर्नाम पञ्चाधिकशततमोऽध्यायः ।।
१०५।।

अथ दधिधेनुदान माहात्म्यम् ।।

होतोवाच ।।

दधिधेनोर्महाराज विधानं शृणु सांप्रतम् ।।

अनुलिप्ते महीभागे गोमयेन नराधिपः ।।१ ।।

गोचर्ममात्रं तु पुनः पुष्पप्रकरशोभिते ।।

कुशैरास्तीर्य वसुधां कृष्णाजिनकुशोत्तरीम् ।। २ ।।

दधिकुम्भं तु संस्थाप्य सप्तधान्यचयोपरि ।।

चतुर्थांशेन वत्सं तु सौवर्णं मुखमण्डितम् ।।३।।

आच्छाद्य वस्त्रयुग्मेन पुष्पगन्धैस्तु पूजिताम् ।।

ब्राह्मणाय कुलीनाय साधुवृत्ताय धीमते ।।४।।

क्षमादिगुणयुक्ताय दद्यात्तां दधिधेनुकाम् ।।

पुच्छदेशोपविष्टस्तु मुद्रिकाकर्णभूषणैः ।।५ ।।

पादुकोपानहौ छत्रं दत्त्वा मंत्रमिमं पठेत् ।।

दधिक्राव्णेति मंत्रेण दद्याद्धेनुं सुपूजिताम् ।। ६ ।।

एवं दधिमयीं धेनुं दत्त्वा राजर्षिसत्तम ।।

एकाहारी दिनं तिष्ठेद्दध्ना च नृपनन्दन ।।७।।

यजमानो वसेद्राजंस्त्रिरात्रं च द्विजोत्तमः ।।

दीयमानां प्रपश्यन्ति ते यान्ति परमं पदम् ।। ८ ।।

य इदं शृणुयाद्भक्त्या श्रावयेद्वापि मानवः ।।

सोऽश्वमेधफलं प्राप्य विष्णुलोकं च गच्छति ।। ९ ।।

इति श्रीवराहपुराणे श्वेतविनीताश्वापोख्याने दधिधेनुदानमाहात्म्यंनाम षडधिकशततमोऽध्यायः ।। १०६ ।।

अथ नवनीतधेनुदानमाहात्म्यम् ।।

होतोवाच ।।

नवनीतमयीं धेनुं शृणु राजन्प्रयत्नतः ।।

यां श्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ।। १ ।।

गोमयेनानुलिप्तायां भूमौ गोचर्ममानतः ।।

चर्म कृष्णमृगस्येव तस्योपरि च धारयेत् ।। २ ।।

कुम्भं तु नवनीतस्य प्रस्थमात्रस्य धारयेत् ।।

वत्सं चतुर्थभागस्य तस्यामुत्तरतो न्यसेत् ।। ३ ।।

कृत्वा विधानेन च राजसिंह सुवर्णशृङ्गी सुमुखा च कार्या ।।

नेत्रे च तस्या मणिमौक्तिकैस्तु कृत्वा तथान्यच्च गुडेन जिह्वाम् ।। ४ ।।

ओष्ठौ च पुष्पैश्च फलैश्च दन्ताः प्रकल्प्य सास्नां च सितैश्च सूत्रैः ।।

जिह्वां तथा शर्करया प्रकल्प्य फलानि दन्ताः कम्बलं पट्टसूत्रम् ।। ५ ।।

नवनीतस्तनीं राजन्निक्षुपादां प्रकल्पयेत् ।।

ताम्रपृष्ठां रौप्यखुरां दर्भरोमकृतच्छविम् ।। ६ ।।

स्वर्णशृङ्गीं रौप्यखुरां पंचरत्नसमन्विताम् ।।

चतुर्भिस्तिलपात्रैश्च संवृतां सर्वतो दिशि ।। ७ ।।

आच्छाद्य वस्त्रयुग्मेन गन्धपुष्पैरलंकृताम् ।।

दीपांश्च दिक्षु प्रज्वाल्य ब्राह्मणाय निवेदयेत् ।। ८।।

मन्त्रास्त एव जप्तव्याः सर्वधेनुषु ये स्मृताः ।।

पुरा देवासुरैः सर्वैः सागरस्य तु मन्थने ।। ९ ।।

उत्पन्नं दिव्यममृतं नवनीतमिदं शुभम् ।।

आप्यायनं तु भूतानां नवनीत नमोऽस्तु ते ।। 107.१०।।

एवमुच्चार्य तां दद्याद्ब्राह्मणाय कुटुम्बिने ।।

धेनुं च दत्त्वा सुदुघां सोपधानां नयेद्गृहम् ।।११ ।।

हविरेवं रसं चैव विप्रवर्यस्य भूपते।।

भुक्त्वा तिष्ठेद्दिनं राजन् धेनुदस्त्रीणि वै द्विजः ।। १२ ।।

यः प्रपश्यति तां धेनुं दीयमानां नरोत्तम ।।

सर्वपापविनिर्मुक्तः शिवसायुज्यतां व्रजेत् ।। १३।।

पितृभिः पूर्वजैः सार्द्धं भविष्यद्भिश्च मानवः ।।

विष्णुलोकं व्रजत्याशु यावदाभूतसंप्लवम् ।।१४।।

य इदं शृणुयाद्भक्त्या श्रावयेद्वापि मानवः ।।

सर्वपापविशुद्धात्मा विष्णुलोके महीयते ।। १५ ।।

इति श्रीवराहपुराणे श्वेतविनीताश्वोपाख्याने नवनीतधेनुदानमाहात्म्यंनाम सप्ताधिकशततमोऽध्यायः ||१०७||

अथ लवणधेनुदानमाहात्म्यम् ।।

होतोवाच ।।

लवणधेनुं प्रवक्ष्यामि तां निबोध नृपोत्तम ।।

षोडशप्रस्थसंयुक्तां धेनुं कृत्वा तु मानवः ।। १ ।।

अनुलिप्ते महीपृष्ठे कृष्णाजिनकुशोत्तरे ।।

धेनुं लवणमयीं कृत्वा षोडशप्रस्थसंयुताम् ।। २ ।।

वत्सं चतुर्भी राजेन्द्र इक्षुपादांश्च कारयेत् ।।

सुवर्णमुखशृङ्गाणि खुरा रौप्यमयास्तथा ।। ३ ।।

मुखं गुडमयं तस्या दन्ताः फलमया नृप ।।

जिह्वां शर्करया राजन्घ्राणं गन्धमयं तथा ।।

नेत्रे रत्नमये कुर्यात्कर्णौ पत्रमयौ तथा ।।

श्रीखण्डमयकोष्ठौ च नवनीतमयाः स्तनाः ।। ४ ।।

सूत्रपुच्छां ताम्रपृष्ठां दर्भरोमां पयस्विनीम् ।।

कांस्योपदोहां राजेन्द्र घंटाभरणभूषिताम् ।।५।।

सुगन्धपुष्पधूपैश्च पूजयित्वा विधानतः ।।

आच्छाद्य वस्त्रयुग्मेन ब्राह्मणाय निवेदयेत् ।। ६ ।।

नक्षत्रग्रहपीडां च सर्वकालं प्रदापयेत् ।।

ग्रहणे वाथ संक्रान्तौ व्यतीपाते तथायने ।। ७ ।।

द्विजाय साधुवृत्ताय वेदवेदाङ्गवेदिने ।।

द्विजाय साधुवृत्ताय कुलीनाय च धीमते ।। ८ ।।

वेदवेदाङ्गविदुषे श्रोत्रियायाहिताग्नये ।।

ईदृशाय प्रदातव्या तथाऽमत्सरिणे नृप ।। ९ ।।

इष्ट्वा चैवं च मन्त्रं तु पुच्छदेशोपविश्य च ।।

छत्रकोपानहौ देये मुद्रिकाकर्णमात्रकैः ।। 108.१० ।।

आच्छाद्य वस्त्रयुग्मेन दक्षिणां कम्बलं ददेत् ।।

पूर्वोक्तेन विधानेन स्वशक्त्या कनकेन तु ।।११।।

ब्राह्मणं पूज्य विधिवत्पूर्वोक्तविधिना नृप ।।

सदक्षिणं च गोपुच्छं दत्त्वा ब्राह्मणहस्तके ।। १२ ।।

इमं मन्त्रं समुच्चार्य ततस्तां प्रतिपादयेत् ।।

इमां गृहाण भो विप्र रुद्ररूपां नमोऽस्तु ते ।। १३ ।।

रसज्ञा सर्वभूतानां सर्वदेवनमस्कृता ।।

कामं पूरय मे देवि रुद्ररूपे नमोऽस्तु ते ।। १४ ।।

दत्त्वा धेनुं तु लवणेनैकाहं चैव तिष्ठति ।।

स्वयं त्रिरात्रं विप्रेण तथैव लवणाशिना ।। १५ ।।
सहस्रेण शतेनाथ स्वशक्त्या कनकेन तु ।।
दत्त्वेमां स्वर्गमाप्नोति यत्र देवो वृषध्वजः ।। १६ ।।
य इदं शृणुयाद्भक्त्या श्रावयेद्वापि मानवः ।।
मुच्यते सर्वपापेभ्यो रुद्रलोकं च गच्छति ।। १७ ।।
इति श्रीवराहपुराणे श्वेतविनीताश्वोपाख्याने लवणधेनुमाहात्म्यं नाम अष्टाधिकशत तमोऽध्यायः ।।
१०८ ।।

अथ कार्पासधेनुदानमाहात्म्यम् ।।

होतोवाच ।।

अथातः सम्प्रवक्ष्यामि धेनुं कार्पासकीं नृप ।।
यत्प्रदानान्नरो याति ऐन्द्रलोकमनुत्तमम् ।। १ ।।
विषुवे त्वयने पुण्ये युगादिग्रहणे तथा ।।
ग्रहपीडासु चोग्रासु दुःस्वप्नेऽरिष्टदर्शने ।। २ ।।
नृणां च ग्रहपीडासु दुःस्वप्नाद्भुतदर्शने ।।
पुण्येष्वायतने राजञ्छुचिदेशे गवां गणे ।। ३ ।।
गोमयेनोपलिप्तायां दर्भानास्तीर्य वै तिलान् ।।
तन्मध्ये स्थापयेद्धेनुं वस्त्रमाल्यानुलेपनाम् ।। ४ ।।
धूपदीपादिनैवेद्यैः पूजयेच्च विमत्सरः ।।
उत्तमा च चतुर्भारैरर्द्धेनैव तु मध्यमा ।। ५ ।।
भारेण चाधमा प्रोक्ता वित्तशाठ्यं विवर्जयेत् ।।
चतुर्थांशेन वत्सं तु कल्पयित्वा विधानतः। ६ ।।
कर्त्तव्या रुक्मशृङ्गी तु रजतस्य खुरान्विता ।।
नानाफलमया दन्ता रत्नगर्भसमन्विताः ।।७।।
इत्येवं सर्वसम्पूर्णा कृत्वा श्रद्धासमन्वितः ।।
आवाहयेत्तां कार्पासधेनुं मन्त्रैर्द्विजातये ।। ८।।
दद्याद्धेनुं चर्मपाणिः प्रयतः श्रद्धयान्वितः ।।
पूर्वोक्तस्तु विधिः कार्यो दानमन्त्रपुरसरः ।। ९ ।।
यया देवगणः सर्वस्त्वया हीनो न वर्त्तते ।।
तथा उद्धर मां देवि पाहि संसारसागरात् ।। 109.१० ।।

इति श्रीवराहपुराणे श्वेतविनीताश्वोपाख्याने कार्पासधेनुदानमाहात्म्यं नाम नवाधिकशततमोऽध्यायः ।।१०९।।

अथ धान्यधेनुदानमाहात्म्यम् ।।
होतोवाच।।
शृणु राजन्प्रवक्ष्यामि धान्यधेनुमनुत्तमाम् ।।
यस्याः संकीर्तनादेव सा तुष्येत् पार्वती स्वयम् ।।१ ।।
विषुवे चायने वापि कार्त्तिक्यां तु विशेषतः ।।
यां दत्त्वा मुच्यते पापाच्छशांक इव राहुणा ।।२।।
(तदिदानीं प्रवक्ष्यामि धान्यधेनुविधिं परम्)
दशधेनुप्रदानेन यत्फलं राजसत्तम।।
तत्सर्वमेव प्राप्नोति व्रीहिधेनुप्रदानतः ।।३।।
कृष्णाजिनं ततः कृत्वा प्राग्वत्संस्थापयेद्बुधः ।।
गोमयेनानुलिप्तायां भूमौ तां परिपूजयेत् ।।४।।
उत्तमा तु भवेद्धेनुर्द्रोणैश्चापि चतुष्टयैः ।।
मध्यमा च तदर्द्धेन वित्तशाठ्यं न कारयेत्।।५।।
चतुर्थांशेन वत्सं तु कल्पयित्वा विधानतः ।।
चतुर्थांशेन धेनोर्वै वत्सं तु परिकल्पयेत् ।।६।।
कर्तव्यौ रुक्मशृङ्गौ तु राजतखुरसंयुतौ ।।
गोमेदैः कुर्वीत घ्राणं अगुरुं चन्दनं तथा।७।।
मुक्ताफलमया दंता घृतक्षौद्रमयं मुखम्।।
प्रशस्तपत्रश्रवणं कांस्यदोहनकारिताम्।।८।।
इक्षुपृष्टिमयाः पादाः क्षौम्यपुच्छसमन्विताम् ।।
नानाफलसमोपेतां रत्नगर्भसमन्विताम् ।।९।।
पादुकोपानहच्छत्रभाजनं तर्पणं तथा।।
अङ्गं तु पूर्ववत्कार्यं मुखं क्षौद्रमयं शुभम्।।110.१०।।
पूर्ववच्चार्च्चयित्वा तां कृत्वा दीपार्च्चनादिकम्।।
पुण्यकालं च सम्प्राप्य स्नातः शुक्लांबरो गृही।।११।।
त्रिः प्रदक्षिणमावृत्त्य दंडवत्प्रणमेच्च ताम्।।
त्वं हि विप्र महाभाग वेदवेदाङ्गपारग ।।१२।।
मया दत्तां च गृहणीष्व प्रसीद त्वं द्विजोत्तम।।
प्रीयतां मम देवेशो भगवान्मधुसूदनः।।१३।।
या च लक्ष्मीस्तु गोविन्दे स्वाहा या च विभावसौ ।।
शक्रे शचीति विख्याता शिवे गौरी च संस्थिता ।। १४ ।।
गायत्री ब्रह्मणः प्रोक्ता ज्योत्स्ना चन्द्रे रवेः प्रभा ।।
बुद्धिर्बृहस्पतेः ख्यातं मेधा मुनिषु सत्तमा ।। १५ ।।

तस्मात्सर्वमयी देवी धान्यरूपेण संस्थिता ।।
एवमुच्चार्य तां धेनुं ब्राह्मणाय निवेदयेत् ।। १६ ।।
दत्त्वा प्रदक्षिणं कृत्वा तं क्षमाप्य द्विजोत्तमम् ।।
यावच्च पृथिवी सर्वा वसुरत्नानि भूपते ।। १७ ।।
तावत्पुण्यं समधिकं व्रीहिधेनोश्च तत्फलम् ।।
तस्मान्नरेन्द्र दातव्या भुक्तिमुक्तिफलप्रदा ।। १८ ।।
इहलोके च सौभाग्यमायुरारोग्यवर्द्धनम् ।।
विमानेनार्कवर्णेन किङ्किणीजालमालिना ।। १९ ।।
स्तूयमानोऽप्सरोभिश्च स याति शिवमन्दिरम् ।।
यावच्च स्मरते जन्म तावत्स्वर्गे महीयते ।। 110.२० ।।
ततः स्वर्गात्परिभ्रष्टो जम्बूद्वीपपतिर्भवेत् ।।
एवं हरेण चोद्गीर्णं श्रुत्वा वाक्यं नरोत्तमः ।। २१ ।।
सर्वपापविशुद्धात्मा रुद्रलोके महीयते ।। २२ ।।
इति श्रीवराहपुराणे श्वेतविनीताश्वोपाख्याने धान्यधेनुदानमाहात्म्यं नाम दशाधिकशततमोऽध्यायः ।। ११० ।।

अथ कपिलाधेनुदानमाहात्म्यम् ।।
होतोवाच ।।
अथातः सम्प्रवक्ष्यामि कपिलां धेनुमुत्तमाम् ।।
यत्प्रदानान्नरो याति विष्णुलोकमनुत्तमम् ।। १ ।।
पूर्वोक्तेन विधानेन दद्याद्धेनुं सवत्सकाम् ।।
सर्वालङ्कारसंयुक्तां सर्वरत्नसमन्विताम् ।। २ ।।
कपिलायाः शिरो ग्रीवा सर्वतीर्थानि भामिनि ।।
पितामहनियोगाच्च निवसन्ति हि निश्चयः ।। ३ ।।
प्रातरुत्थाय यो मर्त्यः कपिलागलमस्तकात् ।।
च्युतं तु भक्त्या पानीयं शिरसा वन्दते शुचिः ।। ४ ।।
स तेन पुण्यतोयेन तत्क्षणाद्दग्धकिल्बिषः ।।
त्रिंशद्वर्षकृतं पापं दहत्यग्निरिवेन्धनम् ।।५।।
कल्यमुत्थाय यो मर्त्यः कुर्यात्तासां प्रदक्षिणम् ।।
प्रदक्षिणी कृता तेन पृथिवी स्याद्वसुन्धरे।।६।।
प्रदक्षिणेन चैकेन श्रद्धायुक्तेन तत्क्षणात्।।
दशजन्मकृतं पापं तस्य नश्यत्यसंशयम् ।।७।।
कपिलायास्तु मूत्रेण स्नायाच्चैव शुचिव्रतः।
स गङ्गादिषु तीर्थेषु स्नातो भवति मानवः ।।८।।
तेन स्नानेन चैकेन भावयुक्तेन वै नरः ।।
यावज्जीवकृतात्पापान्मुच्यते नात्र संशयः ।। ९ ।।
गोसहस्रं च यो दद्यादेकां वा कपिलां नरः ।।
सममेतत्पुरा प्राह ब्रह्मा लोकपितामहः ।। 111.१०।।
गवामस्थि ततोऽप्येतन्मृतगन्धेन दूषयेत् ।।
यावज्जिघ्रति तं गन्धं तावत्पुण्यैस्तु पूर्यते ।। ११ ।।
गवां कण्डूयनं श्रेष्ठं तथा च परिपालनम् ।।
तुल्यं गोशतदानस्य भयरोगादिपालने ।।१२।।
तृणादिकानि यो दद्यात्क्षुधितेन गवाह्निकम् ।।
गोमेधस्य फलं दिव्यं लभते मानवोत्तमः ।। १३ ।।
विमानैर्विविधैर्दिव्यैः कन्याभिरभितोऽर्पितैः ।।
सेव्यमानः सुगन्धैर्वै दीप्यमान इवाग्नयः।।१४।।
सुवर्णकपिला पूर्वं द्वितीया गौरपिङ्गला ।।
तृतीया चैव रक्ताक्षी चतुर्थी गुडपिंगला।।१५।।
पंचमी बहुवर्णा स्यात्षष्ठी च श्वेतपिङ्गला।।

सप्तमी श्वेतपिंगाक्षी त्वष्टमी कृष्णपिंगला ।।१६।।
नवमी पाटला ज्ञेया दशमी पुच्छपिंगला ।।
एकादशी खुरश्वेता त्वेतासां सर्वलक्षणाः ।। १७ ।।
सर्वलक्षणसंयुक्ता सर्वालंकृतसुन्दरी ।।
ब्राह्मणाय प्रदातव्या भुक्तिमुक्तिप्रदायिनी ।। १८ ।।
भुक्तिमुक्तिप्रदा तेषां विष्णुमार्गप्रदायिनी ।। १९ ।।
इति श्रीवराहपुराणे श्वेतविनीताश्वोपाख्याने कपिलादानमाहात्म्यं नाम एकादशाधिकशततमोऽध्यायः ।। १११ ।।

अथोभयतोमुखीगोदानहेमकुम्भदानपुराणप्रशंसाः ।।
होतोवाच ।।
अतः परं महाराज शृणूभयमुखीं ततः ।।
विधानं तद्वरारोहे धरण्या कथितं पुरा ।। १।।
तदहं सम्प्रवक्ष्यामि तव पुण्यफलं महत् ।।
धरण्युवाच ।।
या त्वया कपिला प्रोक्ता पूर्वमुत्पादिता प्रभो।।२।।
होमधेनुः सदा पुण्या सा ज्ञेया कतिलक्षणा ।।
कियत्यः कपिलाः प्रोक्ताः स्वयमेव स्वयम्भुवा ।।३।।
प्रसूयमाना दानेन किं पुण्यं स्याच्च माधव ।।
एतदिच्छाम्यहं श्रोतुं विस्तरेण जगद्गुरो ।। ४ ।।
श्रीवराह उवाच ।।
शृणुष्व देवि तत्त्वेन पवित्रं पापनाशनम् ।।
यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ।। ५ ।।
कपिला ह्यग्निहोत्रार्थे यज्ञार्थे च वरानने ।।
उद्धृत्य सर्वतेजोभिर्ब्रह्मणा निर्मिता पुरा ।। ६ ।।
पवित्राणां पवित्रं च मङ्गलानां च मङ्गलम् ।।
पुण्यानां परमं पुण्यं कपिला च वसुन्धरे ।। ७ ।।
तपसस्तप एवाग्र्यं व्रतानां व्रतमुत्तमम् ।।
दानानामुत्तमं दानं निधीनां ह्येतदक्षयम् ।। ८ ।।
पृथिव्यां यानि तीर्थानि गुह्यान्यायतनानि च ।।
पवित्राणि च पुण्यानि सर्वलोकेषु सुन्दरि ।। ९ ।।
होतव्यान्यग्निहोत्राणि सायं प्रातर्द्विजातिभिः ।।
कपिलाया घृतेनेह दध्ना क्षीरेण वा पुनः।। 112.१० ।।
जुह्वते ह्यग्निहोत्राणि मन्त्रैश्च विविधैः सदा ।।
पूजयन्नतिथींश्चैव परां भक्तिमुपागताः ।। ११ ।।
ते यान्त्यादित्यवर्णैश्च विमानैर्द्विजसत्तमाः ।।
सूर्य मण्डलमध्यात्तु ब्रह्मणा निर्मिता पुरा ।।१२।।
कपिला या पिङ्गलाक्षी सूर्यसौख्यप्रदायिनी ।।
सिद्धिबुद्धिप्रदा धेनुः कपिलानन्तरूपिणी ।। १३।।
पूर्वोक्ता यास्तु कपिलाः सर्वलक्षणलक्षिताः ।।
सर्वा ह्येता महाभागास्तारयन्ति न संशयः ।। १४ ।।
संगमेषु प्रशस्ताश्च सर्वपापविनाशनाः ।।

अग्निपुच्छा अग्निमुखी अग्निलोमानलप्रभा ।। १५ ।।
तथाग्नायी तथा देवी सुवर्णाख्या प्रवर्तते ।।
गृहीत्वा कपिलां शूद्रात्कामतः सदृशः पिबेत् ।। १६ ।।
पतितैः स हि विज्ञेयश्चाण्डालसदृशोऽधमः ।।
तस्मान्न प्रतिगृह्णीयाच्छूद्राद्विप्रः प्रतिग्रहम् ।। १७ ।।
दूरात्ते परिहर्त्तव्याः श्वभिस्तुल्या इवाध्वरे ।।
पर्वकाले हि सर्वे वै वर्जिताः पितृदैवतैः ।। १८ ।।
असम्भाष्याः प्रतिग्राह्या शूद्रास्ते पापकर्मणः ।।
पिबन्ति यावत् कपिलां तावत्तेषां पितामहः ।। १९ ।।
भूमेर्मलं समश्नन्ति जायन्ते विड्भुजश्चिरम् ।।
तासां क्षीरं घृतं वापि नवनीतमथापि वा ।। 112.२० ।।
उपजीवन्ति ये शूद्रास्तेषां गतिमतः शृणु ।।
कपिलाजीविनः शूद्राः क्रूरा गच्छन्ति रौरवम् ।। २१ ।।
रौरवे तु महारौद्रे वर्षकोटिशतं धरे ।।
ततो विमुक्ताः कालेन शुनो योनिं व्रजन्ति हि ।। २२ ।।
शुनो योन्या विमुक्तास्तु विष्ठाभुक्कृमयस्ततः ।।
विष्ठास्थानेषु पापिष्ठः सुदुर्गन्धिषु नित्यशः ।। २३ ।।
भूयोभूयो जायमानस्तथोत्तारं न विन्दति ।।
ब्राह्मणश्चैव यो विद्वान्कुर्यात्तेषां प्रतिग्रहम् ।। २४ ।।
ततः प्रभृत्यमेध्यान्तः पितरस्तस्य शेरते ।।
न तं विप्रं तु सम्भाषेन्न चैवैकासनं विशेत् ।। २५ ।।
स नित्यं वर्जनीयो हि दूरात्तु ब्राह्मणैर्धरे ।।
यस्तेन सह सम्भाषेत्तथा चैकासनं व्रजेत् ।।२६।।
प्राजापत्यं चरेत्कृच्छ्रं तेन शुष्यति स द्विजः।।
एकस्य गोप्रदानस्य सहस्रांशेन पूर्यते ।।२७।।
किमन्यैर्बहुभिर्दानैः कोटिसंख्यानविस्तरैः ।।
श्रोत्रियाय दरिद्राय सुवृत्तायाहिताग्नये ।। २८ ।।
आसन्नप्रसवां धेनुं दानार्थं प्रतिपालयेत ।।
कपिलार्द्धप्रसूता वै दातव्या च द्विजन्मने ।। २९ ।।
जायमानस्य वत्सस्य मुखं योन्यां प्रदृश्यते ।।
तावत्सा पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति ।। 112.३० ।।
धेन्वा यावन्ति रोमाणि सवत्साया वसुन्धरे ।।
तावत्यो वर्षकोट्यस्तु ब्रह्मवादिभिरर्चिताः ।। ३१ ।।

वसन्ति ब्रह्मलोके वै ये नित्यं कपिलाप्रदाः ।।
सुवर्णशृङ्गीं यः कृत्वा रौप्ययुक्तखुरां तथा ।। ३२ ।।
ब्राह्मणस्य करे दत्त्वा सुवर्णं रौप्यमेव च ।।
कपिलायास्तदा पुच्छं ब्राह्मणस्य करे न्यसेत् ।। ३३ ।।
उदकं च करे दत्त्वा वाचयेच्छुद्धया गिरा ।।
ससमुद्रवना तेन सशैलवनकानना ।। ३४ ।।
रत्नपूर्णा भवेद्दत्ता पृथिवी नात्र संशयः ।।
पृथिवीदानतुल्येन दानेनैतेन वै नरः ।। ३५ ।।
नन्दितो याति पितृभिर्विष्णवाख्यं परमं पदम् ।।
ब्रह्मस्वहारी गोघ्नो वा भ्रूणहा पापदेहकः ।। ३६ ।।
महापातकयुक्तोऽपि वंचको ब्रह्मदूषकः ।।
निन्दको ब्राह्मणानां च तथा कर्मावदूषकः ।। ३७ ।।
महापातकयुक्तोऽपि गवां दानेन शुध्यति ।।
यश्चोभयमुखीं दद्यात्प्रभूतकनकान्विताम् ।। ३८ ।।
तद्दिनं पायसाहारं पयसा वापि वा भवेत् ।।
सुवर्णस्य सहस्रेण तदर्द्धेनापि भामिनि ।।३९।।
तस्याप्यर्द्धशतेनाथ पंचाशच्च ततोऽर्द्धकम् ।।
यथाशक्त्या प्रदातव्या वित्तशाठ्यं विवर्जयेत् ।।112.४०।।
इमां गृहणोभयमुखीमुभयत्र शमोऽस्तु वै ।।
ददे वंशविवृद्ध्यर्थं सदा स्वस्तिकरी भव ।। ४१ ।।
प्रतिगृह्णामि त्वां धेनो कुटुम्बार्थे विशेषतः ।।
शुभं भवतु मे नित्यं देवधात्रि नमोऽस्तु ते ।। ४२ ।।
मे नित्यं स्वस्ति भवतु रुद्राङ्गेति नमोनमः ।।
ॐ द्योस्त्वा ददातु पृथिवी त्वा प्रति गृह्णतु ।। ४३ ।।
क इदं कस्मा अदादिति जपित्वा वै वसुन्धरे ।।
विसृज्य ब्राह्मणं देवि तां धेनुं तद्गृहं नयेत् ।। ४४ ।।
एवं प्रसूयमानां यो गां ददाति वसुन्धरे ।।
पृथिवी तेन दत्ता स्यात्सप्तद्वीपा न संशयः ।।४५ ।।
वदन्ति तां चन्द्रसमानवक्त्रां प्रतप्तजाम्बूनदतुल्यवर्णाम् ।।
महासितत्त्वां तनुवृत्तमध्यां सेवन्त्यजस्रं कुलिता हि देवाः ।। ४६ ।।
प्रातरुत्थाय यो मर्त्यः कल्पं चेदं समाहितः ।।
जितेन्द्रियः शुचिर्भूत्वा पठेद्भक्त्या समन्वितः ।।४७।।
त्रिः सदावर्त्तनं कृत्वा पापं वर्षकृतं च यत् ।।

नश्यते तत्क्षणादेव वायुना पांसवो यथा ।।९।।
श्राद्धकाले पठेद्यस्तु इदं पावनमुत्तमम् ।।
तस्यान्नं संस्कृतं तद्धि पितरोऽश्नन्ति धीमतः ।। ४९ ।।
अमायां वाथ यः कश्चिद्द्विजानामग्रतः पठेत् ।।
पितरस्तस्य तृप्यन्ति वर्षाणां शतमेव च ।। 112.५० ।।
यश्चैतच्छृणुयान्नित्यं तद्गतेनान्तरात्मना ।।
संवत्सरकृतं पापं तत्क्षणादेव नश्यति ।। ५१ ।।
होतोवाच ।।
इदं रहस्यं राजेन्द्र वराहेण पुरातनम् ।।
धरण्यै कथितं राजन्धेनुमाहात्म्यमुत्तमम् ।। ५२ ।।
मया ते कथितं सर्वं सर्वपापप्रणाशनम् ।।
द्वादश्यां माघमासस्य शुक्लायां तिलधेनुदः।।५३।।
सर्वकामसमृद्धार्थो वैष्णवं पदमाप्नुयात्।।
द्वादश्यां श्रावणे मासि शुक्लायां राजसत्तम।।५४।।
प्रत्यक्षधेनुर्दातव्या सहिरण्या नृपोत्तम ।।
सर्वदा सर्वधेनूनां प्रदानं राजसत्तम ।।९५।।
सर्वपापप्रशमनं भुक्तिमुक्तिप्रदायकम् ।।
एतत्ते सर्वमाख्यातं समासाद्बहुविस्तरम् ।। ९६ ।।
धेनूनां फलमुद्दिश्य सर्वकामप्रदं नृणाम् ।।
अथवा पीड्यसेऽत्यन्तं क्षुधया पार्थिवोत्तम ।। ५७ ।।
इदानीं कार्त्तिकी चेयं वर्त्तते च नराधिप ।।
ब्रह्माण्डं सर्वसम्पन्नं भूतरत्नौषधैर्युतम् ।। ५८ ।।
देवदानवयक्षैस्तु युक्तमेतत्सदा विभो ।।
एतद्धेममयं कृत्वा सर्वबीजरसान्वितम् ।। ५९।।
सरत्नं पुरुषः कृत्वा कार्त्तिक्यां द्वादशी दिने।।
अथवा पंचदश्यां च कार्त्तिकस्य विशेषतः ।। 112.६० ।।
पुरोहिताय गुरवे दद्याद्भक्तिसमन्वितः ।।
ब्रह्माण्डोदरवर्तीनि यानि भूतानि पार्थिव ।।६१ ।।
तानि दत्तानि तेन स्युः समासात्कथितं तव ।।
यो यज्ञे यजते राजन् सहस्रशतदक्षिणैः ।। ६२ ।।
सैकदेशो यजेत्तस्य ब्रह्माण्डस्य विशेषतः ।।
यः पुनः सकलं चेदं ब्रह्माण्डं यजते नरः ।। ६३ ।।
तेन चेष्टं हुतं दत्तं पठितं कीर्त्तितं भवेत् ।।

एवं श्रुत्वा ततो राजा हेमकुम्भप्रकल्पितम् ।। ६४ ।।
ब्रह्माण्डमृषये प्रादात्सविधानं च तत्क्षणात् ।।
सर्वकामैः सुसंवीतो ययौ स्वर्गं नराधिपः ।। ६५ ।।
तस्मात्त्वमपि राजेन्द्र तद्दत्त्वा तु सुखी भव ।।
एवमुक्तो वसिष्ठेन सोऽप्येवमकरोन्नृपः ।। ६६ ।।
जगाम परमां सिद्धिं यत्र गत्वा न शोचति ।।
श्रीवराह उवाच ।।
इयं ते कथिता देवि संहिता सर्वकामिका ।। ६७ ।।
वराहाख्या वरारोहे सर्वपातकनाशिनी ।।
सर्वज्ञादुत्थिता चेयं ततो ब्रह्मा बुबोध ह।।६८।।
ब्रह्मा स्वसूनवे प्रादात्पुलस्त्याय महात्मने।।
सोऽपि रामाय च प्रादाद्भार्गवाय महात्मने ।।६९।।
असावपि स्वशिष्याय प्रादादुग्राय धारिणि ।।
उग्रोऽपि मनवे प्रादादेष वः कीर्तितो मया ।। 112.७० ।।
सम्बन्धः पूर्वकल्पीयो द्वितीयं शृणु साम्प्रतम् ।।
सर्वज्ञाल्लब्धवानस्मि त्वं च मत्तो धराधरे ।। ७१ ।।
त्वत्तश्च तपसा सिद्धा वेत्स्यन्ते कपिलादयः ।।
क्रमेण यावद्व्यासेन ज्ञातमेतद्भविष्यति ।। ७२ ।।
तस्यापि शिष्यो भविता नाम्ना वै रोमहर्षणिः ।।
असौ शुनकपुत्राय कथयिष्यति नान्यथा ।। ७३ ।।
अष्टादश पुराणानि वेद द्वैपायनो गुरुः ।।
ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ।। ७४ ।।
तथान्यं नारदीयं च मार्कण्डेयं च सप्तमम् ।।
आग्नेयमष्टमं प्रोक्तं भविष्यं नवमं तथा ।। ७५ ।।
दशमं ब्रह्मवैवर्त्तं लैङ्गमेकादशं स्मृतम् ।।
वाराहं द्वादशं प्रोक्तं स्कान्दं चापि त्रयोदशम् ।। ७६ ।।
चतुर्दशं वामनकं कौर्मं पंचदशं स्मृतम् ।।
मात्स्यं च गारुडं चैव ब्रह्माण्डं च ततः परम् ।। ७७ ।।
य एतत्पाठयेद्भक्त्या कार्तिक्यां द्वादशीदिने ।।
तस्य नूनं भवेत्पुत्रो ह्यपुत्रस्यापि धारिणि ।। ७८ ।।
यस्येदं तिष्ठते गेहे लिखितं पूज्यते सदा ।।
तस्य नारायणो देवः स्वयं तिष्ठति धारिणि ।। ७९ ।।
यश्चैतच्छृणुयाद्भक्त्या नैरन्तर्येण मानवः ।।

श्रुत्वा तु पूजयेद्यस्तु शास्त्रं वाराहसंज्ञितम् ।। 112.८० ।।
श्रुत्वा तु पूजयेच्छास्त्रं तथा विष्णुं सनातनम् ।।
गन्धैः पुष्पैस्तथा वस्त्रैर्ब्राह्मणानां च तर्पणैः ।।८१ ।।
यथाशक्त्या नृपो ग्रामैः पूजयेद्वत्सकं धरे ।।
सर्वपापविनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् ।।८२।।
इति श्रीवराहपुराणे श्वेतविनीताश्वोपाख्याने उभयतोमुखीगोदान हेमकुम्भदान पुराणप्रशंसनंनाम द्वादशाधिकशततमोऽध्यायः ।।११२।।

अथ भगवत्स्तुतिः ।।
ॐ नमो वराहाय नमो ब्रह्मपुत्राय सनत्कुमाराय नमः ।। १ ।।
नमस्तस्मै वराहाय लीलयोद्धरते महीम् ।।
सुरमध्यगतो यस्य मेरुः खणखणायते ।। २ ।।
दंष्ट्राग्रेणोद्धृता गोरुदधिपरिवृता पर्वतैर्निम्नगाभिर्भक्तानां भीतिहानौ सुरनरकदशास्यान्तकः क्रोडरूपी ।।
विष्णुः सर्वेश्वरोऽयं यमिह हतमला लीलया प्राप्नुवन्ति
त्यक्तात्मानो न पापे प्रभु भवतु मुदितारातिपक्षक्षितीशम् ।।३ ।।
यस्मिन्काले क्षितिः पूर्वकल्पे वाराह मूर्तिना ।।
उद्धृता च यया भक्त्या पप्रच्छ परमेश्वरम् ।। ४ ।।
धरण्युवाच ।।
कल्पे कल्पे भवानेव मां समुद्धरते भवान् ।।
न बाहुश्चेष्टते मूर्तिर्मादृशीं गां च केशव।।५।।
स तेन सान्त्विवतायां वै पृथिव्यां यः समागतः ।।
सनत्कुमारस्तत्क्षेत्रे दृष्ट्वा तां संस्थितां महीम् ।।६।।
स्वस्ति वाच्याह पुण्याग्रे प्रत्युवाच वसुन्धराम् ।।
सनत्कुमार उवाच ।।
यं दृष्ट्वा वर्द्धसे देवि त्वं च यस्यासि माधवि ।। ७ ।।
विष्णुना धार्यमाणा च किं त्वया दृष्टमद्भुतम् ।।
एतदाचक्ष्व तत्त्वेन यत्ते हरिमुखाच्छ्रुतम्।।८।।
ब्रह्मपुत्रवचः श्रुत्वा पृथिवी वाक्यमब्रवीत् ।।
धरण्युवाच ।।
यद्गुह्यं स मया पृष्टो यच्च मे सम्प्रभाषितम् ।।९।।
शृणु तत्त्वेन विप्रेन्द्र गुह्यं धर्मं महौजसम् ।।
भगवत्प्रोक्तधर्मेषु यद्गुह्यं कथयाम्यहम्।। 113.१० ।।
तेन मे कथितं ह्येतत्संसारात्तु विमोक्षणम् ।।
विष्णुभक्तेन यत्कार्यं यत्क्रिया परितिष्ठता ।। ११ ।।
उवाच परमं गुह्यं धर्माणां व्याप्तनिश्चयम् ।।
अयं धर्मो मया ह्येतच्छ्रुते धर्मे सनातने ।। १२।।
ततो महीवचः श्रुत्वा ब्रह्मपुत्रो महातपाः ।।
कोकामुखे मम क्षेत्रं जपन्तो ब्रह्मवादिनः ।। १३।।
तान्सर्वानानयामास यत्र देवी व्यवस्थिता ।।
सनत्कुमारः पूतात्मा प्रत्युवाच महीं प्रति ।। १४।।

सनत्कुमार उवाच ।।
यन्मया पूर्वमुक्तासि कथयस्व वरानने।।
अप्रमेयगतिं चैव धर्ममाचक्ष्व तत्त्वतः ।। १५।।
ततस्तस्य वचः श्रुत्वा प्रणम्य ऋषिपुंगवम् ।।
उवाच परमप्रीता धात्री मधुरया गिरा ।। १६ ।।
धरण्युवाच ।।
शृण्वन्तु ऋषयः सर्वे यत्तद्विष्णुमुखाच्छ्रुतम् ।।
बाढमित्येव तां देवि स्वस्ति ब्रूहीति सोऽब्रवीत् ।। १७ ।।
नष्टचन्द्रानिले लोके नष्टभास्करतारके ।।
स्तम्भिताश्च दिशः सर्वा न प्राज्ञायत किञ्चन ।। १८।।
न वाति पवनस्तत्र नैव चाग्निर्न विद्युतः ।।
न किंचित्तत्र विद्येत न तारा न च राशयः ।। १९।।
वेदेषु चैव नष्टेषु मत्स्यो भूत्वा रसातलम् ।।
प्रविश्य तानथोत्कृष्य ब्रह्मणे दत्तवानसि।।113.२० ।।
अन्यद्देवः कूर्मरूपस्त्वं समुद्रस्य मन्थने ।।
धृतवानसि कौर्मेण मन्दरं मधुसूदन ।। २१ ।।
पुनर्वराहरूपेण मां गच्छन्तीं रसातले ।।
उज्जहारेकदंष्ट्रेण भवानेव महार्णवात् ।।२२।।
अन्यद्धिरण्यकशिपुर्वरदानेन दर्पितः ।।
असावपि नृसिंहेण वपुरास्थाय नाशितः ।। २३ ।।
पुनर्निःक्षत्ररूपेण त्वयाऽहं विकृता पुरा ।।
जामदग्न्येन रामेण त्वया दृष्टा सकृत्प्रभो ।। २४ ।।
पुनश्च रावणो रक्षः क्षयितं स्वेन तेजसा ।।
बलिश्च बद्धो भगवन्त्वया वामनरूपिणा ।।२५।।
न च जानाम्यहं देव तव किंचिद्विचेष्टितम् ।।
उद्धृत्य मां कथं देव सृजसे किंच कारणम् ।।२६।।
सृष्ट्वा किमादिशः सर्वां न प्राज्ञायत किंचन ।।
न वाति पवनस्तत्र न चैवाग्निर्ज्वलत्यपि ।।२७।।
अंशवश्चन विद्यन्ते न नक्षत्रा न वा ग्रहाः ।।
न चैवाङ्गारकस्तत्र न शुक्रो न बृहस्पतिः।।२८।।
शनैश्चरो बुधो नात्र न चेन्द्रो धनदो यमः ।।
वरुणोऽपि न विद्येत नान्ये केचिद्दिवौकसः ।।२९।।
वर्जयित्वात्र त्रीन्देवान् ब्रह्मविष्णुमहेश्वरान् ।।

पृथिवी भारसन्तप्ता ब्रह्माणं शरणं गता ।। 113.३० ।।
गत्वा च शरणं देवी दैन्यं वदति माधवी ।।
प्रसीद मम देवेन्द्र मग्नाहं भारपीडिता ।।३१।।
सपर्वतवनैः सार्द्धं मां तारय पितामह ।।
पृथिव्या वचनं श्रुत्वा ब्रह्मा लोकपितामहः।।३२।।
मुहुर्तं ध्यानमास्थाय पृथिवीं तामुवाच ह ।।
नाहं तारयितुं शक्तो विषमस्थां वसुन्धरे ।।३३।।
लोकनाथं सुरश्रेष्ठमादिकर्त्तारमञ्जसा ।।
लोकेशं धन्विनं श्रेष्ठं याहि मायाकरण्डकम् ।।३४।।
सर्वेषामेव नः कार्यं यच्च किञ्चित्प्रवर्त्तते ।।
सर्वांस्तारयितुं शक्तः कि पुनस्त्वां वसुन्धरे ।। ३५ ।।
अनन्तशयने देवं शयानं योगशायिनम् ।।
ततः कमलपत्राक्षी नानाभरणभूषिता ।।३६ ।।
कृताञ्जलिपुटा देवी प्रसादयति माधवम् ।।
धरण्युवाच ।।
अहं भारसमायुक्ता ब्रह्माणं शरणङ्गता ।।३७।।
प्रत्याख्याता भगवता तेनाप्युक्तमिदं वचः ।।
नाहं तारयितुं शक्तः सुश्रोणि व्रज माधवम् ।।३८।।
स त्वां तारयितुं शक्तो मग्नासि यदि सागरे ।।
प्रसीद मम देवेश लोकनाथ जगत्प्रभो।।३९।।
भक्त्या त्वां शरणं यामि प्रसीद मम माधव।।
त्वमादित्यश्च चन्द्रश्च त्वं यमो धनदस्तु वै ।।113.४०।।
वासवो वरुणश्चासि ह्यग्निर्मारुत एव च ।।
अक्षरश्च क्षरश्चासि त्वं दिशो विदिशो भवान् ।। ४१।।
मत्स्यः कूर्म्मो वराहश्च नरसिंहोऽसि वामनः ।।
रामो रामश्च कृष्णश्च बुद्धः कल्की महात्मवान् ।।४२ ।।
एवं पश्यसि योगेन श्रूयते त्वं महायशाः ।।
युगायुग सहस्राणि व्यतीतान्यसि संस्थितः।।४३।।
पृथिवी वायुराकाशमापोज्योतिश्च पञ्चमम्।।
शब्दस्पर्शस्वरूपोऽसि रसो गन्धोऽसि नो भवान्।।४४।।
सग्रहाणि च ऋक्षाणि कलाकाष्ठामुहूर्त्तकाः ।। ४५ ।।
सग्रहा ये च नक्षत्रा कला कालमुहूर्त्तकाः ।।
ज्योतिश्चक्रं ध्रुवश्चाऽसि सर्वेषु द्योतते भवान् ।। ४६ ।।

मासः पक्षमहोरात्रमृतुः संवत्सराण्यपि ।। ४७ ।।
कला काष्ठापि षण्मासाः षड्रसाश्चापि संयमः ।।
सरितः सागराश्च त्वं पर्वताश्च महोरगाः ।। ४८ ।।
त्वं मेरुर्मन्दरो विन्ध्यो मलयो दर्दुरो भवान् ।।
हिमवान्निषधश्चासि सचक्रोऽसि वरायुधः।।४९।।
धनुषां च पिनाकोऽसि सांख्ययोगोऽसि चोत्तमः ।।
परम्परोऽसि लोकानां नारायणः परायणः।।113.५०।।
संक्षिप्तश्चैव विस्तारो गोप्ता यज्ञश्च शश्वतः।।
यज्ञानां च महायज्ञो यूपानामसि संस्थितः ।।५१।।
वेदानां सामवेदोऽसि साङ्गोपाङ्गो महाव्रतः ।।
गर्जनं वर्षणं चासि त्वं वेधा अनृतानृते।।५२।।
अमृतं सृजसे विष्णो येन लोकानधारयत् ।।
त्वं प्रीतिस्त्वं परा प्रीतिः पुराणः पुरुषो भवान् ।। ५३ ।।
धेयाधेयं जगत्सर्वं यच्च किंचित् प्रवर्त्तते ।।
सप्तानामपि लोकानां त्वं नाथस्त्वमसंग्रहः।।५४।।
त्वं च कालश्च मृत्युश्च त्वं भूतो भूतभावनः।।
आदिमध्यान्तरूपोऽसि मेधा बुद्धिः स्मृतिर्भवान् ।।५२।।
आदित्यस्त्वं युगावर्त्तास्त्वं तपस्वी महातपाः ।।
अप्रमाणः प्रमेयोऽसि ऋषीणां च महानृषिः ।। ५६ ।।
अनन्तश्चासि नागानां सर्पाणामसि तक्षकः ।।
उद्वहः प्रवहश्चासि वरुणो वारुणो भवान् ।। ५७ ।।
क्रीडाविक्षेपणश्चासि गृहेषु गृहदेवताः ।।
सर्वात्मकः सर्वगतो वर्द्धनो मन एव च ।। ५८ ।।
साङ्गस्त्वं विद्युतीनां च वैद्युतानां महाद्युतिः ।।
युगे मन्वन्तरे चापि वृक्षाणां च वनस्पतिः ।। ५९।।
श्रद्धासि त्वं च देवेश दोषहन्तासि माधव ।।
अण्डजोद्भिज्जस्वेदानां जरायूनां च माधव ।। 113.६० ।।
गरुडोऽसि महात्मानं वहसि त्वं परायणः ।।
दुन्दुभिर्नेमिघोषैश्च आकाशममलो भवान् ।। ६१ ।।
जयश्च विजयश्चासि गृहेषु गृहदेवताः ।।
सर्वात्मकः सर्वगतश्चेतनो मन एव च ।। ६२ ।।
भगस्त्वं विषलिङ्गश्च परस्त्वं परमात्मकः ।।
सर्वभूतनमस्कार्यो नमो देव नमो नमः ।। ६३ ।।

मां त्वं मग्नामसि त्रातुं लोकनाथ इहार्हसि ।।
आदिकालात्मकः कृष्णः सर्वलोकात्मको विभुः ।। ६४ ।।
य इदं पठते स्तोत्रं केशवस्य दृढव्रतः ।।
व्याधितो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ।। ६५ ।।
अपुत्रो लभते पुत्रं दरिद्रो धनमाप्नुयात् ।।
अभार्यो लभते भार्यामपतिः पतिमाप्नुयात् ।। ६६ ।।
उभे सन्ध्ये पठेत्स्तोत्रं माधवस्य महात्मनः ।।
स गच्छेद्विष्णुलोकं च नात्र कार्या विचारणा ।। ६७ ।।
एवं तु अक्षरोक्तोऽपि भवेत्तु परिकल्पना ।।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ।। ६८ ।।
इति श्रीवराहपुराणे विष्णुस्तवनं नाम त्रयोदशाधिकशततमोऽध्यायः ।। ११३ ।।

अथ श्रीवराहावतारः ।।

श्रीवराह उवाच ।।

संस्तूयमानो भगवान्मुनिभिर्मन्त्रवादिभिः ।।
तुष्टो नारायणो देवः केशवः परमो विभुः ।। १ ।।
ततो ध्यानं समास्थाय दिव्यं योग्यं च माधवः ।।
मधुरं स्वरमास्थाय प्रत्युवाच वसुन्धराम् ।। २ ।।
तव देवि प्रियार्थाय भक्त्या यं त्वं व्यवस्थिता ।।
कारयिष्यामि ते सर्वं यत्ते हृदि व्यवस्थितम् ।। ३ ।।
अहं त्वां धारयिष्यामि सशैलवनकाननाम् ।।
ससागरां ससरितं सप्तद्वीपसमन्विताम् ।। ४ ।।
एवमाश्वासयित्वा तु वसुधां स च माधवः ।।
रूपं संकल्पयामास वाराहं सुमहौजसम् ।। ५ ।।
षट् सहस्राणि चोच्छ्रायो विस्तारेण पुनस्त्रयः ।।
एवं नवसहस्राणि योजनानां विधाय च ।। ६ ।।
वामया दंष्ट्रया गृह्य उज्जहार च मेदिनीम् ।।
सपर्वतवनाकारां सप्तद्वीपां सपत्तनाम् ।। ७ ।।
नगा विलग्नाः पतिताः केचिद्विज्ञानसंश्रिताः ।।
शोभन्ते च विचित्रांगमेघाः सन्ध्यागमे यथा ।। ८ ।।
चन्द्रनिर्मलसङ्काशा वराहमुखसंस्थिताः ।।
शोभन्ते चक्रपाणेश्च मृणालं कर्दमे यथा ।। ९।।
एवं हि धार्यमाणा सा पृथिवी सागरान्विता ।।
वर्षाणां च सहस्रं हि वज्रदंष्ट्रेण साधुना ।।114.१० ।।
तस्यामेव तु कालस्य परिमाणं युगेषु च ।।
एकसप्ततिके कल्पे कर्दमोऽयं प्रजापतिः ।। ११ ।।
ततः पृथिव्या देवश्च भगवान्विष्णुरव्ययः।।
अन्योन्याभिमताश्चैव वाराहे कल्प उत्तमे ।। १२।।
सा गौः स्तुवति तं चैव पुराणं परमव्ययम् ।।
योगेन परमेणैव शरणं चैव गच्छति ।।१३।।
आधारः कीदृशो देव उपयोगश्च कीदृशः ।।
कालेकाले च देवेश कर्मणश्चापि कीदृशः ।। १४ ।।
कीदृशा पश्चिमा संध्या कीदृशी ह्यर्धबाह्यतः ।।
शेषाः समानास्त्वा देव ये तु कर्माणि कुर्वते ।। १५ ।।
किन्नु संस्थापने देव आवाहनविसर्जने ।।

अगुरुं गन्धधूपं च प्रमाणं गृह्यते कथम् ।। १६ ।।
कथं पाद्यं च गृह्णाति स्नापनालेपनानि च ।।
कथं दीपश्च दातव्यः कन्दमूलफलानि च ।। १७ ।।
आसनं शयनं चैव किङ्कर्म्मापि विधीयते ।।
कथं पूजादि कर्त्तव्यं प्राणास्तत्र च वै कति ।। १८ ।।
पश्चिमा पूर्वसंध्यायां किं पुण्यं चापि तत्र वै ।।
शरदि कीदृशं कर्म शिशिरे कर्म कीदृशम् ।। १९ ।।
वसन्ते कीदृशं कर्म ग्रीष्मे किं कर्म कारयेत् ।।
प्रावृट्काले च किं कर्म वर्षान्ते किञ्च कारयेत् ।। 114.२० ।।
यानि तत्रोपभोग्यानि पुष्पाणि च फलानि च ।।
कर्मण्यास्ते अकर्मण्या ये च शास्त्रबहिष्कृताः ।। २१ ।।
किं कर्मणा भोगवता तावद्गच्छति माधवम् ।।
कथं कर्म न चान्नेषु अतिगच्छति कीदृशम् ।। २२ ।।
अर्च्चायाः किं प्रमाणं तु स्थापनं चापि कीदृशम् ।।
परिमाणं कथं देव उपवासश्च कीदृशः ।। २३ ।।
पीतकं शुक्लरक्तं वा कथं गृह्णाति वाससाम् ।।
तेषां तु कानि वस्त्राणि यैर्हितं प्रतिपद्यते ।। २४।।
केषु द्रव्येषु संयुक्तं मधुपर्कं प्रदीयते ।।
के तु कर्मगुणास्तस्य मधुपर्कस्य माधव ।।२८५।।
केषु लोकेषु गच्छन्ति मधुपर्कस्य भक्षणात् ।।
स्तवे परमकालेऽपि तव भक्तस्य माधव।।२६ ।।
किम्प्रमाणं तु दातव्यं मधुपर्कसमन्वितम् ।।
कानि मांसानि ते देव फलं शाकस्य कीदृशः ।।२७।
प्रापणेष्वपि युज्येत कर्म शास्त्रसमायुतम् ।।
आहूतस्य च मन्त्रेण आगते धर्मवत्सल ।।२८।।
केन मन्त्रविधानेन प्राशनं ते प्रदीयते ।।
व्रतस्य चोपचारेषु अर्च्चयित्वा यथाविधि।।२९।।
कानि कर्म्माणि कुर्वीत तव भक्तस्य भोजनात् ।।
यस्तु तं प्रापणं देव न च दोषप्रसादिकम् ।।114.३०।।
के ऽत्र भुंजन्ति तद्देव सर्वशुद्धिकरं परम् ।।
ये तु एकाशिनो देवमुपसर्पन्ति माधवम्।।३१।।
तेषां तु का गतिर्देव तव मार्गानुसारिणाम् ।।
व्रतं कृत्वा यथोक्तेन येऽभिगच्छन्ति माधवम् ।।३२।।

तेषां तु का गतिर्देव तव भक्तिं प्रकुर्वताम् ।।
कृच्छ्रसांतपने कृत्वा येऽभिगच्छन्ति माधवम् ।३३ ।
कां गतिं ते प्रपद्यन्ते तव कर्मपरायणाः ।।
वाय्वाहारं ततः कृत्वा कृष्णं समधिगच्छति ।। ३४ ।।
तेषां तु का गतिः कृष्ण तव भक्तौ व्यवस्थिताः ।।
अक्षारलवणं कृत्वा येऽभिगच्छन्ति चाच्युतम् ।।३५।।
कां गतिं ते प्रपद्यन्ते तव कर्मानुसारिणः ।।
कृत्वा पयोव्रतं चैव येऽभिगच्छंति चाच्युतम् ।। ३६ ।।
ते कां गतिं प्रपद्यन्ते नरा ये व्रतकारिणः।।
दत्त्वा गवाह्निकं चैव ये प्रपद्यन्ति माधवम् ।।३७।।
कां गतिं ते प्रपद्यन्ते तव भक्त्या व्यवस्थिताः ।।
उञ्छवृत्तिं समास्थाय येऽभिगच्छन्ति माधवम् ।।३८।।
कां गतिं ते प्रपद्यन्ते नरा भिक्षोपजीविनः।।
गृहस्थधर्मं कृत्वा वै येऽभिगच्छन्ति माधवम् ।।३९।।
कां गतिं ते प्रपद्यन्ते तव कर्मपरायणाः ।।
तव क्षेत्रेषु वैकुण्ठ ये तु प्राणान्विमुञ्चते ।।114.४०।।
काँल्लोकांस्ते प्रपद्यन्ते तव क्षेत्रेषु ये मृताः ।।
कृत्वा पंचातपं चैव माधवाय प्रयच्छति ।।४१ ।।
कां गतिं वै परायान्ति ये तु पंचातपे मृताः ।।
कण्टशय्यां समासाद्य ये प्रपश्यन्ति चाच्युतम्।।४२।।
तेषां तु का गतिर्देव कण्टशय्यां समाश्रिताः।।
आकाशशयनं कृत्वा ये प्रपद्यन्ति चाच्युतम् ।। ४३।।
तेषां तु का गतिः कृष्ण तव भक्तिपरायणाः ।।
गोव्रजे शयनं कृत्वा ये प्रपद्यन्ति केशवम् ।। ४४ ।।
तेषां तु का गतिर्ब्रह्मंस्तव भक्तिपथे स्थिताः ।।
शाकाहारं ततः कृत्वा येऽभिगच्छन्ति चाच्युतम् ।। ४५ ।।
तेषां तु का गतिर्देव कणभक्षास्तु ये नराः ।।
पंचगव्यं ततः पीत्वा येऽभिगच्छन्ति माधवम् ।। ४५ ।।
तेषां तु का गतिर्देव ये नरा यावकाशिनः ।।
आहारं गोमयं कृत्वा येऽभिगच्छन्ति केशवम् ।। ४७ ।।
नारायण गतिस्तेषां कीदृशोऽत्र विधिः स्मृतः ।।
सक्तुं वै भक्षयित्वा तु ये प्रपद्यन्ति चाच्युतम् ।। ४८ ।।
तेषां तु का गतिर्देव तव कर्मपरायणाः ।।

शिरसा दीपकं कृत्वा येऽभिगच्छन्ति केशवम् ।। ४९ ।।
तेषां तु का गतिर्देव शिरसा दीपधारणात् ।।
ये हि नित्यं पयः पीत्वा तव चिन्ताव्यवस्थिताः ।। 114.५० ।।
ते गतिं कां प्रपद्यन्ते तव चिंतापरायणाः ।।
अश्माशनं व्रतं कृत्वा ये प्रपद्यन्ति नित्यशः ।। ५१ ।।
तेषां तु का गतिर्देव तव भक्तिपरायणाः ।।
भक्षयित्वा तु दूर्वां ये प्रपद्यन्ते मनीषिणः ।। ५२ ।।
तेषां तु का गतिर्देव स्वधर्मगुणचारिणः ।।
जानुभ्यां प्रतिपद्यन्ते तव प्रीत्या च माधव ।।५३।।
तेषां तु का गतिर्देव तन्ममाचक्ष्व पृच्छतः ।।
उत्तानशयनं कृत्वा धारयन्ति हि दीपिकाम् ।। ५४ ।।
ते यांति कां गतिं देव कथ्यते या च शाश्वती ।।
जानुभ्यां दीपकं कृत्वा केशवाय प्रपद्यते।।५५।।
तेषां तु का गतिर्देव कथ्यते चैव शाश्वती ।।
अवाङ्मुखस्तु भूत्वा वै यः प्रपद्येज्जनार्द्दनम् ।। ५६ ।।
भगवन् का गतिस्तस्य अवाक्शिरसि शायिनः ।।
पुत्रदारगृहं चैव मुक्त्वा योऽनुप्रपद्यते ।। ५७ ।।
का गतिस्तस्य सिद्धा तु कथयस्व सुरोत्तम ।।
भाषितोऽसि मया ह्येवं सर्वलोकसुखावहम् ।। ५८ ।।
गमनागमनं चैव त्वत्प्रसन्नेन माधव ।।
त्वं ज्ञाता त्वं पिता चैव सर्वधर्मविनिश्चयः ।। ५९ ।।
अतस्त्वयैव वक्तव्यो योगसाङ्ख्यविनिश्चयः ।।
त्वां भजंश्च गते जीवे मधुपर्कसमन्वितम् ।। 114.६० ।।
भस्माकुलेषु निःक्षिप्य कथं चाग्नौ प्रपद्यते ।।
कां गतिं प्रतिपद्यन्ते त्वद्भक्ता जलमास्थिताः ।। ६१ ।।
त्वत्क्षेत्रसंस्थितो वापि तन्ममाचक्ष्व पृच्छतः ।।
स्मरण पुत्र ते कृष्ण यैस्तु नाम प्रकीर्त्यते ।। ६२ ।।
नमो नारायणेत्युक्त्वा तेषां वै का गतिर्भवेत् ।।
उद्यतेष्वपि शस्त्रेषु हन्यमाना रणे नराः ।। ६३ ।।
नामप्रकीर्तनात्तेषां कीदृशी तु गतिर्भवेत् ।।
अहं शिष्या च दासी च तव भक्त्या व्यवस्थिता ।। ६४ ।।
रहस्यं धर्मसंयुक्तं तन्ममाचक्ष्व माधव ।।
एवं तत्परमं गुह्यं मम प्रीत्या जगद्गुरो ।। ६५ ।।

संचिन्त्य लोकधर्मार्थं तद्भवान् वक्तुमर्हति ।।

इति श्रीवराहपुराणे पृथिव्याः प्रश्नो नाम चतुर्दशाधिकशततमोऽध्यायः ।। ११४ ।।

अथ विविधधर्मोत्पत्तिः ।।

ततो महीवचः श्रुत्वा देवो नारायणोऽब्रवीत् ।।
कथयिष्यामि ते देवि कर्म स्वर्गसुखावहम् ।। १ ।।
यत्त्वया पृच्छ्यते देवि तच्छृणुष्व वसुन्धरे ।।
स्थितिं सत्तां तु मर्त्यानां भक्त्या ये च व्यवस्थिताः ।।२ ।।
नाहं दानसहस्रेण नाहं यज्ञशतैरपि ।।
तुष्यामि न तु वित्तेन ये नराः स्वल्पचेतसः ।।३।।
एकचित्तं समाधाय यो मां जानाति माधवि ।।
नित्यं तुष्यामि तस्याहं पुरुषं बहुदोषकम् ।। ४ ।।
यच्च पृच्छसि मां भद्रे कर्म स्वर्गसुखावहम् ।।
तच्छृणुष्व वरारोहे गदतो मे शुचिस्मिते ।। ५ ।।
ये नमस्यति मां नित्यं पुरुषा बहुचेतसः ।।
अर्द्धरात्रेऽन्धकारे च मध्याह्ने वापराह्णके ।। ६ ।।
यस्य चित्तं न नश्येत मम भक्तिव्यवस्थितम् ।।
द्वादश्यामुपवासं तु यः कुर्यान्मम तत्परः ।। ७ ।।
ते मामेव प्रपश्यन्ति मयि भक्तिपरायणाः ।।
लब्धचेतो गुणज्ञश्च नरो भक्तिव्यवस्थितः ।। ८ ।।
इच्छयाऽपि भवेद्भद्रे स्वर्गे वसति सुन्दरि ।।
स्वल्पकेन न गम्यन्ते दुष्प्राप्योऽहं वरानने ।। ९ ।।
यानि कर्माणि कुर्वन्तु मां प्रपश्यन्ति माधवि ।।
तानि ते कथयिष्यामि येन भक्त्या व्यवस्थिताः ।। 115.१० ।।
द्वादश्यामुपवासं तु ये च कुर्वन्ति ते नराः ।।
तेषामेव प्रपश्यन्ति मम भक्तिपरायणाः।।११ ।।
कृत्वा चैवोपवासं प्रगृह्य चैव जलाञ्जलिम् ।।
नमो नारायणेत्युक्त्वा आदित्यं चावलोकयेत्।।१२।।
यावन्तो बिन्दवः किंचित्पतन्त्येवाञ्जलेर्जलात् ।।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ।। १३।।
अथ चैव तु द्वादश्यां पुरुषा धर्मवादकाः।।
विधिना च प्रयत्नेन ये मां कुर्वन्ति मानुषाः ।।१४।।
पाण्डुरैश्चैव पुष्पैश्च मृष्टैर्धूपैस्तु धूपयेत्।।
यो मे धारयते भूमौ तस्यापि शृणु या गतिः।।१५।।
दत्त्वा शिरसि पुष्पाणि इमं मन्त्रमुदीरयेत् ।।
हृदि कृत्वा तु मन्त्रांश्च शुक्लाम्बरधरो धरे ।।१६।।

सुमान्यः सुमना गृहय प्रीयतां भगवान्हरिः ।। १७ ।।
नमोऽस्तु विष्णवे व्यक्ताव्यक्तगन्धिगन्धान्सुगन्धान्वा गृहण गृहण नमो भगवते विष्णवे ।।
अनेन मन्त्रेण गन्धं दद्यात् ।।
श्रुत्वा प्रत्यागतमाधारसवनं पतये भवं प्रविष्टं मे धूप धूपनं गृहणातु मे भगवानच्युतः ।।
अनेन मन्त्रेण धूपं दद्यात् ।। १८ ।।
श्रुत्वा चैवं च शास्त्राणि यो मामेव तु कारयेत् ।।
मम लोकं च गच्छेत जायेतैव चतुर्भुजः ।। १९ ।।
एतत्ते कथितं देवि श्रेष्ठं चैव मम प्रियम् ।।
तव चैवं प्रियार्थाय मन्त्रपूजां सुखावहम् ।।115.२०।।
श्यामाकं स्वस्तिकं चैव गोधूमं मुद्गकं तथा ।।
शालयस्तु यवाश्चैव तथा नीवारकाङ्गुकाः ।। २१ ।।
एतानि यस्तु भुञ्जीत मम कर्मपरायणः ।।
शङ्खं चक्रं लाङ्गलं च मुसलं स च पश्यति ।। २२ ।।
ब्राह्मणस्य तु वक्ष्यामि शृणु कर्म वसुन्धरे ।।
यानि कर्माणि कुर्वीत मम भक्तिपरायणः ।। २३ ।।
षट्कर्मनिरतो भूत्वा अहङ्कारविवर्ज्जितः ।।
लाभालाभं परित्यज्य भिक्षाहारो जितेन्द्रियः ।। २४ ।।
मम कर्मसमायुक्तः पैशुन्येन विवर्जितः ।।
शास्त्रानुसारिमध्यस्थो नवृद्धशिशुचेतनः ।। २५ ।।
एतद्वै ब्रह्मणः कर्म एकचित्तो जितेन्द्रियः ।।
इष्टापूर्तं च कुरुते स मामेति वसुन्धरे ।। २६ ।।
क्षत्रियाणां प्रवक्ष्यामि मम कर्मसु तिष्ठताम् ।।
यानि कर्माणि कुर्वीत क्षत्रियो मध्यसंस्थितः ।। २७ ।।
दानशूरश्च कर्मज्ञो यज्ञेषु कुशलः शुचिः ।।
मम कर्मसु मेधावी अहङ्कारविवर्जितः ।। २८ ।।
अल्पभाषी गुणज्ञश्च नित्यं भागवतप्रियः ।।
गुरुविद्योऽनसूयश्च निन्द्यकर्मविवर्जितः।।२९।।
अभ्युत्थानादिकुशलः पैशुन्येन विवर्जितः।।
एतैर्गुणैः समायुक्तो यो मां व्रजति क्षत्रियः ।। 115.३० ।।
भजते मम यो नित्यं मम लोकाय गच्छति ।।
वैश्यानां तु प्रवक्ष्यामि मम कर्मसु तिष्ठताम् ।। ३१ ।।
यानि कर्माणि कुरुते मम भक्तिपथे स्थितः ।।
एतैर्गुणैः स्वधर्मेण लाभालाभविवर्जितः ।। ३२ ।।

ऋतुकालाभिगामी च शान्तात्मा मोहवर्जितः ।।
शुचिर्दक्षो निराहारो मम कर्मरतः सदा ।। ३३ ।।
गुरुसम्पूजको नित्यं युक्तो भक्तानुवत्सलः ।।
वैश्योऽप्येवं सुसंयुक्तो यस्तु कर्माणि कारयेत् ।। ३४ ।।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ।। ।।
अथ शूद्रस्य वक्ष्यामि कर्माणि शृणु माधवि ।। ३५ ।।
कर्माणि यानि कृत्वा ह शूद्रो मह्यं व्यवस्थितः ।।
दम्पती मम भक्तौ यो मम कर्म परायणौ ।। ३६ ।।
उभौ भागवतौ भक्तौ मद्भक्तौ कर्मनिष्ठितौ ।।
देशकालौ च वानीतौ रजसा तमसोज्झितौ ।। ३७ ।।
निरहङ्कारशुद्धात्मा आतिथेयो विनीतवान् ।।
श्रद्दधानोऽतिपूतात्मा लोभमोहविवर्जितः ।। ३८ ।।
नमस्कारप्रियो नित्यं मम चिन्ताव्यवस्थितः ।।
शूद्रः कर्माणि मे देवि य एवं सममाचरेत् ।। ३९ ।।
त्यक्त्वा ऋषिसहस्राणि शूद्रमेव भजाम्यहम् ।।
चातुर्वर्ण्यस्य कर्माणि यत्त्वया परिपृच्छितम् ।। 115.४० ।।
एवं कर्मगुणाश्चैव येन भक्त्या व्यवस्थितः ।।
सर्ववर्णाश्च मां देवि अपरं क्षत्रिये शृणु ।। ४१ ।।
येन तत्प्राप्यते योगं तच्छृणुष्व वसुन्धरे ।।
त्यक्त्वा लाभमलाभं च मोहं कामं च वर्जयेत् ।। ४२ ।।
न शीतं च न चोष्णे च लब्धाऽलब्धं विचिन्तयेत् ।।
न तिक्तेनास्ति कटुना मधुराम्लैर्न लावणैः ।। ४३ ।।
न कषायैः स्पृहा यस्य प्राप्नुयात्सिद्धिमुत्तमाम् ।।
भार्या पुत्राः पिता माता उपभोगार्थसंयुतम् ।। ४४ ।।
य एतान् हि परित्यज्य मम कर्मरतः सदा ।।
धृतिज्ञः कुशलश्चैव श्रद्दधानो धृतव्रतः ।। ४५ ।।
तत्परो नित्यमुद्युक्तः अन्यकार्यजुगुप्सकः ।।
बाले वयसि कल्पश्च अल्पभोगी कुलान्वितः ।। ४६ ।।
कारुण्यः सर्वसत्त्वानां प्रत्युत्थायी महाक्षमः ।।
काले मौनक्रियां कुर्याद्यावत्तत्कर्म कारयेत् ।।४७।।
त्रिकालं च दिशो भागं सदा कर्मपथि स्थितः ।।
उपपन्नानभुञ्जानः कर्माण्यभोजनानि च ।। ४८ ।।
अनुष्ठानपरश्चैव मम पार्श्वे मनश्चरः ।।

काले मूत्रपुरीषाणि विसृज्य स्नानवत्सलः ।। ४९ ।।
पुष्पे गन्धे च धूपे च मत्कर्मणि सदा रतः ।।
कदाचित्कन्दमूलानि फलानि च कदाचन।।115.५०।।
पयसा यावकेनापि कदाचिद्वायुभक्षणः ।।
कदाचित्षष्ठकालेन क्वचिद्दृष्टमहाफलः ।। ५१ ।।
कदाचित्तु चतुर्थेन कदाचित्फलमेव च ।।
कदाचिद्दशमे भुञ्जेत्पक्षे मासे वसुन्धरे ।। ५२ ।।
य एतत्सप्त जन्मानि मम कर्माणि कुर्वते ।।
योगिनस्तान्प्रपश्यन्ति पूर्वोक्तान्कर्मसु स्थितान् ।। ५३ ।।
इति श्रीवराहपुराणे विविधकर्मोत्पत्तौ पंचदशाधिकशततमोऽध्यायः ।। ११५ ।।

अथ सुखदुःखनिरूपणम्।।

श्रीवराह उवाच ।।

मया प्रोक्तविधानेन यस्तु कर्माणि कारयेत् ।।
तच्छृणुष्व महाभागे यो साफल्यमाप्नुयात् ।। १ ।।
एकचित्तः समास्थाय अहङ्कारविवर्ज्जितः ।।
मच्चित्तसंहतो नित्यं क्षान्तो दांतो जितेन्द्रियः ।। २ ।।
फलमूलानि शाकानि द्वादश्यां वा कदाचन।।
पयोव्रतं च तत्काले पुनरेव निरामिषः ।। ३ ।।
षष्ठ्यष्टमी ह्यमावास्या तूभयत्र चतुर्दशी ।।
मैथुनं नाभिसेवेत द्वाद्वश्यां च तथा प्रिये ।।४।।
एवं योगविधानेन कर्म कुर्याद्दृढव्रतः ।।
पूतात्मा धर्मसंयुक्तो विष्णुलोकं तु गच्छति ।। ५ ।।
न ग्लानिर्न जरा तस्य न मोहो रोग एव च ।।
भुजाष्टादश जायन्ते धन्वी खड्गी शरी गदी ।। ६ ।।
तेषां व्युष्टिं प्रवक्ष्यामि मम कर्मसमुत्थिताम् ।।
षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ।। ७ ।।
ममार्चनविधिं कृत्वा मम लोके महीयते ।।
दुःखमेवं प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।। ८ ।।
उचितेनोपचारेण दुःखमोक्षविनाशनम् ।।
अहङ्कारावृतो नित्यं नरो मोहेन चावृतः ।। ९ ।।
यो मां नैव प्रपद्येत ततो दुःखतरं नु किम् ।।
सर्वाशी सर्वविक्रेता नमस्कारविवर्जितः ।। 116.१० ।।
यो न मां प्रतिपद्येत ततो दुःखतरं नु किम् ।।
प्राप्तकाले वैश्वदेवे दृष्ट्वा चातिथिमागतम् ।। ११ ।।
अदत्त्वा तस्य यो भुंक्ते ततो दुःखतरं नु किम् ।।
सर्वान्नानि तु सिद्धानि पाकभेदं करोति यः ।। १२ ।।
तस्य देवा न चाश्नन्ति ततो दुःखतरं नु किम् ।।
असन्तुष्टस्तु वैषम्ये परदाराभिमर्शकः ।। १३ ।।
परोपतापी मन्दात्मा ततो दुःखतरं नु किम् ।।
अकृत्वा पुष्कलं कर्म गृहे संवसते नरः ।। १४।।
मृत्युकालवशं प्राप्तस्ततो दुःखतरं नु किम् ।।
हस्त्यश्वरथयानानि गम्यमानानि पश्यति ।। १५ ।।
धावन्त्यस्याग्रतः पृष्ठे ततो दुःखतरं नु किम् ।।

अश्नन्ति पिशितं केचित्केचिच्छालिसमन्वितम् ।। १६ ।।
शुष्कान्नं केचिदश्नन्ति ततो दुःखतरं नु किम् ।।
वरवस्त्रावृतां शय्यां समासेवति भूषिताम् ।। १७ ।।
केचित्तृणेषु शेरन्ते ततो दुःखतरं नु किम् ।।
सुरूपो दृश्यते कश्चित्पुरुषश्चात्मकर्मभिः ।। १८ ।।
केचिद्विरूपा दृश्यन्ते ततो दुःखतरं नु किम् ।।
विद्वान् कृती गुणज्ञश्च सर्वशास्त्रविशारदः ।।१९।।
केचिन्मूकाश्च दृश्यन्ते ततो दुःखतरं नु किम् ।।
विद्यमाने धने केचित्कृपणा भोगवर्जिताः ।।116.२०।।
दरिद्रो जायते दाता ततो दुःखतरं नु किम् ।।
द्विभार्यः पुरुषो यस्तु तयोरेकां प्रशंसति ।। २१ ।।
एका तु दुर्भगा तत्र ततो दुःखतरं नु किम् ।।
ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णाः सुमध्यमे ।। २२ ।।
पापकर्मरता ह्यासन्ततो दुःखतरं नु किम् ।।
लब्ध्वा तु मानुषीं संज्ञां पंचभूत समन्विताम् ।। २३ ।।
मामेव न प्रपद्यन्ते ततो दुःखतरं नु किम् ।।
एतत्ते कथितं भद्रे दुःखकर्मविनिश्चयम् ।। २४ ।।
सर्वभूताहितं पापं यत्त्वया परिपृच्छितम् ।।
यच्च मां पृच्छते भद्रे शुभं कीदृशमुच्यते ।। २५ ।।
तच्छृणुष्वानवद्याङ्गि मम कर्मविनिश्चयम् ।।
कृत्वा तु विपुलं कर्म मद्भक्तेषु निवेदयेत् ।। २६ ।।
यस्य बुद्धिर्विजायेत स दुःखायोपजायते ।।
मां पूजयित्वा नैवेद्यं विशिष्टं परिकल्प्य च ।। २७ ।।
शेषमन्नं समश्नाति ततः सौख्यतरं नु किम् ।।
त्रिकालं ये प्रपद्यन्ते मयोक्तेन वसुन्धरे ।। २८ ।।
कृत्वा सायाह्निकं कर्म ततः सौख्यतरं नु किम् ।।
देवतातिथिमर्त्यानां त्यक्त्वा चान्नं वसुन्धरे ।। २९ ।।
यश्चात्मा वै समश्नाति ततः सौख्यतरं नु किम् ।।
प्रविष्टस्त्वतिथिर्यस्य निराशो यन्न गच्छति ।। 116.३० ।।
येन केनचिद्दत्तेन ततः सौख्यतरं नु किम् ।।
मासि मास्येकदिवसस्त्वमावास्येति योच्यते ।। ३१ ।।
पितरो यस्य तृप्यन्ति ततः सौख्यतरं नु किम् ।।
भोजनेषु प्रपन्नेषु यवान्नं यः प्रयच्छति ।। ३२ ।।

अभिन्नमुखरागेण ततः सौख्यतरं नु किम् ।।
उभयोरपि भार्यासु यस्य बुद्धिर्न नश्यति ।। ३३ ।।
समं पश्यति यो देवि ततः सौख्यतरं नु किम् ।।
अहिंसनं तु कुर्वीत विशुद्धेनान्तरात्मना ।। ३४।।
अहिंसोपरतः शुद्धः स सुखायोपजायते ।।
परभार्यां सुरूपां तु दृष्ट्वा दृष्टिर्न चाल्यते ।। ३५ ।।
यस्य चित्तं न गच्छेत्तु ततः सौख्यतरं नु किम् ।।
मौक्तिकादीनि रत्नानि तथैव कनकानि च ।। ३६ ।।
लोष्टवत्पश्यते यस्तु ततः सौख्यतरं नु किम् ।।
मुदिते वाश्वनागेन्द्रे उभे सैन्ये पथि स्थिते ।। ३७ ।।
यस्तु प्राणान्प्रमुच्येत ततः सौख्यतरं नु किम्।।
लब्धेन चाप्यलब्धेन कुत्सितं कर्म गर्हयन् ।। ३८ ।।
यस्तु जीवति संतुष्टः स सुखायोपपद्यते ।।
भर्तुस्तु वै व्रतं स्त्रीणामेवमेव वसुन्धरे ।। ३९ ।।
या तोषयति भर्त्तारं ततः सौख्यतरं नु किम् ।।
विद्यते विभवेनापि पुरुषो यस्तु पण्डितः ।। 116.४० ।।
निगृहीतेन्द्रियः पंच ततः सौख्यतरं नु किम् ।।
सहते चावमानं तु व्यसने न तु दुर्मनाः ।। ४१ ।।
यस्येदं विदितं सर्वं ततः सौख्यतरं नु किम् ।।
अकामो वा सकामो वा मम क्षेत्रे वसुंधरे ।। ४२ ।।
यस्तु प्राणान्प्रमुच्येत ततः सौख्यतरं नु किम् ।।
मातरं पितरं चैव यः सदा पूजयेन्नरः ।। ४३।।
देवतेव सदा पश्येत्ततः सौख्यतरं नु किम् ।।
ऋतुकाले तु यो गच्छेन्मासेमासे च मैथुनम्।।४४।।
अनन्यमानसो भूत्वा ततः सौख्यतरं नु किम्।।
प्रयुक्तः सर्वदेवानां यो मामेवं प्रपूजयेत् ।।४५।।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ।।
एतत्ते कथितं भद्रे शुभनिर्देशनिश्चयः ।।
सर्वलोकहितार्थाय यन्मां त्वं परिपृच्छसि ।। ४६ ।।
इति श्रीवराहपुराणे सुखदुःखनिरूपणं नाम षोडशाधिकशततमोऽध्यायः ।।११६।।

अथ द्वात्रिंशदपराधाः।।

श्रीवराह उवाच।।

शृणु भद्रे महाश्चर्यमाहारविधिनिश्चयम् ।।
आहारं चाप्यनाहारं तच्छृणुष्व वसुन्धरे ।। १ ।।
भुञ्जानो याति चाश्नाति मम योगाय माधवि ।।
अशुभं कर्म कृत्वापि पुरुषो धर्ममाश्रितः ।। २।।
आहारं चैव धर्मज्ञ उपभुञ्जीत नित्यशः ।।
सर्वे चात्रैव कर्मण्या व्रीहयः शालयस्तथा ।।३।।
अकर्मण्यानि वक्ष्यामि येन भोज्यंति मां प्रति ।।
तेन वै भुक्तमार्गेण अपराधो महौजसः ।। ४ ।।
प्रथमं चापराधान्नं न रोचेत मम प्रिये ।।
भुक्त्वा तु परकीयान्नं तत्परस्तन्निवर्त्तनः ।। ५।।
द्वितीयस्त्वपराधोऽयं धर्मविघ्नाय वै भवेत् ।।
गत्वा मैथुनसंयागं यो नु मां स्पृशते नरः ।।६।।
तृतीयमपराधं तु कल्पयामि वसुंधरे ।।
दृष्ट्वा रजस्वलां नारीमस्माकं यः प्रपद्यते ।। ७ ।।
चतुर्थमपराधं तु दृष्टं नैव क्षपाम्यहम् ।।
स्पृष्ट्वा तु मृतकं चैव असंस्कारकृतं तु वै ।।८।।
पंचमं चापराधं च न क्षमामि वसुंधरे ।।
दृष्ट्वा तु मृतकं यस्तु नाचम्य स्पृशते तु माम् ।।९ ।।
षष्ठं तं चापराधं वै न क्षमामि वसुंधरे ।।
ममार्चनस्य काले तु पुरीषं यस्तु गच्छति ।। 117.१० ।।
सप्तमं चापराधं तु कल्पयामि वसुंधरे ।।
यस्तु नीलेन वस्त्रेण प्रावृतो मां प्रपद्यते ।। ११ ।।
अष्टमं चापराधं च कल्पयामि वसुन्धरे ।।
ममैवार्च्चनकाले तु यस्त्वसमं प्रभाषते ।।१२।।
नवमं चापराधं तं न रोचामि वसुन्धरे ।।
अविधानं तु यः स्पृश्य मामेव प्रतिपद्यते ।। १३ ।।
दशमश्चापराधोऽयं मम चाप्रियकारकः ।।
क्रुद्धस्तु यानि कर्माणि कुरुते कर्मकारकः ।। १४।।
एकादशापराधं तु कल्पयामि वसुंधरे ।।
अकर्मण्यानि पुण्यानि यस्तु मामुपकल्पयेत् ।। १५ ।।
द्वादशं चापराधं तं कल्पयामि वसुंधरे ।।

यस्तु रक्तेन वस्त्रेण कौसुम्भेनोपगच्छति ।। १६ ।।
त्रयोदशं चापराधं कल्पयामि वसुन्धरे ।।
अन्धकारे च मां देवि यः स्पृशेत कदाचन ।।१७।।
चतुर्द्दशापराधं तु कल्पयामि वसुन्धरे ।।
यस्तु कृष्णेन वस्त्रेण मम कर्माणि कारयेत् ।। १८।।
अपराधं पंचदशं कल्पयामि वसुंधरे ।।
अधौतेन तु वस्त्रेण यस्तु मामुपकल्पयेत् ।। १९ ।।
षोडशं त्वपराधानां कल्पयामि वरानने ।।
स्वयमन्नं तु यो ह्ययादज्ञानादपि माधवि ।। 117.२० ।।
अपराधं सप्तदशं कल्पयामि वसुन्धरे ।।
यस्तु मात्स्यानि मांसानि भक्षयित्वा प्रपद्यते ।।२१ ।।
अष्टादशापराधं च कल्पयामि वसुंधरे ।।
जालपादं भक्षयित्वा यस्तु मामुपसर्पति ।। २२ ।।
एकोनविंशापराधं कल्पयामि वसुंधरे ।।
यस्तु मे दीपकं स्पृष्ट्वा मामेव प्रतिपद्यते ।।२३।।
विंशकं चापराधं तं कल्पयामि वरानने ।।
श्मशानं यस्तु वै गत्वा मामेव प्रतिपद्यते।।२४।।
एकविंशापराधं तं कल्पयामि वसुन्धरे ।।
पिण्याकं भक्षयित्वा तु यो मामेवाभिगच्छति ।। २५ ।।
द्वाविंशं चापराधं तं कल्पयामि प्रिये सदा ।।
यस्तु वाराह मांसानि प्रापणेनोपपादयेत् ।। २६ ।।
अपराधं त्रयोविंशं कल्पयामि वसुन्धरे ।।
सुरां पीत्वा तु यो मर्त्यः कदाचिदुपसर्पति ।। २७ ।।
अपराधं चतुर्विंशं कल्पयामि वसुन्धरे ।।
यः कुसुम्भं च मे शाकं भक्षयित्वोपचक्रमे ।। २८ ।।
अपराधं पंचविंशं कल्पयामि वसुन्धरे ।।
परप्रावरणेनैव यस्तु मामुपसर्पति ।। २९ ।।
अपराधेषु षड्विंशं कल्पयामि वसुन्धरे ।।
नवान्नं यस्तु भक्षेत न देवान्न पितॄन्यजेत् ।। 117.३० ।।
सप्तविंशं चापराधं कल्पयामि गुणान्विते ।।
उपानहौ च प्रपदे तथा वापीं च गच्छति ।।३१ ।।
अपराधं त्वष्टविंशं कल्पयामि गुणान्विते ।।
शरीरं मर्द्दयित्वा तु यो मामाप्नोति माधवि ।। ३२ ।।

एकोनविंशापराधो न स स्वर्गेषु गच्छति ।।
अजीर्णेन समाविष्टो यस्तु मामुपगच्छति ।। ३३ ।।
त्रिंशकं चापराधं तं कल्पयामि यशस्विनि ।।
गन्धपुष्पाण्यदत्त्वा तु यस्तु धूपं प्रयच्छते ।। ३४।।
एकत्रिंशं चापराधं कल्पयामि मनस्विनि ।।
विना भेर्यादिशब्देन द्वारस्योद्घाटनं मम ।। ३५ ।।
महापराधं जनीयाद्द्वात्रिंशं तं मम प्रिये ।।
अन्यच्च शृणु वक्ष्यामि दृढव्रतमनुत्तमम् ।। ३६।।
कृत्वा चावश्यकं कर्म मम लोकं च गच्छति ।।
नित्ययुक्तश्च शास्त्रज्ञो मम कर्मपरायणः ।। ३७ ।।
अहिंसापरमश्चैव सर्वभूतदयापरः ।।
सामान्यश्च शुचिर्दक्षो मम नित्यं पथि स्थितः ।। ३८ ।।
निगृह्य चेन्द्रियग्राममपराधविवर्जितः ।।
उदारो धार्मिकश्चैव स्वदारेषु सुनिष्ठितः ।।३९ ।।
शास्त्रज्ञः कुशलश्चैव मम कर्मपरायणः।।
चातुर्वर्ण्यस्य मे भद्रे सन्मार्गेषु व्यवस्थितः।।117.४०।।
आचार्यभक्ता देवेषु भक्ता भर्तरि वत्सला।।
संसारेष्वपि वर्त्तन्ती गच्छन्ती त्वग्रतो यदि।।४१।।
मम लोकस्थिता सा वै भर्त्तारं प्रसमीक्षते।।
पुरुषो यदि मद्भक्तः स्त्रियं त्यक्त्वा च गच्छति।।४२।।
स ततोऽत्र प्रतीक्षेत भार्यां भर्त्तरि वत्सलाम्।।
अन्यच्च ते प्रवक्ष्यामि कर्मणां कर्म चोत्तमम् ।।४३।।
ऋषयो मां न पश्यन्ति मम कर्मपथे स्थिताः ।।
द्रष्टव्या मम लोकेषु ऋषयोऽपि वरानने ।। ४४ ।।
किं पुनर्मानुषा ये च मम कर्मव्यवस्थिताः ।।
अन्यदेवेषु ये भक्ता मूढा वै पापचेतसः ।।४५ ।।
मम मायाविमूढास्तु न प्रपद्यन्ति माधवि ।।
मां तु ये वै प्रपद्यन्ते मोक्षकामा वसुन्धरे ।।४६।।
तानहं भावसंसिद्धान्बुद्ध्वा संविभजामि वै ।।
येन त्वं परया शक्त्या धारितासि मया धरे ।।४७ ।।
तेनेदं कथितं देवि आख्यानं धर्मसंयुतम् ।।
पिशुनाय न दातव्यं न च मूर्खाय माधवि ।।४८।।
ततो न चोपदिष्टाय न शठाय प्रदापयेत ।।

नादीक्षिताय दातव्यं नोपसर्प्याय यत्नतः ।।४९ ।।
शठाय च न दातव्यं नास्तिकाय न माधवि ।।
वर्जयित्वा भागवतं मम कर्मपरायणम् ।। 117.५० ।।
एतत्ते कथितं देवि मम धर्मं महौजसम् ।।
सर्वलोकहितार्थाय किमन्यत्परिपृच्छसि ।। ५१ ।।
इति श्रीवराहपुराणे द्वात्रिंशदपराधकथनं नाम सप्तदशाधिकशततमोऽध्यायः ।। ११७ ।।

अथ देवोपचारविधिः ।।

श्रीवराह उवाच ।।

शृणु तत्त्वेन मे भद्रे प्रायश्चित्तं यथाविधि ।।

यथावत्स च दातव्यो मम भक्तेन विद्यया ।। १ ।।

वक्ष्यमाणेन मन्त्रेण उद्धृत्य दन्तकाष्ठकम् ।।

दीपं न ज्वालयेत्तावद्यावन्न स्पृश्यते धरा ।। २ ।।

दीपे प्रज्वालिते तत्र हस्तशौचं तु कारयेत् ।।

ततः प्रक्षाल्य हस्तौ तु पुनरेवमुपागतः ।। ३ ।।

वन्दयित्वास्य चरणौ दन्तधावनमानयेत् ।।

अनेनैव तु मन्त्रेण दद्याद्वै दन्तकाष्ठकम् ।। ४ ।।

मन्त्रश्च –

भुवनभवन रविसंहरण अनन्तो मध्यश्चेति गृहणेमं भुवनं दन्तधावनम् ।। ५ ।।

यत्त्वया भाषितं सर्वमेवं धर्मविनिश्चयम् ।।

दन्तधावनं दन्ते दद्याद्यावत्कर्म वसुन्धरे ।। ६ ।।

नित्यं शिरसोत्तार्य धृत्वा शिरसि चात्मनः ।।

पश्चात्तु जलपूतेन ततो हस्तेन सुन्दरि ।। ७ ।।

कार्याणि मुखकर्माणि स्वल्पेन सलिलेन च ।।

मुखप्रक्षालने चेमं शृणु मन्त्रं च सुन्दरि ।। ८ ।।

इष्ट्वेममुक्तमन्त्रेण संसारात्तु प्रमुच्यते ।। ९ ।।

मन्त्रश्च-

तद्भगवन्त्वां गुणश्च आत्मनश्चापि गृहण वारिणः सर्वदेवतानां मुखमेव प्रक्षालयेत् ।।

एतेन मन्त्रेण सुगन्धधूपदीपनैवेद्यं पुनरेवं समर्पयेत् ।। 118.१० ।।

ततः पुष्पाञ्जलिं दत्त्वा भगवन् भक्तवत्सल ।।

नमो नारायणेत्युक्त्वा इमं मन्त्रमुदीरयेत् ।। ११ ।।

मन्त्रज्ञानां यज्ञयष्टारं भूतस्रष्टारमेव च ।।

अन्य पुष्पाणि संगृह्य कल्यमुत्थाय माधवि ।। १२ ।।

पूजयेद्देवदेवेशं ज्ञानी भागवतः शुचिः ।।

निपतेद्दण्डवद्भूमौ सर्वकर्मसमन्वितः ।। १ ३।।

कायं निपतितं कृत्वा प्रसीदेति जनार्द्दनम् ।।

शिरसा चाञ्जलिं कृत्वा इमं मंत्रमुदाहरेत्।। १४।।

मन्त्रैर्लब्ध्वा संज्ञां त्वयि नाथ प्रसन्ने त्वदिच्छातो ह्यपि योगिनां चैव मुक्तिः ।। १५ ।।.

यतस्त्वदीयः कर्मकरोऽहमस्मि त्वयोक्तं यत्तेन देवः प्रसीदतु ।। १६ ।।

एवं मन्त्रविधिं कृत्वा मम भक्तिव्यवस्थितः ।।

पृष्ठतोऽनुपदं गत्वा शीघ्रं यावन्न हीयते ।। १७ ।।
एवं सर्वं समादाय मम कर्म दृढव्रतः ।।
शीघ्रं मेऽभ्यञ्जनं दद्यात्तैलेनाथ घृतेन वा ।। १८ ।।
ततः स्नेहं समुद्दिश्य मंत्रज्ञः कर्मकारकः ।।
एवं चित्तं समाधाय इमं मंत्रमुदीरयेत् ।। १९ ।।
मंत्रा ऊचुः ।।
स्नेहं स्नेहेन संगृह्य लोकनाथ मया हृतम् ।।
सर्वलोकेषु सिद्धात्मा ददाम्यात्मकरेण च ।। 118.२० ।।
मया प्रोक्तः क्षमस्वेति तुभ्यं चैव नमो नमः ।।
एवं मंत्रः समाख्यातस्तेनाज्यात्प्रथमं शिरः ।।२१ ।।
दक्षिणाङ्गं ततोऽभ्यज्याद्वाममङ्गं ततोऽनु च ।।
पश्चात्पृष्ठं समभ्यज्य ततोऽभ्यज्यात्कटिं तथा ।। २२ ।।
पश्चालिम्पेत्ततो भूमिं गोमयेन दृढव्रतः।।
तस्य दृष्ट्वा श्रुतं भद्रे गोमयेन सुनिश्चितम् ।।२३ ।।
यानि पुण्यान्यवाप्नोति तानि मे गदतः शृणु ।।
आज्यमानमपि तथा यावन्तस्तैलबिन्दवः ।। २४ ।।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ।।
ततः पुण्यकृताँल्लोकान्पुरुषो योऽनुलिप्यते ।। २५ ।।
एकैककणसंख्यातः स्वर्गलोके महीयते ।।
एवं योऽभ्यञ्जयेद्गात्रं तैलेन तु घृतेन वा ।। २६ ।।
तावद्वर्षसहस्राणि मम लोके प्रतिष्ठति ।।
अथ चोद्वर्त्तनं भद्रे प्रवक्ष्यामि प्रियं मम ।। २७ ।।
येन शुध्यन्ति चाङ्गानि मम प्रीतिश्च जायते ।।
भोगिना यदि वा रोध्रं यदि पिप्पलिकामधु ।। २८ ।।
मधूकमश्वपर्णं वा रोहिणं चैव कर्कटम् ।।
एतेषां प्राप्य लभते शास्त्रज्ञः कर्मकारकः ।। २९ ।।
करेण तस्य चूर्णेन पिष्टचूर्णेन वा पुनः ।।
एतदुद्वर्त्तनं कुर्यान्मम गात्रसुखावहम् ।। 118.३० ।।
यदीच्छेत्परमां सिद्धिं मम कर्मानुसारकः ।।
एवमुद्वर्त्तनं कृत्वा स्नानकर्म तु कारयेत् ।। ३१।।
तत आमलकं चैव वसुगन्धार्णमुत्तमम् ।।
तेन मे सर्वगात्राणि मर्द्दयित्वा दृढव्रतः ।।३२।।
जलकुम्भं ततो गृह्य इमं मन्त्रमुदाहरेत् ।।

देवानां देवदेवोऽसि देवोऽनादिरभूः परः ।।३३।।
तव व्यक्तस्वरूपेण स्नानं गृहणीष्व मेऽनघ ।।
एवं तु स्नपनं कुर्यान्मम मार्गानुसारकः ।। ३४ ।।
अथ सौवर्णकुम्भेन रजतस्य घटेन वा ।।
एतेषामप्यलाभे तु कर्मज्ञः कर्म कारयेत् ।। ३५।।
ताम्रकुम्भमयेनैव कुर्यात्स्नपनमुत्तमम् ।।
एवं तु स्नपनं कृत्वा विधिदृष्टेन कर्मणा ।। ३६ ।।
पश्चाद्गन्धः प्रदातव्यः प्रकृष्टो मन्त्रसंयुतः ।।
सर्वगन्धाः सौमनस्याः सर्ववर्णाश्च ते मताः ।। ३७ ।।
उत्पन्नाः सर्वलोकेषु त्वया सत्येषु योजिताः ।।
मया च ते तवाङ्गेषु तानावह शुचीन्प्रभो ।। ३८ ।।
मम भक्त्या सुसन्तुष्टः प्रतिगृहणीष्व माधव ।।
एवं गन्धांस्ततो दत्त्वा उत्कृष्टं कर्म कारयेत् ।। ३९ ।।
कर्मण्यान्यपि माल्यानि ततो मह्यं प्रदापयेत् ।।
तदेव चार्च्चनं कृत्वा कर्मण्यः कर्मसम्मितः ।। 118.४० ।।
ततः पुष्पाञ्जलिं दत्त्वा इमं मन्त्रमुदीरयेत् ।।
जलजं स्थलजं चैव पुष्पं कालोद्भवं शुचि ।। ४१ ।।
मम संसारमोक्षाय गृहण गृहण ममाच्युत ।।
एवंविधोपचारेण अर्चयित्वा मम प्रियम् ।। ४२ ।।
पश्चाद्धूपं च मे दद्यात्सुगन्धद्रव्यसम्मितम् ।।
धूपं गृह्य विधानेन मयोक्तं सुखवल्लभम् ।। ४३ ।।
उभयेषु कुलेष्वात्मा धूपमंत्रमुदीरयेत् ।।
वनस्पतिरसं दिव्यं बहुद्रव्यसमन्वितम् ।। ४४ ।।
मम संसारमोक्षाय धूपोऽयं प्रतिगृह्यताम् ।।
मन्त्रः –
शान्तिर्वै सर्वदेवानां शान्तिर्मम परायणम् ।। ४५ ।।
सांख्यानां शान्तियोगेन धूपं गृहण नमोऽस्तु ते ।।
त्राता नान्योऽस्ति मे कश्चित्त्वां विहाय जगद्गुरो ।। ४६ ।।
एवमभ्यर्च्चनं कृत्वा माल्यगन्धानुलेपनैः।।
पश्चाद्वस्त्रं च वै दद्यात् क्षौमशुक्लं सपीतकम् ।। ४७ ।।
एवं चैव समादाय कृत्वा शिरसि चाञ्जलिम् ।।
दिव्ययोगं समादाय इमं मन्त्रमुदीरयेत् ।। ४८ ।।
प्रीयतां भगवान्पुरुषोत्तमः श्रीनिवासः श्रीमानानन्दरूपः ।।

गोप्ता कर्त्ताधिकर्त्ता मान्यनाथ भूतनाथ आदिरव्यक्तरूपः ।।
क्षौमं वस्त्रं पीतरूपं मनोज्ञं देवांगे स्वे गात्रप्रच्छादनाय ।। ४९ ।।
वस्त्रैर्विभूषणं कृत्वा मम गात्रानुसारि यत् ।।
पश्चात्पुष्पं गृहीत्वा तु आसनं चोपकल्पयेत्।।118.५०।।
गृहीत्वा प्रणवाद्येन धर्मपुण्येन संवृतः ।। ५१ ।।
इदं परायणं परस्परप्रीतिकरं प्राणरक्षणं प्राणिनां स्विष्टं तदनुकल्पं सत्यमुपयुक्तमात्मने तद्देव गृहाण ।।५२।।
एवं तु प्रापणं कृत्वा मम मार्गानुसारकः ।।
मुखप्रक्षालनं दत्त्वा शीघ्रमेव प्रकल्पितम्।।५३।।
शुचिः स्तुवति देवानामेतदेव परायणम्।।
शौचार्थं तु जलं गृह्णन् कृत्वा प्रापणमुतमम्।।५४।।
एवं तु भोजनं दत्त्वा व्यपनीय तु प्रापणम्।।
ताम्बूलं तु ततो गृह्य चेमं मन्त्रमुदीरयेत् ।। ५५ ।।
मन्त्रः -
अलङ्कारं सर्वतो देवानां द्रव्यानुक्तौ सर्वसौगन्धिकादिभिः गृह्य ताम्बूलं लोकनाथ विशिष्टमस्माकं च भवनं तव प्रतिमा च ह ।। ५६ ।।
अलङ्कारं मुखे श्रेष्ठं तव प्रीत्या मया कृतम् ।।
मुखप्रसाधनं श्रेष्ठं देव गृहण मया कृतम् ।। ५७ ।।
एतेनैवोपचारेण मद्भक्तः कर्म कारयेत् ।।
अनुमुक्तो महालोकान्पश्यते मम नित्यशः ।। ५८ ।।
इति श्रीवराहपुराणे भगवच्छास्त्रे देवोपचारविधिर्नामाष्टादशाधिकशततमोऽध्यायः ।। ११८ ।।

अथ भोज्यनियमविधिः ।।
धरण्युवाच ।।
एवं कर्मविधिं श्रुत्वा सर्व संसारमोक्षणम् ।।
प्रसन्नवदनं देवं पुनर्वाक्यमुवाच ह ।। १ ।।
एवं महौजसं कर्म तव मार्गानुसारतः ।।
त्वत्तस्तु प्रापणविधिस्तव प्रीत्या मया श्रुतः ।। २ ।।
केन द्रव्येण संयुक्तं तन्ममाचक्ष्व माधव ।।
वसुधाया वचः श्रुत्वा वराहः प्रीतमानसः ।। ३ ।।
उवाच धर्मसंयुक्तं धर्मज्ञो वाक्यकोविदः ।।
श्रीवराह उवाच ।।
येन मन्त्रेण संयुक्तो मम प्रापणकं नयेत् ।। ४ ।।
सप्त व्रीहींस्ततो गृह्य पयसा सह संयुतम् ।।
परमं तस्य शाकानि मधूकोदुम्बरं तथा ।। ५ ।।
एते चान्ये च बहवः शतशोऽथ सहस्रशः ।।
कर्मण्याश्च त एतेषां ये मया परिकीर्त्तिताः ।। ६ ।।
व्रीहीणां च प्रवक्ष्यामि उपयोग्यानि माधवि ।।
एकाग्रं मानसं कृत्वा प्रापणं शृणु सुन्दरि ।। ७ ।।
धर्मचिल्लिकशाकं च सुगन्धं रक्तमालिकौ ।।
दीर्घशालिमहाशाली वरकुङ्कुममाक्षिकौ ।।८।।
आमोदा शिवसुन्दर्यौ शिरीकाकुलशालिकाः ।।
विविधं यावकान्नं च ज्ञेयान्येतानि कर्मणि ।। ९।।
कर्मण्या मुद्गमाषा वै तिलकङ्गुकुलित्थकाः ।।
गवेधुकं महामोहं मकुष्ठमथवाहिजाम्।। 119.१० ।।
श्यामाकमिति चोक्तानि कर्मण्यानि वसुन्धरे ।।
कर्मण्यानि च शाकानि विजानीहि वसुन्धरे।।। ११ ।।
एतानि प्रतिगृह्णामि यच्च भागवतं प्रियम्।।
मार्गमांसं वरं छागं शासं समनुयुज्यते ।। १२ ।।
एतानि प्रापणे दद्यान्मम चैतत्प्रियावहम्।।
युञ्जानो वितते यज्ञे ब्राह्मणे वेदपारगे।। १३।।
भागो ममास्ति तत्रापि पशूनां छागलस्य च।।
माहिषं वर्जयेन्मह्यं क्षीरं दधि घृतं ततः ।। १४ ।।
वर्जयेत्तत्र मांसानि यजुषा वैष्णवोऽश्नुते ।।
परं पायसमपि वर्ज्यानि तन्मांसं चेतकः खुरे ।। १५ ।।

पक्षिणां च प्रवक्ष्यामि ये प्रयोज्या वसुन्धरे ।।
ये चैव मम क्षेत्रेषु उपयुज्यन्ति नित्यशः ।। १६ ।।
लावकं वार्त्तिकं चैव प्रशस्तं च कपिञ्जलम् ।।
एते चान्ये च बहवः शतशोऽथ सहस्रशः ।। १७ ।।
मम कर्मणि योग्या ये ते मया परिकीर्त्तिताः ।।
यस्त्वेतत्तु विजानीयात्कर्मकर्ता तथैव च ।। १८ ।।
नापराध्नोति स नरो मम चोक्तं वचः प्रिये ।।
ते च भोज्याश्च मङ्गल्या मम भक्तसुखावहाः।।१९।।
ततो यष्टव्यमेवं हि य इच्छेत् सिद्धिमुत्तमाम् ।।
य एतेन विधानेन यजिष्यति वसुन्धरे ।। 119.२० ।।
प्राप्नुवन्ति परां सिद्धिं ममैव कृतकर्मिणः ।।
इति श्रीवराहपुराणे भगवच्छास्त्रे प्रापणद्रव्य कर्मण्य
भोज्यनियमविधिर्नामोनविंशत्यधिकशततमोऽध्यायः ।।११९।।

अथ त्रिसन्ध्यामन्त्रोपस्थानम् ।।
श्रीवराह उवाच ।।
शृणुष्व परमं गुह्यं पूर्वं पृष्टं त्वया धरे ।।
देवि सर्वं प्रवक्ष्यामि संसारतरणं महत् ।। १ ।।
स्नानं कृत्वा यथान्यायं मम कर्मपरायणाः।।
उपसर्पन्ति ये भक्त्या कदन्नाशा जितेन्द्रियाः ।। २ ।।
यश्चैवमुच्यते भद्रे मम रूपं सनातनम् ।।
अहमेव वरारोहे सर्वभूतसनातनम् ।। ३ ।।
अधश्चोर्ध्वं च तिर्यक् च अहमेव व्यवस्थितः ।।
दिशां च विदिशां चैव उपर्युपरि भामिनि ।। ४ ।।
सर्वथा वन्दनीयास्ते मम भक्तेन सर्वदा ।।
क्रियासमूह युक्तेन यदीच्छेत्परमां गतिम् ।। ५ ।।
अन्यच्च ते प्रवक्ष्यामि गुह्यं लोके महद्यशः ।।
यथा वै वन्दनीयास्ते मम मार्गानुसारिणः ।। ६ ।।
कृत्वापि परमं कर्म बुद्धिमादाय तद्विधाम् ।।
ततः पूर्वमुखो भूत्वा पुनर्गृह्य जलाञ्जलिम् ।। ७ ।।
ओं नमो नारायणेत्युक्त्वा इमं मन्त्रमुदीरयेत् ।। ८ ।।
यजामहे धर्मपरायणोद्भवं नारायणं सर्वलोकप्रधानम् ।।
ईशानमाद्यं पुरुषं पुराणं संसारमोक्षाय कृपाकरं तम् ।। ९ ।।
ततः पश्चान्मुखो भूत्वा पुनर्गृह्य जलांजलिम् ।।
द्वादशाक्षरमुच्चार्य इमं मन्त्रमुदीरयेत् । 120.१० ।।
मन्त्रा ऊचुः ।।
यथा तु देवः प्रथमादिकर्त्ता पुराण कल्पश्च यथा विभूतिः ।।
तथा स्थितं चादिमनन्तरूपममोघसंकल्पमनन्तमीडे ।।११ ।।
ततस्तेनैव कालेन पुनर्गृह्य जलांजलिम् ।।
तेनैव चास्य योगेन भूत्वा चैवोत्तरामुखः ।।
नमो नारायणेत्युक्त्वा इमं मंत्रमुदीरयेत् ।। १२ ।।
यजामहे दिव्यं परं पुराणमनादिमध्यान्तमनन्तरूपम् ।।
भवोद्भवं विश्वकरं प्रशान्तं संसारमोक्षावहमद्वितीयम् ।। १ ३।।
ततस्तेनैव कालेन भूत्वा वै दक्षिणामुखः ।।
नमः पुरुषोत्तमायेत्युक्त्वा इमं मन्त्रमुदीरयेत्।।१४।।
यजामहे यज्ञमहो रूपं तु सत्यं ऋतं च कालादिमरूपमाद्यम्।।
अनन्यरूपं च महानुभावं संसारमाक्षोय कृतावतारम् ।।१५।।

काष्ठकृत्यस्ततो भूत्वा कृत्वा चेन्द्रियनिग्रहम्।।
अच्युते तु मनः कृत्वा इमं मंत्रमुदाहरेत् ।।१६।।
यजामहे सोमपं भवन्तं ते सोमार्कनेत्रं शतपत्रनेत्रम्।।
जगत्प्रधानं ननु लोकनाथं मृत्युत्रिसंसारविमोक्षणं च ।।१७।।
त्रिषु सन्ध्यास्वनेनैव विधिना कुर्यान्मम च कर्म तत्।।
बुद्ध्या युक्त्या च मत्या च यदीच्छेत्परमां गतिम् ।।१८।।
गुह्यानां परमं गुह्यं योगानां परमो निधिः ।।
सांख्यानां परमं सांख्यं कर्मणां कर्म चोत्तमम् ।।१९।।
एतन्न दद्यान्मूर्खाय पिशुनाय शठाय च ।।
दीक्षितायैव दातव्यं सुशिष्याय दृढाय च ।। 120.२० ।।
एतन्मरणकालेऽपि गुह्यं विष्णुप्रभाषितम् ।।
बुद्ध्या धारयितव्यं न विस्मर्तव्यं कदाचन।।२१।।
य एतत्पठते नित्यं कल्पोच्छ्रायी दृढव्रतः ।।
ममापि हृदये नित्यं स तिष्ठति न संशयः।। २२।।
य एतेन विधानेन त्रिसन्ध्यं कर्म कारयेत् ।।
तिर्यग्योनिविनिर्मुक्तो मम लोकं स गच्छति ।। २३ ।।
इति श्रीवराहपुराणे भगवच्छास्त्रे त्रिसन्ध्यामन्त्रोपस्थानकरणं नाम विंशत्यधिकशततमोऽध्यायः ।। १२०।।

अथ जन्माभावः ।।

श्रीवराह उवाच ।।

येन गर्भं न गच्छेत तच्छृणुष्व वसुन्धरे ।।

कथयिष्यामि ते ह्येवं सर्वधर्मविनिश्चयम् ।। १ ।।

कृत्वापि विपुलं कर्म आत्मानं न प्रशंसति ।।

करोति बहुकर्माणि शुद्धेनैवान्तरात्मना ।। २ ।।

कृत्वा तु मम कर्माणि समर्थोऽनुग्रहे रतः ।।

कार्याकार्ये विजानाति सर्वधर्मेषु निष्ठितः ।। ३।।

शीतोष्णवातवर्षादिक्षुत्पिपासासहश्च यः ।।

यो दरिद्रो निरालस्यः सत्यवागनसूयकः ।।४।।

स्वदारनिरतो नित्यं परदारविवर्जकः ।।

सत्यवादी विशुद्धात्मा नित्यं च भगवत्प्रियः ।। ५ ।।

संविभाज्य विशेषज्ञो नित्यं ब्राह्मणवत्सलः ।।

प्रियभाषी द्विजानां च मम कर्मपरायणः ।। ६ ।।

कुयोनिं तु न गच्छेत मम लोकं स गच्छति ।।

अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।।७ ।।

यो वियोनिं न गच्छेत मम कर्मपरायणः ।।

जीवहिंसानिवृत्तस्तु सर्वभूतहितः शुचिः ।। ८ ।।

सर्वत्र समतायुक्तः समलोष्ठाश्मकांचनः ।।

बाल्ये स्थितोऽपि वयसि क्षान्तो दान्तः शुभे रतः ।। ९ ।।

नित्यं नैव विजानाति परेणापकृतं क्वचित् ।।

कर्त्तव्यं संस्मरेत्सर्वं मम सत्यं च जल्पति ।। 121.१० ।।

व्यलीकाद्विनिवृत्तो यस्तथ्येतिकृतनिश्चयः ।।

नित्यं च वृत्तिमान्कश्चित्परोक्षेऽपि न चाक्षिपेत् ।।११।।

ऋतुकालेऽपि गच्छेद्यः अपत्यार्थे स्वकां स्त्रियम् ।।

ईदृशास्तु नरा भद्रे मम कर्मपरायणाः।।१२।।

ते वियोनिं न गच्छन्ति मम गच्छन्ति सुन्दरि ।।

पुनरन्यत्प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।। १३ ।।

पुरुषाणां प्रसन्नानां यश्च धर्मः सनातनः ।।

मनुनाप्यन्यथा दृष्टो ह्यन्यथांगिरसेन च ।। १४ ।।

शुक्रेण चान्यथा दृष्टो गौतमेनापि चान्यथा ।।

सोमेन चान्यथा दृष्टो रुद्रेणाप्यन्यथा पुनः।।१५।।

शङ्खेन चान्यथा दृष्टो लिखितेनापि चान्यथा ।।

कश्यपेनान्यथा दृष्टो धर्मेणाप्यन्यथा धरे ।।।३३।।
अग्निना वायुना चैव दृष्टो धर्मोऽन्यथा धरे ।।
यमेन चान्यथा दृष्ट इन्द्रेण वरुणेन च ।। १७ ।।
कुबेरेणान्यथा दृष्टः शाण्डिल्येनापि चान्यथा ।।
पुलस्त्येनान्यथा दृष्ट आदित्येनापि चान्यथा ।। १८ ।।
पितृभिश्चान्यथा दृष्टो ह्यन्यथापि स्वयम्भुवा ।।
आत्मनात्मनि धर्मेण ये नरा निश्चितव्रताः ।। १९ ।।
स्वकं पालयते धर्मं स्वमतेनैव भाषितम् ।।
परवादं न कुर्वीत सर्वधर्मेषु निश्चितम् ।। 121.२०।।
न निन्देद्धर्मकार्याणि आत्मधर्मपथे स्थितः ।।
एभिर्गुणैः समायुक्तो मम कर्माणि कारयेत् ।। २१ ।।
वियोनिं स न गच्छेत मम लोकाय गच्छति ।।
पुनरन्यत्तु वक्ष्यामि तच्छृणुष्वेह माधवि ।। २२ ।।
तरन्ति पुरुषा येन गर्भसंसारसागरम् ।।
जितेन्द्रिया जितक्रोधा लोभमोहविवर्जिताः ।। २३ ।।
आत्मोपकारका नित्यं देवातिथिगुरुप्रियाः ।।
हिंसादीनि न कुर्वन्ति मधुमांसविवर्जकाः ।। २४ ।।
मनसा ब्राह्मणीं चैव यो गच्छेन्न कदाचन ।।
विप्राय कपिलां दद्याद्वृद्वं सान्त्वेन पालयेत् ।। २५ ।।
सर्वेषां चैव पुत्राणां न विशेषं करोति यः ।।
संक्रुद्धं ब्राह्मणं दृष्ट्वा यस्तु तत्र प्रसादयेत् ।। २६ ।।
यः स्पृशेत्कपिलां भक्त्या कुमारीं न च दूषयेत् ।।
अग्निं न च क्रमेत्पद्भ्यां न च पुत्रेण भाषयेत् ।। २७ ।।
जलेन मेहयेद्यस्तु गुरुभक्तो न जल्पकः ।।
एवं धर्मेण संयुक्तो यो नु मां प्रतिपद्यते ।।२८।।
स च गर्भं न गच्छेत मम लोकं स गच्छति ।। २९ ।।
इति श्रीवराहपुराणे जन्माभावो नामैकविंशत्यधिकशततमोऽध्यायः ।। १२१ ।।

अथ कोकामुखमाहात्म्यम् ।।
वराह उवाच ।।
गुह्यानां परमं गुह्यं तच्छृणुष्व वसुन्धरे ।।
तिर्यग्योनिगताश्चापि येन मुच्यन्ति किल्बिषात् ।। १ ।।
अष्टम्यां च चतुर्द्दश्यां मैथुनं यो न गच्छति ।।
भुक्त्वा परस्य चान्नानि यश्चैव न विकुत्सति ।। २ ।।
बाल्ये वयस्यपि च यो मम नित्यमनुव्रतः ।।
येन केनापि संतुष्टो यो मातापितृपूजकः ।। ३ ।।
आयासे जीवति न यः प्रविभागी गुणान्वितः ।।
दाता भोक्ता च कार्येषु स्वतन्त्रो नित्यसंयतः ।। ४ ।।
विकर्म नाभिकुर्वीत कौमारव्रतसंस्थितः ।।
सर्वभूतदयायुक्तः सत्त्वेन च समन्वितः ।। ५ ।।
मत्या च निःस्पृहोऽत्यन्तं परार्थेष्वस्पृहः सदा ।।
ईदृग्बुद्धिं समादाय मम लोकाय गच्छति ।।
इमं गुह्यं वरारोहे देवैरपि दुरासदम् ।। ६ ।।
तच्छृणुष्वानवद्याङ्गि कथ्यमानं मयाऽनघे ।।
जरायुजाण्डजोद्भिज्जस्वेदजानि कदाचन ।। ७ ।।
ये न हिंसन्ति भूतानि शुद्धात्मानो दयापराः ।।
यस्तु कोकामुखे देवि ध्रुवं प्राणान्परित्यजेत् ।।८।।
मनसा न चलत्येव मम वल्लभतां व्रजेत् ।।
ततो विष्णुवचः श्रुत्वा सा मही संशितव्रता ।।९।।
वराहरूपिणं देवं प्रत्युवाच वसुन्धरा ।। 122.१० ।।
धरण्युवाच ।।
अहं शिष्या च दासी च भक्ता च त्वयि माधव ।। ११ ।।
एवं मे परमं गुह्यं त्वद्भक्त्या वक्तुमर्हसि ।।
चक्रं वाराणसीं चैव अट्टहासं च नैमिषम् ।। १२ ।।
भद्रकर्णह्रदं चैव हित्वा कोकां प्रशंससि ।।
नगरं च द्विरण्डं च मुकुटं मण्डलेश्वरम् ।। १३ ।।
केदारं च ततो मुक्त्वा कि कोकां च प्रशंससि ।।
देवदारुवनं मुक्त्वा तथा जालेश्वरं विभुम् ।। १४ ।।
दुर्गं महाबलं मुक्त्वा किं वै कोकां प्रशंससि ।।
गोकर्णं च ततो मुक्त्वा शुद्धजाल्मेश्वरं तथा ।। १५ ।।
एकलिङ्गं ततो मुक्त्वा किं वा कोकां प्रशंससि ।।

एवं पृष्टस्तथा भक्त्या माधवश्च महाप्रभुः ।। १६ ।।
वराहरूपी भगवान्प्रत्युवाच वसुन्धराम् ।।
श्रीवराह उवाच ।।
एवमेतन्महाभागे यन्मां त्वं भीरु भाषसे ।। १७ ।।
कथयिष्यामि ते गुह्यं कोका येन विशिष्यते ।।
एते रुद्राश्रिताः क्षेत्रा ये त्वया परिकीर्तिताः ।। १८ ।।
एते पाशुपताश्चैषां कोका भागवतस्य ह ।।
तत्रान्यत्ते प्रवक्ष्यामि महाख्यानं वरानने ।। १९ ।।
कृतं कोकामुखे चैव मम क्षेत्रे हि सुन्दरि ।।
कश्चिल्लुब्धो मिषाहारश्चरन्वै कोकमण्डले ।। 122.२० ।।
तत्राल्पेनाम्बुना युक्ते ह्रदे मत्स्यस्तु तिष्ठति ।।
दृष्ट्वा तं लुब्धकस्तूर्णं बडिशेनाजहार ह ।।
तस्य हस्ताच्च बलवान्मत्स्यस्तूर्णं विनिर्गतः ।।
अथ श्येनस्तु तं हर्तुं मन्त्रयित्वा नभश्चरः ।।२१।।
निपत्य तं गृहीत्वैव प्रोड्डीनस्त्वरयान्वितः ।।
अशक्तस्य ततो नेतुं मत्स्यः कोकामुखेऽपतत् ।।२२।।
तत्क्षेत्रस्य प्रभावेण राजपुत्रोऽभवत्प्रभुः ।।
रूपवान् गुणवाञ्छुद्धः कुलेन वयसान्वितः ।।२३।।
अथ कालेन तस्यैव मृगव्याधस्य चाङ्गना।।
गृहीत्वा चैव मांसानि गच्छन्ती याति तत्र वै ।।२४।।
एका चिल्ली मांसलुब्धा तद्धस्तान्मांसगर्द्धिनी ।।
आगत्यागत्य तरसा हर्तुं समुपचक्रमे ।। २५ ।।
मृगव्याधा बलान्मांसं हर्तुकामां तु चिल्लिकाम्।।
बाणेनैकेन संहत्य पातिता भुवि तत्क्षणात्।।२६।।
आकाशात्पातिता भद्रे कोकायां मम सन्निधौ।।
जाता चन्द्रपुरे रम्ये राजपुत्री यशस्विनी।।२७ ।।
सा व्यवर्द्धत कन्या तु वयोरूपगुणान्विता।।
चतुःषष्टिकलायुक्ता पुरुषं सा जुगुप्सति ।।२८।।
रूपवान्गुणवाञ्छूरो युद्धकार्यार्थनिश्चितः ।।
सौम्यश्च पुरुषश्चैव सा च नेति जुगुप्सति ।। २९ ।।
रूपवान्गुणवाञ्छूरो युदकार्यार्थनिष्ठितः ।।
सौम्यं च पुरुषं चैव सर्वानभिजुगुप्सति ।। 122.३० ।।
अथ केनचित्कालेन शक आनन्दपूरके।।

सम्बन्धो जायत तयोर्मध्यमे वयसि स्थयोः ।। ३१ ।।
तथा तु तौ समासाद्य परस्परमथ क्रमात् ।।
यथान्यायं स विप्रोक्तं विधिदृष्टेन कर्मणा ।।३२।।
स वै तथा समं नित्यं सा च तेन समं शुभा ।।
अन्योन्यं रममाणौ तौ मुहूर्तमपि नोज्झतः।।३३।।
गच्छत्येवं बहुतरे काले चैवाप्यनिंदिता ।।
समप्रेम्णा च संयुक्ता सौहृदेन च नायकम्।।३४।।
भजमाना विनीता च सौहृदाच्च विशेषतः ।।
एवं बहुगतः कालः कामभोगेषु सक्तयोः।।३९।।
राजपुत्रस्तस्तोऽप्यत्र शकानां नंदवर्द्धनः।।
तस्या जायत मध्याह्ने शिरोरुगतिपीडिनी।।३६।।
ये केचिद्भिषजस्तत्र गदेषु कुशलाः शुभे।।
ते तत्रोषधयोगं च चक्रुस्तेनापि वेदना ।।३७।।
ननाश नैव संयातः कालो बहुतिथस्ततः।।
न सम्बुध्यति चात्मानं विष्णुमायाविमोहितः।।३८।।
पूर्णे हि समये तत्तु उभयोश्च तदन्तरम्।
तस्य कालः संवृतस्य योऽसौ पूर्वप्रतिस्तवः ।।३९।।
अयने गत एतेषां वृत्तं कौतूहलं भुवि ।।
अन्योऽन्यप्रीतियुक्तौ तु नान्योऽन्यं जहतुः क्वचित् ।।122.४० ।।
ततः सर्वानवद्याङ्गी भर्त्तारमिदमब्रवीत् ।।
किमिदं तव भद्रं ते वेदना जायते शिरे ।। ४१ ।।
एतदाचक्ष्व तत्त्वेन यद्यहं च तव प्रिया ।।
बहवो भिषजश्चैव नानाशास्त्रविशारदाः ।।४२।।
कुर्वन्ति तव कर्माणि वेदना च न गच्छति ।।
एवं स प्रियया प्रोक्तस्तां प्रियां पुनरब्रवीत् ।।४३।।
इदं किं विस्मृता भद्रे सर्वव्याधिसमन्वितम् ।।
यल्लब्धं मानुषत्वं च सुखदुःखसमन्वितम् ।। ४४।।
संसारसागरारूढं नातिप्रष्टुं त्वमर्हसि ।।
तेनैवं भाषिता बाला श्रोतुकामा वरानना।।४५।।
ततः कदाचिच्छयने सुप्तौ तौ दम्पती किल।।
गते बहुतिथे काले पुनः पप्रच्छ सा प्रियम्।।४६।।
कथयस्व तमेवार्थं यन्मया पूर्वपृच्छितम्।।
किं मां न भाषसे नाथ साभिप्रायं वचस्तव।।४७।।

गोप्यं वा किंचिदस्तीह किं गोपयसि मे पुरः।।
अवश्यं चैव वक्तव्यं यद्यहं तव वल्लभा।।४८।।
इति निर्बन्धतः पृष्टः स शकाधिपतिर्नृपः।।
तां प्रियां प्रणयात्प्राह बहुमानपुरःसरम् ।।४९।।
मुच्यतां मानुषं भावं तां जातिं स्मर पौर्विकीम् ।।
अथ कौतूहलं भद्रे श्रवणे पूर्वजन्मनः ।।122.५०।।
मन्मातापितरौ गत्वा प्रसादय शुचिस्मिते।।
मानार्हौ मानयित्वा तौ ययाहं जठरे धृतः।।५१।।
तयोराज्ञां पुरस्कृत्य मानयित्वा यथार्हतः ।।
अथ कोकामुखे गत्वा कथयिष्याम्यसंशयम् ।। ५२ ।।
स्वपूर्वजन्मवृत्तं तु देवानामपि दुलर्भम् ।।
तत्र ते कथयिष्यामि सर्ववृत्तमनिन्दिते ।। ५३ ।।
ततः सा ह्यनवद्याङ्गी श्वश्रूश्वशुरयोः पुरः ।।
गत्वा गृहीत्वा चरणौ ततस्ताविदमब्रवीत् ।।५४।।
किंचिद्विज्ञप्तुकामास्मि तत्र वामवधीयताम् ।।
भवदाज्ञां पुरस्कृत्य भवद्भ्यामनुमानितौ ।। ५५ ।।
पुण्ये कोकामुखे गन्तुमिच्छावस्तत्र वां गुरू ।।
कार्यगौरवभावेन न निषेध्यौ कथञ्चन ।। ५६ ।।
अद्य यावत्किमपि वां याचितं न मया क्वचित्।।
पुरस्ताद्ध्यावयोस्तन्मे याचितं दातुमर्हतः ।। ५७ ।।
शिरावेदेनया युक्तः सदा तव सुतो ह्ययम् ।।
मध्याह्ने मृतकल्पो वै जायते ह्यचिकित्सकम् ।।५८।।
सुखानि सर्वविषयान्विसृज्य परिपीडितः ।।
कोकामुखं विना कष्टं न निवृत्तं भविष्यति ।। ५९ ।।
कदाचिन्नोक्तपूर्वं ते रहस्यं परमं महत् ।।
त्वरितं गन्तुमिच्छामि विष्णोस्तत्परमं पदम् ।। 122.६० ।।
दम्पतिभ्यां हि मननं रोचतां सर्वथैव हि ।।
ततो वधूवचः श्रुत्वा शकानामधिपो नृपः ।। ६१ ।।
करेण स्वयमादाय वधूं पुत्रमुवाच ह ।।
किमिदं चिन्तितं वत्स कोकामुखगमं प्रति ।। ६२ ।।
हस्त्यश्वरथ यानानि स्त्रियश्चाप्सरसोपमाः ।।
सर्वमेतत्तु सप्ताङ्गं कोशकोष्ठादिसंयुतम् ।।६३।।
शरणं वित्तयो राज्यं त्वयि सर्वं प्रतिष्ठितम् ।।

मित्रं वरासनं चैव गृहणीष्व सुतसत्तम ।।६४।।
त्वयि प्रतिष्ठिताः प्राणाः सन्तानं च तदुत्तरम् ।।
ततः पितुर्वचः श्रुत्वा राजपुत्रो यशस्विनि ।। ६५ ।।
पितुः पादौ गृहीत्वा च प्रोवाच विनयान्वितः ।।
अलं राज्येन कोशेन वाहनेन बलेन वा ।। ६६ ।।
गन्तुमिच्छामि तत्राहं तूर्णं कोकामुखं महत् ।।
शिरोवेदनया युक्तो यदि जीवाम्यहं पितः ।। ६७ ।।
तदा राज्यं बलं कोशो ममैवैतन्न सशंयः ।।
तत्रैव गमनान्मह्यं वेदना नाशमेष्यति।६८।।
पुत्रोक्तमवधार्यैव शकानामधिपो नृपः ।।
अनुजज्ञे ततः कोकां गच्छ पुत्र नमोऽस्तु ते ।। ६९ ।।
वणिजश्चैव पौराश्च वैश्याश्चापि वराङ्गनाः ।।
अनुजग्मू राजपुत्रं कोकामुखपथे स्थितम् ।। 122.७० ।।
अथ दीर्घेण कालेन प्राप्तः कोकामुखं त्विदम् ।।
तत्र गत्वा वरारोहा भर्त्तारमिदमब्रवीत् ।७३।।
पूर्वपृष्टं मया यत्ते वक्ष्यामीति च मां प्रति ।।
कोकामुखे त्वयाप्युक्तं तदेतन्मम कथ्यताम् ।। ७२ ।।
निशम्येति प्रियाप्रोक्तं राजपुत्रो यशस्विनि ।।
प्रहस्याह भिया तां तु समालिङ्ग्य वसुन्धरे ।। ७३ ।।
रजनी सम्प्रवृत्तेयं सुखं स्वापो विधीयताम् ।।
श्वः सर्वं कथयिष्यामि यत्ते मनसि वर्त्तते।।७४।।
प्रभातायां तु शर्वर्यां स्नातौ क्षौमविभूषितौ।।
प्रणम्य शिरसा विष्णुं हस्ते गृहय ततः प्रियाम् ।।७९।।
ततः पूर्वोत्तरे पार्श्वे नित्यं यो हृदि तिष्ठति ।।
अस्थीनि दर्शयामास अवशिष्टानि यानि तु।।७।।
एतानि मम चास्थानि पूर्वदेहोद्भवानि च ।।
अहं पुराभवं मत्स्यः कोकेषु विचरन् जले ।।७।।
व्याधेन निगृहीतोऽस्मि बडिशेन जलेचरः।।
तद्धस्तान्निर्गतस्तत्र बलेन पतितो भुवि।।७८।।
श्येनेनामिषलुब्धेन नखैर्विद्धोऽस्मि सुन्दरि ।।
नीत आकाशमार्गेण तस्माच्च पतितोऽत्र वै ।। ७९ ।।
तेन तस्य प्रहारेण जाता शिरसि वेदना ।।
अहमेव विजानामि नान्यो जानाति मां विना।।122.८०।।

एतत्ते कथितं भद्रे पूर्वपृष्टं च यत्त्वया ।।
गच्छ सुन्दरि भद्रं ते यत्र ते वर्त्तते मनः ।।८१।।
ततः साप्यनवद्याङ्गी रक्तपद्मशुभानना ।।
करुणं स्वरमादाय भर्त्तारं पुनरब्रवीत् ।। ८२ ।।
एतदर्थं मया भद्र गुह्यं नोक्तं तथा स्वकम् ।।
अहं च यादृशी पूर्वमभवं तच्छृणुष्व मे।।८३।।
क्षुत्पिपासापरिश्रान्ता चिल्ली गगनगामिनी।।
वृक्षोपरि समासीना भक्ष्यं चैव विचिन्वती ।।८४।।
अथ कश्चिन्मृगव्याधो हत्वा वनचरान्बहून्।।
संगृह्य मांसभारान्वै तेन मार्गेण सङ्गतः।।८५।।
स्थापयित्वा मांसभारान्प्रियायाः सविधे स्वयम् ।।
काष्ठान्यानयितुं यातः क्षुधितो मांसपाचने ।।८३।।
प्रवृत्तोऽग्निमुपादाय तावदुड्डीय सत्वरम्।।
मांसपिण्डो मया विद्धो दृढैर्वज्रमयैर्नखैः ।।८७।।
न च सक्तास्मि संहर्त्तुं मांसभारप्रपीडिता ।।
अशक्ता दूरगमने सविधे हि व्यवस्थिता ।। ८८ ।।
भक्षयित्वा ततो मांसं व्याधः संहृष्टमानसः ।।
अपश्यन्मांसपिण्डं तु मृगयामास पार्श्वतः ।।८९।।
तावद्ददर्श मां तत्र खादन्तीं मांसपिण्डिकाम्।।
ततः स धनुरुद्यम्य सशरं च व्यकर्षत।।122.९०।।
विद्धा बाणेन मां तत्र भक्षयन्तमिपातयत् ।।
ततोऽहं भ्रममाणा वै निश्चेष्टा गतजीविता ।।९१ ।।
पतितास्म्यवशा भद्र कालतन्त्रे दुरासदे ।।
एतत्क्षेत्रप्रभावेण त्वकामापि नृपात्मजा।।९२।।
जातास्मि त्वत्प्रिया चापि स्मरन्ती पूर्वजन्म तत्।।
एतानि पश्य चास्थीनि शेषाणि बहुकालतः।।९३।।
गलितान्यल्पशेषाणि प्राणनाथ समीपतः ।।
एवं सा दर्शयित्वा तु भर्त्तारं पुनरब्रवीत् ।।९४ ।।
आनीतोऽसि मया भद्र स्थानं कोकामुखं प्रति।।
एतत्क्षेत्रप्रभावेण तिर्यग्योनिगता अपि।।९५।।
उत्तमे तु कुले जाता मानुषी जातिमाश्रिताः ।।
यं यं प्रवक्ष्यसे धर्मं विष्णुप्रोक्तं यशोधन।।९६।।
तं तमेव करिष्यामि विष्णुलोके सुखावहम् ।।

ततस्तस्या वचः श्रुत्वा लब्धपूर्वस्मृतिर्नृपः ।। ९७ ।।
विस्मयं परमं गत्वा साधु साध्वित्यपूजयत् ।।
तस्मिन् क्षेत्रे च यत्कर्म कर्त्तव्यं धर्मसंहितम्।।९८।।
तच्छ्रुत्वा कानिचिद्देवी स्वयं चक्रे पतिव्रता।।
अन्येऽपि सर्वे तच्छ्रुत्वा यस्य यद्रोचते प्रियम् ।। ९९ ।।
तत्तत्सर्वेऽपि कुर्वंति विधिदृष्टेन कर्मणा ।।
तत्र तौ दम्पती द्रव्यमन्नं रत्नं द्विजेषु च ।। 122.१०० ।।
ददतुः परमप्रीतौ पात्रेभ्यश्च यथार्हतः ।।
येऽन्ये तत्सार्थमासाद्य यातास्तेऽपि वसुन्धरे ।। १०१ ।।
ब्राह्मणेभ्यो ददुः स्वानि विष्णुभक्त्या यतव्रताः ।।
तत्र स्थित्वा वरारोहे मम कर्मव्यवस्थितः ।। १०२ ।।
तत्क्षेत्रस्य प्रभावेण श्वेतद्वीपमुपागताः ।।
एवं स राजपुत्रोऽपि मम कर्मव्यवस्थितः ।। १०३ ।।
मुक्त्वा तु मानुषं भावं श्वेतद्वीपमुपागतः ।।
सर्वे च पुरुषास्तत्र आत्मनात्मानुदर्शनात् ।।१०४ ।।
( शुक्लाम्बरधरा दिव्यभूषणैश्च विभूषिताः ।।
दीप्तिमन्तो महाकायाः सर्वे च शुभदर्शनाः ।। १०५ ।।
स्त्रियोऽपि दिव्या यत्रत्या दिव्यभूषणभूषिताः ।।
तेजसा दीप्तिमत्यश्च शुद्धसत्त्व विभूषिताः ।। १०६ ।।
मयि शुद्धं परं भावमारूढाः सत्यवर्च्चसः ।।
एतत्ते कथितं देवि कोकामुखमनुत्तमम् ।। १०७ ।।
यत्र मत्स्यश्च चिल्ली च सकामा ये समागताः ।।
केचिच्चान्द्रायणं कुर्युः केचिच्चैव जलाशनम्।।१०८।।
ते च विष्णुमयान्धर्मान्द्विजस्तांस्तान्त्समाचरेत् ।।
बहुधान्यवरं रत्नं दंपत्योऽथ यशस्विनी ।। १०९ ।।
तेऽपि कुर्वन्ति कर्माणि मम भक्ता व्यवस्थिताः ।।
तेऽपि दीर्घेण कालेन अटमाना इतस्ततः ।। 122.११० ।।
कुर्वन्तो मम कर्माणि भाव्यं पंचत्वमागताः ।।
ततः क्षेत्रप्रभावेण मम कर्मप्रभावतः ।। १११ ।।
मम चैव प्रसादेन श्वेतद्वीपमुपागतः ।।
एवं स राजपुत्रोऽथ सर्वभूतगुणान्वितः ।।१ १२ ।।
भुक्त्वा तु मानुषं भावमूर्ध्वशाखोनुतिष्ठति ।।
योऽसौ परिजनस्तस्य मम कर्मव्यवस्थितः ।।११ ३ ।।

मानुषं भावमुत्सृज्य मम लोकमुपागतः ।।
सर्वशो द्युतिमांस्तत्र आत्मनानात्मदर्शनात् ।। ११४ ।।)
याश्च तत्र स्त्रियः काश्चित्सर्वाश्चोत्पलगन्धिनीः ।।
मायया मतिमन्मुक्ताः सर्वाश्चैव प्रियावृताः ।। ११५ ।।
प्रसादान्मम सुश्रोणि श्वेतद्वीपमुपागताः।।
एष धर्मश्च कीर्तिश्च शक्तिश्चैव महद्यशः ।। ११६ ।।
कर्मणां परमं कर्म तपसां च महत्तपः ।।
आख्यानानां च परमं कृतीनां परमा कृतिः ।। ११७ ।।
धर्माणां च परो धर्मस्तवार्थं कीर्तितो मया ।।
क्रोधनाय न तं दद्यान्मूर्खाय पिशुनाय च ।। ११८ ।।
अभक्ताय न तं दद्यादश्रद्धाय शठाय च ।।
दीक्षितायैव दातव्यं सुप्रपन्नाय नित्यशः ।। ११९ ।।
पण्डिताय च दातव्यं यश्च शास्त्रविशारदः ।।
एतन्मरणकालेऽपि धारयेद्यः समाहितः ।। 122.१२० ।।
सोऽपि मुच्येत पूतात्मा गर्भाद्योनिभवाद्भयात् ।।
एतत्ते कथितं भद्रे महाख्यानं महौजसम् ।। १२१ ।।
य एतेन विधानेन गत्वा कोकामुखं महत्।।
तेऽपि यान्ति परां सिद्धिं चिल्लीमत्स्यौ यथा पुरा।।१२२।।
इति श्रीवराहपुराणे कोकामुखमाहात्म्ये द्वाविंशत्यधिकशततमोऽध्यायः।।१२२।।

अथ सुमनोगन्धादिमाहात्म्यम् ।।

सूत उवाच ।।

श्रुत्वा तु कोकामाहात्म्यं पृथिवी धर्मसंहितम् ।।
विस्मयं परमं याता श्रुत्वा धर्मं महौजसम् ।। १ ।।

धरण्युवाच ।।

अहो प्रभावः कोकाया माहात्म्यं क्रोडरूपिणः ।।
तिर्यग्योनिगतो वापि प्राप्तो यत्परमां गतिम् ।। २ ।।
तव देव प्रसादेन किंचिदिच्छामि वेदितुम् ।।
यन्मया पूर्वपृष्टोऽसि केन धर्मेण मानवाः ।। ३ ।।
तपसा कर्मणा वापि पश्यन्ति त्वां हि माधव ।।
प्रसादसुमुखो भूत्वा निखिलं वक्तुमर्हसि ।। ४ ।।
एवं पृष्टस्तदा देव्या माधव्या स तु माधवः ।।
प्रहस्य पुनरेवेदं वक्तुं समुपचक्रमे ।। ५ ।।

श्रीवराह उवाच ।।

एवमेतन्महाभागे यथा त्वं भीरु भाषसे ।।
कथयिष्यामि ते धर्मं गुह्यं संसारमोक्षणम् ।। ६ ।।
गते मेघागमे काले प्रसन्नशरदाशये ।।
अम्बरे विमले जाते विमले शशिमण्डले ।।७।।
नातिशीतं न चात्युष्णे काले हंसविराविणि ।।
कुमुदोत्पलकह्लारपद्मसौरभनिर्भरे।।८।।
कुमुदस्य च मासस्य भवेद्या द्वादशी शुभा ।।
तस्यां मामर्चयेद्यस्तु तत्प्रभावं शृणुष्व मे ।। ९ ।।
यावल्लोकाश्च धार्यन्ते तावत्कालं वसुन्धरे ।।
मद्भक्तो जायते धन्यो नान्यभक्तः कदाचन ।। 123.१० ।।
कृत्वा ममैव कार्याणि द्वादश्यां तत्र माधवि।।
ममैवाराधनार्थाय इमं मन्त्रमुदीरयेत् ।।११।।

मन्त्रः –

ब्रह्मणा च रुद्रेण यः स्तूयमाना भवानृषिवन्दितो वन्दनीयश्च प्राप्ता द्वादशीयं ते प्रबुध्यस्व जागृष्व मेघा गताः पूर्णश्चन्द्रः शारदानि पुष्पाणि लोकनाथ तुभ्यमहं ददानीति धर्महेतोस्तव प्रीतये प्रबुद्धं जाग्रतं लोकनाथ त्वां भजमाना यज्ञेन यजन्ते सत्रेण सत्रिणो वेदैः पठन्ति भगवन्तः शुद्धाः प्रबुद्धा जाग्रतो लोकनाथ।।१२।।

एवं कर्माणि कुर्वन्ति द्वादश्यां वै यशस्विनि।।
मम भक्ता व्रतं श्रेष्ठं ते यान्ति परमां गतिम्।।१३।।

एवं वै शारदं कर्म निखिलं कथितं मया ।।
देवि संसारमोक्षार्थं मम भक्तसुखावहम् ।। १४ ।।
इति प्रबोधिनीकर्म ।।
अन्यच्च ते प्रवक्ष्यामि शैशिरं कर्म शोभनम् ।।
यानि कर्माणि कुर्वन्ति पुंसो यान्ति परां गतिम् ।। १५ ।।
शीतवाताभिसन्तप्ता मम भक्त्या व्यवस्थिताः ।।
अनन्यमनसो भूत्वा योगाय कृतनिश्चयाः ।। १६ ।।
शिशिरे यानि कर्माणि पुष्पिताश्च वनस्पतीः ।।
तैरेव चार्च्चनं कृत्वा जानुभ्यां पतितः क्षितौ ।। १७ ।।
कराभ्यामञ्जलिं कृत्वा इमं मंत्रमुदीरयेत् ।।१८ ।।
मन्त्रः –
शिशिरो भवान् धातरिमं लोकनाथ हिमं दुस्तरं दुष्प्रवेशं कालं संसारान्मां तारयेमं धर्त्ता त्रिलोकनाथ ।। १९ ।।
यस्त्वथैतेन मन्त्रेण शिशिरे कर्म कारयेत् ।।
स गच्छेत्परमां सिद्धिं मम भक्त्या व्यवस्थितः ।। 123.२० ।।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।।
मासं मार्गशिरं चैव वैशाखं च मम प्रियम् ।। २१।।
अहं तत्र प्रवक्ष्यामि पुष्पादीनां च यत्फलम् ।।
नववर्ष सहस्राणि नववर्षशतानि च ।। २२ ।।
तिष्ठते विष्णुलोकेऽस्मिन्यो ददाति स्म निश्चलम् ।।
एकैकं गन्धपत्रं च दानमेतन्महत्फलम् ।। २३ ।।
मतिमान्धृतिमान्भूत्वा गन्धपुष्पाणि दापयेत् ।।
पुनरन्यत्प्रवक्ष्यामि गन्धपत्रस्य यत्फलम् ।।२४ ।।
द्वादश्यां चैव यो दद्यात्त्रीन्मासांश्च समाहितः ।।
कौमुदस्य तु मासस्य मार्गशीर्षस्य वै तथा ।। २५ ।।
वैशाखस्य तु मासस्य वनमालां सुपुष्पिताम् ।।
एकचित्तं समाधाय गन्धपुष्पाणि यो न्यसेत् ।। २६ ।।
वर्षाणि द्वादशैवेह तेन पूजा कृता भवेत् ।।
शालपुष्पेण मिश्रेण कौमुद्यां गन्धकेन च।।२७।।
मासि मार्गशिरे भद्रे दद्यादुत्पलमिश्रितम् ।।
एवं महत्फलं भद्रे गन्धपत्रस्य च स्मृतम् ।। २८ ।।
श्रुत्वेति वचनं तस्य प्रश्रयेण तु माधवि ।।
प्रहस्य प्रणयाद्वाक्यमित्युवाच वसुन्धरा ।। २९ ।।

प्रभो द्वादश मासाश्च षष्ट्युत्तरशतत्रयम् ।।
तत्र द्वावेव किं मह्यं भगवन् किं प्रशंससि ।। 123.३० ।।
द्वादशीं चापि देवेश प्रशंससि सदा मम ।।
इति पृष्टस्तदा देव्या धरण्या स तु माधवः ।। ३१ ।।
प्रहस्य तामुवाचेदं वचनं धर्मसंश्रितम् ।।
शृणु तत्त्वेन मे देवि येनेमौ मम च प्रियौ ।। ३२ ।।
तिथीनां द्वादशी चापि सर्वयज्ञफलाधिका ।।
त्वया द्विजसहस्रेभ्यो यत्फलं प्राप्नुयान्नरः ।। ३३ ।।
तदेकं संप्रदायैव द्वादश्यामभिविन्दति ।।
कौमुद्यां च प्रबुद्धोऽस्मि वैशाख्यां च समुद्धृतः ।। ३४ ।।
महानाधिहरो योगस्तेनैतत्प्रभवो धरे ।।
अतः कौमुदिकायां तु वैशाख्यां यतमानसः ।। ३५ ।।
गन्धपत्रं करे गृह्य इमं मन्त्रमुदीरयेत् ।।
मन्त्रः –
भगवन्नाज्ञापय इमं बहुतरं नित्यं वैशाखं चैव कार्तिकम् ।। ३६ ।।
गृहाण गन्धपत्राणि धर्ममेव प्रवर्द्धय ।।
नमो नारायणेत्युक्त्वा गन्धपत्रं प्रदापयेत् ।। ३७ ।।
पुष्पाणां च प्रवक्ष्यामि यो गुणो यच्च वै फलम् ।।
दत्त्वा वै गन्धपत्राणि पुष्पहस्तः शुचिर्नरः ।।
ॐ नमो वासुदेवायेत्युक्त्वा मन्त्रमुदीरयेत् ।। ३८ ।।
मन्त्रः –
भगवन्नाज्ञापय सुमनांसीमानि अर्च्चयितुं मां सुमनसङ्कुरु गृहणीष्व सुमनस्कं देव सुगन्धेन ते नमः ।। ३९ ।।
प्राप्नोति ददमानस्तु मम कर्मपरायणः ।।
न जन्ममरणं चैव न ग्लानिं न च वै क्षुधाम्।। 123.४०।।
दिव्यं वर्षसहस्रं वै मम लोकेषु तिष्ठति ।।
एकैकस्य तु पुष्पस्य पुण्यमेतन्महाफलम् ।। ४१ ।।
सुमनो गन्धसम्भूतं यत्त्वया पूर्वपृच्छितम् ।। ४२ ।।
इति श्रीवराहपुराणे सुमनोगन्धादिमाहात्म्यं नाम त्रयोविंशत्यधिकशततमोऽध्यायः ।। १२३ ।।

अथ ऋतूपस्करम् ।।

श्रीवराह उवाच ।।

फाल्गुनस्य तु मासस्य शुक्लपक्षस्य द्वादशीम् ।।

गृह्य वासन्तिकान् पुष्पान्सुगन्धा ये क्रमागताः ।। १ ।।

श्वेतं पाण्डुरकं चैव सुगन्धं शोभनं बहु ।।

विधिना मन्त्रयुक्तेन सुप्रीतेनान्तरात्मना ।। २ ।।

तत एवं विधिं कृत्वा सर्वं भागवतं शुचिः ।।

यस्तु जानाति कर्माणि सर्वं मन्त्रविनिश्चितः ।। ३ ।।

तदाहरति कर्माणि विधिदृष्टेन कर्मणा ।।

विधिना मन्त्रपूतेन कुर्याच्छान्तमनोऽमलः ।। ४।।

नमो नारायणेत्युक्त्वा इमं मन्त्रमुदीरयेत् ।।

मन्त्रः –

नमोस्तु देवदेवेश शङ्खचक्रगदाधर।।

नमोऽस्तु ते लोकनाथ प्रवीराय नमोऽस्तु ते ।। ९ ।।

सपुष्पितस्येह वसन्तकाले वनस्पतेर्गन्धरसप्रयुक्ताः ।।

पश्यंश्च मां पुष्पितपादपेन्द्रं वसन्तकाले समुपागते च ।। ६ ।।

यश्चैतेन विधानेन कुर्यान्मासे तु फाल्गुने ।।

न स गच्छति संसारं मम लोकाय गच्छति ।। ७।।

यत्तु पृच्छसि सुश्रोणि मासे वैशाख उत्तमे ।।

शुक्लपक्षे तु द्वादश्यां यत्फलं तच्छृणुष्व मे ।। ८ ।।

पुष्पितेषु च शालेषु तथान्येषु द्रुमेषु च ।।

गृहीत्वा शालपुष्पाणि मम कर्मणि संस्थिताः ।। ९ ।।

कृत्वा तु मम कर्माणि शुभानि तरुणानि च ।।

पूज्य भागवतान्सर्वान् स्थापयित्वा ततोऽग्रतः ।। 124.१० ।।

ऋषयः स्तुवन्ति मन्त्रेण वेदोक्तेन च माधवि ।।

गन्धर्वाप्सरसश्चैव गीतनृत्यैः सवादितैः ।। ११ ।।

स्तुवन्ति देवलोकाश्च पुराणं पुरुषोत्तमम् ।।

सिद्धाविद्याधरा यक्षाः पिशाचोरगराक्षसाः ।। १२ ।।

स्तुवन्ति देवं भूतानां सर्वलोकस्य चेश्वरम् ।।

आदित्या वसवो रुद्रा अश्विनौ च मरुद्गणाः ।। १३ ।।

स्तुवन्ति देवदेवेशं युगानां संक्षयेऽक्षयम् ।।

ततो वायुश्च विश्वे च अश्विनौ च समन्विताः ।। १४ ।।

स्तुवन्ति केशवं देवमादिकालमयं प्रभुम् ।।

ततो ब्रह्मा च सोमश्च शक्रश्चाग्निसमन्वितः ।।
स्तुवन्ति नाथं भूतानां सर्वलोकमहेश्वरम् ।। १५।।
नारदः पर्वतश्चैव असितो देवलस्तथा ।।
पुलहश्च पुलस्त्यश्च भृगुश्चाङ्गिर एव च ।।१६।।
एते चान्ये च बहवो मित्रावसुपरावसू ।।
स्तुवंति नाथं भूतानां योगिनां योगमुत्तमम् ।। १७ ।।
श्रुत्वा तु प्रतिनिर्घोषं देवानां तु महौजसाम् ।।
ततो नारायणो देवः प्रत्युवाच वसुन्धराम् ।। १८।।
किमयं श्रूयते शब्दो ब्रह्मघोषेण संयुतः ।।
देवानां च महाभागे महाशब्दोऽत्र श्रूयते ।। १९ ।।
ततः कमलपत्राक्षी सर्वरूपगुणान्विता ।।
वराहरूपिणं देवं प्रत्युवाच वसुन्धरा ।। 124.२० ।।
देवाः कांक्षन्ति ते देव वाराहीं रूपसंस्थितिम् ।।
त्वन्नियोगनियुक्ताश्च तदर्थं लोकभावन ।।२१ ।।
ततो नारायणो देवः पृथिवीं प्रत्युवाच ह।।
अहं जानामि तान्देवि मार्गमाणानुपस्थितान् ।।२२।।
दिव्यं वर्षसहस्रं वै धारितासि वसुन्धरे ।।
मया लीलायमानेन एकदंष्ट्राग्रकेण वै ।। २३ ।।
इहागच्छामि भद्रं ते द्रष्टुकामा दिवौकसः ।।
आदित्या वसवो रुद्राः स्कन्देन्द्रौ सपितामहाः ।।२४।।
एवं तस्य वचः श्रुत्वा माधवस्य वसुन्धरा।।
शिरस्यञ्जलिमाधाय ततस्तु चरणेऽपतत् ।।२५।।
वाराहं पुरुषं देवं विज्ञापयति सा धरा ।।
उद्धृतासि त्वया देव रसातलगता ह्यहम् ।। २६ ।।
शरणं त्वां प्रपन्नाहं त्वद्भक्ता त्वं गतिः प्रभुः ।।
किं कर्म कर्मणा केन किं वा जन्मपरायणम् ।।२७।।
कथं वा तुष्यसे देव पूज्यसे केन कर्मणा ।।
तवाहं कर्त्तुमिच्छामि यच्च मुख्यं सुखावहम् ।।२८।।
न च मेऽस्ति व्यथा काचित्तव कर्मणि नित्यशः ।।
न ग्लानिर्न जरा काचिन्न जन्ममरणे तथा।।२९।।
सर्वे सुरासुरा लोकाः सरुद्रेन्द्रपितामहाः ।।
क्वेष्टं निवासं कुर्वन्ति एकैकं च यशोधर ।।124.३०।।
कानि कर्माणि कुर्वन्ति ये त्वां पश्यन्ति माधव ।।

किमाहाराः किमाचारास्त्वां पश्यन्तीह माधव ।। ३१ ।।
ब्राह्मणस्य च किं कर्म क्षत्रियस्य च किं भवेत् ।।
वैश्यः किं कुरुते कर्म शूद्रः किं कर्म कारयेत् ।।३२।।
योगो वै प्राप्यते केन तपो वा केन निश्चितम् ।।
किं चात्र फलमाप्नोति तव कर्मपरायणः।।३३।।
किं च दुःखनिवासं वा भोजनं पानकं तथा ।।
किं च कर्म प्रयोक्तव्यं तव भक्तैश्च माधव।।३४।।
प्रापणं कीदृशं चापि कासु दिक्षु तथा प्रभो ।।
कथं योनिं न गच्छेत वियोनिं न च गच्छति ।।३५।।
तिर्यग्योनिं न गच्छेत कर्मणा केन केशव ।।
तन्ममाचक्ष्व सकलं येन चैव सुखं भवेत् ।। ३६ ।।
जरा वा केन गच्छेत जन्म वा केन गच्छति ।।
गर्भवासं न गच्छेत कर्मणा केन वाऽच्युत ।।३७।।
संसारस्य न गच्छेत केन कर्मप्रभावतः ।।
इत्युक्तो भगवांस्तत्र प्रत्युवाच वसुन्धराम् ।।३८।।
शृण्वन्तु मे भागवता ये च मोक्षे व्यवस्थिताः ।।
तान्मन्त्रान्कीर्त्तयिष्यामि यैस्तोषं याति नित्यशः ।।३९।।
मन्त्रः –
मासेषु सर्वेषु च मुख्यभूतस्त्वं माधवो माधवमास एव ।।
पश्येद्देवं तं तु वसन्तकाले उपागतं गन्धरसप्रयुक्त्या।।
नित्यं च यज्ञेषु तथेज्यते यो नारायणः सप्तलोकेषु वीरः ।।124.४०।।
एवं ग्रीष्मे विधिं चैव कुर्यात्सर्वं ममोक्तितः।।
इममुच्चारयेन्मन्त्रं सर्वभागवतप्रियम्।।४१।।
मासेषु सर्वेष्वपि मुख्यभूतो मासो भवान्ग्रीष्म एकः प्रपन्नः ।।
पश्येद्भवन्तं वर्त्तमानं च ग्रीष्मे तेनैव सर्वं दुःखमेतु प्रशान्तिम् ।।४२।।
एवं ग्रीष्मे वरारोहे मम चैवार्च्चनं कुरु ।।
न जन्ममरणं येन मम लोके गतिर्भवेत् ।। ४३ ।।
यावन्तः पुष्पिताः शालाः पृथ्व्यां यावत्सुगंधकाः ।।
अर्च्चितः स भवेत्सर्वैः कृतो येन ह्ययं विधि।।४४।।
एवं वर्षास्वपि धरे मम कर्म च कारयेत् ।।
निष्कला भवतो बुद्धिः संसारे च न जायते ।।४५।।
अन्यच्च ते प्रवक्ष्यामि कर्म संसारमोक्षणम् ।।
कदम्बमुकुलाश्चैव सरलार्ज्जुनपादपाः ।। ४६ ।।

एतेषां सुमनोभिश्च पूजनीयो महादरात् ।।
मम संस्थापनं कृत्वा विधिदृष्टेन कर्मणा ।।
नमो नारायणायेति इमं मन्त्रमुदाहरेत् ।। ४७ ।।
पश्यन्ति ये ध्यानपरा घनाभं त्वामाश्रिताः पूज्यमानं महिम्ना ।।
निद्रां भवान् भजतां लोकनाथ वर्षास्विमं पश्यतु मेघवर्णम्।।४८।।
आषाढमासे द्वादश्यां सर्वशान्तिकरं शुभम्।।
य एतेन विधानेन मम कर्म तु कारयेत् ।।४९।।
स मर्त्यो न प्रणश्येत संसारेऽस्मिन् युगेयुगे ।।
एतत्ते कथितं देवि ऋतूनां कर्म चोत्तमम् ।।124.५० ।।
तरंति येन संसारं नराः कर्मपरायणाः ।।
एतद्गुह्यं महाभागे देवाः केऽपि न जानते ।।५१ ।।
मुक्त्वा नारायणं देवं वाराहं रूपमास्थितम् ।।
नादीक्षिताय दातव्यं मूर्खाय पिशुनाय च ।।५२।।
कुशिष्याय न दातव्यं ये च शास्त्रार्थदूषकाः ।।
न पठेद्गोघ्नमध्ये वै न पठेच्छठमध्यतः ।। ५३ ।।
धनधर्मक्षयस्तेषां पठनादाशु जायते ।।
पठेद्भागवतानां च ये च धर्मेण दीक्षिताः ।। ५४ ।।
एतत्ते कथितं भद्रे पूर्वं यत्पृष्टवत्यसि ।।
कात्स्न्र्येन कथितं ह्येतत्किमन्यत्परिपृच्छ सि ।।५५।।
इति श्रीवराहपुराणे भगवच्छास्त्रे ऋतूपस्करणं नाम चतुर्विंशत्यधिकशततमोऽध्यायः ।।१२४।।

अथ मायाचक्रम् ।।

सूत उवाच ।।

श्रुत्वा षड्तुकर्माणि पृथिवी संशितव्रता ।।
ततो नारायणं भूयः प्रत्युवाच वसुन्धरा ।। १ ।।
मङ्गल्याश्च पवित्राश्च ये त्वया समुदाहृताः ।।
मम लोकेषु विख्याता मनः प्रह्लादयन्ति ते ।।२।।
श्रुत्वा त्वेतानि कर्माणि त्वन्मुखोक्तानि माधव ।।
जातास्मि निर्मला देव शशाङ्क इव शारदः।।३।।
एतन्मे परमं गुह्यं परं कौतूहलं तथा ।।
मम चैव हितार्थाय त्वं विष्णो वक्तुमर्हसि ।।४।।
यामेनां भाषसे देव मम मायेति नित्यशः ।।
का माया कीदृशी विष्णो किं वा मायेति चोच्यते ।।५।।
ज्ञातुमिच्छामि मायार्थं रहस्यं परमुत्तमम् ।।
ततस्तस्य वचः श्रुत्वा विष्णुर्मायाकरण्डकः।।६।।
प्रत्युवाच तदा वाक्यं प्रहस्य तु वसुन्धराम् ।।
भूमे मा पृच्छ मायां मे यन्मां पृच्छसि सादरम् ।। ७ ।।
वृथा क्लेशं किमर्थं त्वं प्राप्स्यते यद्विलोकनात् ।।
अद्यापि मां न जानन्ति रुद्रेन्द्राः सपितामहाः।।८।।
मम मायां विशालाक्षि किं पुनस्त्वं वसुन्धरे।।
पर्जन्यो वर्षते यत्र तज्जलेन प्रपूर्यते ।।९।।
देशो निर्जलतां याति एषा माया मम प्रिये।
सोमो यत्क्षीयते पक्षे पक्षे वापि च वर्द्धते ।। 125.१० ।।
अमायां न स दृश्येत मायेयं मम तत्त्वतः।।
हेमन्ते सलिलं कूपे उष्णं भवति सुन्दरि।।११।।
भवेच्च शीतलं ग्रीष्मे मायेयं मम तत्त्वतः।।
पश्चिमां दिशमास्थाय यदस्तं याति भास्करः।।१२।।
उदेति पूर्वतः प्रातर्मायेयं मम सुन्दरि।।
शोणितं चैव शुक्रं च उभे च प्राणिसंस्थिते ।। १३ ।।
गर्भे च जायते जन्तुर्मायेयं मम सुन्दरि।
जीवः प्रविश्य गर्भं तु सुखदुःखे च विन्दति।।१४।।
जातश्च विस्मरेत्सर्वमेषा माया ममोत्तमा ।।
आत्मकर्माश्रितो जीवो नष्टसंज्ञो गतस्पृहः।।१५।।
कर्मणा नीयतेऽन्यत्र मायैषा मम चोत्तमा ।।

शुक्रशोणितसंयोगाज्जायते मम जन्तवः।।१६।।
अङ्गुल्यश्चरणौ चैव भुजौ शीर्षं कटिस्तथा ।।
पृष्ठं तथोदरं चैव दन्तौष्ठपुटनासिकम्।।१७।।
कर्णौ नेत्रे कपालौ च ललाटं जिह्वया सह।।
एतया मायया युक्ता जायन्ते यदि जन्तवः ।।१८ ।।
तस्यैव जीर्यते भुक्तमग्निना पीतमेव च।।
अधश्च स्रवते जन्तुरेषा माया ममोत्तमा।।१९।।
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पंचम।।
अन्नात्प्रवर्त्तते जन्तुरेषा माया मम प्रिया।।125.२०।।
सर्वर्तुषु निजाकारः स्थावरे जङ्गमे तथा ।।
तत्त्वं न ज्ञायते तस्य मायैषा मम सुन्दरि ।। २१ ।।
आपो दिव्यास्तथा भौमा आपो येषु प्रतिष्ठिताः ।।
नद्यो वृद्धिं प्रयान्त्यत्र मायैषा मम सुन्दरि ।। २२ ।।
वृष्टौ बहूदकाः सर्वे पल्वलानि सरांसि च ।।
ग्रीष्मे सर्वाणि शुष्यन्ति एतन्मायाबलं मम ।। २३ ।।
हिमवच्छिखरान्मुक्ता नाम्ना मन्दाकिनी नदी ।।
गां गता सा भवेद्गङ्गा मायैषा मम कीर्त्तिता ।। २४ ।।
मेघा वहन्ति सलिलमुद्धृत्य लवणार्णवात् ।।
वर्षन्ति मधुरं लोके एतन्मायाबलं मम ।। २५ ।।
रोगार्ता जन्तवः केचिद्भक्षयन्ति महौषधम् ।।
तस्य वीर्यं समाश्रित्य मायां तु विसृजाम्यहम् ।।२६।।
औषधे दीयमानेऽपि जन्तुः पंचत्वमेति यत् ।।
निर्वीर्यमौषधं कृत्वा कालो भूत्वा हराम्यहम् ।। २७ ।।
प्रथमं जायते गर्भः पश्चात्संजायते पुमान् ।।
जायते मध्यमं रूपं ततोऽपि जरया युतः।।२८।।
तत इन्द्रियनाशश्च एतन्मायाबलं मम ।।
यद्भूमौ विहितं बीजं तस्मात्तज्जायतेऽङ्कुरम् ।। २९ ।।
पुनश्च पत्रादियुतमेतन्मायाबलं मम ।।
एकबीजात्प्रकीर्णाद्वै जायन्ते तानि भूरिशः ।। 125.३० ।।
तत्रामृतं विसृजामि मायायोगेन भूरिशः ।।
लोक एवं विजानाति गरुडो वहतेऽच्युतम् ।। ३१ ।।
भूत्वा वेगेन गरुडो वहाम्यात्मानमात्मना ।।
या एता देवताः सर्वा यज्ञभागेन तोषिताः ।। ३२ ।।

मायामेतामहं कृत्वा तोषयामि दिवौकसः ।।
लोकाः सर्वे विजानन्ति देवा नित्यं मखाशिनः ।। २३।।
मायामेतामहं कृत्वा यक्ष्यामि त्रिदिवौकसः ।।
सर्वोऽपि भजते लोके यष्टारं च बृहस्पतिम् ।। ३४ ।।
मायामाङ्गिरसीं कृत्वा याजयामि दिवौकसः ।।
सर्वे लोका विजानन्ति वरुणः पाति सागरम् ।। ३५ ।।
मायां तु वारुणीं कृत्वा रक्षामि च महार्णवम् ।।
सर्वे लोका विजानन्ति कुबेरोऽयं धनेश्वरः ।। ३६ ।।
कुबेरमायामादाय अहं रक्षामि तद्धनम् ।।
एवं लोका विजानन्ति वृत्रः शक्रेण सूदितः ।। ३७ ।।
शाक्रीं मायां समास्थाय मया वृत्रो निषूदितः ।।
एवं लोका विजानन्ति आदित्यश्च ध्रुवो महान् ।। ३८ ।।
मेरुं मायामयं कृत्वा वहाम्यादित्यमेव च ।।
एवमाभाषते लोको जलं वा नश्यतेऽखिलम् ।। ३९ ।।
वडवामुखमास्थाय पिबामि तदहं जलम् ।।
वायुं मायामयं कृत्वा मेघेषु विसृजाम्यहम्।। 125.४० ।।
यदीदं भाषते लोकः कुत्रैतत्तिष्ठते जलम् ।।
देवा अपि न जानन्ति अमृतं कुत्र तिष्ठति ।। ४१ ।।
मम मायानियोगेन तिष्ठति ह्यौषधं वने ।।
लोको ह्येवं विजानाति राजा पालयते प्रजाः ।। ४२ ।।
राजमायामहं कृत्वा पालयामि वसुन्धराम् ।।
ये तु वै द्वादशादित्या उदेष्यन्ति युगक्षये ।। ४३ ।।
प्रविश्य तानहं भूमे मायां लोके सृजाम्यहम् ।।
सूर्यश्च चांशुना भूमे सदा लोकेषु पच्यते ।। ४४ ।।
मायामंशुमयीं कृत्वा पूरयाम्यखिलं जगत् ।।
वर्षन्ते यत्र संवर्त्ता धारैर्मुसलसन्निभैः ।। ४५ ।।
मायां सांवर्त्तकीं गृह्य पूरयाम्यखिलं जगत् ।।
यत्स्वपामि वरारोहे शेषस्योपरि धारिणि ।।४६।।
अनन्तमायया चाहं धारयामि स्वपामि च ।।
वराहमायामादाय भूमे जानासि किं न वै ।।४७।।
देवा यत्र निलीयन्ते सा माया मम कीर्त्तिता ।।
त्वं चापि वैष्णवीं मायां कृत्वा जानासि किं न तत् ।। ४८ ।।
धारितासि च सुश्रोणि वारान् सप्तदशैव तु ।।

माया तु मम देवीयं कृत्वा ह्येकार्णवां महीम् ।। ४९ ।।
मम् मायाबलं ह्येतद्येन तिष्ठाम्यहं जले ।।
प्रजापतिं च रुद्रं च सृजामि च वहामि च ।। 125.५० ।।
तेऽपि मायां न जानन्ति मम मायाविमोहिताः ।।
अथो पितृगणाश्चापि य एते सूर्यवर्च्चसः ।। ५१ ।।
मायां पितृमयीं ह्येतां गृह्णामीति च तत्त्वतः ।।
किन्तु त्वयैव सुश्रोणि अन्यच्च शृणु सुन्दरि ।। ५२ ।।
ऋषिर्मायानुसारेण स्त्रिया योनिं प्रवेशितः ।।
ततो विष्णोर्वचः श्रुत्वा श्रोतुकामा वसुन्धरा ।। ५३ ।।
कराभ्यामञ्जलिं कृत्वा वाक्यमेतत्तदब्रवीत् ।।
किं तेन ऋषिमुख्येन कृतं कर्म सुदुष्करम् ।।५४ ।।
स्त्रीत्वं चैव पुनः प्राप्तं स्त्रीयोनिं चैव प्रापितः ।।
एतन्मे सर्वमाख्याहि परं कौतूहलं मम ।।५५।।
तस्य ब्राह्मणमुख्यस्य स्त्रीत्वे यत्कर्म पापकम्।।
ततो मह्या वचः श्रुत्वा हृष्टतुष्टमना हरिः।।५६।।
मधुरं वाक्यमादाय प्रत्युवाच वसुन्धराम् ।।
शृणु तत्त्वेन मे देवि धर्माख्याने च सुन्दरि।।५७।।
माया मम विशालाक्षि रोहिणी लोमहर्षिणी ।।
मायाया मम योगेन सोमशर्मा च कर्शितः ।।५८।।
गतो गतीरनेकाश्च उत्तमाधममध्यमाः ।।
ब्राह्मणत्वं पुनः प्राप्तो मम मायाप्रचोदितः ।।५९।।
यथा ब्राह्मणमुख्येन प्राप्ता स्त्रीयोनिरेव च ।।
न तस्य विकृतं कर्म अपराधो न विद्यते ।।125.६०।।
ममैवाराधनपरो मम कर्मपरायणः ।।
नित्यं चिन्तयते भूमे मम मूर्तिं मनोरमाम् ।।६१।।
अयं दीर्घेण कालेन तस्य तुष्टोऽस्मि सुन्दरि ।।
तपसा कर्मणा भक्त्या अनन्यमनसा स्तुतः ।।६२।।
ततस्तस्य मया देवि दत्त्वा दर्शनमुत्तमम् ।।
वरेण छन्दितो विप्र तपस्तुष्टोऽस्मि ते द्विज ।।६३।।
वरं वरय भद्रं ते तव यद्धृदि वर्त्तते ।।
रत्नानि कांचनं गावस्तथा राज्यमकण्टकम् ।।६४।।
अथवेच्छसि तं स्वर्गं यत्र सौख्यं वराङ्गनाः ।।
धनरत्नं समृद्धं हि हेमभाण्डविभूषितम् ।।६५।।

यत्र सर्वा दिव्यरूपा भवन्त्यप्सरसः पराः।।
ददामि ते वरं विप्र यावत्ते चित्तचिन्तितम्।।
ततो मम वचः श्रुत्वा स च ब्राह्मणपुंगवः ।।
शिरसा पतितो भूमौ मामुवाच प्रियं वचः।।६७।।
अथ नो कुप्यसे देव वरं समनुयाचते ।।
यत्त्वया भाषितं देव मम देयं यदृच्छया ।।६८।।
न चाहं कांचनं गावो न च स्त्रीराज्यमेव च ।।
स्वर्गं वाप्सरसो वापि ऐश्वर्यं न मनोहरम् ।।६९।।
तथा स्वर्गसहस्राणामेकं चापि न रोचते।।
ज्ञातुमिच्छामि ते मायां यया क्रीडसि माधव ।।125.७०।।
ततस्तस्य वचः श्रुत्वा समया तत्र भाषितः ।।
किं मायया ते विप्रेन्द्र अकार्यं पृच्छसे द्विज।।७१ ।।
देवा अपि न जानन्ति विष्णुमायाविमोहिताः।।
ततो मम वचः श्रुत्वा स च ब्राह्मणपुंगवः।।७२।।
उवाच मधुरं वाक्यं मायया च प्रचोदितः।।
यदि तुष्टोऽसि मे देव कर्मणा तपसाऽथवा ।। ७३।।
तव देव प्रसादेन ममैवं दीयतां वरः ।।
ततस्तु स मया प्रोक्तस्तपस्वी ब्राह्मणस्तथा ।।७४।।
गच्छ कुब्जाम्रके गङ्गास्नातो मायां तु गच्छसि।।
ममैव वचनं श्रुत्वा कृत्वा चैव प्रदक्षिणम्।।
कुब्जाम्रके देवि विप्रो मम मायाभिलाषुकः ।।
ततः कुण्डी त्रिदण्डी च मात्राभाण्डं च यत्नतः ।।७६।।
स्थापयित्वा यथान्यायं तीर्थमाराधयद्यथा।।
ततो ह्यवतरद्गङ्गां विधिदृष्टेन कर्मणा।।७७।।
अवगाह्य ततो गङ्गां सर्वगात्रे च क्लेदिते ।।
तावन्निषादसदने तत्स्त्रीगर्भे गतोऽभवत् ।। ७८ ।।
हृदयेऽचिन्तयत्तत्र गर्भक्लेशेन पीडितः ।।
अहो कष्टं मया किंस्वित्कर्म वा दुष्कृतं कृतम् ।। ७९ ।।
योऽहं निषादगर्भेऽस्मिन्वसामि नरकेषु च ।।
धिक् तपो धिक्च मे कर्म धिक्फलं धिक् च जीवितम् ।। 125.८० ।।
योऽहं निषादगर्भेऽस्मिन्पीडास्ति मलसंकुले ।।
अस्थ्नां त्रिशतसङ्कीर्णे नवद्वाराभिसंवृते ।। ८१ ।।
पुरीषमूत्रसङ्कीर्णे मांसशोणितकर्द्दमे।।

दुर्गन्धे दुःसहे चैव वातिकश्लेष्मपत्तिके।।८२।।
बहुरोगसमाकीर्णे बहुदुःखतमाकुले ।।
अलं किं तेन चोक्तेन दुःखान्यनुभवामि च ।। ८३ ।।
कुतो विष्णुः कुतो वाहं कुतो गङ्गाजलानि च ।।
गर्भसंसारनिष्क्रान्तः पश्चादाप्यामि तां क्रियाम् ।। ८४ ।।
एवं चिन्तयमानस्तु शीघ्रं गर्भाद्विनिःसृतः ।।
भूम्यां तु पततस्तस्य नष्टं यत्पूर्वचिन्तितम् ।। ८५ ।।
अजायत ततः कन्या निषादस्य गृहे तदा ।।
धनधान्यसमृद्धस्य ब्राह्मणो वर्त्तते स च।।८६।।
न च संज्ञायते किंचिद्विष्णुमायाविमोहिता।।
अथ दीर्घस्य कालस्य कृतोद्वाहा यशस्विनी।।८७।।
पुत्रान्दुहितरश्चैव जनयामास मायया ।।
भक्ष्याभक्ष्यं च खादेत पेयापेयं च तत्पिबेत् ।। ८८ ।।
जीवानि चैव सततं घातितानि ततस्ततः ।।
कार्याकार्यं न जानीते वाच्यावाच्यं तथेति च ।। ८९ ।।
गम्यागम्यं न जानाति मायाजालेन मोहितः ।।
पंचाशद्वर्षके काले मया ख्यातः स ब्राह्मणः ।। 125.९० ।।
घटं गृहीत्वा विड्लिप्तवस्त्रक्षालनकारणात् ।।
तीरे निःक्षिप्य वस्त्रं स घटं च विनिधाय हि ।।९१।।
स्नातुं गङ्गाजले स्थित्वा विगाहयति जाह्नवीम् ।।
प्रस्वेदघर्मसन्तप्तः स शिरःस्नानमीहते ।। ९२ ।।
जातस्तपोधनस्तत्र दण्डी कुण्डीधरः पुनः ।।
यत्र पश्यति विप्रोऽसौ मात्रां कुण्डीं त्रिदण्डकम् ।। ९३ ।।
वस्त्रादि दर्शितं चैव यत्र संस्थापितं पुरा ।।
तत्तेन सर्वं सन्दृष्टं जाते ज्ञाने तु पूर्ववत् ।। ९४ ।।
विप्रेण ज्ञातुकामेन विष्णुमायां यथा पुरा ।।
तत उत्तरतस्तत्र गङ्गायां तु तपोधनः ।। ९५ ।।
वासो गृह्णाति सव्रीडो योगं च परिचिन्तयन्।।
उपविश्य च गङ्गायाः पुलिने समबालुके ।। ९६ ।।
ततो विन्दति चात्मानं तपसा यत्तदा कृतम् ।।
मया किं कर्म पापेन कृतं निन्द्यं सुदुष्करम् ।। ९७ ।।
एवं निन्दति चात्मानं धिक्कुर्वन् साधुदूषितम् ।।
आचारो वा परिभ्रष्टो येनाहं प्रापितस्त्विमाम् ।। ९८ ।।

निषादस्य कुले जातो भक्ष्याभक्ष्याश्च भक्षिताः ।।
जीवाश्च घातिताः सर्वे जलस्थलदिवौकसः ।। ९९ ।।
पेयापेयं च मे पीतं विक्रीताश्चाप्यविक्रेयाः ।।
अगम्यागमनं चैव वाच्यावाच्यं न रक्षितम् ।। 125.१०० ।।
वेश्मन्यभोज्यभोज्यं च भुक्तं चैव न संशयः ।।
पुत्रा दुहितरश्चैव निषादाज्जनिता मया ।।१०१।।
ततः किंचापराधं वा केन वा तद्विचिन्तये ।।
येनाहं प्रापितो ह्येनां नैषादीमीदृशीं दशाम् ।। १०२ ।।
एतस्मिन्नंतरे भूमे निषादः क्रोधमूर्च्छितः ।।
पुत्रैः परिवृतस्तत्र मायातीर्थमुपागतः ।। १०३ ।।
ततो मृगयते भार्यां भक्तियुक्तां शुभेक्षणाम् ।।
परिपृच्छति चैकैकं तप्यमानं तपोधनम् ।। १०४ ।।
क्व गतासि प्रियेऽस्माकं त्यक्त्वा पुत्रान् गृहे च माम् ।।
बाला दुहिता रोदिति क्षुधार्त्तास्तनपायिनी ।। १०५ ।।
किं नु पश्यथ भार्यां मे गङ्गातीरमुपागता ।।
घटमादाय हस्तेन आगता जलकारणात् ।। १०६ ।।
तत्रैव च नराः सर्वे मायातीर्थमुपागताः ।।
पश्यंतेऽत्र परिव्राजं कुम्भं चैव यथास्थितम् ।।१०७।।
ततो दुःखेन संतप्तः अपश्यंश्च स्वकां प्रियाम् ।।
दृष्ट्वा पटं च कुम्भं च करुणं पर्यवेदयेत्।।१ ०८।।
इदं वासश्च कुम्भश्च नदीकूले च तिष्ठति ।।
न चापि दृश्यते भार्या मम गङ्गामुपागता ।। १०९।।
अथ केनापि ग्राहेण स्नायमाना तपस्विनी ।।
गृहीता तोयमध्ये तु जिह्वालोडेन चाबला ।। 125.११० ।।
न चाप्रियं मयाऽस्युक्ता कदाचिदपि वाचकम् ।।
स्वप्नेऽपि नोक्तपूर्वासि कदाचिदपि चाप्रियम् ।। १११ ।।
अथवापि पिशाचेन भक्षिता भूतराक्षसैः ।।
आकृष्टा किं नु रोगेण गङ्गातीरं समाश्रिता ।।११२ ।।
किं कृतं दुष्कृतं पूर्वं मया कर्म सुसङ्कटम् ।।
येन मत्पुरतो भार्याप्यदृष्टा विगतिं गता ।। ११३ ।।
एहि मे सुभगे कान्ते मम चित्तानुवर्त्तिनि ।।
पश्यैतान्बालकान् भीतान् क्लिश्यमानानितस्ततः ।। ११४ ।।
मां पश्य त्वं वरारोहे त्रीन्पुत्राततिबालकान् ।।

चतस्रो दुहितॄः पश्य सर्वाश्च मम मानदे।। ११५ ।।
मम पुत्रा रुदन्त्येते बालकास्तव लालसा ।।
नित्यं च दारिका रक्ष मम दुष्कृतकारिणः ।। ११६।।
कामं मां क्षुधितं चैव ज्ञास्यसे त्वं पिपासितम् ।।
एवमुक्ता च कल्याणि मम मुक्त्या व्यवस्थिता ।। ११७ ।।
एवं विलपमानस्य निषादस्य त्वितस्ततः ।।
सव्रीडं भाषते विप्रो निषादं गच्छ नास्ति सा ।। ११८ ।।
सुखं योगं च ते नीत्वा सा गता ह्यनिवृत्तये ।।
तं रुदन्तं तथा दृष्ट्वा कारुण्येन परिप्लुतः ।। ११९ ।।
निषादं भाषते तत्र गच्छ किं परिक्लिश्यसे ।।
बालांस्तान्परिरक्षस्व आहारैर्विविधैरपि ।। 125.१२० ।।
एते न त्यजनीयास्ते कदाचिदपि पुत्रकाः ।।
परिव्राज वचः श्रुत्वा निषादस्तस्य सन्निधौ ।। १२१ ।।
उवाच मधुरं वाक्यं दुःखशोकपरिप्लुतः ।।
अहो मुनिवरश्रेष्ठ अहो धर्मभृतां वर ।। १२२ ।।
सान्त्वितोऽस्मि त्वया विप्र वचनैर्मधुराक्षरैः ।। १२३ ।।
निषदास्य वचः श्रुत्वा स मुनिः संशितव्रतः ।।
उवाच मधुरं वाक्यं दुःखशोकपरिप्लुतः ।। १२४ ।।
मा रोदीर्वच्मि भद्रं ते तवाहं सा प्रियाऽभवत् ।।
गङ्गातीरं समासाद्य मुनिर्जातोऽस्महं तथा ।। १२५ ।।
परिव्राजवचः श्रुत्वा निषादो विगतज्वरः ।।
श्लक्ष्णं वचनमादाय प्रत्युवाच द्विजोत्तमम् ।। १२६ ।।
किमिदं भाषसे विप्र अव्यक्तं यत्कदाचन ।।
न भावं वा यद्घटितं स्त्रियः पुंस्त्वं सदैव हि ।। १२७ ।।
निषादस्य वचः श्रुत्वा ब्राह्मणो दुःखमूर्च्छितः ।।
उवाच मधुरं वाक्यं गङ्गातीरे च धीवरम् ।। १२८ ।।
शीघ्रं गच्छ स्वकं देशमेतान् गृह्य स्वबालकान् ।।
सर्वेषां च यथासंख्यं स्नेहः कर्त्तव्य एव च ।। १२९ ।।
स तेन चोदितो ह्येवं निषादो नावगच्छति ।।
मधुरं स्वरमादाय प्रत्युवाच द्विजोत्तमम् ।। 125.१३० ।।
किं त्वया दुष्कृतं कर्म कृतं पूर्वं पुरातनम् ।।
मम यद्भाषसे चैव स्त्रीत्वं प्राप्तोऽसि तत्कथम् ।। १३१ ।।
केन दोषेण प्राप्तस्त्वं स्त्रीत्वं भूत्वा पुमान् पुनः ।।

पुंस्त्वं चैव कथं प्राप्त एतदाचक्ष्व पृच्छतः ।।१३२।।
एवं तस्य वचः श्रुत्वा स ऋषिः संशितव्रतः ।।
उवाच मधुरं वाक्यं मायातीर्थजलेचरम् ।। १३३ ।।
निषाद शृणु तत्त्वेन मत्कथां च प्रजल्पतः ।।
न मया दुष्कृतं किंचित्कृतं कुत्रापि तत्त्वतः ।। १३४ ।।
एकभक्तं मयाचारे अभक्ष्यं चैव वर्जितम् ।।
स मयाराधितो देवो लोकनाथो जनार्दनः ।।
कर्मभिर्बहुभिश्चैव मया दर्शनकाङ्क्षिणा ।। १३५ ।।
अथ दीर्घेण कालेन मया दृष्टो जनार्द्दनः ।।
वरेण छन्दयामास बहुधा मायया ततः ।। १३६ ।।
मया नाभीप्सितस्तस्माद्दीयमानो वरस्ततः।।
मायां मे दर्शय विभो विष्णो प्रणतवत्सल ।। १३७।।
ततो मां भाषते विष्णुर्मायां दृष्ट्वा ह्यलं द्विज ।।
मया पुनः पुनश्चोक्तो मम प्रीत्या प्रदर्शय ।। १३८ ।।
ततोऽहं तेन चाप्युक्तस्तर्हि द्रक्षत्यलं भवान् ।।
गच्छ कुब्जाम्रके गङ्गां स्नात्वेत्यंतर्हितोऽभवत् ।। १३९ ।।
अहं मायाप्रलोभेन गङ्गातीरमुपागतः ।।
दण्डं कुण्डीं च वस्त्रं च तीरे संस्थाप्य यत्ननः ।।
ततः स्नानविधानेन निमग्नस्तज्जलेऽमले ।। 125.१४० ।।
न तत्र किंचिज्जानामि किमिदं किं प्रवर्त्तते ।।
निषादीगर्भसम्भूतस्तव पत्न्यभवं ततः ।। १४१ ।।
केनचित्कारणेनात्र प्रविष्टो जाह्नवीजले ।।
स्नात्वाऽपश्यं पूर्ववच्च तावज्जातो ऋषिस्त्वहम् ।। १४२ ।।
निषाद पश्य कुण्डीं च मात्रां वस्त्रं यथा पुरा ।।
पंचाशद्वर्षदेशीयो जातोऽस्मि त्वद्गृहे वसन् ।।
दण्डवस्त्रादि यत्किंचिन्न जीर्णं गङ्गया हृतम् ।। १४३ ।।
एवं तेन ततश्चोक्ता निषादोऽदृश्यतां गतः ।।
ये च ते बालकास्तत्र तेषां कश्चिन्न दृश्यते ।। १४४ ।।
स ततो ब्राह्मणो देवि तपस्तपति निश्चितम् ।।
ऊर्ध्वश्वासोर्द्धबाहुश्च वायुभक्षपरायणः ।। १४५ ।।
तस्य प्रतिष्ठमानस्य अपराह्णं तु जायते ।।
ततः प्रमुच्यते तोयं देवि कृत्वा यथोचितम् ।।१४६।।
कर्मण्यानि च पुष्पाणि आहृत्य श्रद्धयान्वितः ।।

अर्चयित्वा यथान्यायं वीरासनमुपागतः।।१४७।।
वृतस्तु ब्राह्मणैर्मुख्यैर्गङ्गास्नानेषु वै द्विजः ।।
ऊचुस्ततो द्विजास्तत्र तपस्विनमनिंदितम् ।। १४८ ।।
पूर्वाह्णे स्थापयित्वात्र मात्रां कुण्डीं त्रिदण्डकम् ।।
इतो गतोऽसि ब्रह्मेन्द्र स्थापयित्वा तु धीवरान् ।।
विस्मृतं किं त्वया स्थानं कथं शीघ्रं न चागतः ।। १४९ ।।
ततो विप्रवचः श्रुत्वा तूष्णीमासीन्मुनिस्तदा ।।
ब्राह्मणानुगतं स्थानमात्मनात्मानुसंस्थितः ।। 125.१५० ।।
एतस्मिन्नंतरे देवि स च ब्राह्मणपुंगवः ।।
अद्य पंचाशद्वर्षाणि अमावास्याद्य चैव हि ।। १५१ ।।
कथमेतावतङ्कालं मामूचुर्ब्राह्मणाश्च किम् ।।
पूर्वाह्ने स्थापयित्वा त्वं स्वां मात्रां चापराह्णिके ।।
कथं कालेऽनुसम्प्राप्तः किमेतदिति भाषते।।१५२।।
एतस्मिन्नंतरे देवि ब्राह्मणाय ततो मया ।।
दर्शयित्वा निजं रूपं तमवोचमिदं धरे।।१५३।।
किमिदं भ्रांतरूपोऽसि किं वा त्वं दृष्टवानसि ।।
पश्यामि त्वां व्यग्रमिव सावधानो भव स्वयम् ।। १५४ ।।
एवमुक्तः स तु मया भूमौ कृत्वा शिरः स्वकम् ।।
उवाच दुःखितो दीनो निःश्वस्य च मुहुर्मुहुः ।। १५५ ।।
अहो देव द्विजा एते मां वदन्ति जगद्गुरो।।
पूर्वाह्णे स्थापयित्वा त्वं वस्त्रं दण्डकमण्डलू ।।
आगतोऽस्यपराह्ने किं स्थलं विस्मृतवानसि ।। १५६ ।।
अहं व्याधस्य वै भूत्वा भार्या च व्याधयोनिजा ।।
पंचाशद्वर्षपर्यंतं तत्र स्थित्वा ततः किल ।। १५७ ।।
तस्माच्चैव त्रयः पुत्रास्तिस्रश्चापि च कन्यकाः ।।
जातान्येवमपत्यानि दुष्टकर्मकृतस्तथा ।। १५८ ।।
स्नातुं कदाचिद्गङ्गायां गतोऽहं तीरभूमिगः ।।
स्थापयित्वाद्य स्वं वस्त्रं मग्नः स्नास्यन् जलेऽमले।।
उन्मज्य स्वयं पुनश्चैव प्राप्तो रूपं मुनिस्तुतम् ।। १५९।।
किं मया विकृतं कर्म सेवमानेन माधव ।।
तपश्च तप्यमानेन किं मया विकृतं कृतम्।।125.१६० ।।
भक्षितं किमकर्मण्यं सेवमानेन चाच्युत ।।
व्यभिचारश्च मे तत्र को जातस्तु तवार्च्चने।।१६१ ।।

एतदाचक्ष तत्त्वेन येनाहं नरकं गतः।।
एतच्चिन्ताव्याकुलोऽहं निबोध भगवन्मम ।। १६२ ।।
मायालुब्धेन हि मया पूर्वं विज्ञापितो ह्यसि ।।
नान्यत्स्मरामि पापं च नरके येन पातितः ।। १६३ ।।
ततस्तस्य वचः श्रुत्वा कारुण्यपरिदेवितम् ।।
उक्तवानस्मि तं विप्रं दुःखसंतप्तमानसम् ।। १६४ ।।
मा दुःखं कुरु विप्रेन्द्र आत्मदोषसमुद्भवम् ।।
विकर्म न कृतं किंचिदपि मे विप्र पूजने ।।
येन दुःखमनुप्राप्तं तिर्यग्योनिं च वै गतः ।। १६५ ।।
उक्तमेव मया पूर्वं शृणु ब्राह्मणपुङ्गव ।।
वरान् वरय भो ब्रह्मन् त्वं मायां वृतवानसि ।। १६६ ।।
ददामि दिव्यभोगान्वै भौमान्वापि तवेप्सितम् ।।
तांस्तु नेच्छसि मायाया दर्शनं वृतवानसि ।। १६७ ।।
दृष्टा तु वैष्णवी माया या त्वया ब्राह्मणेप्सिता ।।
न गतो दिवसश्रेष्ठ नापराह्णेऽपि कुत्रचित् ।।
वर्षाणि चैव पंचाशान्निषादस्य गृहेऽपि न ।। १६८ ।।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व द्विजोत्तम ।।
या एषा वैष्णवी माया त्वया ब्राह्मण ईप्सिता ।। १६९ ।।
त्वया न तत्कृतं किंचिच्छुभं वाशुभमेव वा ।।
सर्वं मायामयं तत्र विस्मयात्परितप्यसे ।। 125.१७० ।।
यत्त्वया दुष्कृतं कर्म व्यभिचारश्च तत्र वै ।।
अर्च्चनं च न ते भ्रष्टं तपश्चैव न नाशितम् ।। १७१ ।।
भवान्तरे कृतं यच्च येनेदं प्राप्तवान्महत् ।।
दुःखं तच्च तवाख्यास्ये शृणु ब्राह्मणसत्तम।। १७२ ।।
मम भक्ता द्विजाः शुद्धा यत्त्वया नाभिवादिताः ।।
तत्पापादीदृशो भोगस्तव जातो हि दुःखदः ।। १७३ ।।
ये च भागवताः शुद्धास्ते नूनं मम मूर्त्तयः ।।
तान्विप्रान्ये नमस्यन्ति ते मामेव नमस्यते ।।
विदितोऽस्मीह विप्रेन्द्र तैरहं नात्र संशयः ।। १७४ ।।
मम दर्शनकामा ये ते मे भक्ता द्विजास्तथा ।।
शुद्धा भागवताः पूज्या द्रष्टव्याः सर्वदा नृभिः ।। १७५ ।।
विशेषेण कलौ ब्रह्मन्द्विजरूपो ह्यवस्थितः ।।
तस्माद्ब्राह्मणभक्ता ये ते मद्भक्ता न संशयः ।। १७६ ।।

यो मां प्राप्तमिहेच्छेत यस्यावाच्यं न विद्यते ।।
अनन्यमानसो भूत्वा मद्भक्तेषु नियोजयेत् ।। १७७ ।।
गच्छ ब्राह्मण सिद्धोऽसि यदा प्राणान्विमोक्ष्यसि ।।
तदाऽऽगन्ताऽसि मत्स्थानं श्वेतद्वीपं न सशंयः ।। १७८ ।।
एवमुक्त्वा वरारोहे तत्रैवान्तर्हितोऽभवम् ।।
सोऽपि द्विजस्तनुं त्यक्त्वा मायातीर्थे यशस्विनि ।।
कृत्वा सुदुष्करं कर्म श्वेतद्वीपमुपागतः ।। १७९ ।।
धन्वी तूणी शरी खड्गी मायाबलपराक्रमः ।।
मां च पश्यति वै नित्यं मायाबलसुसंस्थितम् ।।125.१८० ।।
मायया किं तव धरे न मायां ज्ञातुमर्हसि।।
मम मायां न जानन्ति देवदानवराक्षसाः ।।१८१ ।।
एतत्ते कथितं भूमे मायाख्यानं महौजसम् ।।
मायाचक्रमिति ख्यातं सर्वपुण्यसुखावहम् ।। १८२।।
आख्यानानां महाख्यानं तपसां च परन्तपः ।।
पुण्यानां परमं पुण्यं गतीनां च परा गतिः ।।१८३।।
नित्यं पठेद्यो भक्तेषु अभक्तेषु न कीर्तयेत् ।।
मा पठेन्नीचमध्येषु मा पठेच्छास्त्रदूषके ।। १८४ ।।
अग्रतः पृच्छता शूद्रमद्भक्तेषु तथाग्रतः ।।
पठते शोभते विप्रो न तु ये शास्त्रदूषकाः ।। १८५ ।।
कल्यमुत्थाय यो भूमे पठते च दृढव्रतः ।।
तेन द्वादश वर्षाणि ममाग्रे पठितं भवेत् ।। १८६ ।।
अथ पूर्णेन कालेन पुमान्पंचत्वमागतः ।।
मद्भक्तो जायते देवि वियोनिं न च गच्छति ।। १८७ ।।
य एवं शृणुयान्नित्यं महाख्यानं वसुन्धरे ।।
न स जायेत मन्दात्मा वियोनिं नैव गच्छति ।। १८८ ।।
एतत्ते कथितं भद्रे त्वया यत्पूर्वमीप्सितम् ।।
मुच्यमाना वरारोहे किमन्यत्परिपृच्छसि ।। १८९ ।।
इति श्रीवराहपुराणे भगवच्छास्त्रे मायाचक्रं नाम पंचविंशत्यधिकशततमोऽध्यायः ।।१२५।।

अथ कुब्जाम्रकमाहात्म्यारम्भः ।।
तत्र रैभ्यानुग्रहः ।।
श्रुत्वा मायाबलं ह्येतद्धरणी संशितव्रता।।
वराहरूपिणं देवं प्रत्युवाच वसुन्धरा ।। १ ।।
धरण्युवाच ।।
यत्तत्कुब्जाम्रके देव भाषसे तदनन्तकम् ।।
न तत्राहं विजानामि पूर्वमुक्तं च यत्त्वया ।। २ ।।
यच्च कुब्जाम्रके पुण्यं पुष्टिस्तस्य सनातनी ।।
एतन्मे परमं गुह्यं भगवन्वक्तुमर्हसि ।। ३ ।।
वराह उवाच ।।
सर्वं तत्कथयिष्यामि सर्वलोकसुखावहम् ।।
यच्च कुब्जाम्रके पुष्टिर्यच्च तीर्थमनिन्दिते ।। ४ ।।
तच्च कात्स्न्र्येन मे देवि शृणु तत्त्वेन सुन्दरि ।।
यथा कुब्जाम्रको जातस्ततस्तीर्थं यथाक्रमम् ।। ५ ।।
यच्च कर्म यतो भूमे स्नातो याति मृतोऽपि च ।।
युगे सप्तदशे भूमे कृत्वा चैकां वसुन्धराम् ।। ६ ।।
मधुकैटभौ तथा हत्वा ब्रह्मणो वचनात्तदा ।।
जलसंहरणं कृत्वा ममाधारमुपागतः ।। ७ ।।
पश्यामि तं नतं भूमे रैभ्यं नाममहामुनिम् ।।
ममैवाराधने युक्तं सर्वकर्मसु निष्ठितम्।।८।।
युक्तिमन्तं गुणज्ञं च शुचिं दक्षं जितेंद्रियम् ।।
दशवर्षसहस्राणि ऊर्ध्वबाहुः स तिष्ठति।।९।।
सहस्रं चांबुभक्षेण तथा शैवालभक्षणम् ।।
वर्षाणां च शतं पंच तिष्ठते स महामुनिः ।।126.१० ।।
इतः प्रीतोऽस्म्यहं देवि रैभ्यस्य च महात्मनः ।।
भक्त्या च परया चैव तेन चाराधितो ह्यहम् ।। ११ ।।
ततो वै तप्यमानं तं गङ्गाद्वारमुपागतम्।।
आम्रवृक्षं समासाद्य दृष्टः स मुनिपुङ्गवः ।।१२।।
दर्शितोऽयं मया चात्मा हेतुमात्रेण केनचित्।।
मया यदाश्रितश्चाम्रस्तेन कुब्जत्वमागतः ।। १३ ।।
एवं कुब्जाम्रकं ख्यातं स्थानमतेन्मनस्विनि ।।
मृतापि तत्र गच्छन्ति मम लोकाय केवलम्।।१४।।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।।

दृष्ट्वा स मामृषिश्चैव यानि वाक्यानि भाषते।।१५।।
एवं तत्र मया दृष्टः कुब्जरूपं समास्थितः ।।
जानुभ्यामवनिङ्गत्वा किंचिदेव प्रभाषते।।१६।।
नमस्कृत्य स्थितं तं तु मुनिं वै संशितव्रतम् ।।
वरेण छन्दयामास अहं प्रीतमना धरे ।। १७ ।।
ममैव वचनं श्रुत्वा स मुनिस्तपसान्वितः ।।
उवाच मधुरं वाक्यं प्रसादार्थी महायशाः ।। १८ ।।
यदि प्रसन्नो भगवाँल्लोकनाथो जनार्द्दनः ।।
तव चात्र निवासं वै देव इच्छामि नित्यशः ।। १९ ।।
यावल्लोका धरिष्यन्ति तावच्चैव महाप्रभो ।।
स्थानं तव हृषीकेश इच्छामि मधुसूदन ।। 126.२० ।।
त्वयि भक्तिः सदा भूयाद्यावत्स्थानं जनार्द्दन ।।
अन्यभक्तिर्मम विभो रोचते न कदाचन ।। २१ ।।
एतदेव परं चित्ते मया चैव विधार्यते ।।
उपेन्द्र यदि तुष्टोऽसि ममायं दीयतां वरः ।। २२ ।।
ततस्तस्य वचः श्रुत्वा रैभ्यस्यर्षेरहं पुनः ।।
बाढमित्येव ब्रह्मर्षे एवमेतद्भविष्यति ।। २३ ।।
ममैवं वचनं श्रुत्वा ब्राह्मणः स वसुन्धरे ।।
मुहुर्त्तं ध्यानमास्थाय मामुवाच मुदान्वितः ।। २४ ।।
एतस्य तीर्थवर्यस्य महिमानं त्वया प्रभो ।।
शृणु वै कथ्यमानं तु वद लोकोपकारक ।। २५ ।।
अन्यानि यानि तीर्थानि एतत्क्षेत्राश्रितानि तु ।।
तान्यपि श्रोतुमिच्छामि कथ्यमानानि च त्वया ।। २६ ।।
शृणु तत्त्वेन मे ब्रह्मन्यन्मां त्वं परिपृच्छसि ।।
तीर्थे कुब्जाम्रके पुण्ये मम लोके सुखावहे ।। २७ ।।
तीर्थं तु कुमुदाकारं तस्मिन् कुब्जाम्रके स्थितम् ।।
स्नानमात्रेण सुश्रोणि स्वर्गं प्राप्नोति मानवः ।। २८ ।।
कौमुदस्य तु मासस्य तथा मार्गशिरस्य च ।।
वैशाखस्यैव मासस्य कृत्वा कर्म सुदुष्करम् ।।२९।।
यो वै परित्यजेत्प्राणान् स्त्री पुमान्वा नपुंसकम् ।।
निष्कलां लभते सिद्धिं मम लोकं स गच्छति ।। 126.३० ।।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुंधरे ।।
तीर्थं मानसमित्येव विख्यातं मम सुन्दरि ।। ३१ ।।

यस्मिन् स्नात्वा विशालाक्षि गच्छते नंदनं वनम् ।।
दिव्यं वर्षसहस्रं वै मोदते चाप्सरैः सह ।। ३२ ।।
पूर्णे वर्षसहस्रे तु जायते विपुले कुले ।।
द्रव्यवान् गुणवांश्चैव जायते तत्र मानवः ।।३३ ।।
तत्राथ मुंचते प्राणान् कौमुदस्य तु द्वादशी ।।
पुष्कलां लभते सिद्धिं मम लोकं च गच्छति ।। ३४ ।।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुंधरे ।।
मायातीर्थमिदं ख्यातं येन मायां विजानते ।। ३५ ।।
तस्मिन् कृतोदको ब्रह्मन्मायातीर्थे महायशाः ।।
दशवर्षसहस्राणि मद्भक्तो जायते नरः ।।३६।।
लभते परमां पुष्टिं कुबेरभवनं यथा ।।
एकं सहस्रं वर्षाणां स्वच्छंदगमनात्त्रयम् ।। ३७ ।।
अथवा म्रियते तत्र मायातीर्थे यशस्विनि ।।
मायायोगी ततो भूत्वा मम लोकाय गच्छति।। ३८ ।।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।।
तीर्थं सर्वात्मकं नाम सर्वतीर्थगुणान्वितम् ।।३९।।
यस्तत्र स्नाति कश्चिद्वै वैशाखस्य तु द्वादशीम्।।
निष्कलं लभते स्वर्गं सहस्रं दश पंच च ।।126.४० ।।
अथात्र मुंचते प्राणांस्तीर्थे सार्षपके तथा ।।
सर्वसंगं परित्यज्य मम लोकं च गच्छति ।।४१ ।।
पुनरन्यत् प्रवक्ष्यामि शृणुष्व शुभलोचने ।।
तीर्थं पूर्णमुखं नाम तन्न जानाति कश्चन ।। ४२ ।।
तत्र सर्वा भवेद्गङ्गा शीतलं जायते जलम् ।।
यत्र चोष्णं भवत्यम्बु ज्ञेयं पूर्णमुखं तथा ।।४३।।
स्नातो गच्छति सुश्रोणी सोमलोके महीयते ।।
तदा सोमं पश्यति तु सहस्रं दश पंच च ।। ४४ ।।
ततः स्वर्गात्परिभ्रष्टो ब्राह्मणश्चैव जायते ।।
मद्भक्तः शुचिमान्दक्षः सर्वकर्मगुणान्वितः ।।४५।।
अथवा म्रियते तत्र मासि मार्गशिरे तथा ।।
शुक्लपक्षे च द्वादश्यां मम लोकं च गच्छति।।४६।।
तत्र पश्यति मां नित्यं दीप्तिमन्तं चतुर्भुजम् ।।
न जन्म विद्यते तस्य मरणं च कदाचन ।।४७।।
पुनरन्यत्प्रवक्ष्याभि तच्छृणुष्व वसुन्धरे ।।

अनन्यमानसो भूत्वा भक्तो भागवतो मम ।४८।।
तस्मिंस्तीर्थे तु यः स्नाति कदाचिदपि मानवः।।
दशवर्षसहस्राणि मोदते ह्यमरालये।।४९।।
ततः स्वर्गात्परिभ्रष्टस्तत्तीर्थस्य प्रभावतः।।
द्रव्यवान्गुणवांश्चैव मद्भक्तश्चैव जायते।।126.५०।।
वैशाखस्य तु मासस्य शुक्लपक्षस्य द्वादशी ।।
यदि मुञ्चेत्स्वकं देहं कृत्वा कर्म सुदुष्करम् ।। ५१ ।।
न जन्म मरणं तस्य न ग्लानिर्न च वै भयम् ।।
सर्वसङ्गविनिर्मुक्तो मम लोकाय गच्छति ।।५२।।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुंधरे।।
करवीरं नाम तीर्थं सर्वलोकसुखावहम्।।५३।।
तस्य चिह्नं प्रवक्ष्यामि येन ज्ञापयते शुभे ।।
पुरुषो ज्ञानवांस्तावन्मम भक्तिविनिश्चितः।।५४।।
माघमासे तु सुश्रोणि शुक्लपक्षे तु द्वादशी ।।
पुष्पिते करवीरे वै मध्याह्ने तु न संशयः ।।५८५।।
तस्मिंकृतोदकस्तीर्थे स्वच्छंदगमनालयः।।
भ्रमेद्विमानमारूढो सहस्रांतरनर्त्तितः।।५६।।
तत्राथ म्रियते भूमे माघमासस्य द्वाशीम्।।
ब्रह्माणं मां च पश्येत पश्यते च वृषध्वजम्।।५७।।
पुनरन्यत्प्रवक्ष्यामि तच्छृणुष्व वसुंधरे।।
तस्य ब्राह्मणमुख्यस्य पूर्वं यत्कथितं मया।।५८।।
तस्मिन्कुब्जाम्रके भद्रे स्थानं तु मम रोचते।।
पुण्डरीक इति ख्यातं तीर्थं चैव महत्फलम्।।५९।।
तस्य चिह्नं प्रवक्ष्यामि तच्छृणुष्व शुचिस्मिते।।
तस्य तीर्थस्य सुश्रोणि मध्याह्ने द्वादशीदिने।।126.६०।।
रथचक्रप्रमाणो वै चरते तत्र कच्छपः।।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुंधरे।।६१ ।।
स्नात्वा प्राप्नोति सुश्रोणि फलं तत्र महागुणम्।।
पुण्डरीकस्य यज्ञस्य यजमानस्य यत्फलम्।।६२।।
प्राप्नोति वसुधे तत्र एवमेव न संशयः।।
अथवा म्रियते तत्र लब्धसंज्ञो महायशाः ।। ६३।।
दशानां पुण्डरीकाणां फलं प्राप्नोति मानवः।।
भुक्त्वा यज्ञफलं तत्र जातिशुद्धो महातपाः ।।६४।।

सिद्धस्य लभते नित्यं मम लोकाय गच्छति ।।
अन्यच्च ते प्रवक्ष्यामि प्रिये तद्वै शृणुष्व मे ।।६५।।
अग्नितीर्थमिति ख्यातं सिद्धं कुब्जाम्रके स्थितम् ।।
यद्वै प्रज्ञायते देवि द्वादश्यां पापवर्जितैः ।। ६६ ।।
कौमुदस्य तु मासस्य मासो मार्गशिरस्य च ।।
आषाढस्य च मासस्य शुक्लपक्षस्य द्वादशीम् ।। ६७ ।।
यश्चैव माधवे मासि समये यदि वर्त्तते ।।
तस्यां तु शुक्लद्वादश्यां तीर्थे तिष्ठति यत्रतः ।।६८।।
तस्य चिह्नं प्रवक्ष्यामि शृणुष्व हि वसुन्धरे ।।
येन चिह्नेन विज्ञेयं तीर्थं तत्रैव मामकम् ।।६९।।
एकाग्रं तु मनः कृत्वा तच्छृणुश्व वसुन्धरे ।।
मुक्त्वा भागवतान्शुद्धान्त्संहितापाठकान्मम ।।126.७० ।।
न हि कश्चिद्विजानाति शास्त्रं मम न यश्च वै ।।
फलं तस्य प्रवक्ष्यामि मृतोऽपि स्नातकोऽपि वा ।। ७१ ।।
एकचित्तं समाधाय तच्छृणुष्व वसुन्धरे ।।
अग्नितीर्थेषु स्नातो वै तस्मिन्कुब्जाम्रकेषु च ।। ७२ ।।
अग्नितीर्थं महाभागे दीप्तमन्तं सवैष्णवम् ।।
सप्त कृत्वाग्निमेधानां यत्फलं भवति प्रिये ।। ७३।।
प्राप्नोति तन्महाभागे स्नानमात्रान्न संशयः ।।
अथवा म्रियते तत्र एकैकान्द्वादशीकृतान् ।।७४।।
स्थित्वा विंशत्यहोरात्रान्मम लोकाय गच्छति ।।
तीर्थस्य तस्य वक्ष्यामि चिह्नानि शृणु सुन्दरि ।।७५।।
येन विज्ञायते प्राज्ञैर्मम भक्तं सुखावहम् ।।
उष्णं भवति हेमन्ते वसुधे तज्जलं तथा।।७६।।
उष्णकाले भवेच्छीतमेवं चिह्नं तु तद्भवेत् ।।
एष वह्निर्महाभागे तीर्थमाग्नेयमुत्तरे।।७७।।
तरन्ति मानवा येन घोरं संसारसागरम् ।।
अन्यच्च ते प्रवक्ष्यामि देवि कुब्जाम्रके महत् ।।७८।।
वायव्यमितिविख्यातं तीर्थं धर्माद्विनिस्सृतम् ।
तस्मिंस्तीर्थे तु यः स्नातः कृतनित्योदकक्रियः ।। ७९।।
वाजपेयस्य यज्ञस्य फलं प्राप्नोति निष्कलम् ।।
अथवा म्रियते तत्र वायुतीर्थे महाह्रदे ।। 126.८० ।।
दिनानि दश पंचैतत्कृतमेव हि मामकम्।।

जन्म वा मरणं वापि भूमौ नैव पुनर्भवेत्।।८१ ।।
जायते च चतुर्बाहुर्मम लोके प्रतिष्ठितः।।
तस्य चिह्नं प्रवक्ष्यामि वायु तीर्थस्य सुन्दरि ।। ८२ ।।
येन चिह्नेन विज्ञेयं तीर्थं तच्च महत्तरम् ।।
अश्वत्थवृक्षपत्राणि चलन्ति नित्यशो वने ।।८३ ।।
चतुर्विंशतिर्द्वादश्यां येन विज्ञायते खलु ।।
पुनरन्यत्प्रवक्ष्यामि तीर्थं कुब्जाम्रके धरे ।। ८४ ।।
शक्रतीर्थमिति ख्यातं सर्वसंसारमोक्षणम् ।।
तस्मिंस्तीर्थे वरारोहे शक्रतीर्थे वसुंधरे ।।८५।।
शक्रस्तु वसते लोके वज्रहस्तो न संशयः ।।
अथवा म्रियते तत्र शक्रतीर्थे महातपे ।।८६।।
उपोष्य दशरात्राणि मम लोकाय गच्छति ।।
तस्य चिह्नं प्रवक्ष्यामि येन विज्ञायते ततः ।। ८७ ।।
एकचित्तं समाधाय शृणु सुन्दरि तत्त्वतः ।।
पञ्च वृक्षास्तु तिष्ठन्ति तद्दक्षिणदिशे क्षिते ।। ८८ ।।
शक्रतीर्थस्य चिह्नं ते वसुधे परिकीर्त्तितम् ।।
अन्यच्च तीर्थं वक्ष्यामि तस्मिन् कुब्जाम्रके परम् ।।८९ ।।
वरुणेन तपस्तप्तं सहस्रं पञ्च सप्त च ।।
तत्र स्नातस्य वक्ष्यामि जायते तत्र यत्फलम् ।। 126.९० ।।
यत्प्राप्नोति मृतो वापि पुरुषः संशितव्रतः ।।
अष्ट वर्ष सहस्राणि गत्वा वै वरुणालयम् ।। ।। ९१ ।।
स्वच्छन्दगमनो भूत्वा एवमेव न संशयः ।।
अथ वै म्रियते तत्र विंशवर्षोषितो नरः ।। ९२ ।।
सर्वसङ्गं परित्यज्य मम लोकं स गच्छति ।।
तस्य चिह्नं प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।। ९३ ।।
तत्र धारा पतत्येका एकरूपा सदा भवेत् ।।
न वर्द्धते च वर्षासु घर्मे न ह्रसते पुनः ।। ९४ ।।
सप्तसामुद्रकं नाम तस्मिन्कुब्जाम्रके परम् ।।
तस्मिन्कृतोदको भूमे नरो धर्मपरायणः ।। ९५ ।।
त्रयाणामश्वमेधानां फलं प्राप्नोति मानवः ।।
शीघ्रं गच्छति वै स्वर्गं सहस्रं दश पञ्च च ।। ९६ ।।
ततः स्वर्गात्परिभ्रष्टः कुलवाञ्जायते द्विजः ।।
वेदवेदाङ्गकुशलः सोमपश्चैव जायते ।। ९७ ।।

अथात्र मुञ्चते प्राणान्मुक्तसङ्गो जितेन्द्रियः ।।
उषित्वा सप्तरात्रं वै मम लोकं स गच्छति ।।९८।।
तस्य चिह्नं प्रवक्ष्यामि तीर्थस्य शृणु सुन्दरि ।।
वैशाखशुक्लद्वादश्यां विभूतिस्तत्र या भवेत् ।। ९९ ।।
विमला गाङ्गता यत्र गङ्गाजलविमिश्रितम् ।।
तस्मिन् तीर्थे तदेवैतत्क्षीरवर्णं पुनर्भवेत् ।। 126.१०० ।।
पुनश्च पीतवर्णाभा पुना रक्तः कदा भवेत् ।।
पुनर्मरकताभासं पुनर्मुक्तासमप्रभम् ।। १ ।।
एतैश्चिह्नैस्तु विज्ञेयं तत्तीर्थं विदितात्मभिः ।।
अन्यच्च ते प्रवक्ष्यामि तीर्थं कुब्जाम्रके महत् ।। २ ।।
तीर्थं मानसरो नाम सर्वभागवतप्रियम् ।।
तस्मिन् स्नातो वरारोहे गच्छते मानसं सरः।।३।।
देवान्पश्यति वै सर्वान्रुद्रेंद्रसमरुद्गणान्।।
अथ तत्र मृतो भूमे त्रिंशद्रात्रोषितो नरः ।। ४ ।।
सर्वसङ्गविनिर्मुक्तो मम लोकं स गच्छति ।।
तस्य चिह्नं प्रवक्ष्यामि येन तज्ज्ञायते नरैः ।। ५ ।।
पंचाशत्क्रोशविततं मानुषाणां दुरासदम् ।।
एतत्तु भूमे विज्ञेयं यथैतन्मानसं सरः ।।६।।
शुद्धैर्भागवतैर्ज्ञेयं मम कर्मसु निष्ठितैः ।।
एतत्तीर्थं महाभागे तस्मिन् कुब्जाम्रकं स्मृतम्।।७।।
सिद्धिकामस्य विप्रस्य रैभ्यस्य परिकीर्तितम्।।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुंधरे ।।८।।
तत्र कुब्जाम्रके वृत्तं पुराश्चर्यं महाद्भुतम् ।।
मम निर्माल्यपार्श्वे वै व्याली तिष्ठति निर्भया।।९।।
गंधमाल्योपहार्याणि भक्षयंती यदृच्छया।।
कस्यचित्त्वथ कालस्य नकुलस्तत्र चागतः ।। 126.११० ।।
पश्यते च ततस्तत्र रममाणं यदृच्छया।।
नकुलेन सह व्याल्या तदा युद्धमभूच्च तत् ।।१ १ ।।
सम्पूर्णे ते तु मध्याह्ने माघमासे तु द्वादशीम् ।।
तया स दष्टो नकुलो नाशाय मम मंदिरे ।। १२ ।।
तेनापि विषदिग्धेन व्याली शीघ्रं निपातिता ।।
उभौ चान्योन्य युद्धेन तदा पंचत्वमागतौ ।। १३ ।।
व्याली प्राग्जोतिषे जाता राजपुत्री यशस्विनी ।।

नकुलोऽजायत तदा कोसलेषु जनाधिपः ।। १४ ।।
रूपवान्गुणवान्देवि सर्वशास्त्रकलान्वितः ।।
तौ तु दीर्घेण कालेन सौख्येन परिरञ्जितौ ।। १५ ।।
अवर्द्धतां यथाकालं शुक्लपक्षे यथा शशी ।।
सा कन्या नकुलं दृष्ट्वा सद्यो हन्तुं तथेच्छति ।। १६।।
व्यालीं दृष्ट्वा राजपुत्रः सहसा हन्तुमिच्छति ।।
अथ तस्यास्तु कालेन कोसलाधिपतिस्तथा।।१७।।
पाणिं जग्राह विधिवन्मत्प्रसादाद्वसुन्धरे ।।
कोसलाधिपतेश्चापि राज्ञः प्राग्जोतिषस्य च ।। १८ ।।
महोत्सवेन संवृत्तः सम्बन्धो मत्प्रसादतः ।।
दृढप्रीतिस्तयोर्जाता यथा च जतुकाष्ठयोः ।। १९ ।।
रमतो धूमकेतोश्च वह्नेश्चैव यथा तथा ।।
यथा शची च शक्रश्च रमन्तौ नन्दने वने ।।126.१२० ।।
एवं च दीर्घकालं हि तयोः प्रीतिर्न हीयते ।।
एवं तौ विहरन्तौ तु तस्मिन्नुपवने ततः ।। २१ ।।
वसेते च यथान्यायं वेलामिव महोदधिः ।।
एवं तयोर्गतः कालो वर्षाणां सप्तसप्ततिः ।। २२ ।।
न बुध्यतोस्तथात्मानं मम मायाविमोहितौ ।।
एवं तौ विहरन्तौ तु तस्मिन्नुपवने ततः ।। २३ ।।
दृष्ट्वा व्यालीं राजपुत्रस्ततो हन्तुं व्यवस्थितः ।।
स तया वार्यमाणोऽपि व्याली हन्तुमिहोद्यतः ।। २४ ।।
गरुडो हन्ति नागान्वै दृष्ट्वैव विनतात्मजः ।।
एवं स वार्यमाणोऽपि व्यालीं हन्ति स्म दारुणम् ।। २५ ।।
तदा सा रुषिता देवी न किञ्चिदपि भाषते ।।
ततस्तस्यां तु वेलायां राजपुत्र्यग्रतो बिलात् ।। २६ ।।
नकुलस्तु विनिर्गत्य आहारार्थं समुद्यतः ।।
दृष्ट्वा तु राजपुत्री सा नकुलं सर्पकांक्षिणम् ।। २७ ।।
हृष्टं चंक्रममाणं सा नकुलं शुभदर्शनम् ।।
क्रोधात्तं नकुलं चापि विनिहन्तुं प्रचक्रमे ।। २८ ।।
वारिता राजपुत्रेण सुता प्राज्योतिषस्य वै ।।
नकुलं घातितं दृष्ट्वा मङ्गल्यं शुभदर्शनम् ।। २९ ।।
कुपितो राजपुत्रो वै राजपुत्रीमभाषत ।।
स्त्रीणां भर्त्ता सदा मान्यस्तं मामुल्लङ्घ्य निष्ठुरम् ।। 126.१३० ।।

दर्शनीयः प्रियो राज्ञां मङ्गल्यः शुभदर्शनः ।।
घातितो नकुलः कस्मान्मया वै वार्यमाणया ।। ३१ ।।
इति भर्तृवचः श्रुत्वा प्राग्ज्योतिषसुता तदा ।।
प्रत्युवाच ततः क्रोधात्कोसलाधिपतेः सुतम् ।। ३२ ।।
असकृद्वार्यमाणोऽपि व्याली घातितवान्यतः ।।
तस्मान्मयापि नकुलो घातितः सर्पघातकः ।। ३३ ।।
राजपुत्र्या वचः श्रुत्वा राजपुत्रस्ततोऽब्रवीत् ।।
वाग्भिः स कटुकाभिश्च तर्जयन्निव तां धरे ।। ३४ ।।
सर्पस्तीव्रविषो भद्रे तीक्ष्णदंष्ट्रो दुरासदः ।।
दशते मानुषं दुष्टो येनाऽसौ म्रियते जनः ।। ३५ ।।
तस्मान्मया हतो भद्रेऽहितकारी विषोद्धतः ।।
प्रजापाला वयं भद्रे येऽपि चैवापथे स्थिताः ।। ३६ ।।
सर्वांस्तान्दण्डयामो हि तीव्रदण्डैर्यथोचितम् ।।
साधून्ये चापि हिंसन्ति ह्यपराधविवर्ज्जितान् ।। ३७ ।।
स्त्रियं चैवापि हिंसन्ति कामकाराश्च ये नराः ।।
ते दण्ड्याश्चैव वध्याश्च राजधर्माद्यथार्हतः ।। ३८ ।।
मयापि राजधर्मो वै कर्त्तव्यो राजकर्मणि ।।
नकुलेनापराद्धं किं तद्वद त्वं ममापि हि ।। ३९ ।।
दर्शनीयः सुरूपश्च राज्ञां योग्यो गृहेषु च ।।
मङ्गल्यश्च पवित्रश्च नकुलः किं हतस्त्वया ।। ।। 126.१४० ।।
वार्यमाणोऽपि हि मया घातितो नकुलस्ततः ।।
ततो मम न भार्यासि न चाहं ते पतिः स्थितः ।।४१ ।।
किञ्च तेन न हन्मि त्वां स्त्रियोऽवध्याः तदैव यत् ।।
इत्युक्त्वा राजपुत्रस्तां निवृत्य नगरं प्रति ।। ४२ ।।
एवं क्रोधं समादाय नष्टस्नेहैः परस्परम् ।।
एवं गच्छति काले वै कोसलायां जनाधिपः ।। ४३ ।।
शृणोति तां कथां सर्वां वधं नकुलसर्पयोः ।।
एवं श्रुत्वा यथान्यायं सक्रोधौ तावुभावपि ।। ४४ ।।
ततः कञ्चुकिनश्चैव स्वामात्यानग्रतः स्थितान् ।।
पुत्रं मम वधूं चैव समानयत सत्वरम् ।। ४५ ।।
ततो वै राजभृत्यास्तु राज्ञो वै प्रियकारिणः ।।
राजाज्ञां तां पुरस्कृत्य वधूं पुत्रं च सादरम् ।। ४६ ।।
आनीय दर्शयामासुर्यत्र राजा स्वयं स्थितः ।।

वधूपुत्रौ ततो दृष्ट्वा राजा वचनमब्रवीत् ।। ४७ ।।
पुत्र कुत्र गतं प्रेम युवयोस्तत्समाहितम् ।।
स्नेहश्च क्व गतः पूर्वो विरुद्धाचरणौ कथम् ।। ४८ ।।
आसीद्या युवयोः प्रीतिरन्योऽन्यं जतुकाष्ठवत् ।।
दर्पणे प्रतिबिम्बं च दृश्यते यद्वदात्मनः ।। ४९।।
सन्मुखत्वेन च सदा तद्वद्वां याऽभवत्पुरा ।।
दक्षा सुशीला धर्मिष्ठा नैनां त्यक्तुं त्वमर्हसि ।।126.१५०।।
अप्रियं नोक्तपूर्वं तु यया परिजनेऽपि च ।।
मिष्टान्नसाधने दक्षा त्वया त्यक्तं न युज्यते ।। ५१ ।।
धनपूर्वस्तु ते धर्मः स च योषित्कृतः खलु ।।
अहो सत्यं जनानां च स तु स्त्रीभ्यः सुतः कुलम् ।। ५२ ।।
ततः पितुर्वचः श्रुत्वा राजपुत्रो यशस्विनि।।
उभौ तच्चरणौ गृह्य पितरं प्रत्यभाषत ।।५३।।
दोषो न विद्यते तात स्नुषायां कोऽपि कुत्रचित् ।।
किं मे तु वार्यमाणापि नकुलं मेऽग्रतोऽहनत् ।। ५४ ।।
ततोऽभवन्मम क्रोधो दृष्ट्वा पातितमग्रतः ।।
क्रोधासक्तेन तु मया यथेयं परिभाषिता ।। ५५ ।।
मम भार्या न भवती न चाहं तव वै पतिः ।।
एतच्च कारणं नान्यत्किञ्चिद्राजन्न संशयः ।। ५६।।
ततः पतिवचः श्रुत्वा प्राग्ज्योतिषकुलोद्भवा ।।
शिरसा प्रणतिं कृत्वा इदं वचनमब्रवीत् ।। ५७ ।।
अपराधविहीनश्च भीतश्च भुजगस्तथा ।।
शतशो वार्यमाणेन शीघ्रमेव निपातितः ।। ९८।।
ततः सर्पवधं दृष्ट्वा कोधसंतप्तमानसा ।।
नाभाषितः किमपि नो मयैतदवधेहि वै ।। ५९ ।।
वधूपुत्रवचः श्रुत्वा कोसलानां जनेश्वरः ।।
उवाच मधुरं वाक्यमुभयोर्जनसंसदि ।। 126.१६० ।।
अनेन निहतः सर्पस्त्वया च नकुलो हतः ।।
कथं वा क्रियते क्रोधस्तन्मे वक्तुमिहार्हथ ।। ६१ ।।
हते तु नकुले पुत्र किं ते क्रोधस्य कारणम् ।।
राजपुत्रि हते सर्पे किं वा ते मन्युकारणम् ।। ६२ ।।
ततः पितुर्वचः श्रुत्वा कोसलेश्वरनंदनः ।।
उवाच मधुरं वाक्यं राजपुत्रो महयशाः ।। ६३ ।।

एतेन किं वा प्रश्नेन नैतत्प्रष्टुं त्वमर्हसि ।।
एनां पृच्छ महाराज ज्ञास्यते कायचेष्टितम् ।। ६४ ।।
पुत्रस्य वचनं श्रुत्वा कोसलानां जनेश्वरः ।।
उवाच मधुरं वाक्यं धर्मसंयोगसाधनम् ।।६५।।
ब्रूहि पुत्र यथान्यायं यत्ते मनसि वर्तते ।।
प्रीतिविच्छेदकरणमुभयोरिह कथ्यताम् ।। ६६ ।।
जाताः सम्वर्धिताः पुत्राः सर्वकामेषु निष्ठिताः ।।
पितृपृष्टं तु यद्गुह्यं गोपयंति सुताधमाः ।। ६७ ।।
सत्यं वा यदि वाऽसत्यं न ब्रुवंति कदाचन ।।
पतंति नरके घोरे रौरवे तप्तवालुके ।। ६८ ।।
पित्रा पृष्टं तु ये ब्रूयुः शुभं वाशुभमेव वा ।।
दिव्यां च ते गतिं यांति या गतिः सत्यवादिनाम् ।। ६९ ।।
अवश्यमेव तद्वाक्यं वक्तव्यं मम सन्निधौ ।।
यस्य दोषेण ते पुत्र नष्टा प्रीतिर्गुणाकरा ।। 126.१७० ।।
ततः पितुर्वचः श्रुत्वा कोसलानन्दिवर्द्धनः ।।
उवाच श्लक्ष्णया वाचा तत्रैव जनसंसदि ।। ७१ ।।
गच्छत्वेष जनः सर्वो यथान्यायं गृहाणि वै ।।
प्रातस्त्वां कथयिष्यामि यद्वक्तव्यमवश्यकम् ।।७२।।
प्रभातायां तु शर्वर्यां दुंदुभीनां विनादनैः ।।
निबुद्धः कोसलश्रेष्ठः सूतमागधबन्दिभिः ।। ७३ ।।
तदा कमलपत्राक्षो राजपुत्रो महायशाः ।।
स्नात्वा च मङ्गलैर्युक्तो राजद्वारमुपागतः ।। ७४ ।।
ततस्तु कंचुकी गत्वा राज्ञे चैव न्यवेदयत् ।।
द्वारि तिष्ठति पुत्रस्ते तव दर्शनलालसः ।। ७९ ।।
कंचुकेस्तु वचः श्रुत्वा कोसलानां जनेश्वरः ।।
शीघ्रं प्रवेशय सुतं कंचुके साधुवादिनम् ।। ७६ ।।
इत्युक्तो राजपुत्रं तु प्रावेशयदनुज्ञया ।।
राजपुत्रः पितुर्वेश्म प्रविश्य नियतः शुचिः ।। ७७ ।।
ववन्दे चरणौ मूर्ध्ना निषीदेति सुतं ततः ।।
तमब्रवीत्पिता जीव जयेत्युक्ता मुदान्वितः ।। ७८ ।।
पितृपुत्रौ तु विज्ञेयौ जनैस्त्वेकत्र संस्थितौ ।।
हर्षितस्त्वान्तरो बाह्यः कृतकौतुकमङ्गलः ।। ७९ ।।
ततः पुत्रं प्रहस्याह कुमारं स जनाधिपः ।। ।।

वद पुत्र महाभाग पूर्वं पृष्टं मया हि यत् ।। 126.१८० ।।
युवयोः प्रीतिविच्छेदे कारणं गोपितं हि यत् ।।
ततो राजकुमारस्तं पितरं प्रत्यभाषत ।।८१ ।।
अवश्यमेव वक्तव्यं त्वया पृष्ठेन निष्फलम् ।।
तद्गुह्यं हि महाराज प्रीतिविच्छेदकारकम् ।। ८२ ।।
यदीच्छसि महाराज श्रोतुं गुह्यमिदं महत् ।।
आगच्छ तात कुब्जाम्रे मया सह महीपते ।। ८३ ।।
तत्र ते कथयिष्यामि कोसलाधिपते त्वरन् ।।
यत्त्वया पृच्छितं ह्येतद्गुह्यं पूर्वमनिन्दितम् ।। ८४ ।।
ततस्तस्य वचः श्रुत्वा राजपुत्रस्य वै नृपः ।।
बाढमित्येव तत्राह पुत्रप्रेम्णा समन्वितः ।। ८५ ।।
राजपुत्रे गते सुभ्रु अमात्यानां च सन्निधौ ।।
उवाच मधुरं वाक्य ये वै तत्र समागताः ।। ८६ ।।
अमात्याः शृणुतेमं मे वचनं कृतनिश्चयम् ।।
कुब्जाम्रकं प्रति वयं गच्छामस्तस्य साधनम् ।। ८७ ।।
शीघ्रं सम्पाद्यतां चैव युज्यन्तां गजवाजिनः ।।
राज्ञो वचस्ते संश्रुत्य तमूचुः कृतमेव तत् ।। ८८ ।।
इत्युक्त्वा सप्तरात्रेण सर्वं सम्पाद्य साधनम् ।।
गजाश्वपशुयानादिकार्षापणकधेनुकम् ।। ८९ ।।
सुवर्णरत्नवस्त्राणि अन्नं चान्यदपेक्षितम् ।।
राजानं ते समागत्य सिद्धमित्यूचुरीश्वरम् ।। 126.१९० ।।
ततः स राजशार्दूलः पुत्रमाह वसुन्धरे ।।
राज्यं शून्यं कथं त्यक्त्वा गमिष्यामो वयं सुत ।। ९१ ।।
ततः पितुर्वचः श्रुत्वा राजपुत्रो महायशाः ।।
उवाच मधुरं वाक्यं गृहीत्वा चरणौ पितुः ।। ९२ ।।
कनीयानेष मे भ्राता एकोदर समुद्भवः ।।
एतस्य दीयतां राज्यं यथान्यायेन चागतम् ।।९३ ।।
पुत्रस्य वचनं श्रुत्वा कोसलानां कुलोद्वहः ।।
वर्त्तमानेऽपि च ज्येष्ठे कनीयान् कथमर्हति ।। ९४ ।।
ततः पितुर्वचः श्रुत्वा कोसलायाः कुलोद्भवः ।।
उवाच मधुरं वाक्यं पितरं धर्मकारणात् ।। ९५ ।।
अनुजानामि ते तात दीयमानां वसुन्धराम् ।।
नास्य धर्मविलोपस्तु भुञ्जमानस्य मेदिनीम् ।।९६ ।।

नाहं कुब्जाम्रकं गत्वा निवर्तिष्ये कदाचन ।।
एतत्सत्यं च धर्मश्च तात ते कथितं मया ।। ९७ ।।
पुत्रेण चाभ्यनुज्ञातः कनीयानभिषेचितः ।।
स मुख्येनाभ्यनुज्ञातो भूमे भूपतिसत्तमः ।। ९८ ।।
ततो दीर्घेण कालेन स्थानं कुब्जाम्रकं गतः ।।
अन्तःपुरेण सहितः सर्वद्रव्यसमन्वितः ।। ९९ ।।
ततस्तीर्थविधिं कृत्वा दत्त्वा दानानि भूरिशः ।।
अन्नवस्त्र सुवर्णानि गोहस्त्यश्वभुवस्तथा ।। 126.२०० ।।
ततो बहुतिथे काले व्यतीते सति धीमताम् ।।
ततः कदाचिद्भूपालो राजपुत्रमुपस्थितम् ।। १ ।।
दम्पत्योः प्रीतिविच्छेदं गुह्यं तत्समपृच्छत ।।
स्थानं पावनकं वत्स विष्णोः पादसमाश्रयम् ।।२।।
दत्तानि धनरत्नानि जातस्तस्य विधिः परः ।।
इदानीं ब्रूहि सत्यं तद्यत्कृते सुन्दरी स्नुषा ।। ३ ।।
अदुष्टकारिणी युक्ता कुलशीलगुणान्विता ।।
त्वया मिथ्यैव किं त्यक्ता तद्गुह्यं वद पुत्रक ।।४।।
ततः स पितरं प्राह रात्रिगर्च्छतु सुप्यताम् ।।
श्वः प्रभाते ततः सर्वं कथयिष्यामि तत्पुनः ।। ५ ।।
ततो रात्र्यां व्यतीतायामुदिते च दिवाकरे ।।
कृतोदकस्तु गङ्गायां क्षौमवस्त्रविभूषितः ।। ६ ।।
अर्चयित्वा यथान्यायं मां चैव गुरुवत्सलः ।।
पितुः प्रदक्षिणं कृत्वा वाक्यमेतदुदाहरत् ।। ७ ।।
एह्येहि तात गच्छामः यस्त्वं गुह्यानि पृच्छसि ।।
शृणु तत्त्वेन मे राजन्यत्त्वया पूर्वपृच्छितम् ।।८।।
राजपुत्रश्च वै राजा सा च पङ्कजलोचना ।।
गत्वा निर्माल्यकूटं ते यत्त्वृत्तं पुरातनम् ।। ९।।
निर्माल्यं तु समासाद्य राजपुत्रो महातपाः ।।
उभो तौ चरणौ गृह्य पितरं प्रत्यभाषत।।126.२१०।।
नकुलोऽहं महाराज वसामि कदलीतले ।।
ततोऽहं कालसंयुक्तः प्राप्तो निर्माल्यकूटकम् ।। ११ ।।
ततस्त्वाशीविषा सर्पी सर्पतेऽत्र जनाधिप।।
भक्षयन्ती सुगन्धानि पुष्पाणि विविधानि च ।।१२।।
दृष्ट्वा तु तां महाव्यालीं क्रोधसंरक्तलोचनः ।।

अचिरेणैव कालेन तस्याङ्कं सहसा गतः।।१३।।
तया सह महाराज घोरं युद्धमवर्त्तत ।।
माघमासस्य द्वादश्यां तत्र कश्चिन्न पश्यति ।।१४ ।।
युध्यमानस्य मे तत्र गात्रं चैव निगूहतः ।।
नासावंशे तया दष्टो भुजङ्ग्या च तदन्तरे ।।१५।।
मयापि विषदिग्धेन निहता च भुजंगमा ।।
उभौ प्राणान्परित्यज्य उभौ पंचत्वमागतौ ।।१६।।
मृतौ स्व काले राजेन्द्र क्रोधमोहपरिच्युतौ ।।
जातोऽहं तव पुत्रस्तु कोसलाधिपतेः प्रियः ।। १७ ।।
एवं मे घातितः सर्पस्तत्क्रोधवशनिश्चयात् ।।
एतद्गुह्यं मया राजन्यत्त्वया पूर्वपृच्छितम् ।। १८ ।।
राजपुत्रवचः श्रुत्वा वधूर्वचनमब्रवीत् ।।
अहं सर्पी महाराज पुरा निर्माल्यकूटके ।। १९ ।।
युध्यमाना तु तेनैव नकुलेन निपातिता ।।
प्राग्ज्योतिषकुले जाता जाता तव वधूस्ततः।।126.२२०।।
तेन क्रोधेन नृपते मूर्च्छिता मरणं प्रति ।।
घातितो नकुलश्चैतद्गुह्यं प्रोक्तं तव प्रभो ।। २१ ।।
वधूपुत्रवचः श्रुत्वा स राजा संशितव्रतः ।।
मायातीर्थं समासाद्य ततः पंचत्वमागतः ।। २२ ।।
राजपुत्रो विशालाक्षी राजपुत्री यशस्विनी ।। २३ ।।
पौण्डरीके ततस्तीर्थे तेऽपि पंचत्वमागताः ।। २४ ।।
गतास्ते परमं स्थानं यत्र देवो जनार्द्दनः ।।
राजा वा राजपुत्रश्च राजपुत्री यशस्विनी ।। २५ ।।
मम चैव प्रसादेन तपसश्च बलेन च ।।
कृत्वा सुदुष्करं कर्म श्वेतद्वीपमुपागताः ।। २६ ।।
योऽसौ परिजनो देवि कृत्वा तु सुकृतं महत् ।।
सोऽपि सिद्धिं परा प्राप्तः श्वेतद्द्वीपमुपागतः ।।२७।।
एष ते कथिता देवि पुष्टिः कुब्जाम्रकस्य च ।।
तस्य ब्राह्मणमुख्यस्य रैभ्यस्य कथिता मया ।। २८ ।।
एतत्पुण्यं परं जप्यं चातुर्वर्ण्येन सर्वदा ।।
सर्वकर्मसु मुख्यं च एतदेव विशिष्यते ।।२९।।
तेजसां च महत्तेजस्तपसां च महत्तपः ।।
एतन्न मूर्खमध्ये तु पठेच्चापि कदाचन ।।126.२३०।।

न पठेद्गोघ्नमध्ये तु वेदवेदाङ्गनिन्दके ।।
न पठेद्गुरुविद्विष्टे न पठेच्छास्त्रदूषके ।। ३१ ।।
पठेद्भागवतानां च मध्ये दीक्षावतां तथा ।।
य एतत्पठते भूमे कल्यमुत्थाय मानवः ।। ३२ ।। ।
तारयेच्च स्वकुलजान् दशपूर्वान्दशापरान् ।।
एतत्तु पठमानो वै यस्तु प्राणान्विमुंचति ।। ३३ ।।
चतुर्भुजश्च जायेत मल्लोकेषु प्रतिष्ठितः ।।
एतत्ते कथितं भूमे स्थानं कुब्जाम्रके तथा ।।
मम भक्तसुखार्थाय किमन्यत्परिपृच्छसि ।। २३४ ।।
इति श्रीवराहपुराणे भगवच्छास्त्रे कुब्जाम्रक माहात्म्ये रैभ्यानुग्रहणं नाम
षड्विंशत्यधिकशततमोऽध्यायः ।। १२६।।

अथ ब्राह्मणदीक्षासूत्रवर्णनम् ।।
सूत उवाच ।।
एवं धर्मास्ततः श्रुत्वा बहुमोक्षार्थकारणात् ।।
प्रत्युवाच ततो भूमिर्लोकनाथं जनार्दनम् ।। १ ।।
अहो प्रभावः क्षेत्रस्य कथ्यमानोऽतिपुष्कलम् .।।
अहं भारभराक्रान्ता लघुर्जातास्मि धावती ।। २ ।।
विमोहा च विशुद्धा च शृण्वानाहं त्विमां प्रभो ।।
अहं लोकेषु विख्याता मुखात्तव विनिस्सृता ।। ३ ।।
पुनः पृच्छामि ते देव संशयं धर्मसंहितम् ।।
येन धर्मविधानेन दीक्षा प्राप्यते पुष्कला ।।४।।
एतन्मे परमं गुह्यं परं कौतूहलं च मे ।।
धर्मसंग्रहणार्थाय तद्भवान्वक्तुमर्हसि ।। ५ ।।
ततो महीवचः श्रुत्वा मेघदुन्दुभिनिःस्वनः ।।
वराहरूपी भगवान्प्रत्युवाच वसुन्धराम् ।। ६ ।।
श्रीवराह उवाच ।।
शृणु तत्त्वेन मे देवि मम धर्मं सनातनम् ।।
देवा एतन्न जानन्ति ये च योगव्रते स्थिता। ।। ७ ।।
एतं धर्मं वरारोहे मङ्गल्यं मुखनिःसृतम् ।।
अहमेको विजानामि मद्भक्ता ये जना भुवि ।। ८।।
यच्च पृच्छसि मे भद्रे दीक्षां भागवतीं कथाम् ।।
तच्छृणुष्व वरारोहे कर्मसंसारमोक्षणम् ।।९।।
मयोक्तां लभते कश्चिद्दीक्षां चैव सुखावहाम् ।।
चातुर्वर्ण्यविधानेन तां दीक्षां शृणु सुन्दरि ।। 127.१० ।।
हरन्ति मनुजा येन गर्भसंसारसागरात् ।।
मयि शान्तं मनः कृत्वा तदुत्कृष्टं च सुन्दरि ।। ११ ।।
अभिगच्छेद्गुरुं देवि शाधि शिष्योऽस्मि मां गुरो ।।
तदाज्ञां तु पुरस्कृत्य दीक्षाद्रव्यानथाहरेत् ।। १२ ।।
लाजा मधु कुशाश्चैव घृतं चामृतसन्निभम् ।।
गन्धं सुमनसो धूपं दीपं प्रापणकादिकम् ।। १३ ।।
कृष्णाजिनं च पालाशं दण्डं चैव कमण्डलुम् ।।
घटं वासः पादुके च शुक्लयज्ञोपवीतकम् ।। १४ ।।
यन्त्रिकामर्घपात्रं च चरुस्थालीं सदर्विकाम् ।।
तिलव्रीहियवांश्चैव विविधं च फलोदकम् ।। १५ ।।

भक्ष्यभोज्यान्नपानं च कर्मण्यांश्चैव संचयान् ।।
दीक्षिता यदि भुञ्जन्ति मम कर्मपरायणाः ।। १६ ।।
यानि कानि च बीजानि रत्नानि विविधानि च ।।
कांचकादीनि सुश्रोणि तानिं शीघ्रमुपाहरेत् ।। १७ ।।
एतान्येवोपहार्याणि गुरुमूले ततः परम् ।।
स्नात्वा मङ्गलसंयुक्तो दीक्षाकामश्च ब्राह्मणः ।। १८ ।।
गुरोस्तु चरणौ गृह्य ब्रूहि किं करवाणि ते ।।
ततस्तु गुर्वनुज्ञातो वेदिं कुर्याच्च पुष्कलाम् ।। १९ ।।
ब्राह्मणो दीक्षमाणस्तु चतुरस्रां तु षोडशहस्तां कृत्वा तत्र च कलशोपरि युञ्जेत् ।। 127.२० ।।
प्रतिष्ठाप्य विधानेन धान्योपरिदृढं नवम् ।।
जलेन पूरितं मन्त्रैः पुष्पपल्लवशोभितम् ।। २१ ।।
तस्योपरि तिलैः पूर्णपात्रं स्थाप्य विधानतः ।।
पूजयेन्मां गुरुं द्रव्यैः शिष्येणैवोपकल्पितैः ।। २२ ।।
तत्रार्चनविधिं कृत्वा गुरुधर्मविनिश्चयः ।।
पूर्वोक्तानि च द्रव्याणि वेदिमध्यमुपाहरेत् ।। २३ ।।
चतुरः कलशान्दद्याच्चतुष्पार्श्वेषु सुन्दरि ।।
वारिपूर्णान्द्विजाञ्छुद्धान्सहकारविभूषितान् ।। २४ ।।
सर्वतः शुक्लसूत्रेण वेष्टयेत तथानघे ।।
पूर्ण पात्राणि चत्वारि चतुष्पार्श्वेषु स्थापयेत् ।। २५ ।।
एवं मन्त्रं ततः कृत्वा दद्याद्दीक्षाप्रयोजकः ।।
स च मन्त्रो यथान्यायं येन वा तुष्यते गुरुः ।। २६ ।।
यथान्यायं च संगृह्य गुरुकर्मविनिश्चितः ।।
प्रपद्यावसथं विष्णोर्दीक्षाणां परिकाङ्क्षिणः ।। २७ ।।
उपस्पृश्य यथान्यायं भूत्वा पूर्वमुखस्ततः ।।
सर्वांस्तु श्रावयेच्छिष्यान्दीक्षणार्थं न संशयः ।। २८ ।।
यस्तु भागवतान्दृष्ट्वा स्वयं भागवतः शुचिः ।।
अभ्युत्थानं न कुर्वीत तेनाहं तु विहिंसितः ।। २९ ।।
कन्यां दत्त्वा पुनस्तांस्तु कर्मणा नोपपादयेत् ।।
अष्टौ पितृगणास्तेन हिंसिता नात्र संशयः ।। 127.३० ।।
भार्यां प्रियसखीं यस्तु साध्वीं हिंसति निर्घृणः ।।
न तेन तां प्राप्नुवन्ति हिंसका दुष्टयोनिजाः ।। ३१ ।।
ब्रह्मघ्नश्च कृतघ्नश्च गोघ्नश्च कृतपातकाः ।।
एताञ्छिष्यान् विवर्जेत उक्ता ये चान्यपातकाः ।। ३२ ।।

बिल्ववृक्षोदुम्बरौ च तथा चान्ये कदाचन ।।
कर्मण्याश्चैव ये वृक्षा न च्छेत्तव्याः कदाचन ।। ३३ ।।
यदीच्छेत्परमां सिद्धिं मोक्षधर्मं सनातनम् ।।
भक्ष्याभक्ष्यं च तं शिष्यं वेदितव्यं तदन्तरे ।। ३४ ।।
करीरस्य वधः शस्तः फलान्यौदुम्बरस्य च ।।
सद्योभक्षा भवेत्तेन अभक्ष्या पूतिवासिका ।। ३५ ।।
न भक्षणीयं वाराहं मांसं मत्स्याश्च सर्वशः ।।
अभक्ष्या ब्राह्मणैरेते दीक्षितैश्च न संशयः ।।३६।।
परीवादं न कुर्वीत न हिंसां वा कदाचन ।।
पैशुन्यं न च कर्त्तव्यं स्तैन्यं वापि कदाचन ।। ३७ ।।
अतिथिं चागतं दृष्ट्वा दूराध्वानं गतं क्वचित् ।।
संविभागस्तु कर्त्तव्यो येन केनापि पुत्रक ।।३८।।
गुरुपत्नी राजपत्नी ब्राह्मणस्त्री कदाचन ।।
मनसापि न गन्तव्या एवं विष्णुः प्रभाषते ।। ३९ ।।
कनकादीनि रत्नानि यौवनस्था च कामिनी ।।
तत्र चित्तं न कर्तव्यमेवं विष्णुः प्रभाषते ।। 127.४० ।।
दृष्ट्वा परस्य भाग्यानि आत्मनो व्यसनं तथा ।।
तत्र मन्युर्न कर्त्तव्यं एवं धर्मः सनातनः ।। ४१ ।।
एवं ततः श्रावयीत दीक्षाकामं वसुन्धरे ।।
छत्रं चोपानहं चैव मनसा चोपकल्पयेत् ।।४२।।
द्वे द्वे औदुम्बरस्य पत्रे वेदिमध्ये तु स्थापयेत् ।।
क्षुरं चैव वरारोहे जलपूर्णं च भाजनम् ।। ४३ ।।
ममावाहनपूर्वं तु मन्त्रेण विधिनार्चयेत् ।।
मन्त्रः-
ॐ सप्त सागराश्च सप्तद्वीपानि सप्त पवर्ताश्च दश स्वर्गसहस्राश्च समस्ताश्च नमोऽस्तु सर्वास्ते हृदये वसन्ति।।
यश्चैतद्वर्षति पुनरुन्नमति।।४४।।
ॐ भगवन्वासुदेव ममैतत्सारय युक्तं वराहरूपसृष्टेन पृथिव्यां तु मन्त्रानुस्मरणं च आज्ञापयानुभावनास्माकमाज्ञप्तमनुचिन्तयित्वा भगवन्नागच्छ दीक्षाकामविप्रस्त्वत्प्रसादात्तु दीक्षति ।। ४५ ।।
एतन्मन्त्रमुदाहृत्य शिरसा जानुभ्यामवनिं गतेन भवितव्यम् ।। ४६ ।।
ॐ स्वागतं स्वागतवानिति ।। ४७ ।।
तत एतेन मन्त्रेण आनयित्वा वसुन्धरे ।।

अर्घ्यं पाद्यं च दातव्यं मन्त्रेण विधिनिश्चयात् ।।४८।।
मन्त्रः-
अकृतघ्ने देवानसुराकृतघ्नरुद्रेण ब्राह्मणाय च लब्धं सर्वमिमां भगवतेऽस्तु दत्तं प्रतिगृह्णीष्व च लोकनाथ ।। ४९ ।।
एवं भूमे ततो दत्त्वा अर्घ्यं पाद्यं च कर्मणा।।
क्षुरं गृहीत्वा यथान्यायमिमं मन्त्र मुदीरयेत् ।।127.५० ।।
मन्त्रः –
एवं वरुणः पातु शिष्य ते वपतः शिरः ।।
जलेन विष्णुयुक्तेन दीक्षा संसारमोक्षणम्।।५१।।
एकस्य कलशं दद्यात्कर्मकारस्य सुन्दरि ।।
निष्कलं तु शिरः कृत्वा शोणितेन विवर्जितम् ।।५२।।
पुनः स्नानं ततः कृत्वा शीघ्रमेव न संशयः।।
एतस्य विधिवत्कृत्वा दीक्षाकामस्य सुन्दरि।।५३।।
दत्त्वा संसारमोक्षाय सर्वकामविनिश्चितः।।
जानुभ्यामवनिं गत्वा इमं मन्त्रमुदीरयेत्।। ५४।।
मन्त्रः -
ॐ वेदाम्यहं भागवतांश्च सर्वान् सुदीक्षिता ये गुरवश्च सर्वे ।।
विष्णुप्रसादेन च लब्धदीक्षा मम प्रसीदन्तु नमामि सर्वान् ।।५५।
नत्वा तु भगवद्भक्तान् प्रज्वाल्य च हुताशनम् ।।
घृतेन मधुमिश्रेण लाजाकृष्णतिलैस्तथा ।।५६।।
सप्तवारांस्ततो दत्त्वा विंशतिं च तिलोदनम् ।।
जानुभ्यामवनिं गत्वा इमं मन्त्रमुदाहरेत्।।५७।। मन्त्रः –
अश्विनौ दिशः सोमसूर्यौ साक्षिमात्रं वयं प्रसन्नाः शृण्वन्तु मे सत्यवाक्यं वदामि ।।५८।।
सत्येन धार्यते भूमिर्भूमिः सत्येन तिष्ठति ।।
सत्येन गच्छते सूर्यो वायुः सत्येन वाति च।।५९ ।।
एवं सत्यं ततः कृत्वा ब्राह्मणा वीक्षणं पुनः।।
गुरुं प्रसादेयत्तत्र मन्त्रेण विधिनार्च्चयन् ।। 127.६० ।।
तिस्रः प्रदक्षिणाः कृत्वा देवं भागवतं गुरुम् ।।
गुरुपादौ तु संगृह्य इमं मन्त्रमुदीरयेत् ।। ६१ ।।
मन्त्रः –
गुरुदेवप्रसादेन लब्धा दीक्षा यदृच्छया ।।
यच्चैवापकृतं किंचिद्गुरुर्मर्षयतां मम ।। ६२ ।।
एवं प्रसादयित्वा तु शिष्यो मन्त्रेण सुन्दरि ।।

वेदिमध्ये स्थापयित्वा भूत्वा पूर्वमुखस्ततः ।। ६३ ।।
शिष्यमेव यतो दृष्ट्वा गृहीत्वा च कमण्डलुम् ।।
शुक्लयज्ञोपवीतं च इमं मन्त्रमुदाहरेत् ।। ६४ ।।
मन्त्रः –
विष्णुप्रसादेन गतोऽसि सिद्धिं प्राप्ता च दीक्षा सकमण्डलुश्च ।।
गृहीत्वा तु कराभ्यां युक्तोऽसि कर्मणा क्रियायां चैव ।। ६५ ।।
ततो मुखपदं कृत्वा दीक्षितो गुरुणा तथा ।।
सर्वप्रदक्षिणं कृत्वा इमं मन्त्रमुदाहरेत् ।। ६६ ।।
अधोऽधो भूत्वा यद्यहं भ्राम्यल्लँब्धो गुरुर्विष्णुदीक्षा च लब्धा ।।
तव प्रसादाच्च गुरो यथा च ।। ६७ ।।
एतेन मन्त्रेण मुखपदं कारयेत् ।।
शौचसेके वै कुर्याद्देवान्तन्तुवाससम् ।। ६८ ।।
एवं वै वास आदत्ते गृह्ण वत्स कमण्डलुम् ।।
इमं लोकेषु विख्यातं शोधनं सर्वकर्मसु ।। ६९ ।।
मन्त्रः –
गृह्णीष्व गन्धपात्राणि सर्वगन्धं सुखोचितम् ।।
सर्ववैष्णवकं शुद्धं सर्वसंसारमोक्षणम् ।। 127.७० ।।
मधुपर्कं गृहीत्वा च त्विमं मन्त्रमुदीरयेत् ।।
मन्त्रः –
गृहाण मधुपर्कं च प्रार्थकाय विशोधनम् ।। ७१ ।।
ततो गृहीत्वा चरणौ गुरोर्यत्नात्सुतोषयेत् ।।
शिरसा चाञ्जलिं कृत्वा मनश्चैव सुसंयतम् ।।
गुरूपदिष्टं सन्धार्य इमं मन्त्रमुदीरयेत् ।। ७२ ।।
मन्त्रः –
शृण्वन्तु मे भागवतास्तु सर्वे गुरुश्च मे सर्वकामक्षयं चकार ।।
अहं शिष्यो दासभूतस्तथैव देवसमो गुरुश्च मे तथोपपन्नम् ।। ७३ ।।
एषागमे ब्राह्मणस्य दीक्षा भूमे ह्युदाहृता ।।
त्रयाणामथ वर्णानां मम दीक्षाविधीञ्छृणु ।। ७४ ।।
एतेनैव विधानेन दीक्षयेत वसुन्धरे ।।
उभौ च प्राप्नुतां सिद्धिमाचार्यः शिष्य एव च ।। ७९ ।।
इति श्रीवराहपुराणे ब्राह्मणदीक्षासूत्रं नाम सप्तविंशत्यधिकशततमोऽध्यायः ।। १२७ ।।

अथ कङ्कताञ्जनदर्पणम् ।।

श्रीवराह उवाच ।।

क्षत्रियस्य प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।।

त्यक्त्वा प्रहरणान्सर्वान्यत्किंचित्पूर्वशिक्षितम् ।। १ ।।

पूर्वमन्त्रेण मे भूमे तस्य दीक्षां च कारयेत् ।।

मया च पूर्वमुक्तानि यानि संसारकाणि च ।। २ ।।

तानि सर्वाणि चानीय एकं वर्ज्यं यशस्विनि ।।

न दद्यात्कृष्णसारस्य चर्म तत्र कदाचन ।। ३।।

पालाशं दण्डकाष्ठं च दीक्षायां न तु कारयेत् ।।

छागस्य चैव कृष्णस्य चर्म तत्र प्रदापयेत् ।। ४ ।।

आश्वत्थं दण्डकाष्ठं तु दीक्षायां तदनन्तरम् ।।

कृत्वा द्वादशहस्तां तु वेदिं तत्रोपलेपयेत् ।। ५ ।।

सर्वं ममोक्तं कर्त्तव्यं यच्च मे पूर्वभाषितम् ।।

एवं क्षत्रियदीक्षायां सर्वं सम्पाद्य यत्नतः ।। ६ ।।

चरणौ मम संगृह्य इमं मन्त्रमुदाहरेत् ।। ७ ।।

मन्त्रः –

त्यक्तानि विष्णो शस्त्राणि त्यक्तं सर्वं क्षत्रियकर्म सर्वम् ।।

त्यक्त्वा देवं विष्णुं प्रपन्नोऽथ संसाराद्वै जन्मनां तारयस्व ।। ८ ।।

एवं ततो वचश्चोक्त्वा क्षत्रियो मम पार्श्वतः ।।

उभौ च चरणौ गृह्य इमं मन्त्रमुदीरयेत् ।। ९ ।।

मन्त्रः –

नाहं शस्त्रं देवदेव स्मृशामि परापवादं न च देव ब्रवीमि ।।

कर्म करोमि संसारमोक्षणं त्वया चोक्तमेव वराहसंस्थान् ।। 128.१० ।।

तत एवं वचो ब्रूते सर्वं चैवात्र पूजयेत् ।।

विविधैर्गन्धपत्रैश्च धूपैश्चैव यथोदितम् ।। ११ ।।

यथोक्तेनैव तान्भूमे भोजयेत्तदनन्तरम् ।।

शुद्धान्भागवतांश्चैव एवमेतन्न संशयः ।। १२ ।।

एषा वै क्षत्रिये दीक्षा देवि संसारमोक्षणम् ।।

मत्प्रसादेन कर्तव्यं यदीच्छेत्सिद्धिमुत्तमाम् ।। १३ ।।

वैश्यस्य चैव वक्ष्यामि शृणु तत्त्वेन सुन्दरि ।।

दीक्षा च यादृशी तस्य यथा भवति सुन्दरि ।। १४ ।।

त्यक्त्वा तु वैश्यकर्माणि मम कर्मपरायणः ।।

यथा च लभते सिद्धिं तृतीया वर्णसंस्थितिः ।। १५ ।।

सर्वं तत्र समानीय यन्मया पूर्वभाषितम् ।।
दशहस्तां ततः कृत्वा वेदिं वेदविचेतितः ।। १६ ।।
लेपयेद्गोमयेनादौ पूर्वन्यायेन तत्र वै ।।
चर्मणापि तु छागस्य स्वगात्रं परिवेष्टयेत्।। १७ ।।
उदुम्बरं दन्तकाष्ठं गृहीत्वा दक्षिणे करे ।।
शुद्धभागवतानां च कृत्वा त्रिः परिवर्त्तनम् ।। १८ ।।
जानुभ्यामवनिङ्गत्वा इमं मन्त्रमुदीरयेत् ।। १९ ।।
मन्त्रः –
अहं हि वैश्यो भवन्तमुपागतः प्रमुच्य कर्माणि च वैश्ययोगम् ।।
दीक्षा च लब्धा भगवत्प्रसादात्प्रसीदतां मे भवबन्धमोक्षणम् ।। 128.२० ।।
मामेवं सोपि चोक्त्वा वै मम कर्मप्रसादवान् ।।
गुरोश्च चरणौ गृह्य इमं मन्त्रमुदाहरेत् ।। २१ ।।
त्यक्त्वा वै कृषिगोरक्षावाणिज्यक्रयविक्रयम् ।।
लब्धा च त्वत्प्रसादेन विष्णुदीक्षा मयाऽधुना ।। २२ ।।
देवाभिवादनं कृत्वा पुरो भागवतेषु च ।।
पश्चात्तु भोजनं दद्यादपराधबहिष्कृतम् ।। २३ ।।
एवं दीक्षा तु वैश्यानां मम मार्गानुसारिणाम् ।।
येन मुच्यन्ति सुश्रोणि घोरसंसारसागरात् ।। २४ ।।
शूद्रस्यापि प्रवक्ष्यामि मद्भक्तस्य वराङ्गने ।।
यस्तु दीक्षां समासाद्य मुच्यते सर्वकिल्बिषैः ।।२५।।
सर्वसंस्कारद्रव्याणि मया पूर्वोदितानि च ।।
दीक्षाकामस्य शूद्रस्य शीघ्रं तानि प्रकल्पयेत् ।। २६ ।।
अष्टहस्तां ततो देवि सँल्लिप्य नीयतां ततः ।।
चर्म नीलस्य छागस्य कल्पयेच्छूद्रयोनये ।। २७ ।
दण्डं च वैष्णवं दद्यान्नीलं वस्त्रं च तस्य वै ।।
एवं गृहीत्वा शूद्रोऽपि दीक्षायाः कारणं परम् ।। २८ ।।
ममैव शरणं गत्वा इमं मन्त्रमुदाहरेत् ।।
मन्त्रः –
शूद्रोऽहं शूद्रकर्माणि मुक्त्वाऽभक्ष्यं च सर्वशः ।। २०3 ।।
भक्ष्याभक्ष्यं ततस्त्यक्त्वा त्यक्त्वा वै शूद्रकर्म च ।।
एवं वदेत्ततो देवं शूद्रो दीक्षाभिकांक्षिणम् ।। 128.३० ।।
विमुक्तः सर्वपापेभ्यो लब्धसंज्ञो गतस्पृहः ।।
उभौ तौ चरणौ गृह्य गुरोर्वै तदनन्तरम् ।। ३१ ।।

गुरोः प्रसादनार्थाय इमं मन्त्रमुदाहरेत् । ३२ ।
मन्त्रः –
विष्णुप्रसादे गुह्यं प्रसन्नात्पूर्ववच्च लब्धा चैव संसारमोक्षणाय करोमि कर्म प्रसीद ।। ३३ ।।
एतन्मन्त्रं समुच्चार्य कुर्यात्तत्र प्रदक्षिणम् ।।
चतुरश्च यथान्यायं पुनश्चैवाभिवादयेत् ।। ।। ३४ ।।
अनन्तरं ततः कुर्याद्गन्धमाल्येन चार्चनम् ।।
भोजयेच्च यथान्यायमपराधविवर्ज्जितः ।। ३५ ।।
दीक्षा एषा च शूद्राणामुपचारश्च ईदृशः ।।
चतुर्णामपि वर्णानां दुःखसंसारमोक्षणम् ।। ३६ ।।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।।
चतुर्णामपि वर्णानां यथा छत्रं प्रदीयते ।। ३७ ।।
ब्राह्मणे पाण्डुरं छत्रं क्षत्रिये रक्तमेव च ।।
वैश्याय पीतं वै दद्यान्नीलं शूद्राय दापयेत् ।। ३८ ।।
सूत उवाच ।।
चातुर्वर्ण्यस्य श्रुत्वा वै सा मही संशितव्रता ।।
वराहं पुनरप्याह नत्वा सा धरणी तदा ।। ३९ ।।
धरोवाच ।।
श्रुता दीक्षा यथान्यायं चातुर्वर्ण्यस्य केशव ।।
दीक्षितैः किं नु कर्त्तव्यं तव कर्मपरायणैः ।। 128.४० ।।
ततो महीवचः श्रुत्वा मेघदुन्दुभिनिःस्वनः ।।
वराहरूपी भगवानुवाच स महाद्युतिः ।। ४१ ।।
श्रीवराह उवाच ।।
शृणु तत्त्वेन कल्याणि यन्मां त्वं परिपृच्छसि ।।
सर्वत्र चिन्तनीयोऽहं गुह्यमेव गणान्तिकम् ।। ४२ ।।
नारायणवचः श्रुत्वा धरणी शंसितव्रता ।।
हृष्टतुष्टमनास्तत्र श्रुत्वा तच्च महौजसम् ।। ४३ ।।
शुचिर्भागवतश्रेष्ठा तव कर्मणि नित्यशः ।।
ततः कमलपत्राक्षी भक्ता भक्तेषु वत्सला ।। ४४ ।।
कराभ्यामञ्जलिं कृत्वा नारायणमथाब्रवीत् ।। ४५ ।।
धरण्युवाच ।।
त्वद्भक्तेन महाभाग विधिना दीक्षितेन च ।।
तव चिन्तापरेणात्र किं कर्त्तव्यं च माधव ।। ४६।।
केन चिन्तयितव्यस्त्वमचिन्त्यो मानुषैः परः ।।

किंच भागवतैः कार्यं यथावित्तं न शक्यते ।।४७।।
ततो भूम्या वचः श्रुत्वा आदिरव्यक्तसम्भवः ।।
मधुरं स्वरमादाय प्रत्युवाच वसुन्धराम् ।। ४८ ।।
श्रीवराह उवाच ।।
देवि तत्त्वेन वक्ष्यामि यन्मां त्वं परिपृच्छसि।।
येन चिन्तयसे चिन्तां मम कर्मपरायणा ।। ४९ ।।
एषा गणान्तिका नाम दीक्षाऽङ्गबीजनिःसृता ।।
एतद्गुह्यां महाभागे मम चिन्तां विचिन्तयेत् ।। 128.५० ।।
दीक्षितेन तु शुद्धेन मम निश्चितकर्मणा ।।
गृहीतव्यं विशालाक्षि मन्त्रेण विधिनात्र वै ।। ५१ ।।
यस्तु भागवतो भूत्वा तद्गृह्णाति गणान्तिकाम् ।।
जनस्य दर्शनस्पर्शसंयुक्तां वामसंयुताम् ।। ५२ ।।
तस्य धर्मो न विद्येत दीक्षा तस्य महाफला ।।
यस्तु गृह्णाति सुश्रोणि मन्त्रपूतां गणान्तिकाम् ।। ५३ ।।
आसुरी नाम सा दीक्षा यया धर्मः प्रवर्त्तते ।।
यस्माद्गणान्तिकां गुह्यां चिन्तयेच्छुद्धमानसः ।। ५४ ।।
गुह्यां गणान्तिकां यो मां चिन्तयेत्स बुधोत्तमः ।।
जन्मान्तरसहस्राणि चिन्तिता तेन तेन सः ।। ५५ ।।
ग्रहणस्य प्रवक्ष्यामि यथा शिष्याय दीयते ।।
मन्त्रं लोकसुखार्थाय तच्छृणुष्व वसुन्धरे ।। ५६ ।।
कौमुदस्य तु मासस्य मार्गशीर्षस्य वाप्यथ ।। ।
वैशाखस्यापि मासस्य शुक्लपक्षे तु द्वादशी ।। ५७ ।।
कुर्यान्निरामिषं तत्र दिनानि त्रीणि निश्चितः ।।
तस्मिन्गणान्तिकं ग्राह्यं मम धर्मविनिश्चयात् ।। ५८ ।।
ममाग्रतो वरारोहे प्रज्वाल्य च हुताशनम् ।।
कुशैरास्तरणं कृत्वा स्थापयित्वा गणान्तिकम् ।। ५९ ।।
ततः शिष्यो गुरुश्चैव दीक्षितः शुचिरुत्तमः ।।
नमो नारायणेत्युक्त्वा इमं मन्त्रमुदीरयेत् ।। 128.६० ।।
मन्त्रः –
या धारिता पूर्वपितामहेन ब्रह्मण्यदेवेन भवोद्भवेन ।।
नारायणाद्दक्षिणगात्रजातां हे शिष्य गृह्णीष्व स वै त्वमेव ।। ६१ ।।
तत एतेन मन्त्रेण गुरुर्गृह्य गणान्तिकम् ।।
शिष्याय दत्त्वा स्निग्धाय इमं मन्त्रमुदीरयेत् ।। ६२ ।।

मन्त्रः –
नारायणस्य दक्षिणगात्रजातां स्वशिष्य गृह्णीष्व समयेन देवीम् ।।
एतद्विचिन्त्यापर एव भूत्वा भवे पुनर्भावनमेति नैव ।। ६३ ।।
धरण्युवाच ।।
स्नानोपकल्पनान्तेषु किं कर्त्तव्यं नु माधव ।।
प्रसाधनविधिं चैव केन मन्त्रेण कल्पयेत् ।। ६९४ ।।
अकर्मण्येन मुच्येत तव कर्मपरायणः ।।
ततो भूम्या वचः श्रुत्वा लोकनाथो जनार्द्दनः ।। ६५ ।।
धर्मसंयुक्तवाक्येन प्रत्युवाच वसुन्धराम् ।। ६६ ।।
श्रीवराह उवाच ।।
देवि तत्त्वेन वक्ष्यामि यन्मां त्वं परिपृच्छसि ।।
स्नानस्यैवोपचाराणि यानि कुर्वन्ति कर्म्मिणः ।। ६७ ।।
वृत्तेष्वेवोपचारेषु जलप्राधानिकेषु च ।।
कङ्कतीं चाञ्जनं चैव दर्पणं चैव सुन्दरि ।। ६८ ।।
यथा मन्त्रेण दातव्यं तच्छृणुष्व वसुन्धरे ।।
स्पृष्ट्वा तु मम गात्राणि क्षौमवस्त्रेण संवृतः ।। ६९ ।।
अञ्जनं कङ्कतीं चैव शीघ्रमेव प्रसादयेत् ।।
ततो जानुस्थितो भूत्वा मम कर्मपरायणः ।। 128.७० ।।
अञ्जलौ कङ्कतीं गृह्य इमं मन्त्रमुदाहरेत् ।।७१ ।।
मन्त्रः –
एतां कङ्कतीमञ्जलिस्थां प्रगृह्य प्रसीद नारायण शिरः प्रसाधि हि ।। ७२ ।।
महानुभाव विश्वनेत्रे स्वनेत्रे याभ्यां पश्यसे त्वं त्रिलोकीम् ।।
लोकप्रभो सर्वलोकप्रधान एषो जनमञ्जनं लोकनाथ ।। ७३ ।।
ततः संस्नापयेद्देवं मन्त्रेणानेन सुव्रतम् ।। ७४ ।।
मन्त्रः –
देवदेव स्नानीयमिदं मम कल्पितं सुवर्णकलशं गृहाण प्रसीद एषोऽञ्जलिर्मया परिकल्पितः स्नाहि स्नाहीति ।। ७५ ।।
नमो नारायणेत्युक्त्वा इमं मन्त्रमुदीरयेत् ।। ७६।।
मन्त्रः –
एषा मया माधव त्वत्प्रसादाद्गुरुप्रसादाच्च हि मन्त्रपूजा ।।
प्राप्ता ममैषा वै गणान्तिका च भवेदधर्मो न च मे कदाचित ।। ७४ ।।
य एतेन विधानेन मम कर्मणि दीक्षितः ।।
गुरोर्गृहीत्वा महतो मम लोकाय गच्छति ।।

कुशिष्याय न दातव्या पिशुनाय शठाय च ।। ७८ ।।
एषा चैव वरारोहे गृहीत्वा गणनान्तिका ।।
सुशिष्याय च दातव्या हस्ते चैव गणान्तिका ।।७९।।
उत्तमाष्टाधिकशतं पंचाशत्तुर्यमध्यमा ।।
तदर्द्धं स्यात्कनिष्ठापि परिमाणेन सुन्दरि ।।128.८०।।
रुद्राक्षैरुत्तमा सा तु मध्यमा पुत्रजीवकैः ।।
ज्ञेया कनिष्ठा पद्माक्षैर्देवि ते कथिता मया ।। ८१ ।।
एतत्कश्चिन्न जानाति जन्मान्तरशतैरपि ।।
सर्वलोकहितां शुद्धां मोक्षकामां गणान्तिकाम् ।। ८२ ।।
नोच्छिष्टः संस्पृशेत्तां तु स्त्रीणां हस्ते न कारयेत् ।।
आकाशे स्थापनं कुर्यान्न च वामेन संस्पृशेत् ।। ८३ ।।
न दर्शयेच्च कस्यापि चिन्तयित्वा तु पूजयेत् ।।
एतत्ते परमं गुह्यमाख्यातं मोक्षदायकम् ।। ८४ ।।
एवं हि विधिपूर्वेण पालयेत गणान्तिकाम् ।।
विशुद्धो मम भक्तश्च मम लोकं स गच्छति ।। ८५ ।।
एवं विष्णोर्वचः श्रुत्वा धरणी संशितव्रता ।।
प्रत्युवाच परं श्रेष्ठं लोकनाथं महौजसम् ।। ८६ ।।
दर्पणं ते कथं देयं तन्ममाख्याहि माधव ।।
येन तुष्टो निजं रूपं पश्यसे चिन्तितः प्रभो ।। ८७ ।।
धरण्यास्तद्वचः श्रुत्वा वराहः पुनरब्रवीत् ।।
शृणु मे दर्पणविधिं यथावद्देवि सुव्रते ।।८८।।
नमो नारायणेत्युक्त्वा इमं मन्त्रमुदीरयेत् ।। ८९ ।।
मन्त्रः –
श्रुतिर्भागवती श्रेष्ठा श्रुती अग्निद्विजश्च तव मुखं नासेऽश्विनौ नयने चन्द्रसूर्यौ मुखं च चन्द्र इव गात्राणि जगत्प्रधानानीमं च दर्पणं पश्य पश्य रूपम् ।। 128.९० ।।
य एतेन विधानेन मम कर्मपरायणः ।।
करोति मम कर्माणि तारितं कुलसप्तकम् ।। ९१ ।।
एतेन मन्त्रेण वै भूमे उपचारस्तु ईदृशः।।
हृष्टतुष्टेन कर्त्तव्यो यदीच्छेत्परमां गतिम् ।।९२।।
इति श्रीवराहपुराणे कङ्कताञ्जनदर्पणनाम अष्टाविंशत्यधिकशततमोऽध्यायः ।।१२८।।

अथ चतुर्वर्णदीक्षा ।।
श्रीवराह उवाच ।।
भूषितालंकृतं कृत्वा मम कर्मपरायणः ।।
शुक्लं यज्ञोपवीतं च देयं नवगुणं तथा।।१।।
शिरसा चाञ्जलिं कृत्वा वसुधा पुनरब्रवीत् ।।
धरण्युवाच ।।
एतन्मां परमं गुह्यं तद्भक्तां वक्तुमर्हसि ।।
सन्ध्यां वै केन मन्त्रेण तव कर्मपरायणाम् ।।
वद भागवतीं शुद्धां तव कर्मविनिश्चिताम् ।।
ततो भूमिवचः श्रुत्वा भूतानां प्रभवोऽव्ययः ।।
वराहरूपो भगवान्प्रत्युवाच वसुन्धराम्।।
श्रीवराह उवाच।।
माधवि तत्त्वेन यन्मां त्वं परिपृच्छसि।।
कथयिष्यामि ते भद्रे प्रवरं गुह्यमुत्तमम् ।।
यथावद्विदितं भूपैः पुण्या भागवताः शुभाः ।।
कृत्वा तु मम कर्माणि शुचिसंसारमोक्षणीम् ।।
कुर्वीतैव परां सन्ध्यां यथावदिति निश्चितम् ।।
जलाञ्जलिं ततो गृह्य मम भक्त्या व्यवस्थितः ।।
मुहूर्तध्यानमास्थाय इमं मन्त्रमुदाहरेत् ।।
मन्त्रः - भवोद्भवमादिव्यक्तरूपमात्रं सर्वे देवा ब्रह्मा रुद्रस्त्वादृक्समामासीद्ध्यानयोगस्थिता ते सन्ध्यासंस्था वासुदेवं नमति वयं देवमादिव्यक्तरूपमात्मसप्तदिवसं तथापि संसारार्थं कर्म तत्करणमेव सन्ध्यासंस्था वासुदेव नमोऽस्तु ते।।
मन्त्राणां परमो मन्त्रस्तपतां परमं तपः ।।
आचारं कुरुते ह्येवं मम लोकं स गच्छति ।।
गुह्यानां परमं गुह्यं रहस्यं परमुत्तमम्।।
य एवं पठते नित्यं न स पापेन लिप्यते।।
नादीक्षिताय दातव्यं नोपवीते कथंचन ।।
दीक्षितायैव दातव्यमुपपन्ने तथैव च ।।
पुनरन्यत्प्रवक्ष्यामि देवि तत्त्वेन मे शृणु ।।
न दीपमपि गृह्णाति दत्तं भागवतैः शुभैः।।
कृत्वा तु मम कर्माणि गृह्य दीपकमुत्तमम् ।।
जानुसंस्थां ततः कृत्वा इमं मन्त्रमुदीरयेत।।
मन्त्रः –

ॐ नमो भगवतेऽनुग्रह तेजसे विष्णो सर्वदेवास्त्वाग्निसंस्थाः प्रविष्टा एवं चाग्निस्तव तेजसा भविष्यति स्वतेजसा मामाशु मन्त्रस्य तेजसा संसारार्थं देव गृह्यं दीपकं मन्त्रं मूर्त्तिमन्त्रं श्वो भूत्वा इमं कर्म निष्फलम् ।।
तत्करोति यथान्याय्यं दीपकं ददते नरः ।।
तारिताः पितरस्तेन निष्कलाश्च पितामहाः ।।)
गन्धेन तिलकं दद्याल्ललाटे मम सुन्दरि ।।
अन्यच्च ते प्रवक्ष्यामि कर्म लोकसुखावहम् ।। २।।
येन मन्त्रेण दातव्यं ललाटे तिलकं मम ।। ३ ।।
मन्त्रः –
मुखमण्डनं चिन्तया वासुदेव त्वया प्रयुक्तं च मयोपनीतम् ।।
एतेन चित्रं कुरु वासुदेव मम चैवं कुरु संसारमोक्षम् ।। ४ ।।
एतेन मन्त्रेण चित्रकं मे दद्याल्ललाटे तिलकं धरित्रि ।।
ततः सुमनसो गृह्य इमं मन्त्रमुदाहरेत् ।। ५ ।।
मन्त्रः –
इमाः सुमनसः सौमनस्याय भगवन् सर्वं सुमनसं कुरु त्वयैते सौमनस्याय निर्मिता गृहीताः स्वाहा ।। ६ ।।
एवं सुमनसो दत्त्वा धूपं चैव निवेदयेत् ।।
ततो गृहीत्वा धूपं तु सुगन्धं सुमनोहरम् ।। ७ ।।
नमो नारायणेत्युक्त्वा इमं मन्त्रमुदीरयेत् ।।
मन्त्रः –
सुगन्धानि तवाङ्गानि स्वभावेनैव केशव ।। ८ ।।
अमुना चैव धूपेन धूपितानि तवाऽनघ ।।
तवाङ्गानां सुगन्धेन सर्वं सौगन्धिकं कुरु ।। ९ ।।
गृहाणेमं च मे धूपं सर्वसंसारमोक्षणम् ।।
पुनरन्यत्प्रवक्ष्यामि यथा दीपं निवेदयेत् ।। 129.१० ।।
यथावृत्तं तु गृह्णामि मम भक्तैः सुखावहम् ।।
कृत्वा तु मम कर्माणि गृह्य दीपमनुत्तमम् ।। ११ ।।
जानुसंस्थं ततः कृत्वा इमं मन्त्रमुदीरयेत् ।। १२ ।।
मन्त्रः –
नमो भगवते तेजते विष्णो सर्वे देवास्त्वग्निसंस्थाः प्रतिष्ठा ।।
एवं चाग्निस्तव तेजसा प्रतिष्ठितो तेजश्चात्मा स्वयमेव ।। १३ ।।
मन्त्रश्च –
तेजः संसारान्मोचयितुं देव गृह्णीष्व दीपं द्युतिमन्तश्च ।।

मूर्तिश्च भूत्वा इदं कर्म निष्कलम् ।। १४ ।।
मां करोति यथान्यायं दीपकं ददते नरः ।।
तारिताः पितरस्तेन निष्कलाश्च पितामहाः ।। १५ ।।
नारायणवचः श्रुत्वा विस्मिता च वसुन्धरा ।।
वराहरूपिणं देवं प्रत्युवाच वसुन्धरा ।। १६ ।।
श्रुता मया भागवतास्तव कर्मपरायणाः ।।
शेषसंश्रवणार्थाय मनो धावति सत्पथे ।। १७ ।।
तव प्रापणकं कृत्यं केषु पात्रेषु कारयेत् ।।
एतदाचक्ष्व तत्त्वेन येन तुष्यति माधव ।। १८ ।।
ततो भूमेर्वचः श्रुत्वा लोकनाथोऽब्रवीदिदम् ।।
शृणु तत्त्वेन मे देवि यानि पात्राणि रोचते ।। १९ ।।
तानि ते कथयिष्यामि त्वया मे पूर्वपृच्छितम् ।।
सौवर्णं राजतं कांस्यं येषु दद्यात्प्रपाणकम् ।। 129.२० ।।
सर्वाणि तानि त्यक्त्वेह ताम्रं च मम रोचते ।।
एतन्नारायणाच्छ्रुत्वा धर्मकामा वसुन्धरा ।। २१ ।।
उवाच मधुरं वाक्यं लोकनाथं जनार्द्दनम् ।।
एतन्मे परमं गुह्यं ताम्रं ते रोचते कथम् ।। २२ ।।
ततो भूमेर्वचः श्रुत्वा अनादिरपराजितः ।।
लोकानां प्रवरः श्रेष्ठः प्रत्युवाच वसुन्धराम् ।। २३ ।।
शृणु तत्त्वेन मे भूमे कथ्यमानं मयाऽनघे ।।
एकाग्रं चित्तमाधाय येन ताम्रं मम प्रियम् ।। २४ ।।
सप्तयुगसहस्राणि आदिकालेऽथ माधवि ।।
यथा ताम्रं समुत्पन्नं यथैव प्रियदर्शनम् ।। २५ ।।
पूर्वं कमलपत्राक्षि गुडाकेशो महासुरः ।।
ताम्ररूपं समादाय ममैवाराधने रतः ।। २६ ।।
तत आराधितस्तेन वर्षाणां तु चतुर्दश ।।
सहस्राणि विशालाक्षि धर्मकामेन निश्चलम् ।। २७ ।।
अहं तु तपसा तुष्टस्तीव्रेण कृतनिश्चयात् ।।
ततस्ताम्रमये रम्ये यत्र ताम्रसमुद्भवः ।।२८।।
दृष्ट्वाश्रमं महादेवि किञ्चिदेव सुभाषितम् ।।
ततो जानुस्थितो भूत्वा मम एष विचिन्तयेत् ।। २९ ।।
चतुर्बाहुं च मां दृष्ट्वा मम कर्मपरायणः ।।
प्रणतः प्राञ्जलिः प्राह शिरो भूमौ निधाप्य सः ।।

तं च दृष्ट्वा मया प्रोक्तं प्रसन्नेनान्तरात्मना ।। 129.३० ।।
गुडाकेश महाभाग ब्रूहि किं करवाणि ते ।।
तोषितोऽस्म्यनया भक्त्या दुराराध्योऽपि सुव्रत ।। ३१ ।।
यत्त्वया चिन्तितं सौम्य कर्मणा मनसा गिरा ।।
वरं ब्रूहि महाभाग तुभ्यं यद्रोचतेऽनघ ।। ३२ ।।
एवं मम वचः श्रुत्वा गुडकेशोऽब्रवीदिदम् ।।
कराभ्यामञ्जलिं कृत्वा विशुद्धेनान्तरात्मना ।। ३३ ।।
यदि तुष्टोऽसि मे देव समस्तेनान्तरात्मना ।।
जन्मनां तु सहस्रणि त्वयि भक्तिर्दृढाऽस्तु मे ।। ३४ ।।
चक्रेण वधमिच्छामि त्वया मुक्तेन केशव ।। ३५ ।।
चकेण पातितस्यैतद्वसामांसानि किं चन ।।
ताम्रं नाम भवेदेव पवित्रीकरणं शुभम् ।। ३६ ।।
तेन पात्रं ततः कृत्वा शुभधर्मविनिश्चितः ।।
तस्मिन्प्रापणकं कृत्वा शुद्धे वै ताम्रभाजने ।। ३७ ।।
निवेदिते परा प्रीतिर्भवत्वेतन्मनोगतम् ।।
प्रसन्नो यदि मे देव ह्येष मे दीयतां वरः ।। ३८ ।।
यच्चिन्तितोऽसि देवेश उग्रे तपति तिष्ठता ।।
बाढमित्येव सोऽप्युक्तो यावल्लोकस्थितिर्मया ।। ३९ ।।
तावत्ताम्रस्थितो भूत्वा मम संस्थो भविष्यसि ।।
ततः प्रभृति ताम्रात्मा गुडाकेशो व्यवस्थितः ।। 129.४० ।।
तत्ताम्रभाजने मह्यं दीयते यत्सुपुष्कलम् ।।
अतुला तेन मे प्रीतिर्भूमे जानीहि सुव्रते ।। ४१ ।।
मङ्गल्यं च पवित्रं च ताम्रं तेन प्रियं मम ।।
त्वं च द्रक्ष्यसि तच्चक्रं मध्यसंस्थे दिवाकरे ।। ४२ ।।
वैशाखस्य तु मासस्य शुक्लपक्षे तु द्वादशी ।।
मम तेजोमयं चक्रं त्वां वधिष्यत्यसंशयम् ।। ४३ ।।
एष्यसे मम लोकाय एवमेतन्न संशयः ।।
एवमुक्त्वा गुडाकेशं तत्रैवान्तर्हितोऽभवम् ।। ४४ ।।
चक्राद्वधमभीप्सन्वै सोऽपि मत्कर्मणि स्थितः ।।
दिने दिने विशिष्टं तु शुभं कुर्वंस्तपस्यति ।। ४६ ।।
विष्णुसंस्थो भविष्यामि कदाहमिति चिन्तयन्।।
एवं स्थितस्य तस्याथ वैशाखस्य तु द्वादशी ।। ४६ ।।
शुक्लपक्षस्य सम्प्राप्ता तस्यां धर्मविनिश्चितः ।।

विष्णुपूजां ततः कृत्वा प्रार्थयामास मां प्रतिं ।। ४७ ।।
मुञ्च मुञ्च प्रभो चक्रमपि वह्निसमप्रभम् ।।
आत्मा मे नीयतां शीघ्रं निकृत्त्याङ्गानि सर्वशः ।। ४८ ।।
तदैव चक्रेण विपाटितोऽसौ प्राप्तोऽपि मां भागवतप्रधानः ।।
ताम्रं तु तन्मांसमसृक् सुवर्णमस्थीनि रूप्यं बहुधातवश्च ।।
रङ्गं च सीसं त्रपुधातुसंस्थं कांस्यं च रीतिश्च मलस्तु तेषाम् ।।४९ ।।
ताम्रपात्रेण वै भूमे प्रापणं यत्प्रदीयते ।।
सिक्थे सिक्थे फलं तस्य शृणुष्व गदतो मम ।। 129.५० ।।
एतद्भागवतैः कार्यं मम प्रियकरैः सदा ।।
एवं ताम्रं समुत्पन्नमिति मे रोचते हि तत् ।। ५१ ।।
दीक्षितैर्वै भागवतैः पाद्यार्घ्यादौ च दीयते ।।
एवं दीक्षाविधिः प्रोक्त एवं ताम्रसमुद्भवः ।। ५२ ।।
देवि तत्त्वेन कथितः किमन्यत् परिपृच्छसि ।।
भूमिरुवाच ।।
देवदेव कथं सन्ध्यां दीक्षितः कुरुते वद ।। ५३ ।।
केन मन्त्रेण वा भक्तस्तव कर्मपरायणः ।।
श्रीवराह उवाच ।।
शृणु माधवि तत्त्वेन सन्ध्यामन्त्रमनुत्तमम् ।। ५४ ।।
यथा वदन्ति वै सूर्यं सन्ध्यां पूर्वां परां तथा ।।
जलाञ्जलिं गृहीत्वा तु मम भक्त्या व्यवस्थितः ।। ५५ ।।
मुहूर्तं ध्यानमास्थाय इमं मन्त्रमुदीरयेत् ।।
सिक्थानि तत्र यावन्ति ताम्रप्रापणके धरे ।। ५६ ।।
तावद्वर्षसहस्राणि मम लोके स मोदते ।। ५७।।
मन्त्रः –
भवोद्भवमादिव्यक्तरूपमादित्यं सर्वे देवा ब्रह्मरुद्रेन्द्रास्त्वां च ।।
कृष्णे यथासीद्ध्यानयोगस्थितास्ते सन्ध्यासंस्था वासुदेवं नमन्ति ।। ५८ ।।
वयं देवमादिमव्यक्तरूपं कृत्वा चात्मनि देव संस्थास्तथापि ।।
संसारार्थं कर्म तत्करणमेव सन्ध्यासंस्था वासुदेव नमो नमः ।। ५९ ।।
अनेनैव हि मन्त्रेण सन्ध्यां कुर्यात्तु दीक्षितः ।। 129.६० ।।
इति श्रीवराहपुराणे चतुर्वर्णदीक्षाताम्रवर्णनं नामोनत्रिंशदधिकशततमोऽध्यायः ।। १२९ ।।

अथ राजान्नभोगे प्रायश्चित्तम् ।।
सूत उवाच ।।
एवं दीक्षां ततः श्रुत्वा नारायणमुखान्मही ।।
विशुद्धमानसा देवी नारायणमथाब्रवीत् ।। १ ।।
धरण्युवाच ।।
अहो ते दीक्षामाहात्म्यं यस्य वै व्युष्टिरुत्तमा ।।
श्रुत्वाहं तु महाभाग जातास्मि विमला विभो ।। २ ।।
अहो देवस्य माहात्म्यं लोकनाथस्य तत्त्वतः ।।
येन सा कारिता दीक्षा चातुर्वर्ण्यसुखावहा ।। ३ ।।
एकं मे परमं गुह्यं यदीश हृदि वर्त्तते ।।
भव भक्तसुखार्थाय तत्त्वं मे वक्तुमर्हसि ।। ४ ।।
देव पूर्वापराधास्ते द्वात्रिंशदपि कीर्तिताः ।।
एवं कृत्वापराधानि मनुजा ह्यल्पचेतसः ।। ५ ।।
कर्मणा केन शुद्ध्यन्ति अपराधस्य कारिणः ।।
तन्ममाचक्ष्व तत्त्वेन मम प्रीत्या च माधव ।। ६ ।।
तद्वै भूम्या वचः श्रुत्वा हृषीकेशो महामनाः ।।
दिव्यं ध्यानं समादाय प्रत्युवाच वसुन्धराम् ।। ७ ।।
श्रीवराह उवाच ।।
शुद्धा भागवता भूत्वा मम कर्मपरायणाः ।।
ये तु भुञ्जन्ति राजान्नं लोभेन च भयेन वा ।। ८ ।।
आपद्गता हि भुञ्जन्ति राजान्नं तु वसुन्धरे ।।
दशवर्षसहस्राणि पच्यन्ते नरके नराः ।। ९ ।।
भगवद्वचनं श्रुत्वा कम्पिता च वसुन्धरा ।।
दिनानि सप्त दश च भयं तीव्रमजायत ।। 130.१० ।।
ततो दीनमना भूत्वा सा मही संशितव्रता ।।
उवाच मधुरं वाक्यं सर्वलोकसुखावहम् ।।११।।
धरण्युवाच ।।
शृणु तत्त्वेन मे देव हृदये हि व्यवस्थितम् ।।
को नु दोषोऽस्ति राज्ञां हि तन्मे त्वं वक्तुमर्हसि ।।१२।।
ततो भूम्या वचः श्रुत्वा सर्वधर्मविदां वरः ।।
प्राह नारायणो वाक्यं धर्मकामां वसुन्धराम् ।। १३ ।।
श्रीवराह उवाच ।।
शृणु सुन्दरि तत्त्वेन गुह्यमेतदनिन्दिते ।।

राजान्नं तु न भोक्तव्यं शुभैर्भागवतैः सदा ।। १४ ।।
यद्यप्येष समत्वेन राजा लोके प्रवर्त्तते ।।
राजसं तामसं वापि कुर्वन्कर्म सुदारुणम् ।। १५ ।।
अपि वा गर्हितं तेन राजान्नं तु वसुन्धरे ।।
धर्मसन्धारणार्थाय न तु मे रोचते भुवि ।। १६ ।।
ततो यद्यत्प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।।
यथा राज्ञां तु भोज्यं वै शुद्धैर्भागवतैर्नरैः ।। १७ ।।
स्थापयित्वा तु मां देवि विधिदृष्टेन कर्मणा ।।
धनधान्यसमृद्धानि दत्त्वा भागवतैरपि ।। १८ ।।
सिद्धं भागवतैश्चान्नं मम प्रापणशेषकम् ।।
भुञ्जानस्तु वरारोहे न स पापेन लिप्यते ।। १९ ।।
एवं विष्णुवचः श्रुत्वा धरणी संशितव्रता ।।
वराहरूपिणं देवं प्रत्युवाच वरानना ।। 130.२० ।।
धरण्युवाच ।।
राजान्नं तु नरो भुक्त्वा शुद्धो भागवतः शुचिः ।।
कर्मणा केन शुद्ध्येत तन्मे ब्रूहि जनार्दन ।। २१ ।।
श्रीवराह उवाच ।।
शृणु तत्त्वेन मे देवि यन्मां त्वं भीरु भाषसे ।।
तरन्ति पुरुषा येन राजान्नस्योपभुञ्जकाः ।। २२ ।।
एकं चान्द्रायणं कृत्वा तप्तकृच्छ्रं च पुष्कलम् ।।
कुर्यात्सान्तपनं चैकं शीघ्रं मुच्यन्ति किल्बिषात् ।। २३ ।।
न तस्य चापराधोऽस्ति वसुधे वै वचो मम ।।
एवमेव न भोक्तव्यं राजान्नं वै कदाचन ।।
ममात्र पूजाकामेन यदीच्छेत्परमां गतिम् ।। २४ ।।
इति श्रीवराहपुराणे भगवच्छास्त्रे राजान्नप्रायश्चित्तं नाम त्रिंशदधिकशततमोऽध्यायः ।। १३० ।।

अथ दन्तकाष्ठाचर्वणप्रायश्चित्तम् ।।

श्रीवराह उवाच ।।

दन्तकाष्ठमचर्वित्वा यो हि मामुपसर्पति ।।
पूर्वकालकृतं कर्म तेन चैकेन नश्यति ।। १ ।।
नारायणवचः श्रुत्वा पृथिवी धर्मसंश्रितः ।।
विष्णुभक्तसुखार्थाय हृषीकेशमुवाच ह ।। २ ।।

धरण्युवाच ।।

सर्वकालकृतं कर्म क्लेशेन महताऽनघ ।।
कथमेकापराधेन सर्वमेव प्रणश्यति ।। ३ ।।

श्रीवराह उवाच ।।

शृणु सुन्दरि तत्त्वेन कथ्यमानं मयाऽनघे ।।
येन चैकापराधेन पूर्वकर्म प्रणश्यति ।। ४ ।।
मनुष्यः किल्बिषी भद्रे कफपित्तसमन्वितः ।।
पूयशोणितसम्पूर्णं दुर्गन्धि मुखमस्य तत् ।। ५ ।।
तत्सर्वबीजं नश्येत दन्तकाष्ठस्य भक्षणात् ।।
शुद्धिर्भागवती चैव आचारेण विवर्जिता ।। ६ ।।

धरण्युवाच ।।

दन्तकाष्ठमखादित्वा यः कर्माणि करोति ते ।।
प्रायश्चित्तं च मे ब्रूहि येन धर्मो न नश्यति ।। ७ ।।

श्रीवराह उवाच ।।

एवमेतन्महाभागे यन्मां त्वं परिपृच्छसि ।।
कथयिष्यामि हीदं ते यथा शुद्ध्यन्ति मानवाः ।। ८।।
आकाशशयनं कृत्वा दिनानि द्वे च पंच च ।।
अभुक्तदन्तकाष्ठाश्च एवं शुध्यन्ति मानवाः ।। ९ ।।
एवं ते कथितं भद्रे दन्तकाष्ठस्य भक्षणम् ।।
य एतेन विधानेन प्रायश्चित्तं समाचरेत् ।। 131.१० ।।
कुतस्तस्यापराधोऽस्ति एवमेव न संशयः ।। ११ ।।
इति श्रीवराहपुराणे दन्तकाष्ठाचर्वणप्रायश्चित्तं नामैकत्रिंशदधिकशततमोऽध्यायः ।। १३१ ।।

अथ मृतकस्पर्शप्रायश्चित्तम् ।।

श्रीवराह उवाच ।।

गत्वा तु मैथुनं भद्रे अस्नातो यः शवं स्पृशेत् ।।
रेतः पिबति दुर्बुद्धिः सहस्रं नव पंच च ।। १ ।।
वर्षं नारायणाच्छ्रुत्वा सा मही संशितव्रता ।।
ततो दीनमना भूत्वा प्रोवाच मधुसूदनम् ।। २ ।।

धरण्युवाच ।।

किमिदं भाषसे देव धर्मं भीषणसङ्कटम् ।।
कथमेवं पुमान्वै स रेतःपानपरो भवेत् ।। ३ ।।
एतन्मे परमं दुःखं तद्भवान्वक्तुमर्हति ।।

श्रीवराह उवाच ।।

शृणु तत्त्वेन मे देवि इदं गुह्यमनुत्तमम् ।।४।।
चिह्नमैतद्वरारोहे आधिचारविनिश्चयः।।
पुरुषः स्त्रीषु कर्माणि यो विकुर्वीत निर्घृणः ।।५।।
दृष्टं तस्यापराधस्य फलं प्राप्नोति मानवः ।।
एवमेतद्वरारोहे यन्मां त्वं परिपृच्छसि ।। ६ ।।
अपराधस्य दोषेण विशुद्धिश्च न जायते ।।
प्रायश्चित्तं प्रवक्ष्यामि रागदोषेण दोषितम् ।। ७ ।।
गृहस्थाः पुरुषा भद्रे मम कर्मपरायणाः ।।
यावकेन त्रयं क्षिप्त्वा पिण्याकेन दिनत्रयम् ।। ८ ।।
वायुभक्षं दिनं त्वेकं ततो मुच्येत किल्बिषात् ।।
य एवं कुरुते भूमे विधिदृष्टेन कर्मणा ।। ९ ।।
ज्ञात्वा कर्मापराधं तु न स पापेन लिप्यते ।।
एतत्ते कथितं भद्रे मिथुनं योऽभिगच्छति ।। 132.१० ।।
प्रायश्चित्तं महाभागे मम लोकसुखावहम् ।।
स्पृष्ट्वा तु मृतकं भद्रे नरं पंचत्वमागतम् ।। ११ ।।
मम शास्त्रं बहिष्कृत्य यः श्मशानं प्रपद्यते ।।
पितरस्तस्य सुश्रोणि आत्मनश्च पितामहाः ।। १२ ।।
श्मशाने जम्बुका भूत्वा भक्षयन्ति शवान् तथा ।।
ततो हरेवर्चः श्रुत्वा धर्मकामा वसुन्धरा ।। १३ ।।
उवाच मधुरं वाक्यं सर्वलोकहिताय वै ।।

धरण्युवाच ।।

तव नाथ प्रपन्नानां क्व पापं विद्यते प्रभो ।। १४।।

प्रायश्चित्तं च मे ब्रूहि येन मुच्यन्ति किल्बिषात् ।।
श्रीवराह उवाच ।।
शृणु सुन्दरि तत्त्वेन यन्मां त्वं परिपृच्छसि ।।१५।।
कथयिष्यामि ते हीदं शोभनं पापनाशनम् ।।
एकाहारो दिनान्सप्त त्रिरात्रं चाप्युपोषितः ।। १६ ।।
पंचगव्यं ततः पीत्वा ततो मुच्येत किल्बिषात् ।।
शवे स्पृष्टेऽपराधस्य एष ते कथितो विधिः ।। १७ ।।
सर्वथा वर्जनीयं वै सर्वभागवतेन तु ।।
य एतेन विधानेन प्रायश्चित्तं समाचरेत् ।।१८।।
विमुक्तः सर्वपापेभ्यो नापराधोऽस्ति तस्य वै ।।
नारीं रजस्वलां स्पृष्ट्वा यो मां स्पृशति निर्भयः ।।१९।।
रागमोहेन संयुक्तः कामेन च वशीकृतः।।
वर्षाणां तु सहस्रैकं रजः पिबति निर्घृणः ।।132.२० ।।
अन्धश्च जायते देवि दरिद्रो ज्ञानमूर्खवान्।।
न च विन्दति चात्मानं पतितो नरके यथा ।।२१।।
अपराधमिमं कृत्वा तत्रैवं नास्ति संशयः ।।
धरण्युवाच ।।
तव देव प्रपन्नानां मोक्षं संसारसागरात् ।। २२ ।।
अपराधसमायुक्तस्तव कर्मपरायणः ।।
कर्मणा येन शुध्येत तन्मे ब्रूहि जनार्दन ।। २३ ।।
श्रीवराह उवाच ।।
स्पृष्ट्वा रजस्वलां नारीं नरो मद्भक्तितत्परः ।।
तपः कृत्वा त्रिरात्रं तु आकाशशयने वसेत् ।। २४ ।।
शुद्धो भागवतो भूत्वा मम कर्मपरायणः ।।
एवं कृत्वा महाभागे प्रायश्चित्तं मम प्रियम् ।। २५ ।। ।
मुच्यते किल्बिषाद्देवि आचारेण बहिष्कृतः ।।
एतत्ते कथितं भद्रे यत्स्पृष्ट्वा तु रजस्वलाम् ।। २६ ।।
स्पृष्ट्वा तु मृतकं देवि यो मत्क्षेत्रेषु तिष्ठति ।।
शतवर्षसहस्राणि गर्भेषु परिवर्त्तते ।। २७ ।।
दशवषर्सहस्राणि चण्डालश्चैव जायते ।।
अन्धः सप्तसहस्राणि मण्डूकश्च शतं समाः ।।२८।।
मक्षिका त्रीणि वर्षाणि टिट्टिभैकादशं समाः ।।
दंशो वै सप्त चान्यानि कृकलासो भवेत्समाः ।। २९ ।।

हस्ती वर्षशतं चैव खरो द्वात्रिंशकं भवेत् ।।
मार्जारो नववर्षाणि वानरो दशपञ्च च ।। 132.३० ।।
एवं स चात्मदोषेण मम कर्मपरायणः ।।
प्राप्नोति सुमहद्दुःखं देवि चैवं न संशयः ।।३१।।
ततो हरेर्वचः श्रुत्वा दुःखेन परिपृच्छति ।।
सर्वसंसारमोक्षाय प्रत्युवाच वसुन्धरा ।। ३२ ।।
धरण्युवाच ।।
किमिदं भाषसे देव मानुषाणां दुरासदम् ।।
वाक्यं भीषणमत्यन्तं मम मर्मप्रभेदकम् ।। ३३ ।।
आचाराच्च परिभ्रष्टस्तवकर्मपरायणः ।।
यथा तरति दुर्गाणि प्रायश्चित्तं तथा वद ।। ३४ ।।
श्रुत्वा पृथ्व्यास्तथा वाक्यं लोकनाथो जनार्द्दनः ।।
धर्मसंरक्षणार्थाय प्रत्युवाच वसुन्धराम् ।। ३५ ।।
श्रीवराह उवाच ।।
स्पृष्ट्वा तु मृतकं भूमे मम कर्मपरायणः ।।
एकाहारं ततस्तिष्ठेद्दिनानि दश पञ्च च ।। ३६ ।।
तत एवं विधिं कृत्वा पञ्चगव्यं तु प्राशयेत् ।।
शुद्धभावं विशुद्धात्मा कर्मणा च न लिप्यते ।। ३७ ।।
एतत्ते कथितं देवि स्पृष्ट्वा मृतकमेव च ।।
दोषं चैव विशुद्ध्यर्थं यत्त्वया पूर्वपृच्छितम् ।। ३८ ।।
य एतेन विधानेन प्रायश्चित्तं समाचरेत् ।।
अपराधविमुक्तो वै मम लोकं स गच्छति।। ३९ ।।
इति श्रीवराहपुराणे मृतकस्पर्शनप्रायश्चित्तं नाम द्वात्रिंशदधिकशततमोऽध्यायः ।। १३२ ।।

अथ पूजासामयिकगुदरवपुरीषोत्सर्जनयोः प्रायश्चित्तम् ।।
श्रीवराह उवाच ।।
स्पृशमानेन मां भूमे वातकर्म प्रमुच्यते ।।
एवञ्च पुरुषो युक्तो वायुपीडितमानसः ।। १ ।।
मक्षिका पञ्च वर्षाणि त्रीणि वर्षाणि मूषकः ।।
श्वा चैव त्रीणि वर्षाणि कूर्मो वै जायते नव ।। २ ।।
एष वै तापनं देवि मोहनं मम सांप्रतम् ।।
यो वै शास्त्रं विजानाति मम कर्मपरायणः ।। ३ ।।
श्रुत्वा वाक्यं हृषीकेशं प्रत्युवाच वसुन्धरा ।।
धरण्युवाच ।।
अतुलं लभते पापं तव कर्मपरायणः ।। ४ ।।
तस्य देव सुखार्थाय विशुद्धिं वक्तुमर्हसि ।।
श्रीवराह उवाच ।।
शृणु कात्स्न्येंन मे देवि कथ्यमानं मयाऽनघे ।। ५ ।।
अपराधमिमं कृत्वा सन्तरेद्येन कर्मणा ।।
पावकेन दिनं त्रीणि नक्तानि च पुनस्त्रयः ।। ६ ।।
कर्म चैवं ततः कृत्वा स च मे नापराध्यति ।।
सर्वसङ्गं परित्यज्य मम लोकं स गच्छति ।। ७ ।।
एतत्ते कथितं भद्रे महाकर्मापराधिनः ।।
दोषं चैव गुणं चैव यत्त्वया परिपृच्छितम् ।। ८ ।।
शृणु तत्त्वेन मे भूमे कथ्यमानं मयाऽनघे ।।
पुरीषं मुच्यते यस्तु मम कर्म समाचरन् ।। ९ ।।
दिव्यवर्षसहस्रं तु रौरवे नरके वसेत् ।।
पुरीषं भक्षयेत्तत्र मम कर्मपरायणः ।। 133.१० ।।
प्रायश्चित्तं वदाम्यत्र येन मुच्येत किल्बिषात् ।।
मम कर्मपरिभ्रष्टो विह्वलेनान्तरात्मना ।। ११ ।।
एकां जलमयीं शय्यामेकामाकाशशायिनीम् ।।
एवं कृत्वा विधानं तु सोऽपराधात्प्रमुच्यते ।। १२ ।।
एतत्ते कथितं भद्रे पुरीषं यः समुत्सृजेत् ।।
मद्भक्तेषु विशालाक्षि अपराधविनिश्चयः ।। १३ ।।
इति श्रीवराहपुराणे पूजासमये गुदरवपुरीषोत्सर्गयोः प्रायश्चित्तं नाम त्रयस्त्रिंशदधिकशततमोऽध्यायः ।।१३३।।

अथ पूजादिसामयिकापराधेषु प्रायश्चित्तानि ।।
श्रीवराह उवाच ।।
मुक्त्वा तु मम कर्माणि मम कर्मपरायणः ।।
प्रायश्चित्तविधिं देवि यस्तु वाक्यं प्रभाषते ।। १ ।।
मूर्खो भवति सुश्रोणि मम कर्मपरायणः ।।
प्रायश्चित्तविधिं देवि येन मुच्येत किल्बिषात् ।। २ ।।
आकाशशयनं कृत्वा दिनानि दश पञ्च च ।।
मुच्यते किल्बिषात्तत्र देवि चैव न संशयः ।। ३ ।।
इति मौनत्यागप्रायश्चित्तम् ।।
श्रीवराह उवाच ।।
भूषितो नीलवस्त्रेण यो हि मामुपपद्यते ।।
वर्षाणां हि शतं पञ्च कृमिर्भूत्वा स तिष्ठति ।। ४ ।।
तस्य वक्ष्यामि सुश्रोणि अपराधविशोधनम् ।।
प्रायश्चित्तं विशालाक्षि येन मुच्येत किल्बिषात् ।। ५ ।।
व्रतं चान्द्रायणं कृत्वा विधिदृष्टेन कर्मणा ।।
मुच्यते किल्बिषाद्भूमे एवमेतन्न संशयः ।। ६ ।।
अविधानेन संस्पृश्य यो हि मामुपसर्पति ।।
स मूर्खः पापकर्मा च मम विप्रियकारकः ।। ७ ।।
तेन दत्तं वरारोहे गन्धमाल्यसुगन्धितम् ।।
प्रापणं च न गृह्णामि मृष्टं चापि कदाचन ।। ८ ।।
ततो नारायणवचः श्रुत्वा सा संशितव्रता ।।
उवाच मधुरं वाक्यं धर्मकामा वसुन्धरा ।। ९ ।।
धरण्युवाच ।।
यन्मां त्वं भाषसे नाथ आचारस्य व्यतिक्रमम् ।।
उपस्पृश्य समाचारं रहस्यं वक्तुमर्हसि ।। 134.१० ।।
केन कर्मविधानेन भूत्वा भागवता भुवि ।।
उपस्पृश्योपसर्पन्ति तव कर्मपरायणाः ।। ११ ।।
एतन्मे संशयं देव परं कौतूहलं हि मे ।।
तव भक्तसुखार्थाय निष्कलं वक्तुमर्हसि ।। १२ ।।
श्रीवराह उवाच ।।
शृणु तत्त्वेन मे देवि यन्मां त्वं भीरु भाषसे ।।
कथितं मम तत्त्वेन गुह्यमेतत्परं महत् ।। १३ ।।
विमुच्य सर्वकर्माणि यो हि मामुपसर्पति ।।

तस्य वै शृणु सुश्रोणि उपस्पृश्य च या क्रिया ।। १४ ।।
भूत्वा पूर्वमुखस्तत्र पादौ प्रक्षाल्य चाम्बुभिः ।।
उपस्पृश्य यथान्यायं तिस्रो वै गृह्य मृत्तिकाः ।। १५ ।।
ततः प्रक्षालितं हस्तं जलेन तदनन्तरम् ।।
सप्तकोशं ततो गृह्य जलेन क्षालयेत्ततः ।। १६ ।।
पादमेकैकशस्तद्वत्पंच पञ्च वदेत्ततः ।।
कोशौ संमृज्यतां तत्र यदीच्छेत्तु मम प्रियम् ।। १७ ।।
त्रीणि कोशान्पिबेत्तत्र सर्वपापविशोधनम् ।।
मुखं कराभ्यां मार्जेत सर्वमिन्द्रियनिग्रहम् ।। १८ ।।
प्राणायामं ततः कृत्वा मम चिन्तापरायणः ।।
कर्मणा विधिदृष्टेन कुर्यात्संसारमोक्षणम् ।।१९।।
त्रीणि वारान्स्पृशेत्तत्र शिरो ब्रह्मणि संस्थितः ।।
त्रीणि वारान्पुनस्तत्र उभे ते कर्णनासिके ।। 134.२० ।।
स्पृशेत्तु निष्कलस्तत्र यो हि यत्र प्रतिष्ठितः ।।
विक्षिपेत्त्रीणि वाराणि सलिलं प्रवरं त्रयम् ।। २१ ।।
एवमुक्तस्य कर्त्तव्यं ममाभिगमनेषु च ।।
उपस्पृश्य तनुं वामे यदीक्षेत प्रियं मम ।। २२ ।।
एवं च कुर्वतस्तस्य मम कर्मव्यवस्थितः ।।
अपराधं न विन्देत एवं देवि न संशयः ।। २३ ।।
ततो नारायणवचः श्रुत्वा देवी वसुन्धरा ।।
उवाच मधुरं वाक्यं सर्वभागवतप्रियम् ।।२४।।
धरण्युवाच।।
उपस्पृश्य विधानेन यस्तु कर्माणि चाप्नुयात् ।।
तापनं शोधनं चैव तद्भवान्वक्तुमर्हति।।२५।।
श्रीवराह उवाच ।।
शृणु तत्त्वेन मे भूमे इमं गुह्यमनिन्दिते ।।
यां गतिं च प्रपद्यन्ते मम कर्मबहिष्कृताः ।। २६ ।।
व्यभिचारं च मे कृत्वा यश्च मामुपसर्पति ।।
दशवर्षसहस्राणि दशवर्षशतानि च ।। २७ ।।
कृमिर्भूत्वा यथान्याय्यं तिष्ठते नात्र संशयः ।।
प्रायश्चित्तं प्रवक्ष्यामि तस्य मूर्खस्य माधवि ।। २८ ।।
यच्च कृत्वा महाभागे कृतकृत्यः पुनर्भवेत् ।।
महासान्तपनं कृत्वा तप्तकृच्छ्रं च निष्कलम् ।। २९ ।।

ब्राह्मणः क्षत्रियो वैश्यो मम ये च मते स्थिताः ।।
अनेन विधिना कृत्वा प्रायश्चित्तं यशस्विनि ।। 134.३० ।।
किल्बिषात्तु प्रमुक्तास्ते गच्छन्ति परमां गतिम् ।।
यस्तु क्रोधसमाविष्टो मम भक्तिपरायणः ।। ३१ ।।
स्पृशेत मम गात्राणि चित्तं कृत्वा चलाचलम् ।।
न चाहं रागमिच्छामि क्रुद्धमेव यशस्विनि ।। ३२ ।।
इच्छामि च सदा दान्तं शुभं भागवतं शुचिम् ।।
पंचेन्द्रियसमायुक्तं लाभालाभविवर्जितम् ।। ३३ ।।
अहङ्कारविनिर्मुक्तं कमर्ण्यभिरतं मम ।।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वरानने ।। ३४ ।।
मां यदा लभते क्रुद्धः शुद्धो भागवतः शुचिः ।।
चिल्ली जातो वर्षशतं श्येनो वर्षशतं पुनः ।। ३५ ।।
भेकस्त्रिशतवर्षाणि यातुधानः पुनर्दश ।।
अपुमान्षट् च वर्षाणि रेतोभक्षस्तु जायते ।। ३६ ।।
अन्धो जायेत सुश्रोणि पंच सप्त तथा नव ।।
गृध्रो द्वात्रिंशवर्षाणि चक्रवाको दशैव तु ।। ३७ ।।
शैवालभक्षिता चैव ह्याकाशगमनं तथा ।।
ब्राह्मणो जायते भूमे क्रोधस्य च पथे स्थितः ।। ३८ ।।
आत्मकर्मापराधेन प्राप्तः संसारसागरे ।।
धरण्युवाच ।।
अहो वै परमं गुह्यं यत्त्वया पूर्वभाषितम् ।। ३९ ।।
जातं मे विह्वलं चित्तं न स्थिरं जायते क्वचित् ।।
यत्त्वया भाषितं हीदं भक्तानां च दुरासदम् ।। 134.४० ।।
श्रुत्वा सुदुस्तरं सारं भीतास्मि परिदेविता ।।
नाहमाज्ञापयामि त्वां देवदेव जगत्पते ।। ४१ ।।
मम चैव प्रियार्थाय सर्वलोकसुखावहम् ।।
येन मुच्यन्ति संशुद्धा बुधाः कर्मपरायणाः ।। ४२ ।।
अल्पसत्त्वा गतभया लोभमोहसमन्विताः ।।
तरन्ति येन दुर्गाणि प्रायश्चित्तं च मे वद ।। ४३ ।।
ततः कमलपत्राक्षो वराहः सम्मुखे स्थितः ।।
सनत्कुमारो मे भक्तो पुनर्नारायणोऽब्रवीत् ।। ४४ ।।
ततो भूम्या वचः श्रुत्वा ब्रह्मणश्च सुतो मुनिः ।।
सनत्कुमारो योगज्ञः प्रत्युवाच वसुन्धराम् ।। ४५ ।।

धन्या चैव सुभाग्या च यत्त्वया परिपृच्छितम् ।।
वराहरूपी भगवान्सर्वमायाकरण्डकः ।। ४६ ।।
किं त्वया भाषितो देवि सर्वयोगाङ्गयोगवित् ।।
देवो नारायणस्तत्र सर्वधर्मविदां वरः ।। ४७ ।।
कुमारवचनं श्रुत्वा तं मही प्रत्यभाषत ।।
शृणु तत्त्वेन मे ब्रह्मन्यन्मया परिपृच्छितम् ।। ४८ ।।
कार्यं क्रियां च योगं च आध्यात्म्यं पार्थिवस्थितम् ।।
एतन्मे पृच्छते ब्रह्मन्देवो नारायणः प्रभुः ।। ४९ ।।
ततो मां भाषते ब्रह्मन्विष्णुर्मायाकरण्डकः ।।
क्रुद्धा भागवता ब्रह्मन्येन शुद्ध्यन्ति किल्बिषात् ।। 134.५० ।।
कृत्वा तेन व्रतं चैव मम कर्मपरायणः ।।
षष्ठे काले तु भुञ्जीत गृहभिक्षामनिन्दिताम् ।। ५१ ।।
अष्टौ भिक्षा यथान्यायं शुद्धभागवतां गृहे ।।
य एतेन विधानेन ब्रह्मकर्माणि कारयेत् ।। ५२ ।।
मुच्यते किल्बिषात्तस्मादेवमाह जनार्दनः ।।
यदीच्छसि परां सिद्धिं विष्णुलोकं जनार्दनात् ।। ५३ ।।
शीघ्रमाराधयेद्विष्णुं द्विजमुख्यो न संशयः ।।
ततो भूमेर्वचः श्रुत्वा ब्रह्मणश्च सुतो मुनिः ।। ५४ ।।
प्रत्युवाच विशालाक्षीं धर्मकामो वसुन्धराम् ।।
अहो गुह्यं रहस्यं च यत्त्वया देवि भाषितम् ।। ५५ ।।
तस्य ये मुखनिष्क्रान्ता धर्मास्तान्वक्तुमर्हसि ।।
धरण्युवाच ।।
ततः स पुण्डरीकाक्षः शङ्खचक्रगदाधरः ।। ५६ ।।
वराहरूपी भगवाँल्लोकनाथो जनार्दनः ।
उवाच मधुरं वाक्यं मेघदुन्दुभिनिःस्वनः ।। ५७ ।।
भक्तकर्मसुखार्थाय गुणवित्तसमन्विताम् ।।
अनेनैव विधानेन आचारेण समन्वितः ।। ५८।।
देवि कारयते कर्म मम लोकं स गच्छति ।।
क्रुद्धेन न च कर्त्तव्यं लोभेन त्वरया न च ।। ५९ ।।
मत्पूजनं विधानेन यदीच्छेत्परमां गतिम् ।।
ये मां देवि यजिष्यन्ति क्रोधं त्यक्त्वा जितेन्द्रियाः ।। 134.६० ।।
संसारं ते न गच्छन्ति अपराधविवर्जिताः ।।
श्रीवराह उवाच ।।

अकर्मण्येन पुष्पेण यो मामर्चयते भुवि ।। ६१ ।।
पातनं तस्य वक्ष्यामि तच्छृणुष्व वसुन्धरे ।।
नाहं तत्प्रतिगृह्णामि न च ते वै मम प्रियाः ।। ६२।।
मूर्खा भागवता देवि मम विप्रियकारिणः ।।
पतन्ति नरके घोरे रौरवे तदनन्तरम् ।। ६३।।
अज्ञानस्य च दोषेण दुःखान्यनुभवन्ति च ।।
वानरो दश वर्षाणि मार्जारश्च त्रयोदश ।। ६४ ।।
मूकः पञ्च च वर्षाणि बलीवर्दश्च द्वादश ।।
छागश्चैवाष्टवर्षाणि मासं वै ग्रामकुक्कुटः ।। ६५ ।।
त्रीणि वर्षाणि महिषो भवत्येव न संशयः ।।
एतत्ते कथितं भद्रे पुष्पं यन्मे न रोचते ।। ६६ ।।
अकर्मण्यं विशालाक्षि पुष्पं ये च ददन्ति वै ।।
धरण्युवाच ।।
भगवन्यदि तुष्टोऽसि विशुद्धेनान्तरान्मना ।। ६७ ।।
येन शुध्यन्ति ते भक्तास्तव कर्मपरायणाः ।।
श्रीवराह उवाच ।।
शृणु तत्त्वेन मे देवि यन्मां त्वं परिपृच्छसि ।। ६८ ।।
प्रायश्चित्तं महाभागे येन शुध्यन्ति मानवाः ।।
एकाहारं ततः कृत्वा मासमेकं वरानने ।। ६९ ।।
वीरासनविधींश्चैव कारयेत्सप्त सप्त च ।।
चतुर्थं भक्ष्यमेकेन मासेन घृतपायसम् ।। ।। 134.७० ।।
यावकान्नं त्रीण्यहानि वायुभक्षो दिनत्रयम् ।।
य एतेन विधानेन देवि कर्माणि कारयेत् ।।७१ ।। ।
सवर्पापप्रमुक्तश्च मम लोकं स गच्छति ।। ७२ ।।
इति श्रीवराहपुराणे पूजादिसामयिकापराधप्रायश्चित्तं नाम चतुस्त्रिंशदधिकशततमोऽध्यायः ।। १३४ ।।

अथ जालपादभक्षणापराधप्रायश्चित्तम् ।।
श्रीवराह उवाच ।।
रक्तवस्त्रेण संयुक्तो यो हि मामुपसर्पति ।।
तस्यापि शृणु सुश्रोणि कर्म संसारमोक्षणम् ।। १ ।।
रजस्वलासु नारीषु रजो यत्तत्प्रवर्त्तते ।।
तेनासौ रजसा पुष्टो कर्मदोषेण जानतः ।। २ ।।
वर्षाणि दश पञ्चैव वसते तत्र निश्चयात् ।।
रजो भूत्वा महाभागे रक्तवस्त्रपरायणः ।। ३ ।।
प्रायश्चितं प्रवक्ष्यामि तस्य कायविशोधनम् ।।
येन शुध्यन्ति ते भूमे पुरुषाः शास्त्रनिश्चिताः ।। ४ ।।
एकाहारं ततः कृत्वा दिनानि दश सप्त च।।
वायुभक्षस्त्रीण्यहानि दिनमेकं जलाशनः ।। ५ ।।
एवं स मुच्यते भूमे मम विप्रियकारकः ।।
प्रायश्चित्तं ततः कृत्वा ममासौ रोचते सह ।। ६ ।।
एतत्ते कथितं भूमे रक्तवस्त्रविभूषिते ।।
प्रायश्चित्तं महाभागे सर्वसंसारमोक्षणम् ।। ७ ।।
यस्तु मामन्धकारेषु विना दीपेन सुन्दरि ।।
स्पृशते च विना शास्त्रं त्वरमाणो विमोहितः ।। ८ ।।
पतनं तस्य वक्ष्यामि शृणुष्व त्वं वसुन्धरे ।।
तेन क्लेशं समासाद्य क्लिश्यते च नराधमः ।। ९ ।।
अन्धो भूत्वा महाभागे एकं जन्म तमोमयः ।।
सर्वाशी सर्वभक्षश्च मानवः सोऽभिजायते ।। 135.१० ।।
अनन्यमानसो भूत्वा भूमे ह्येतत्प्रसाधयेत् ।।
प्रायश्चित्तं प्रवक्ष्यामि अन्धकारे तु यः पुरा ।। ११ ।।
संस्पृशेत्सोऽपि धर्मात्मा येन लोकं मम व्रजेत् ।।
अक्ष्णोराच्छादनं कृत्वा दिनानि दश पञ्च च ।। १२ ।।
एकाहारं ततः कृत्वा दिनविंशं समाहितः ।।
यस्य कस्यापि मासस्य एकामेव च द्वादशीम् ।।१३ ।।
एकाहारस्ततो भूत्वा निषीदेच्च जलाशनः ।।
ततो यवान्नं भुञ्जीत गोमूत्रेण तु पाचितम् ।। १४ ।।
प्रायश्चित्तेन चैतेन मुच्यते पातकात्ततः ।।
यः पुनः कृष्णवस्त्रेण मम कर्मपरायणः ।। १५ ।।
देवि कर्माणि कुर्वीत तस्य वै पातनं शृणु ।।

घुणो वै पञ्चवर्षाणि लाजवास्तुसमाश्रयः ।। १६ ।।
पञ्च वर्षाणि नकुलो दश वर्षाणि कच्छपः ।।
एवं भ्रमति संसारे मम कर्मपरायणः ।। १७ ।।
पारावतेषु जायेत नव वर्षाणि पञ्च च ।।
जातो ममापराधेन स्थितः पारावतो भुवि ।। १८ ।।
मम तिष्ठति पार्श्वेषु यत्रैवाहं प्रतिष्ठितः ।।
प्रायश्चित्तं प्रवक्ष्यामि तस्य संसारमोक्षणे ।। १९ ।।
येनासौ लभते सिद्धिं कृष्णवस्त्रापराधतः ।।
सप्ताहं यावकं भुक्त्वा त्रिरात्रं सक्तुपिण्डिकाम्।। 135.२० ।।
त्रीणि पिण्डांस्त्रिरात्रं तु एवं मुच्येत किल्बिषात् ।।
य एतेन विधानेन देवि कर्माणि कारयेत् ।। २१ ।।
शुचिर्भागवतो भूत्वा मम मार्गानुसारतः ।।
न स गच्छति संसारं मम लोकं स गच्छति ।। २२ ।।
वाससा चाप्यधौतेन यो मे कर्माणि कारयेत् ।।
शुचिर्भागवतो भूत्वा मम मार्गानुसारकः ।। २३ ।।
तस्य दोषं प्रवक्ष्यामि अपराधं वसुन्धरे ।।
पतन्ति येन संसारं वाससोच्छिष्टकारिणः ।। २४ ।।
देवि भूत्वा गजो मत्तस्तिष्ठत्येकं नरो भुवि ।।
उष्ट्रश्चैकं भवेज्जन्म जन्म चैकं वृकस्तथा ।। २५ ।।
गोमायुरेकं जन्मापि जन्म चैकं हयस्तथा ।।
सारङ्गस्त्वेकजन्मा वै मृगो भवति वै ततः ।। २६ ।।
सप्तजन्मान्तरं पश्चात्ततो भवति मानुषः ।।
मद्भक्तश्च गुणज्ञश्च मम कर्मपरायणः ।। २७ ।।
दक्षो निरपराधश्च अहङ्कारविवर्जितः ।।
धरण्युवाच ।।
श्रुतमेतन्मया देव यत्त्वया समुदाहृतम् ।। २८ ।।
संसारं वाससोच्छिष्टा येन गच्छन्ति मानुषाः।।
प्रायश्चित्तं च मे ब्रूहि सर्वकर्मसुखावहम् ।। २९ ।।
किल्बिषाद्येन मुच्यन्ते तव कर्मपरायणाः ।।
श्रीवराह उवाच ।।
शृणु तत्त्वेन मे देवि कथ्यमानं मयाऽनघे ।। 135.३० ।।
प्रायश्चित्तं प्रवक्ष्यामि मम कर्मपरायणः ।।
यावकेन त्रीण्यहानि पिण्याकेन दिनत्रयम् ।। ३१ ।।

पर्णभक्षस्त्रीण्यहानि पयोभक्षो दिनत्रयम् ।।
पायसेन त्रिरात्रं तु वायुभक्षो दिनत्रयम् ।। ३२ ।।
एवं कृत्वा महाभागे वाससोच्छिष्टकारिणः ।।
अपराधं न विन्देरन्संसारं न प्रयान्ति च ।। ३३ ।।
श्वानोच्छिष्टं तु यो दद्यान्मम कर्मपरायणः ।।
पापं तस्य प्रवक्ष्यामि संसारे च महद्भयम् ।। ३४ ।।
श्वानो वै सप्त जन्मानि गोमायुः सप्त वै तथा ।।
उलूकः सप्तवर्षाणि पश्चाज्जायेत मानुषः ।। ३५ ।।
विशुद्धात्मा श्रुतिज्ञश्च मद्भक्तश्चैव जायते ।।
गृहे भागवतोत्कृष्टे अपराधविवर्जितः ।। ३६ ।।
शृणु तत्त्वेन वसुधे प्रायश्चित्तं महौजसम् ।।
तरन्ति मानुषा येन त्यक्त्वा संसारसागरम् ।। ३७ ।।
मूलभक्षो दिनत्रय्यां फलाहारो दिनत्रयम् ।।
शाकभक्षो दिनत्रय्यां पयोभक्षो दिनत्रयम् ।। ३८ ।।
दध्याहारो दिनत्रय्यां पायसेन दिनत्रयम् ।।
वाय्वाहारो दिनत्रय्यां स्नानं कृत्वा दृढव्रतः ।। ३९ ।।
एवं दिनान्येकविंशत्कृत्वा वै शुभलक्षणम् ।।
अपराधं न विन्देत मम लोकं स गच्छति ।। 135.४० ।।
भुक्त्वा वराहमांसं तु यश्च मामिह सर्पति ।।
पातनं तस्य वक्ष्यामि यथा भवति सुन्दरि ।। ४१ ।।
वराहो दश वर्षाणि कृत्वानुचरते वने ।।
व्याधो भूत्वा महाभागे समाः पञ्च च सप्त च ।। ४२ ।।
ततश्च मूषको भूत्वा वर्षाणि च चतुर्दश ।।
ऊनविंशतिवर्षाणि यातुधानश्च जायते ।। ४३ ।।
सल्लकी चाष्टवर्षाणि जायते भवने बहु ।।
व्याघ्रस्त्रिंशच्च वर्षाणि जायते पिशिताशनः ।। ४४ ।।
एवं संसारितां गत्वा वराहामिषभक्षकः ।।
जायते विपुले सिद्धे कुले भागवते तथा ।। ४५ ।।
हृषीकेशवचः श्रुत्वा सर्वं सम्पूर्णलक्षणम् ।।
शिरसा चाञ्जलिं कृत्वा वाक्यं चेदमुवाच ह ।। ४६ ।।
एतन्मे परमं गुह्यं तव भक्तसुखावहम् ।।
वराहमांसभक्षस्तु येन मुच्येत किल्बिषात् ।। ४७ ।।
तरन्ति मानुषा येन तिर्यक्संसारसागरात् ।।

गोमयेन दिनं पञ्च कणाहारेण सप्त वै ।। ४८ ।।
पानीयं तु ततो भुक्ता तिष्ठेत्सप्तदिनं ततः ।।
अक्षारलवणं सप्त सक्तुभिश्च तथा त्रयः ।।४९।।
तिलभक्षो दिनान्सप्त पाषाणस्य च भक्षकः ।।
पयो भुक्त्वा दिनं सप्त कारयेद्बुद्धिमान्मनः।।135.५०।।
क्षान्तं दान्तं तथा कृत्वा अहङ्कारविवर्ज्जितः।।
दिनान्येकोनपञ्चाशच्चरेत्कृतविनिश्चयः।।५१।।
विमुक्तः सर्वपापेभ्यः ससंज्ञो विगतज्वरः ।।
कृत्वा मम च कर्माणि मम लोकं स गच्छति ।।५२।।
जालपादं भक्षयित्वा यस्तु मामुपसर्पति ।।
जालपादस्ततो भूत्वा वर्षाणि दश पञ्च च ।। ५३ ।।
कुम्भीरो दश वर्षाणि पञ्च वर्षाणि सूकरः ।।
तावद्भ्रमति संसारे मम चैवापराधतः ।। ५४ ।।
कृत्वा तु दुष्करं कर्म जायते विपुले कुले ।।
शुद्धो भागवतश्रेष्ठो ह्यपराधविवर्जितः ।। ५५।।
सर्वकर्माण्यतिक्रम्य मम लोकं स गच्छति ।।
प्रायश्चितं प्रवक्ष्यामि जालपादस्य भक्षणे ।। ५६ ।।
तरन्ति मनुजा येन घोरसंसारसागरात् ।।
यावकान्नं दिनत्रय्यां वायुभक्षो दिनत्रयम् ।। ५७ ।।
फलभक्षो दिनत्रय्यां तिलभक्षो दिनत्रयम् ।।
अक्षारलवणान्नाशी पुनस्तत्र दिनत्रयम् ।। ५८ ।।
दशपञ्च दिनान्येवं प्रायश्चित्तं समाचरेत् ।।
जालपादापराधस्य एवं कुर्वीत शोधनम्।।
विनीतात्मा शुचिर्भूत्वा य इच्छेत्सुशुभां गतिम् ।।५९।।
इति श्रीवराहपुराणे जालपादभक्षणापराधप्रायश्चित्तं नाम पञ्चत्रिंशदधिकशततमोऽध्यायः।। १३५।।

अथ प्रायश्चित्तकर्मसूत्रम्।।
श्रीवराह उवाच ।।
दीपं स्पृष्ट्वा तु यो देवि मम कर्माणि कारयेत् ।।
तस्यापराधाद्वै भूमे पापं प्राप्नोति मानवः।।१ ।।
तच्छृणुष्व महाभागे कथ्यमानं मयाऽनघे।।
जायते षष्टिवर्षाणि कुष्ठी गात्रपरिप्लुत।।२।।
चाण्डालस्य गृहे तत्र एवमेतन्न संशयः ।।
एवं भुक्त्वा तु तत्कर्म मम क्षेत्रे मृतो यदि ।। ३ ।।
मद्भक्तश्चैव जायेत शुद्धे भागवते गृहे ।।
प्रायश्चित्तं प्रवक्ष्यामि दीपस्य स्पर्शनाद्भुवि ।।४।।
तरन्ति मनुजा येन कष्टं चाण्डालयोनिषु ।।
यस्य कस्यापि मासस्य शुक्लपक्षे च द्वादशी ।। ५ ।।
चतुर्थभक्तमाहारमाकाशशयने स्वपेत् ।।
दीपं दत्त्वापराधाद्वै तरन्ति मनुजा भुवि ।। ६ ।।
शुचिर्भूत्वा यथान्यायं मम कर्मपथे स्थितः ।।
एतत्ते कथितं भद्रे स्पर्शने दीपकस्य तु ।। ७ ।।
संसारशोधनं चैव यत्कृत्वा लभते शुभम् ।।
श्मशानं यो नरो गत्वा अस्नात्वैव तु मां स्पृशेत् ।। ८ ।।
मम दोषापराधस्य शृणु तत्त्वेन यत्फलम् ।।
जम्बुको जायते भूमौ वर्षाणां नव पंच च ।। ९ ।।
गृध्रस्तु सप्त वर्षाणि जायते खचरेश्वरः ।।
चरन्तौ मानुषं मांसमुभौ तौ गृध्रजम्बुकौ ।। 136.१० ।।
पिशाचो जायते तत्र वर्षाणि नव पंच च ।।
ततस्तु कुणपोच्छिष्टं त्रिंशद्वर्षाणि खादति ।। ११ ।।
ततो नारायणाच्छ्रुत्वा धरणी वाक्यमब्रवीत् ।।
एतन्मे परमं गुह्यं लोकनाथ जनार्दन ।। १२ ।।
परं कौतूहलं देव निखिलं वक्तुमर्हसि ।।
श्मशानं पुण्डरीकाक्ष ईश्वरेण प्रशंसितम्।। १३।।
किन्त्वत्र त्रिगुणं देव पवित्रे शिवभाषिते ।।
स तव रमते नित्यं भगवांस्तु महामतिः।।१४।।
कपालं गृह्य देवोऽत्र दीप्तिमन्तं महौजसम् ।।
प्रशंसितं च रुद्रेण भवता किं विनिन्दितम् ।। १५ ।।
श्मशानं पद्मपत्राक्ष रुद्रस्य च निशि प्रियम् ।।

श्रीवराह उवाच ।।
शृणु तत्त्वेन मे देवि इदमाख्यानमुत्तमम् ।। १६।।
अद्यापि ते न जानन्ति ह्यनघे संशितव्रताः ।।
कृत्वा सुदुष्करं कर्म सर्वभूतपतिं हरिम् ।। १७ ।।
हत्वा च बालान्वृद्धांश्च त्रिपुरे रूपिणीः स्त्रियः ।।
तेन पापेन सम्बद्धो न शक्नोति विचेष्टितुम् ।। १८।।
प्रणष्टमानसैश्वर्यो नष्टा माया च योगिनः ।।
विवर्णवदनो भूत्वा तिष्ठते स महेश्वरः ।। १९।।
तत्र स्थाने शिवो भूमे गणैः सर्वैः समावृतः ।।
नष्टमायं ततो देवि चिन्तयामि वसुन्धरे ।। 136.२० ।।
ततो ध्यातो मया देवि शङ्करः पुनरेष्यति ।।
यावत्पश्यामि तं देवं देवि दिव्येन चक्षुषा ।। २१ ।।
नष्टं मायाबलं रुद्रं सर्वभूतमहेश्वरम् ।।
ततोऽहं तत्र गत्वा तु यष्टुकामं त्रियम्बकम् ।। २२ ।।
नष्टसंज्ञो हतज्ञानो नष्टयोगबलोऽबलः ।।
तत ईशो मया चोक्तो वाक्यमेवं सुखावहम् ।। २३ ।।
किमिदं तिष्ठसे रुद्र कश्मलेन समावृतः ।।
त्वं कर्त्ता च विकर्त्ता च विकाराकार एव च ।। २४ ।।
त्वं वैशाख्यं वियोगं च त्वं योनिस्त्वं परायणम् ।।
त्वमुग्रदेवदेवादिस्त्वं साम त्वं तथा दिशः ।। २५ ।।
किं न बुध्यति चात्मानं गणैः परिवृतो भवान् ।।
किमिदं देवदेवेश विवर्णः पृथुलोचनः ।। २६ ।।
तन्ममाचक्ष्व तत्त्वेन यत्पृष्टोसि मया भवान् ।।
स्मर योगं च मायां च पश्य विष्णोर्महात्मनः ।। २७ ।।
तव चैव प्रियार्थाय येनाहमिह चागतः ।।
ततो मम वचः श्रुत्वा लब्धसंज्ञो महेश्वरः ।।२८।।
उवाच मधुरं वाक्यं पापसन्तप्तलोचनः ।।
श्रृणु तत्त्वेन मे देव कोऽन्योऽप्येवं करिष्यति ।।२९।।
देवं नारायणं चैकं सर्वलोकमहेश्वरम् ।।
हे विष्णो त्वत्प्रसादेन देवत्वं चैव माधव।।136.३० ।।
लब्धो योगश्च साङ्ख्यं च जातोऽस्मि विगतज्वरः ।।
त्वत्प्रसादेन जातोऽस्मि पूर्णाम्बुरिव सागरः ।। ३१ ।।
अहं त्वां तु विजानामि मां त्वं जानासि माधव ।।

आवयोरन्तरं कोऽपि न पश्यति जनार्दन ।। ३२ ।।
ब्रह्माणं तु विजानाति नावयोरन्तरेण हि ।।
साधु विष्णो महाभाग सर्वमायाकरण्डक ।। ३३ ।।
एवं मह्यं हरो वाक्यमुक्त्वा भूतमहेश्वरः ।।
मुहूर्तं ध्यानमास्थाय पुनः प्रोवाच माधवि ।। ३४ ।।
तव विष्णो प्रसादेन मया तत्त्रिपुरं हतम् ।।
निहता दानवास्तत्र गर्भिण्यश्च निपातिताः ।। ३५ ।।
बालवृद्धा हतास्तत्र विस्फुरन्तो दिशो दश ।।
तस्य पापस्य दोषेण न शक्नोमि विचेष्टितुम् ।। ३६ ।।
प्रणष्टयोगमायश्च नष्टैश्वर्यश्च माधव ।।
कि कर्त्तव्यं मया विष्णो पापावस्थेन सम्प्रति ।।३७।।
विष्णो तत्त्वेन मे ब्रूहि शोधनं पाप नाशनम् ।।
येन वै कृतमात्रेण शुद्धो मुच्येत किल्बिषात् ।। ३८ ।।
एवं चिन्तात्मनस्तस्य मया रुद्रस्य भाषितम् ।।
कपालमालां गृहीत्वा समलं गच्छ शङ्कर ।। ३९ ।।
ममैवं वचनं श्रुत्वा भगवान्परमेश्वरः ।।
उवाच मां पुनर्व्यक्तं मां बोधय जगत्पते ।। 136.४० ।।
कीदृशः समलो विष्णो यत्र गच्छामहे वयम् ।।
ततस्तस्य वचः श्रुत्वा शङ्करस्य महेश्वरि ।। ४१ ।।
तत्पापशोधनार्थाय मया वाक्यं प्रभाषितम् ।।
श्मशानं समलं रुद्र पूतिको व्रणगन्धिकः ।। ४२ ।।
स्वयं तिष्ठन्ति वै तत्र मनुजा विगतस्पृहः ।।
तत्र गृह्य कपालानि रम तत्रैव शङ्कर ।। ४३ ।।
तत्र वर्षसहस्राणि दिव्यान्येव दृढव्रतः ।।
ततो भक्षय मांसानि पापक्षयचिकीर्षुकः ।। ४४ ।।
हतानां चैव मांसानि ये च भोज्यास्तव प्रियाः ।।
एवं सर्वैर्गणैः सार्द्धं वस तत्र सुनिश्चितः ।। ४५ ।।
पूर्णे वर्षसहस्रे तु स्थित्वा त्वं समले पुनः ।।
गच्छाश्रमपदं पश्चाद्गौतमस्य महामुनेः ।। ४६ ।।
तत्र ज्ञास्यसि चात्मानं गौतमाश्रमसंस्थितः ।।
प्रसादाद्गौतममुनेर्भवता गतकिल्बिषः ।। ४७ ।।
सततं पापसम्पन्नं कपालं शिरसि स्थितम् ।।
ऋषिः पातयितुं शक्तस्त्वत्प्रसादान्न सशंयः ।। ४८ ।।

एवं रुद्रं वरं दत्त्वा तत्रैवान्तर्हितोऽभवम् ।।
रुद्रोऽपि भ्रमते तत्र श्मशाने पापसंवृते ।।४९।।
अतो न रोचते भूमे श्मशानं मे कदाचन ।।
यत्र रुद्रकृतं पापं स्थितं किल भयावहम् ।। 136.५० ।।
एतत्ते कथितं भद्रे श्मशानं मे जुगुप्सितम् ।।
विना तु कृतसंस्कारो मम कर्मपरायणः ।। ५१ ।।
प्रायश्चित्तं प्रवक्ष्यामि येन शुध्यति किल्बिषात् ।।
कृत्वा चतुर्थभक्षं तु दिनानि दश पंच च ।। ५२ ।।
आकाशशयनं कुर्यादेकवस्त्रः कुशासने ।।
प्रभाते पंचगव्यं च पातव्यं कर्मशोधनम् ।। ५३ ।।
विमुक्तः सर्वपापेभ्यो मम लोकं स गच्छति ।।
पिण्याकं भक्षयित्वा तु यो देवमुपसर्पति ।। ५४ ।।
तस्य वै शृणु सुश्रोणि प्रायश्चित्तं सुशोधनम् ।।
उलूको दश वर्षाणि कच्छपस्तु समास्त्रयः ।। ५५ ।।
जायते मानवस्तत्र मम कर्मपरायणः ।।
यांस्तु दोषान्प्रपश्यन्ते संसारेऽस्मिन्वसुन्धरे ।। ५६ ।।
तस्य वक्ष्यामि सुश्रोणि प्रायश्चित्तं महौजसम् ।।
किल्बिषाद्येन मुच्येत संसारान्तं च गच्छति ।। ५७ ।।
यावकेन दिनैकं तु गोमूत्रेण च कारयेत्।।
रात्रौ वीरासनं कुर्यादाकाशशयने वसेत् ।। ५८ ।।
न स गच्छति संसारं मम लोकं स गच्छति ।।
वराहमांसेन तु यो मम कुर्वीत प्रापणम् ।। ५९ ।।
मूर्खः स पापकर्मा च मम कर्मपरायणः ।।
यांस्तु दोषान्प्रपद्येत संसारं च वसुन्धरे ।। 136.६० ।।
यावद्रोम वराहस्य मम गात्रेषु संस्थितम् ।।
तावद्वर्षसहस्राणि नरके पच्यते भुवि ।। ६१ ।।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।।
वाराहेण तु मांसेन यस्तु कुर्वीत प्रापणम् ।। ६२ ।।
यावत् तत्तनुसंस्थं तु भजते तु प्रतिष्ठितम् ।।
तावत्स पतते देवि सौकरीं योनिमास्थितः ।।६३।।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।।
यां गतिं सम्प्रपद्येत मम कर्मपरायणः ।।६४।।
अन्धो भूत्वा ततो देवि जन्म चैवं प्रतिष्ठितम् ।।

एवं गत्वा तु संसारं वराहमांसप्रापणात् ।।६५।।
जायते विपुले सिद्धे कुले भागवते शुचिः ।।
विनीतः कृतसंस्कारो मम कमर्परायणः ।।६६।।
द्रव्यवान्गुणवांश्चैव रूपवाञ्छीलवाञ्छुचिः ।।
प्रायश्चित्तं प्रवक्ष्यामि तस्य कायविशोधनम् ।। ६७ ।।
किल्बिषाद्येन मुच्येत मम कर्मपरायणः ।।
फलाहारो दिनान्सप्त सप्त मूलाशनस्तथा ।। ६८ ।।
दिनानि सप्त तिष्ठेत सप्त वै पायसेन च ।।
तक्रेण सप्त दिवसान्सप्त पावकभोजनः ।। ६९ ।।
प्रायश्चित्तान्महाभागे मम लोकं स गच्छति ।।
मद्यं पीत्वा वरारोहे यस्तु मामुपसर्पति ।। 136.७० ।।
तत्र दोषं प्रवक्ष्यामि शृणु सुन्दरि तत्त्वतः ।।
दशवर्षसहस्राणि दरिद्रो जायते पुनः ।।७१।।
ततो भवेत्सुपूतात्मा मद्भक्तः स न संशयः ।।
यस्तु भागवतो भूत्वा कामरागेण मोहितः ।। ७२ ।।
दीक्षितः पिबते मद्यं प्रायश्चित्तं न विद्यते ।।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।। ७३ ।।
अग्निवर्णां सुरां पीत्वा तेन मुच्येत किल्बिषात् ।।
य एतेन विधानेन प्रायश्चित्तं समाचरेत् ।। ७४ ।।
न स लिप्यति पापेन संसारं च न गच्छति ।।
कौसुम्भं चैव यः शाकं भक्षयेन्मम पूजकः ।।७५।।
नरके पच्यते घोरे दश पंच च सूकरः ।।
ततो गच्छेच्छ्वयोनौ च त्रीणि वर्षाणि जम्बुकः ।।७६।।
वर्षमेकं ततः शुध्येन्मत्कर्मणि रतः शुचिः ।।
मम लोकमवाप्नोति शुद्धो भूत्वा वसुन्धरे ।।७७।।
ततो भूमिर्वचः श्रुत्वा प्रत्युवाच पुनर्हरिम् ।।
कुसुम्भशाकनैवेद्यप्रापणेन च किल्बिषात्।।७८।।
कथं मुच्येत देवेश प्रायश्चित्तं वद प्रभो ।।
श्रीवराह उवाच ।।
यो मे कुसुम्भशाकेन प्रापणं कुरुते नरः ।। ७९ ।।
दशवर्षसहस्राणि नरके परिपच्यते ।।
प्रायश्चित्तं प्रवक्ष्यामि तच्च मे वदतः शृणु ।। 136.८० ।।
भक्षणे तु कृते कुर्याच्चान्द्रायणमतन्द्रितः ।।

प्रापणे तु कृते कुर्याद्द्वादशाहं पयोव्रतम् ।। ८१ ।।
य एतेन विधानेन प्रायश्चित्तं समाचरेत् ।।
न स लिप्येत पापेन मम लोकं च गच्छति ।। ८२ ।।
यः पारक्येण वस्त्रेण न धूतेन च माधवि ।।
प्रायश्चित्ती भवेन्मूर्खो मम कर्मपरायणः ।। ८३ ।।
करोति मम कर्माणि स्पृशते मां तदा स्थितः ।।
मृगो वै जायते देवि वर्षाणि त्रीणि सप्त च ।।८४।।
हीनपादेन जायेत चैकं जन्म वसुन्धरे ।।
मूर्खश्च क्रोधनश्चैव मद्भक्तश्चैव जायते ।। ८५ ।।
तस्य वक्ष्यामि सुश्रोणि प्रायश्चित्तं महौजसम् ।।
येन गच्छति संसारं मम भक्तो व्यवस्थितः ।। ८६ ।।
अष्टभक्तं ततः कृत्वा मम भक्तिपरायणः ।।
माघस्यैव तु मासस्य शुक्लपक्षस्य द्वादशीम् ।। ८७ ।।
तिष्ठेज्जलाशये गत्वा शान्तो दान्तो यतव्रतः ।।
अनन्यमानसो भूत्वा मम चिन्तापरायणः ।। ८८ ।।
प्रभातायां तु शर्वर्यामुदिते तु दिवाकरे ।।
पचगव्यं ततः पीत्वा मम कर्माणि कारयेत् ।।८९।।
य एतेन विधानेन प्रायश्चित्तं समाचरेत्।।
सर्वपापविनिर्मुक्तो मम लोकं स गच्छति ।।136.९०।।
( अकृत्वा यो नवान्नानि मम कर्मपरायणः ।।)
ततो भागवतो भूत्वा नवान्नं यो न कारयेत् ।। ९१ ।।
पितरस्तस्य नाश्नन्ति वर्षाणि दश पंच च ।।
अदत्त्वा यस्तु भुञ्जीत नवान्नानि कदाचन ।। ९२ ।।
न तस्य धर्मो विद्येत एवमेतन्न संशयः ।।
अन्यच्च ते प्रवक्ष्यामि येन तस्मात्प्रमुच्यते ।। ९३ ।।
प्रायश्चित्तं महाभागे मम भक्तसुखावहम् ।।
उपवासं त्रिरात्रं तु तत एकेन वा पुनः ।। ९४ ।।
आकाशशयनं कृत्वा चतुर्थेऽहनि शुध्यति ।।
एवं तत्र विधिं कृत्वा उदिते च दिवाकरे ।। ९५ ।।
पंचगव्यं ततः पीत्वा शीघ्रं मुच्येत किल्बिषात् ।।
य एतेन विधानेन प्रायश्चित्तं समाचरेत् ।। ९६ ।।
सर्वसङ्गं परित्यज्य मम लोकं स गच्छति ।।
अदत्त्वा गन्धमाल्यानि यो मे धूपं प्रयच्छति ।। ९७ ।।

कुणपो जायते भूमे यातुधानो न संशयः ।।
वर्षाणि चैकविंशानि अयस्कारनिवासकः ।। ९८ ।।
तिष्ठत्यत्र महाभागे एवमेतन्न संशयः ।।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।। ९९ ।।
प्रायश्चित्तं प्रवक्ष्यामि येन मुच्येत किल्बिषात् ।।
यस्य कस्यचिन्मासस्य शुक्लपक्षस्य द्वादशीम् ।। 136.१०० ।।
उपोष्य चाष्टभक्तं तु दशैकादशमेव च ।।
प्रभातायां तु शर्वर्यामुदिते रविमण्डले ।। १०१ ।।
पंचगव्यं ततः पीत्वा शीघ्रं मुच्यति किल्बिषात् ।।
य एतेन विधानेन प्रायश्चित्तं समाचरेत् ।। १०२ ।।
तानि तानि तरन्त्येव सर्व एव पितामहाः ।।
वहन्नुपानहौ पद्भ्यां यस्तु मामुपचक्रमेत् ।। १०३ ।।
चर्मकारस्तु जायेत वर्षाणां तु त्रयोदश ।।
तज्जन्मनः परिभ्रष्टः सूकरो जायते पुनः ।। १०४।।
सूकरत्वात्परिभ्रष्टः श्वा भवेच्च जुगुप्सितः ।।
ततः श्वत्त्वात्परिभ्रष्टो मानुषेषूपजायते ।। १०५ ।।
मद्भक्तश्च विनीतश्च अपराधविवर्जितः ।।
मुक्तस्तु सर्वसंसारान्मम लोकं स गच्छति ।। १०६ ।।
य एतेन विधानेन वसुधे कर्म कारयेत् ।।
न स लिप्येत पापेन एवमेतन्न संशयः ।। १०७ ।।
भेरीशब्दमकृत्वा तु यस्तु मां प्रतिबोधयेत् ।।
बधिरो जायते भूमे एकं जन्म न संशयः ।। १०८ ।।
तस्य वक्ष्यामि सुश्रोणि प्रायश्चित्तं मम प्रियम् ।।
किल्बिषाद्येन मुच्येत भेरीताडनमोहितः ।। १०९ ।।
यस्य कस्यचिन्मासस्य शुक्लपक्षे तु द्वादशी ।।
आकाशशयनं कृत्वा शीघ्रं मुच्येत किल्बिषात् ।। 136.११० ।।
य एतेन विधानेन वसुधे कर्म कारयेत् ।।
अपराधं न गच्छेत्तु मम लोकं स गच्छति ।। १११ ।।
अन्नं भुक्त्वा बहुतरमजीर्णेन परिप्लुतः ।।
उद्गारेण समायुक्तः अस्नात उपसर्पति ।। ११२ ।।
एकजन्मनि श्वा चैव वानरश्चैव जायते ।।
एकस्मिञ्जन्मनि च्छागः सृगालश्चैकजन्मनि ।। ११३ ।।
एकजन्म भवेदन्धो मूषको जायते पुनः ।।

तारितो ह्येष संसाराज्जायते विपुले कुले ।।११४।।
शुद्धो भागवतः श्रेष्ठस्त्वपराधविवर्ज्जित।।
प्रायश्चित्तं प्रवक्ष्यामि मम भक्तसुखावहम्।।११५।।
किल्बिषाद्येन मुच्येत मम भक्तिपरायणः ।।
त्रिदिनं पावकाहारो मूलाहारो दिनत्रयम् ।। ११६ ।।
पायसेन दिनत्रय्यां त्रिदिनं सक्तुना तथा ।।
त्रिदिनं वायुभक्षोऽपि आकाशशयनस्त्रिकम् ।।११७।।
उत्थायापररात्रे तु कृत्वा वै दन्तधावनम्।।
पंचगव्यं पिबेच्चैव शरीरपरिशोधनम् ।।११८।।
य एतेन विधानेन प्रायश्चित्तं समाचरेत् ।।
न स लिप्येत पापेन मम लोकं स गच्छति ।। ११९ ।।
आख्यानानां महाख्यानं तपसां च परं तपः ।।
अत्राहं कीर्त्तयिष्यामि ब्राह्मणेभ्यो महेश्वरि ।। 136.१२० ।।
एष धर्मश्च कीर्त्तिश्च आचाराणां महौजसाम् ।।
गुणानां च परं श्रेष्ठं ऋतीनां च महा ऋतिः ।। १२१ ।।
य एतत्पठते नित्यं कल्यमुत्थाय मानवः ।।
स पितॄँस्तारयेज्जन्तुर्दश पूर्वान्दशापरान् ।। १२२ ।।
आरोग्याणां महारोग्यं मङ्गलानां तु मङ्गलम् ।।
रत्नानां परमं रत्नं सर्वपापप्रणाशनम् ।। १२३ ।।
यस्तु भागवतो नित्यं पठते च दृढव्रतः ।।
कृत्वा सर्वापराधानि न स पापेन लिप्यते ।। १२४ ।।
एष जप्यः प्रमाणं च सन्ध्योपासनमेव च ।।
कल्यमुत्थाय पठते मम लोकं स गच्छति ।। १२५ ।।
न पठेन्मूर्खमध्ये तु कुशिष्याणां तथैव च ।।
दद्याद्भागवते श्रेष्ठे मम कर्मपरायणे ।। १२६ ।।
एतत्ते कथितो देवि आचारस्य विनिश्चयः ।।
पूर्वं त्वया यत्पृष्टं तु किमन्यच्छ्रोतुमिच्छसि ।। १२७ ।।
इति श्रीवराहपुराणे भगवच्छास्त्रे प्रायश्चित्तकर्मसूत्रं नाम षट्त्रिंशदधिकशततमोऽध्यायः ।। १३६ ।।

अथ गृध्रजम्बुकाख्यानम् । तत्रादित्यवरप्रदानम् ।।
सूत उवाच ।।
श्रुत्वा तु विपुलं ह्येतदपराधविशोधनम् ।।
कर्म भागवतं श्रेष्ठं सर्वभागवत प्रियम् ।। १ ।।
अहो कर्म महाश्रेष्ठं भगवंस्तव भाषितम् ।।
मम चैव प्रियार्थाय तव भक्तसुखावहम् ।। २ ।।
श्रुतं ह्येव महाबाहो सर्वधर्मार्थ साधकम्।।
तव भक्तसुखार्थाय तद्भवान्वक्तुमर्हति।।३।।
किमुच्यते व्रतं चैव शुभं कुब्जाम्रकं महत् ।।
कतरच्चापि तच्छ्रेष्ठं क्षेत्रं भक्तसुखावहम् ।।४।।
श्रीवराह उवाच ।।
शृणु मे परमं गुह्यं यत्त्वया पृच्छितं मम ।।
मम क्षेत्रं परं चैव शुद्धं भागवतप्रियम् ।।५।।
परं कोकामुखं स्थानं तथा कुब्जा म्रकं परम् ।।
परं सौकरवं स्थानं सर्वसंसारमोक्षणम् ।। ६ ।।
यत्र संस्था च मे देवि ह्युद्धृतासि रसातलात् ।।
यत्र भागीरथी गङ्गा मम सौकरवे स्थिता ।। ७ ।।
धरोवाच ।।
केषु लोकेषु यान्तीश सौकरे ये मृताः प्रभो ।।
किं वा पुण्यं भवेत्तत्र स्नातस्य पिबतस्तथा ।। ८ ।।
कति तीर्थानि पद्माक्ष क्षेत्रे सौकरवे तव ।।
धर्मसंस्थापनार्थाय तद्विष्णो वक्तुमर्हसि ।। ९ ।।
श्रीवराह उवाच ।।
शृणु तत्त्वेन मे देवि यत्त्वं मां परिपृच्छसि ।।
यां गतिं ते प्रपद्यन्ते नराः सौकरवे मृताः।।१३७.१० ।।
यत्र स्नातस्य यत्पुण्यं गतस्य च मृतस्य च।।
यत्र यानि च तीर्थानि मम संस्थानसंस्थिताः।।११।।
शृणु पुण्यं महाभागे मम क्षेत्रेषु सुन्दरि ।।
प्राप्नुवन्ति महाभागे गता सौकरवं प्रति ।। १२ ।।
दश पूर्वापराश्चापि अपरे सप्त पंच च ।।
स्वर्गं गच्छन्ति पुरुषास्तेषां ये तत्र वै मृताः ।। १३ ।।
गमनादेव सुश्रोणि मुखस्य मम दर्शनात् ।।
सप्तजन्मान्तरे भद्रे जायते विपुले कुले ।। १४ ।।

धनधान्यसमृद्धेषु रूपवान्गुणवान् शुचिः ।।
मद्भक्तश्चैव जायेत मम कर्मपरायणः ।। १५ ।।
एवं वै मानुषो भूत्वा अपराधविवर्जितः ।।
गमनं तस्य क्षेत्रस्य मरणं तत्र कारणम् ।।१६।।
ये मृतास्तस्य क्षेत्रस्य सौकरस्य प्रभावतः ।।
शङ्खचक्रगदापद्मधनुर्हस्ताश्चतुर्भुजाः ।।१७।।
त्यक्त्वा कलेवरं तूर्णं श्वतेद्द्वीपं प्रयान्ति ते ।।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।। १८ ।।
तीर्थेषु तेषु स्नातश्च यां प्राप्नोति परां गतिम् ।।
चक्रतीर्थं महाभागे यत्र चक्रं प्रतिष्ठितम् ।। १९ ।।
शृणु पुण्यं तत्र भद्रे प्राप्नोति परमं नरः ।।
चक्रतीर्थे नरो गत्वा नियतो नियताशनः ।। १३७.२० ।।
वैशाख द्वादशीं प्राप्य स्नायाद्यो विधिपूर्वकम् ।।
दशवर्षसहस्राणि दश वर्षशतानि च ।। २१ ।।
धनधान्यसमृद्धो हि जायते विपुले कुले ।।
मद्भक्तश्चापि जायेत मम कर्मपरायणः ।। २२ ।।
अपराधं वर्जयति दीक्षितश्चैव जायते ।।
भूत्वा वै मानुषस्तत्र तीर्थे संसारसागरम् ।। २३ ।।
तीर्त्वा चक्र गदाशंखपद्मपाणिश्चतुर्भुजः ।।
मम रूपधरः श्रीमान्मम लोके महीयते ।। २४ ।।
चक्रतीर्थे विशालाक्षि मरणे कृतकृत्यतः ।।
एतच्छ्रुत्वा वचस्तस्य श्रोतुकामा वसुन्धरा ।। २५ ।।
शिरस्यञ्जलिमाधाय श्लक्ष्णमेतदुवाच ह ।।
तत्र सौकरवे तीर्थे चन्द्रमास्त्वामतोषयत् ।। २६ ।।
एतदाचक्ष्व तत्त्वेन परं कौतूहलं हि मे ।।
वसुधाया वचः श्रुत्वा विष्णुर्मायाकरण्डकः ।। २७ ।।
उवाच वाक्यं मेदिन्याः मेषदुन्दुभिनिःस्वनः ।।
शृणु भूमे प्रयत्नेन कथ्यमानं मयानघे ।। २८ ।।
तस्य वै कारणं येन तेन चाराधितोस्म्यहम् ।।
तस्य प्रीतोऽस्म्यहं देवि विशुद्धेनान्तरात्मना ।।२९।।
दर्शितश्च मया ह्यात्मा यो हि देवेषु दुर्लभः ।।
रूपं सोमेन तद्दृष्ट्वा विसंज्ञस्तदनन्तरम् ।।१३७.३०।।
मां स द्रष्टुं न शक्नोति मम तेजःप्रमोहितः ।।

ततो निमीलिताक्षेण कृत्वा शिरसि चाञ्जलिम् ।। ३१ ।।
न शक्नोति तथा वक्तुं भीरुः सन्त्रस्तलोचनः ।।
एवमेतद्विचेष्टन्तं ब्राह्मणानामपीश्वरम्।।३२।।
वाणीं सूक्ष्मां समादाय स सोमो चोदितो मया ।।
किं वा फलं समुद्दिश्य तप्यसे सुमहत्तपः ।।३३।।
ब्रूहि तत्वेन मे सोम यत्ते मनति वर्त्तते ।।
सर्वं सम्पादयिष्यामि त्वत्प्रसादान्न संशयः ।।३४।।
मम वाक्यं ततः श्रुत्वा ग्रहाणां प्रवरेश्वरः।।
उवाच मधुरं वाक्यं सोमतीर्थमवस्थितः ।।३५।।
भगवन् यदि तुष्टोऽसि मम चात्र गतः प्रभो।।
योगनाथो जगच्छ्रेष्ठः सर्वयोगीश्वरेश्वरः।।३६।।
यावल्लोका धरिष्यन्ति तावत्त्वयि जनार्दन ।।
अतुला त्वयि मे भक्तिर्भवेन्नित्यं सुनिश्चला।।३७।।
यच्चापि मम तद्रूपं त्वया संस्थापितं प्रभो ।।
सप्तद्वीपेषु दृश्येत तत्र तत्रैव संस्थितम् ।।३८।।
सोम इत्येव यज्ञेषु पिबन्तु मम ब्राह्मणाः।।
गतिः पारमिका तेषां दिव्या विष्णो भवेद्यथा।।३९।।
क्षीणस्तत्र त्वमावस्यां तत्र पिण्डपितृक्रियाः।।
प्रवर्त्तन्ते यथान्यायं भवेयं सौम्यदर्शनः।।१३७.४० ।।
अधर्मे च न मे बुद्धिर्भवेद्विष्णो कदाचन।
पतित्वं चाथ गच्छेयमोषधीनां तथा कुरु ।।४१।।
यदि तुष्टो महादेव आदिमध्यान्त वर्जितः ।।
मम चैव प्रियार्थाय एतन्मे दीयतां वरः ।। ४२ ।।
ततः सोमवचः श्रुत्वा तत्रैवान्तर्हितोऽभवम् ।।
एवं तप्तं महाभागे तपः सोमेन निश्च यात् ।।४३।।
प्राप्ता च परमा सिद्धिः सोमतीर्थेऽन्यदुर्ल्लभा ।।
स्नायाद्यः सोमतीर्थे तु मम कर्मपरायणः ।।४४।।
अष्टमेन तु भक्तेन मम कर्मविधौ स्थितः ।।
फलं तस्य प्रवक्ष्यामि सोमतीर्थे नरस्य यत।।४५।।
यत्र तप्तं तपस्तेन सोमेन सुमहात्मना ।।
पञ्चवर्षसहस्राणि एकपादेन तिष्ठता ।।४६।।
पञ्चवर्षसहस्राणि तथैवोर्द्ध्वमुखः स्थितः ।।
एवमुग्रं तपः कृत्वा कान्तिमानभवच्च सः ।।४७।।

ममापराधान्मुक्तश्च ब्राह्मणानां पतिस्तथा ।।
एवमेव महाभागे सोमतीर्थे कृतोदकः ।।४८।।
त्रिंशद्वर्षसहस्राणि त्रिंशद्वर्षशतानि च ।।
जायते ब्राह्मणः सुभ्रु वेदवेदाङ्गपारगः ।।४९ ।।
द्रव्यवान्गुणवांश्चैव संविभागी यशस्विनि ।।
मद्भक्तश्चैव जायेत अपराधविवर्जितः ।।१३७.५० ।।
स एष ब्राह्मणो भूत्वा संसाराद्विप्रमुच्यते ।।
तस्य चिह्नं प्रवक्ष्यामि सोम तीर्थस्य सुन्दरि ।। ५१ ।।
तत्तीर्थं येन विज्ञेयं मम मार्गानुसारिणा ।।
वैशाखस्य तु मासस्य शुक्लपक्षस्य द्वादशी ।। ५२ ।।
प्रवृत्ते चान्धकारे तु यत्र कश्चिन्न दृश्यते।।
सोमेन च विना भूमिर्दृश्यते चन्द्रसप्रभा ।। ५३।।
आलोकश्चैव दृश्येत सोमस्तत्र न दृश्यते ।।
एवं त्वां वच्मि हे भद्रे एष ३ विस्मयः परः ।। ५४ ।।
एतच्चिह्नं महाभागे पुण्ये सौकरवे मम ।।
सौमतीर्थे विशालाक्षि येन मुच्यन्ति जन्तवः ।। ५५ ।।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।।
प्रभावमस्य क्षेत्रस्य विस्मयं परमं महत् ।। ५६ ।।
अकामा तु मृता तीर्थे आत्मनः कर्मनिश्चयात् ।।
मम क्षेत्रप्रभावेण सृगाली मानुषी भवेत् ।। ५७ ।।
राजपुत्री विशालाक्षी श्यामा सर्वाङ्गसुन्दरी ।।
गुणवद्रूपसम्पन्ना चतुःषष्टिकलान्विता ।।५८।।
तस्य पूर्वेण पार्श्वेन तीर्थं गृध्रवटं स्मृतम् ।।
यत्राकामो मृतो गृध्रो मानुषत्वमुपागतः ।। ५६ ।।
वाक्यं नारायणाच्छ्रुत्वा धरणी शुभलक्षणा ।।
उवाच मधुरं वाक्यं विष्णुभक्तसुखावहम् ।। 137.६० ।।
अहो तीर्थप्रभावो वै त्वया प्रोक्तो महान्मम ।।
यस्य देव प्रभावेण तिर्यग्योनित्वमागतौ ।।
गृध्रश्चैव सृगाली च प्राप्तौ वै मानुषीं तनुम् ।।६१ ।।
स्नानेन तत्र तीर्थे च मरणाद्वा जनार्दन ।।
कां गतिं वै प्रपद्यन्ते तन्ममाचक्ष्व केशव ।।६२।।
चिह्नं च कीदृशं तेषां जायन्ते येन ते तथा ।।
अकामावपि तौ क्षेत्रे प्राप्तौ नु परमां गतिम् ।। ६३ ।।

ततो महीवचः श्रुत्वा विष्णुर्धर्मविदां वरः ।।
उवाच मधुरं वाक्यं धर्मकामो वसुन्धराम् ।।६४।।
शृणु तत्त्वेन मे भूमे यन्मां त्वं परिपृच्छसि ।।
उभौ तौ कारणाद्यस्मात्प्राप्तौ वै मानुषीं गतिम।।६५।।
तस्मिन्काले ह्यतिक्रान्ते मम कर्मविनिश्चयात् ।।
त्रेतायुगे ह्युपक्रान्ते ज्ञाते च युगसंस्थितौ ।। ६६।।
तत्र राजा महाभागः स्वधर्मकृतनिश्चयः ।।
ब्रह्मदत्तेति विख्यातः पुरं काम्पिल्लमास्थितः ।। ६७ ।।
तस्य पुत्रो महाभागः सर्वधर्मेषु निष्ठितः ।।
सोमदत्तेति विख्यातः कुमारः शुभलक्षणः ।। ६८ ।।
पित्रर्थे मृगयां यातो मृगलिप्सुर्वने तदा ।।
अरण्ये स तदा गत्वा व्याघ्रसिंहनिषेविते ।।६९ ।।
न तत्र लभते किञ्चित्पितृकार्ये नराधिपः ।।
एवं हि भ्रमतस्तस्य सृगाली दक्षिणे तथा ।। 137.७० ।।
अङ्गमध्ये तु विद्धा सा स्फुरन्ती सर्वमङ्गला ।।
तथा सा बाणसन्तप्ता व्यथया च परिप्लुता ।।७१ ।।
पीत्वा सा सलिलं तत्र वृक्षं शाकोटकङ्गता ।।
आतपेन परिक्लान्ता बाणविद्धातुरा भृशम् ।।७२।।
अकामा मुञ्चती प्राणान् तीर्थं सोमात्मकं प्रति ।।
एतस्मिन्नंतरे भद्रे राजपुत्रः क्षुधार्दितः ।। ७३ ।।
प्राप्तो गृध्रवटं तीर्थं विश्रामं तत्र चाकरोत् ।।
अथ पश्यति गृध्रं स वटशाखां समाश्रितम् ।। ७४ ।।
एकेन स तु बाणेन तया गृध्रो निपातितः ।।
स तत्र पतितो गृध्रो वटमूले यशस्विनि ।। ७५ ।।
गतासुर्नष्टसंज्ञो वै बाणभिन्नस्तथा हृदि ।।
तं दृष्ट्वा पतितं गृध्रं राजपुत्रस्तुतोष ह ।। ७६ ।।
तस्य च्छित्वा ततः पक्षौ गृहीत्वा राजनन्दनः ।।
बाणपक्षान्विधातुं च सोमदत्तो गृहं ययौ ।।७७।।
सोऽपि दीर्घेण कालेन अकामोऽपि मृतः खगः ।।
जातः कलिङ्गराजस्य सुतो गुणविभूषितः ।।७८।।
रूपवान् पण्डितश्चैव प्रजानंदकरः सदा ।।
तस्मिन्राजनि नायासं कोऽपि कुत्रापि विंदति ।।७९।।
या सा सृगाली सञ्जज्ञे कांचीराजस्य वै सुता।।

रूपयुक्ता गुणवती दक्षा सर्वांगसुंदरी ।। 137.८० ।।
चतुःषष्टिकलायुक्ता कोकिलेव सुखस्वरा ।।८१ ।।
एवं प्रवर्त्तिते तत्र कांचीराज्ये कलिङ्गके ।।
हार्दिक्यात्सौहृदात्प्रीतिरन्योऽन्यकुलनिश्चयात् ।। ८२ ।।
भूमे मम प्रसादेन सम्बधोऽजायत स्वतः ।।
अथ दीर्घेण कालेन कांचीराजसुता तथा ।। ८३ ।।
कलिङ्गराजपुत्रेण विधिना तु विवाहिता ।।
कांचीराजस्तयोः प्रीत्या नानारत्नानि चाददत् ।।८४।।
भूषणानि च दिव्यानि गजाश्वमहिषीः स्त्रियः ।।
ततः कलिङ्गराजोऽपि सवधूकं निजं सुतम् ।। ८५ ।।
आदाय स्वगृहं यातस्तेन राज्ञातिमानितः ।।
एवं गच्छति काले वै दम्पत्योस्तुष्यमाणयोः ।।८६।।
अव्युच्छिन्नाऽभवत्प्रीती रोहिणीचंद्रयोरिव ।।
रेमतुस्तौ विहारेषु देवतायतनेषु च ।।८७।।
वने चोपवने चैव ये केचिन्नन्दनोपमाः ।।
भर्त्तारं सा न पश्येच्चेत्कदाचिदपि पार्श्वतः ।। ८८।।
नष्टं मन्येत चात्मानं राजपुत्री यशस्विनि ।।
न चेत्पश्यति भार्यां स्वां सोऽपि राजन्यनन्दनः।।८९।।
आत्मानं मन्यते प्रीत्या नष्टप्रायं वसुन्धरे ।।
दिने दिने तयोरेवं वर्द्धते प्रीतिरुत्तमा।।137.९० ।।
नान्तरं पश्यते कश्चित् पुरुषः पुण्यकर्मणोः ।।
सोऽपि बुद्ध्या सुशीलेन कृतेन च वसुन्धरे ।।९१ ।।
कलिंगस्तोषयामास पौरान्जानपदांस्तथा ।।
अन्तःपुरे तु या नार्यः कलिंगेषु धरे तयोः ।।९२ ।।
ताभ्यां सन्तोषिताः सर्वाः शीलेन स्वगुणैस्तथा।।
एवं प्रवर्द्धिता ताभ्यां प्रीतिः पूर्वं यशस्विनि ।।९३।।
रमते तत्र चान्योन्यं शचीवासवयोरिव ।।
अथ प्रणयपूर्वं सा कांतं सर्वांगसुन्दरी।।९४।।
व्यजिज्ञपद्राजसुतं सौहृदेन यशस्विनी ।।
किंचिदिच्छामि ते वक्तुं राजपुत्र यशोधन ।। ९५ ।।
मम स्नेहात्प्रियं चैव तद्भवान्वक्तुमर्हति ।।
ततो भार्यावचः श्रुत्वा कलिंगस्य सुतः प्रभुः ।। ९६ ।।
उवाच मधुरं वाक्यं पद्मपत्रनिभेक्षणः ।।

यद्वदिष्यसि भद्रे त्वं यच्च तेऽस्ति मनीषितम् ।।९७ ।।
सर्वं ते कथयिष्यामि शपे सत्येन सुन्दरि ।।
सत्यं मूलं ब्राह्मणानां विष्णुः सत्ये प्रतिष्ठितः ।।९८।।
तस्य मूलं तपो राज्ञि राज्यं सत्ये प्रतिष्ठितम् ।।
नाहं मिथ्या प्रवक्ष्यामि कदाचिदपि सुन्दरि ।।९९।।
न मिथ्या पूर्वमुक्तं मे ब्रूहि किं करवाणि ते ।।
हस्त्यश्वरथरत्नानि यानानि च धनानि च ।। 137.१०० ।।
अथवा परमग्र्यं तु पट्टबन्धं करोमि ते ।।
सा भर्तृवचनं श्रुत्वा कांचीराजस्य चात्मजा ।। १०१ ।।
संगृह्य चोभौ चरणौ भर्त्तारमिदमब्रवीत् ।।
न चैव रत्नानीच्छामि हस्त्यश्वरथमेव च ।। २ ।।
पट्टबन्धेन कार्यं च यावद्ध्रियति मे गुरुः ।।
एका स्वपितुमिच्छामि मध्याह्ने तु तथाविधे ।। ३ ।।
न चिरं वाल्पकालं तु यथा कश्चिन्न पश्यति ।।
श्वशुरो यदि वा श्वश्रूर्यथैवान्यो नराधिप ।। ४ ।।
सुप्ता नैव च द्रष्टव्या व्रतमेतन्मुहूर्त्तकम् ।।
आत्मनो वै गृहजना ये केचित्स्वजने जनाः ।। ५ ।।
ते मां प्रसुप्तां पश्येयुः कदाचिदपि संस्थिताम् ।।
ततो भार्यावचः श्रुत्वा कलिङ्गैश्वर्यवर्द्धनः ।। ६ ।।
बाढमित्येव तां वाक्यं प्रत्युवाच वसुन्धरे ।।
विस्रब्धा भव सुश्रोणि कल्याणेन यशस्विनि ।। ७ ।।
न त्वां वै द्रक्ष्यते कश्चिच्छयनीये महाव्रताम् ।।
एवं गच्छति काले तु तयोस्तु तदनन्तरे ।। ८ ।।
कलिङ्गो जरया युक्तो पुत्रं राज्येऽभ्यषेचयत् ।।
राज्यं दत्त्वा वरारोहे यथान्यायं कुलोद्भवम् ।। ९ ।।
कृत्वा निष्कण्टकं राज्यं दत्त्वा पंचत्वमागतः ।।
एवं प्रभुस्ततो राज्यं पितुर्दत्तं यथोचितम् ।। 137.११० ।।
एकाकी स्वपते तत्र यत्र कश्चिन्न पश्यति ।।
स तु दीर्घेण कालेन कलिङ्गकुलवर्द्धनः ।। ११ ।।
सुतानजनयत्पंच आदित्यसमतेजसः ।।
एवं तु मानुषं लोकं मम मायाप्रमोहितम् ।। १२ ।।
आत्मकर्मसु संयुक्तं चक्रवत्परिवर्त्तते ।।
जातो जन्तुर्भवेद्बालो बालस्तु तरुणो भवेत् ।।१३।।

तरुणो मध्यमं याति पश्चाद्याति जरां ततः ।।
बालो वै यानि कर्माणि करोत्यज्ञानतः स्वयम् ।। १४ ।।
न स लिप्यति पापेन एवमेतन्न संशयः ।।
ततः करिष्यतो राज्यं निष्कण्टकमनामयम् ।। १५।।
सप्तसप्ततिवर्षाणि ह्यतीतानि यशस्विनि ।।
अष्टसप्ततिके वर्षे एकान्ते तु नराधिपः ।। १६ ।।
तमेव चिन्तयन्नर्थं मध्यसंस्थे दिवाकरे ।।
माधवस्य तु मासस्य शुक्लपक्षे तु द्वादशी ।। १७ ।।
बुद्धिः सम्पद्यते तस्य प्रियादर्शनलालसा ।।
कोऽर्च्यस्तत्किं व्रतं चास्या एषा स्वपिति निर्जने ।।१८।।
न सुप्ताया व्रतं किंचिद्दृश्यते धर्मसंचयः ।।
न च विष्णुकृतं कर्म न चैवेश्वरचोदितम् ।।१९।।
मनुना वै कृतो धर्म एष नैव न दृश्यते ।।
न क्वाप्यपकृतो धर्मो महानपि न योगिनाम् ।। 137.१२० ।।
न तत्र एष विद्येत यश्चरेद्व्रतमीदृशम् ।।
बार्हस्पत्येषु धर्मेषु याम्येषु च न विद्यते ।। २१ ।।
न एष विद्यते तत्र सुप्ता चरति यद्व्रतम् ।।
भुक्त्वा तु कामभोगानि भुक्त्वा तु पिशितोदनम् ।।२२।।
ताम्बूलं रक्तवस्त्रं तु सुसूक्ष्मे पट्टवाससी ।।
सुगन्धैर्भूषिता गात्रे सर्वरत्नसमायुता ।। २३ ।।
मम कान्ता विशालाक्षी किमत्र चरते व्रतम् ।।
कुप्येतापि तु सन्तुष्टा प्रिया मे कमलेक्षणा ।। २४ ।।
अवश्यमेव द्रष्टव्या कीदृशं चरति व्रतम् ।।
किन्नरैः सुप्रलक्ष्येत वशीकरणमुत्तमम् ।। २५ ।।
अथ योगीश्वरी भूत्वा यत्र गच्छति रोचते ।।
अथवा चान्यसंसृष्टा कामरोगेण चावृता ।। २६ ।।
एवं चिन्तयतस्तस्य अस्तं प्राप्तो दिवाकरः ।।
संवृत्ता रजनी सुभ्रूः सर्वसार्थसुखावहा ।। २७ ।।
ततो रात्र्यां व्यतीतायां प्रभातसमये शुभे ।।
पठन्ति मागधा बन्दिसूता वैतालिकास्तथा ।। २८ ।।
शङ्खदुन्दुभिनादैश्च बोधितो वसुधाधिपः ।।
सर्वलोकहितार्थाय उदिते च दिवाकरे ।।२९।।
यत्तदा चिन्तितं पूर्वं द्रष्टुकामेन तां प्रियाम् ।।

सर्वचिन्तां परित्यज्य सा चिन्ता हृदि वर्त्तते ।। 137.१३०।।
स्नातस्तु विधिना सोऽथ क्षौमाभ्यामुपसंवृतः ।।
भूत्वा चोत्सारयामास आज्ञां दत्त्वा यथोचितम् ।। ३१ ।।
व्रतस्थं यः स्पृशेन्मां तु नारी पुरुष एव च ।।
धर्मयुक्तेन दण्डेन मम वध्यो भवेत्तु सः ।। ३२ ।।
एवमाज्ञापयित्वा तु कालिङ्गो नृपतिः किल ।।
गतश्च त्वरया धीमान्प्रविष्टस्तत्र सुव्रते ।। ३३ ।।
पर्यङ्कस्य तले तत्र राजा दर्शनलालसः ।।
विलोक्य तां वरारोहां ततश्चिन्तापरायणाम् ।।३ ४।।
ततः कमलपत्राक्षी वेदनायासपीडिता ।।
रुजार्त्ता रुरुदे तत्र शिरोवेदनताडिता ।। ३५ ।।
किं मया तु कृतं कर्म पूर्वमेव सुदुष्करम् ।।
येनाहमीदृशीं प्राप्ता दशां पुण्यपरिक्षयात् ।। ३६ ।।
भर्त्ता च मां न जानाति क्लिश्यमानामनाथवत् ।।
अथ मां किं कथं भर्त्ता मन्यते स्वजनोऽपि वा ।।३७।।
कथये किं शयाना तु सखीनां शयने स्थिता।।
एवमत्र न युज्येत यन्मया परिचिन्तितम् ।। ३८ ।।
किंच वात्मनि दुःखस्य सर्वमेतच्च युज्यते ।।
किंच मां वक्ष्यते भर्त्ता किं च मामितरे जनाः ।। ३९ ।।
अन्यायेन व्रतं चीर्णं सर्वतो विकृतं भवेत् ।।
कदाचिदपि काले तु गच्छेत्सौकरवं प्रति ।। 137.१४० ।।
ततो ब्रूयामिदं वाक्यं यन्मे हृद्यवतिष्ठते ।।
ततः प्रियावचः श्रुत्वा समुत्थाय ततो नृपः ।। ४१ ।।
दोर्भ्यामालिङ्ग्य वै भार्यां वाक्यमेतदुवाच ह ।।
किमिदं भाषसे भद्रे आत्मानं न प्रशंससि ।।४२ ।।
अशोच्या शोचिता या तु यच्च निन्दसि चात्मनि ।।
भिषजः किं न विद्यन्ते अष्टकर्मसमाहिताः ।।४३।।
ये तु संस्थापयेयुस्ते शिरसो वेदनां पराम् ।।
त्वया पूर्वं व्रतमिषाद्वेदना यदि गोपिता ।।४४।।
येन वै क्लिश्यसे भद्रे शिरस्य सुखपीडिता ।।
वायुना कफपित्तेन शोणितेन कफेन वा ।। ४५ ।।
सन्निपातस्य दोषेण येनेदं पीड्यते शिरः ।।
काले विकाले कृत्वा वै पित्तोद्रेकं यशस्विति ।। ४६ ।।

अश्नासि पिशितं चान्नं तेनेदं दूष्यते शिरः ।।
क्रियतेऽत्र शिरावेधो रुधिरस्राव एव च ।। ४७ ।।
दीयते चेच्छिरोऽभ्यङ्गः कथं तिष्ठति वेदना ।।
किमेतद्गोपितं भद्रे मयि तन्न निवेदितम् ।। ४८ ।।
त्वया व्रतमिषेणायमात्मा संक्लिश्यते वृथा ।।
या त्वं वै भाषसे वाक्यं सौकरे गमनं प्रति ।। ४९ ।।
तत्र गोप्यं किमस्तीति येन ते परिवेदना ।।
ततः कमलपत्राक्षी सव्रीडा दुःखपीडिता ।। 137.१५० ।।
भर्तुर्गृहीत्वा चरणौ सा पतिं प्रत्यभाषत ।।
प्रसीद मे महाराज नेदं प्रष्टुं त्वमर्हसि ।। ५१ ।।
मम पूर्वकथां वीर दुष्टकर्मानुसारिणीम् ।।
ततो भार्यावचः श्रुत्वा कलिङ्गानां जनाधिपः ।। ५२ ।।
उवाच मधुरं वाक्यं सुहितेनान्तरात्मना ।।
किमिदं गोप्यते देवि ममाग्रे वरवर्णिनि ।। ५३ ।।
तथ्यमेव महाभागे पृच्छयमाना यशस्विनि ।।
ततो भर्तृवचः श्रुत्वा विस्मयोत्फुल्ललोचना ।। ५४ ।।
उवाच मधुरं वाक्यं कलिङ्गानां महाधिपम् ।।
भर्त्ता धर्मो यशो भर्त्ता भर्त्तैव प्रियमात्मनः ।। ५५ ।।
अवश्यमेव तद्वाच्यं यन्मां त्वं परिपृच्छति ।।
तथापि नोत्सहे वक्तुं हृदि यत्परिवर्त्तते ।। ५६ ।।
तव पीडाकरमिति तन्मां न प्रष्टुमर्हसि ।।
एतद्दुःखं महाभाग हृदि मे परिवर्त्तते ।।५७।।
सुखे हि वर्त्तसे नित्यं महाराजोऽसि सुन्दरः ।।
बह्व्यो मत्सदृशा भार्यास्तिष्ठन्त्यन्तःपुरे तव।।५८।।
प्राश्नासि पिशितान्नं च प्रावारान्भूषणानि च ।।
आच्छादयसि यानैश्च हस्त्यश्वरथपृष्ठगः ।। ५९ ।।
गच्छस्यनारतं राजन् किं स्थितं च मया विना ।।
आज्ञा च तेऽप्रतिहता गन्धान्भोगांश्च सर्वशः ।। 137.१६० ।।
बिभर्षि स्वेच्छया राजन्न मां संप्रष्टुमर्हसि ।।
त्वं मे देवो गुरुः साक्षाद्भर्त्ता यज्ञः सनातनः ।। ६१ ।।
धर्मश्चार्थश्च कामश्च यशः स्वर्गश्च मानद ।।
पृष्टया मे सदा वाच्यं सर्वं सत्यं प्रियं तव ।। ६५ ।।
पतिव्रतानां सर्वासामेष धर्मः सनातनः ।।

न संशये नियोक्तव्यः सुखस्थो हि पतिः स्त्रिया ।।६३।।
एतन्निश्चित्य मे पीडां न प्रष्टुं त्वमिहार्हसि ।।
ततो भार्यावचः श्रुत्वा कलिङ्गानां जनाधिपः ।। ६४ ।।
उवाच मधुरं वाक्यं भार्यापीडाभिपीडितः ।।
शृणु तत्त्वेन मे भद्रे शुभं वा यदि वाशुभम् ।।६५।।
अवश्यमेव वक्तव्यं पृष्टया पतिना ध्रुवम् ।।
यानि गुह्यान्यगुह्यानि स्त्रियो धर्मपथे स्थिताः ।। ६५ ।।
भर्त्तारं च समासाद्य रहस्तां गोपयन्ति न ।।
कृत्वा सुदुष्करं कर्म रागलोभप्रमोहिता ।। ६७ ।।
या सुगोपायते गुह्यं सती सा नोच्यते बुधैः ।।
एवं चिन्त्य महाभागे ब्रूहि सत्यं यशस्विनि ।।६८।।
अधर्मस्ते न भविता गुह्यार्थकथने मम ।।
ततो भर्तृवचः श्रुत्वा सा देवी परमप्रिया ।। ६९ ।।
प्रत्युवाच प्रियं वाक्यं राजानं धर्मवादिनम् ।।
देवो राजा गुरू राजा सोमो राजेति पठ्यते ।।137.१७०।।
अवश्यमेव वक्तव्यमेष धर्मः सनातनः ।।
यदि गुह्यं न मे कार्यं श्रूयतां राजसत्तम ।।७१।।
अभिषिंचस्व राज्ये स्वे ज्येष्ठं पुत्रं कुलोचितम्।।
एहि नाथ मया सार्द्धं क्षेत्रं सौकरवं प्रति।।७२।।
ततो भार्यावचः श्रुत्वा कलिंगानां जनाधिपः ।।।
बाढमित्येव वाक्येन छन्दयामास तां प्रियाम्।।७३।।
दास्यामि राज्यं पुत्राय वचनात्तव सुन्दरि।।
यथा पूर्वं मया लब्धं स्वपितुर्यद्यथाक्रमम् ।।७४।।
इत्युक्त्वा तौ महाभागौ युक्तं चैव परस्परम् ।।
राजा च राजपुत्री च निष्क्रान्तौ तद्गृहात्ततः ।। ७५ ।।
ततः कञ्चुकिनं दृष्ट्वा प्रोवाचोच्चस्वरेण च ।।
अपसारय सर्वं वै जनमावृत्य तिष्ठति।।७६।।
ज्ञानकौतूहलो योऽत्र शीघ्रं गच्छत्वितो बहिः।।
ततो हलहलाशब्दः प्रवृत्तोऽन्तःपुरे महान्।।७७ ।।.
किमिदं कारणं वृत्तं येन चोत्सारिता वयम् ।।
नाज्ञास्ति चिन्तालोलानामागतानां स्वकार्यतः ।। ७८ ।।
अश्रोतव्यं भवेन्नूनं येन चोत्सारिता वयम् ।।
ततो भोज्यान्नपानानि भुक्त्वा रुच्या नृपः प्रियान् ।।७९।।

समं महिष्या चाचम्य क्षणं विश्रम्य पार्थिवः ।।
अमात्यानानयामास ह्यभिषेक्तुं निजं सुतम् ।। 137.१८० ।।
सम्प्राप्तान्सचिवांस्तत्र राजा वचनमब्रवीत् ।।
राजधानी संस्क्रियतां मङ्गलाचारपूर्वकम् ।। ८१ ।।
वृद्धामात्यमुपास्याथ कलिङ्गो धर्मसंहितम् ।।
नीतिशास्त्रार्थतत्त्वज्ञमुवाचाविक्लवं वचः ।। ८२ ।।
काल्यमिच्छाम्यहं तात पुत्रं राज्येऽभिषेचितुम् ।।
शीघ्रं सज्जं प्रकुर्वन्तु आभिषेचनिकं विधिम् ।।८३।।
भूतमित्येव तं प्राहुः सचिवास्तं नराधिपम् ।।
अस्माकमपि तच्चैव रोचते यत्प्रभाषसे ।।८४।।
पुत्रस्ते राजशार्दूल सर्वलोकहिते रतः ।।
प्रजानुरागवाञ्छूरो नीतिज्ञस्तु विचारकः ।।८५।।
मनीषितं तव विभो सम्यङ् नो मनसः प्रियम् ।।
एवमुक्त्वा गतामात्याः सूर्यश्चास्तमुपागतः ।।८६।।
सुखेन सा गता रात्रिर्गीतगान्धर्ववादितैः ।।
बोधितः स च राजा तु सूतमागधबन्दिभिः ।।८७।।
वेतालिकैश्च सुश्रोणि सर्वमंगलपाठकैः ।।
प्रभातायां तु शर्वर्यामुदिते च दिवाकरे ।। ८८ ।।
मुहूर्त्तं शुभमासाद्य ह्यभिषिक्तः सुतः शुचिः ।।
एवं दत्वा तदा राज्यं मूर्ध्नि चाघ्राय धर्मवित् ।। ८९ ।।
उवाच मधुरं वाक्यं पुत्रं पुत्रवतां वरः ।।
राज्यस्थेनापि ते पुत्र कर्त्तव्यं शृणु तन्मम ।। 137.१९० ।।
यदीच्छेः परमं धर्मं पितृणां तारणं तथा ।।
दातव्यं न च हंतव्यं हंतव्याः पारदारिकाः ।। ९१ ।।
बालघाताश्च हंतव्या हंतव्याः स्त्रीविघातकाः।।।
न लोभः परभार्यासु ब्राह्मणीषु विशेषतः ।।९२।।
सुरूपां परनारीं तु दृष्ट्वा चक्षुर्निमीलयेः ।।
परद्रव्येषु मा लोभः अन्यायोपार्ज्जितेषु च ।।९३।।
न चिरं तिष्ठसि क्वापि कथंचन न पश्यसि ।।
रक्षणीयश्च ते देशः कुशलन्यायसज्जितः ।। ९४ ।।
नित्योद्युक्तेन स्थातव्यममात्यवचनं कुरु ।।
अमात्यो यद्वचो ब्रूयात्तस्य कार्यं विमर्शयन् ।। ९५ ।।
अवश्यमेव कर्त्तव्यं शरीरपरिरक्षणम् ।।

प्रजा येन प्रमोदंति येन तुष्यंति ब्राह्मणाः ।। ९५ ।।
एवं ते पुत्र कर्त्तव्यं मम प्रियहितैषिणा ।।
सप्तव्यसनवर्गोऽत्र दोषो राज्ञां महान्भवेत् ।। ९७ ।।
अर्थदूषणकं चैव न कर्त्तव्यं कदाचन ।।
अमात्यं नाप्रियं ब्रूया यमिच्छे राजकर्मणि ।। ९८ ।।
नाहं निवारणीयस्ते गमनाय पथे स्थितः ।।
एतन्मे क्रियतां शीघ्रं यदीच्छसि मम प्रियम् ।। ९९ ।।
ततः पितुर्वचः श्रुत्वा राजपुत्रो यशस्विनि ।।
पितुः पादौ तु संगृह्य करुणं प्रत्युवाच तम् ।। 137.२०० ।।
मम किं तात राज्येन कोशेन च बलेन च ।।
यस्त्वया रहितस्तात न शक्नोमि विचेष्टितुम् ।। १ ।।
अभिषेकं राजशब्दं मम संज्ञापितं त्वया ।।
एतन्न बहुमन्येऽहं विना तात त्वया ह्यहम् ।। २ ।।
क्रीडामेवाऽत्र जानामि येन क्रीडन्ति बालकाः ।।
राज्यचिन्तां न जानामि राजानो यां तु कुर्वते ।।३।।
ततः पुत्रवचः श्रुत्वा कलिङ्गानां महीपतिः ।।
उवाच मधुरं वाक्यं सामपूर्वं यशस्विनि ।। ४ ।।
यच्चेदं भाषसे पुत्र नाहं जानामि तद्वचः ।।
पुत्र शिक्षापयिष्यन्ति पौरजानपदास्तव ।। ५ ।।
एवं संदिश्य तं तत्र स राजा धर्मशास्त्रतः ।।
गमनाय मतिं चक्रे क्षेत्रं सौकरवं प्रति ।। ६ ।।
तं प्रयान्तं ततो दृष्ट्वा पौरजानपदास्तव ।। ५।।
सकलत्रसुताः सर्वेऽप्यनुयान्ति नराधिपम् ।। ७ ।।
हस्त्यश्वरथयानानि स्त्रियश्चान्तःपुरस्थिताः ।।
संहृष्टमनसः सर्वे अनुयान्ति नराधिपम् ।।८।।
अथ दीर्घेण कालेन प्राप्य सौकरवं तदा ।।
धनधान्यसमृद्ध्यादि प्रददौ तत्र माधवि ।।९।।
एवं गच्छति काले तु तयोस्तत्र वसुन्धरे ।।
प्रवर्त्तमानयोर्नित्यं धर्मे कर्मणि शुद्धयोः ।। 137.२१० ।।
ततः स पद्मपत्राक्षः कलिङ्गानां जनाधिपः ।।
उवाच मधुरं वाक्यं कांचीराजसुतां तदा ।।११ ।।
पूर्णं वर्षसहस्रं वै जीवितं मम सुन्दरि ।।
ब्रूहि तत्परमं गुह्यं यन्मया पूर्वपृच्छितम् ।। १२ ।।

ततो भर्त्तुर्वचः श्रुत्वा प्रहस्य रुचिरेक्षणा ।।
उभौ तौ चरणौ गृह्य राजानं वाक्यमब्रवीत् ।। १३ ।।
एवमेतन्महाभाग यन्मां त्वं परिपृच्छसि ।।
उपोष्य तु त्रिरात्रं त्वं पश्चाच्छ्रोष्यसि मानद।।१४।।
बाढमित्येव तां राजा प्रत्युवाच यशस्विनि ।।
पद्मपत्रविशालाक्षि पूर्णचन्द्रनिभानने।।१५।।
यथा वदसि सुश्रोणि तथैव मम रोचते ।।
दन्तकाष्ठं समादाय द्वादशांगुलमायतम् ।। १६ ।।
स्नात्वा सङ्कल्पयामास त्रिरात्रं नियमान्वितौ ।।
उपोष्य तौ त्रिरात्रं तु विधिना नियमान्वितौ ।।१७।।
ततः स्नातौ शुची क्षौमे परिधाय तु वाससी ।।
प्रणम्य भूषितौ विष्णुं दम्पती तदनन्तरम् ।।१८।।
ततः सा सुन्दरी भूषां समुत्तार्य शुभेक्षणा।।
मह्यं निवेदयामास प्रोवाच च जनेश्वरम्।।१९।।
एह्येहि नाथ गच्छावः पश्य गोप्यं मनीषितम्।।
ततो हस्ते पतिं गृह्य उद्वाह इव सुन्दरी।।137.२२०।।
उवाच मधुरं वाक्यं कलिंगाधिपतिं तथा।।
सृगाली पूर्वमेवाहं तिर्य्यग्योनिव्यवस्थिता।।२१।।
विद्धास्मि सोमदत्तेन बाणेन मृगलिप्सुना।।
एतं शिरसि मे राजन्पश्य बाणं सुसंस्कृतम्।।२२।।
यस्य दोषेण मेऽप्येष रुजा शिरसि संस्थिता।।
कांचीराजकुले जन्म पित्रा दत्ता तव प्रिया।।२३।।
क्षेत्रप्रभावान्मे सैषा जाता सिद्धिर्नमोऽस्तु ते।।
स ततः पद्मपत्राक्षः कलिङ्गानां जनाधिपः।।२४।।
श्रुत्वा राजा प्रियां वाक्यं प्रत्युवाच स्मृतिङ्गतः।।
अहं गृध्रो महाभागे तेनैव वनचारिणा।।२५।।
सोमदत्तेन बाणेन एकेनैव निपातितः।।
ततो जातोऽस्म्यहं भद्रे कलिंगानां जनाधिपः।।२६।।
जातोऽस्मि परमा व्युष्टिः प्राप्तं राज्यं मया महत्।।
सिद्धिर्लब्धा वरारोहे मया सर्वांगसुन्दरि।।२७।।
अकामपतितेनापि पश्य क्षेत्रस्य वै फलम्।।
ये च भागवतश्रेष्ठा ये च नारायणप्रियाः।।२८।।
पौरजानपदाः सर्वे श्रुत्वा तु तदनन्तरम्।।

लाभालाभौ परित्यज्य सर्वकर्माण्यकारयन्।।२९।।
तत्रैव मरणं प्रापुः सर्वसंगविवर्जिताः।।
श्वेतद्वीपं ततः प्राप्ताः सर्व एव चतुर्भुजाः।।137.२३०।।
सर्वे शङ्खधराश्चैव सर्वे चायुधसंयुताः।.
ताः स्त्रियश्च वरारोहे स्तुतिमान्या महौजसः।।३१।।
श्वेतद्वीपे प्रमोदन्ते सर्वभोगसमन्विताः।।
एवं ते कथितं भूमे व्युष्टिः सौकरवे महत्।।३२।।
अकामपतिताश्चैव श्वेतद्वीपमुपागताः।।
य एतेन विधानेन वासं तीर्थे तु कारयेत्।।३३।।
मरणं च विशालाक्षि श्वेतद्वीपं च गच्छति।।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे।।३४।।
स्नानादाखोटके तीर्थे यत्फलं समुपाश्नुते।।
दशवर्षसहस्राणि दशवर्षशतानि च ।।३५।।
नन्दनं समवाश्रित्य मोदन्ते चैव सर्वदा।।
ततः स्वर्गात्परिभ्रष्टो जायते विपुले कुले।।३६।।
मद्भक्तश्चैव जायेत एवमेतन्न संशयः।।
पुनरन्यत्प्रवक्ष्यामि स्नातो गृध्रवटे नरः।।३७।।
यत्फलं समवाप्नोति स्नानमात्रकृतोदकः।।
नववर्षसहस्राणि नववर्षशतानि च।।३८।।
इन्द्रलोकं समासाद्य मोदते निर्जरैः सह।।
इन्द्रलोकात्परिभ्रष्टो मम तीर्थप्रभावतः।।३९।।
सर्वसङ्गं परित्यज्य मद्भक्तश्चैव जायते।।
एतत्ते कथितं भद्रे स्नानमात्रस्य यत्फलम्।।137.२४०।।
यत्त्वया पृच्छितं पूर्वं सर्वसंसारमोक्षणम्।।
ततो नारायणाच्छ्रुत्वा पृथिवी संशितव्रता।।४१।।
उवाच मधुरं वाक्यं लोकनाथं जनार्दनम्।।
केन कर्मविपाकेन तीर्थं पुनरवाप्यते।।४२।।
स्नानं वा मरणं देव यथावद्वक्तुमर्हसि।।
श्रीवराह उवाच ।।
शृणु देवि महाभागे पूर्वधर्मकृतो नराः ।।४३।।
केनचित्कर्मदोषेण तिर्यग्योनिमवाप्य हि ।।
जन्मान्तरार्जितैः पुण्यैस्तीर्थस्नान जपादिभिः ।।४४।।
महादानैश्च लभ्येत तीर्थे पञ्चत्वमर्च्चकैः ।।

जन्मान्तरकृतं कर्म यत्स्वल्पमपि वा बहु ।। ४५ ।।
तत्कदाचित्फलत्येव न तस्य परिसंक्षयः ।।
कदाचिद्वासहायो वै पुण्यतीर्थादिदर्शनात् ।। ४६ ।।
दुर्बलं प्रबलम्भूत्वा प्रबलं दुर्बलम्भवेत् ।।
पापान्तरं समासाद्य गहना कर्मणो गतिः ।। ४७ ।।
यदल्पमिव दृश्येत तन्महत्त्वाय कल्पते ।।
अत एव मनुष्यत्वं प्राप्तं राजत्वमेव च ।। ४८ ।।
सृगाली चैव गृध्रश्च तीर्थस्यैव प्रभावतः ।।
मरणादेव सम्प्राप्य क्षीणपापौ स्मृतिं पुनः ।। ४९ ।।
श्वेतद्वीपं ततः प्राप्तौ जानीहि त्वं वसुन्धरे ।।
पुनरन्यत्प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।।137.२५० ।।
तीर्थं वैवस्वतं नाम यत्रार्कस्तप्तवांस्तपः ।।
कदाचित्पुत्रकामेन मार्त्तण्डेन महत्तपः ।।५१ ।।
कृतं चान्द्रायणं तत्र दशवर्षसहस्रकम् ।।
ततः सप्तसहस्राणि वायुभक्षस्तु संस्थितः ।। ५२ ।।
ततस्तुष्टोऽस्म्यहं भद्रे सूर्यस्य सुमहौजसः ।।
वरेण छन्दयामास आदित्यं तदनन्तरम् ।। ५१३ ।।
विवस्वन्तं महाभागं मम कर्मपरायणम् ।।
वरं वरय भद्रं ते यस्ते मनसि वर्त्तते ।।५४ ।।
ततो ममवचः श्रुत्वा कश्यपस्य सुतो बली ।।
मधुरं स्वरमादाय प्रत्युवाच महद्वचः ।।५५।।
यदि देव प्रसन्नोऽसि अयं मे दीयतां वरः ।।
पुत्रमिच्छाम्यहं देव प्रसादात्ते सुरेश्वर ।।५६।।।
विवस्वद्वचनं श्रुत्वा तुष्टोऽहं तस्य सुन्दरि ।।
तस्य शुद्धेन मनसा प्रोक्तवानस्मि सुन्दरि ।। ५७ ।।
यमश्च यमुना चैव मिथुनं जनयिष्यतः ।।
एवं तस्य वरं दत्त्वा आदित्यस्य वसुन्धरे ।। ५८ ।।
आत्मयोगप्रभावेण तत्रैवान्तर्हितोऽभवम् ।।
आदित्योऽपि गतो भद्रे वेश्म स्वं च महाधनम् ।।५९।।
पुण्यं सौकरवे कृत्वा सुदुष्करतरं महत् ।।
अष्टमेन तु भक्तेन यस्तु स्नाति वसुन्धरे ।।137.२६० ।।
दशवर्षसहस्राणि सूर्यलोके महीयते ।।
अथवा तत्र सुश्रोणि म्रियते पुण्यवान्नरः ।।६१ ।।

यमलोकं न गच्छेत्तु तीर्थस्यास्य प्रभावतः ।।
एतत्ते कथितं भद्रे स्नानस्य मरणस्य च ।।६२।।
फलं चैव यथावृत्तं तीर्थे सौकरवे मम ।।
आख्यानानां महाख्यानं क्रियाणां च महाक्रिया ।। ६३ ।।
एष जप्यः प्रमाणं च सन्ध्योपासनमेव च ।।
एष तेजश्च मन्त्रश्च सर्वभागवतप्रियम्।।६४।।
पिशुनाय न दातव्यं मूर्खे भागवते न तु ।।
न च वैश्याय शूद्राय येन जानन्ति मां परम् ।।६५।।
पण्डितानां सभामध्ये ये च भागवता भुवि ।।
मठे ब्राह्मणमध्ये तु ये च वेदविदां वराः ।। ६६ ।।
दीक्षिताय च दातव्यं ये च शास्त्राणि जानते ।।
एतत्ते कथितं भद्रे पुण्यं सौकरवे महत् ।।६७।।
य एतत्पठते सुभ्रु कल्य उत्थाय मानवः ।।
तेन द्वादशवर्षाणि चिन्तितोऽहं न संशयः ।।६८।।
न स जायेत गर्भेषु मुक्तिमाप्नोति शाश्वतीम् ।।
यः पठेदकेमध्यायं तारयेत्स कुलान्दश ।। ६९ ।।
इति श्रीवराहपुराणे भगवच्छास्त्रे तीर्थमाहात्म्ये सौकरवे गृध्रजम्बूकाख्याने आदित्यवरप्रदानादिकं नाम सप्तत्रिंशदधिकशततमोऽध्यायः ।। १३७।।
इति गृध्रजम्बूकोपाख्यानं समाप्तम्।।

अथ खंजरीटोपाख्यानम् ।।
सूत उवाच ।।
एतत्पुण्यतमं श्रुत्वा रम्ये सौकरवे तदा ।।
गुणस्तवं च माहात्म्यं जात्यानां परिवर्तनम् ।। १ ।।
ततः कमलपत्राक्षी सर्वधर्मविदां वरा ।।
विस्मयं परमं गत्वा निर्वृतेनान्तरात्मना ।। २ ।।
पुनः पप्रच्छ तं देवं विस्मयाविष्टमानसा।।
अहो तीर्थस्य माहात्म्यं क्षेत्रे सौकरवे तव ।। ३ ।।
अकामान्म्रियमाणस्य मानुषत्वमजायत ।।
किं वान्यद्वृत्तमाख्याहि क्षेत्रे सौकरवेऽमले ।। ४ ।।
शृण्वन्त्या मे महज्जातं चित्ते कौतूहलं परम् ।।
गायमानस्य किं पुण्यं वाद्यमानस्य किं फलम् ।। ९।।
नृत्यतः कि भवेत्पुण्यं जाग्रतो वा फलं नु किम् ।।
गोदातुरन्नदातुर्वा जलदातुस्तु किं फलम् ।। ६ ।।
संमार्जने लेपने वा गन्धपुष्पादिदानतः ।।
धूपदीपादिनैवेद्यैः किं फलं समुदीरितम् ।। ७ ।।
अन्येन कर्मणा चैव जपयज्ञादिनाऽथवा ।।
कां गतिं प्रतिपद्यन्ते ये शुद्धमनसो जनाः ।।८ ।।
तव भक्तसुखार्याय तद्भवान्वक्तुमर्हति ।।
ततो मह्या वचः श्रुत्वा सर्वदेवमयो हरिः ।। ९ ।।
उवाच मधुरं वाक्यं धर्मकामां वसुन्धराम् ।।
श्रीवराह उवाच ।।
शृणु सुन्दरि तत्त्वेन यन्मां त्वं परिपृच्छसि ।। 138.१० ।।
सर्वं ते कथयिष्यामि पुण्यकर्म सुखावहम् ।।
तस्मिन्सौकरवे पक्षी खञ्जरीटस्तु कीटकान् ।। ११ ।।
बहून् भुक्त्वा हि वसुधे अजीर्णभृशपीडितः ।।
मरणं समनुप्राप्तः पतितः स्वेन कर्मणा ।। १२ ।।
सम्प्राप्तास्तत्र वै बालाः क्रीडन्तस्तं मृतं खगम् ।।
ग्रहीष्याम इति प्रोच्य धावन्तस्तत्र तत्र ह ।। १३ ।।
ममायं वै ममायं वै जिघृक्षन्तः परस्परम ।।
सङ्घर्षात्कलहं चक्रुर्भृशं क्रीडनकोत्सुकाः ।। १४ ।।
तत एको गृहीत्वैनं गङ्गाम्भसि समाक्षिपत् ।।
युष्माकमेव भवतु नानेनास्मत्प्रयोजनम् ।। १५ ।।

एवं स खञ्जरीटो हि गङ्गातोयात्ततस्तदा ।।
आदित्यतीर्थसंक्लिन्नशरीरः स वसुन्धरे ।। १६ ।।
वैश्यस्य तु गृहे जातो ह्यनेकक्रतुयाजिनः ।।
धनरत्नसमृद्धे तु रूपवान् गुणवान् शुचिः ।। १७ ।।
विबुद्धश्च पवित्रश्च मद्भक्तश्च वसुन्धरे ।।
जातस्य तस्य वर्षाणि जग्मुर्द्वादश सुव्रते ।। १८ ।।
कदाचिदुपविष्टौ तौ दृष्ट्वा बालो गुणान्वितः ।।
मातरंपितरं चोभौ हर्षेण महतान्वितौ ।। १९ ।।
प्रणम्य शिरसा भूमौ बद्धाञ्जलिरयाचत ।।
मत्प्रियं यदि कर्त्तव्यमेको मे दीयतां वरः ।। 138.२० ।।
न चाहं वारणीयो वै पित्रा मात्रा कथंचन ।।
सत्यं शपामि गुरुणा यथा ननु कृतं भवेत् ।। २१ ।।
पुत्रस्य वचनं श्रुत्वा दम्पती तौ मुदान्वितौ ।।
ऊचतुस्तं प्रियं वाक्यं बालं कमललोचनम् ।। २२ ।।
यद्यत्त्वं वक्ष्यसे वत्स यद्यत्ते हृदि वर्त्तते ।।
सर्वं तत्तत्करिष्यावो विस्रब्धं वद साम्प्रतम् ।। २३ ।।
त्रिंशत्सहस्रं गावो हि सर्वाश्च शुभदोहनाः ।।
यद्यत्र रोचते पुत्र देहि त्वमविचारितम् ।। २४ ।।
पुनरन्यत्प्रवक्ष्यामि आवयोः पुत्र कारणात् ।।
वाणिज्यं नः स्मृतं कर्म तत्ते पुत्रे यदीप्सितम् ।। २५ ।।
तत्कुरुष्व यथान्यायं मित्रेभ्यो दीयतां धनम् ।।
धनधान्यानि रत्नानि देहि पुत्र अवारितः ।। २६ ।।
कन्या वै रमणीयाश्च सजातीयाः कुलोद्भवाः ।।
आनयिष्याव भद्रं ते उद्वाहेन क्रमेण ते ।। २७ ।।
यदीच्छसि पुनश्चान्यद्यज्ञैर्यष्टुं सुपुत्रक ।।
विधिना पूर्वदृष्टेन वैश्या येन यजन्ति च ।। २८ ।।
अष्टौ सम्पूर्णधुर्याणां हलानां तावतां शतम् ।।
वैश्यकर्म समादाय किं पुनः प्राप्तुमिच्छसि ।। २९ ।।
यावद्भोजनतृप्तान्वा द्विजानिच्छसि तर्पितुम् ।।
सर्वं निजेच्छया पुत्र कर्त्तुमर्हसि साम्प्रतम् ।। 138.३० ।।
पितृमातृ वचः श्रुत्वा स बालो धर्मसंयुतः ।।
चरणावुपसंगृह्य पितरौ पुनरब्रवीत् ।। ३१ ।।
गोप्रदाने न मे कार्यं मित्रं वापि न चिन्तितम् ।।

कन्यालाभे न चेच्छास्ति न च यज्ञफले तथा ।। ३२ ।।
नाहं वाणिज्यमिच्छामि कृषिगोरक्षमेव च ।।
न च सर्वातिथित्वं वा मम चित्ते प्रसज्जति ।। ३३ ।।
एकं मे परमं चिन्त्यं यन्ममेच्छा तपोधृतौ ।।
चिन्ता नारायणक्षेत्रं गाढं सौकरवं प्रति।।३४।।
ततः पुत्रवचः श्रुत्वा मम कर्मपरायणौ ।।
करुणं परिदेवन्तौ रुदन्तौ तावुभौ तथा ।। ३९ ।।
अथ द्वादश वर्षाणि तव जातस्य पुत्रक ।।
किमिदं चिन्तितं वत्स त्वया नारायणाश्रयम् ।। ३६ ।।
चिन्तयिष्यति भद्रं ते यदा तत्प्राप्नुया वयः ।।
अद्यापि भोजनं गृह्य धावमानास्मि पृष्ठतः ।। ३७ ।।
किमिदं चिन्तितं वत्स गमने सौकरं प्रति ।।
अद्यापि मत्स्तनौ धन्यौ प्रस्नुतौ हि दिवानिशम् ।। ३८ ।।
पुत्र त्वत्स्पर्शनाशायाः किमेतच्चिन्तितं त्वया ।।
रात्रौ सुप्तोऽसि वत्स त्वं शय्यासु परिवर्त्तितः ।। ३९ ।।
अम्बेति भाषसेऽद्यापि कथमेतद्विचिन्तितम् ।।
स्पृशंति तव नार्योऽपि क्रीडमानस्य पुत्रक ।। 138.४० ।। ।
अपराधो न विद्येत पुत्र क्षेत्रगृहेष्वपि ।।
न वा स्वजनभृत्याद्यैः परुषं ते प्रभाषितम् ।। ४१ ।।
रुष्टेन वापि भीषायै गृह्यते चैव यष्टिका।।
पुत्रहर्तुं न पश्येहं तव निर्वेदकारणम् ।। ४२ ।।
इति मातुर्वचः श्रुत्वा स वैश्यकुलनन्दनः ।।
उवाच मधुरं वाक्यं जननीं संशितव्रतः ।। ४३ ।।
उषितोऽस्मि तदंगेषु गर्भस्थः कुक्षिसंभवः ।।
क्रीडतोस्मि यथान्यायं तवोत्संगे यशस्विनि ।। ४४ ।।
स्तनौ ह्येतौ मया पीतौ ललितेन विजृम्भितौ ।।
अङ्गं तव समारुह्य पांसुभिर्गुण्ठिता तनुः ।। ४५ ।।
अम्ब त्वं मयि कारुण्यं कुरुष्व खलु चोचितम् ।।
मुंच पुत्रकृतं शोकं त्यज मातरनिन्दिते ।। ४६ ।।
आयान्ति च पुनर्यान्ति गता गच्छन्ति चापरे।।
दृश्यते च पुनर्नष्टो न दृश्येत पुनः क्वचित्।।४७।।
कुतो जातः क्व संबद्धः कस्य माता पिताथवा ।।
इमां योनिमनुप्राप्तो घोरे संसारसागरे ।। ४८ ।।

मातापितृसहस्राणि पुत्रदारशतानि च।।
जन्मजन्मनि वर्त्तन्ते कस्य ते कस्य वा वयम् ।। ४९ ।।
एवं चिन्तां समासाद्य मा शुचो जननि क्वचित् ।।
एवं तौ पितरौ श्रुत्वा विस्मयात्पुनरूचतुः ।। 138.५० ।।
अहो बत महद्गुह्यं किमेतत्तात कथ्यताम् ।।
एतद्वचनमाकर्ण्य स वैश्यकुलबालकः ।। ५१ ।।
उवाच मधुरं वाक्यं जननीं पितरं तथा।।
यदि श्रुतेन वः कार्यं गुह्यस्य परिनिश्चयात् ।। ५२ ।।
तत्पृच्छ्यतां भवद्भ्यां हि गुह्यं सौकरवं प्रति ।।
तत्राहं कथयिष्यामि स्वस्य गुह्यं महौजसम् ।।५३ ।।
सूर्यतीर्थं समासाद्य यत्तात परिपृच्छसि ।।
बाढमित्येव पुत्रं तौ दम्पती प्रोचतुश्च तम् ।। ५४ ।।
गमने कृतसंकल्पौ ततः सौकरवं प्रति ।।
सर्वद्रव्यसमायुक्तौ गतौ सौकरवं प्रति ।। ५५ ।।
गतः स पद्मपत्राक्ष आभीराणां जनेश्वरः ।।
गावो विंशसहस्राणि प्रेषयत्यग्रतो द्रुतम् ।। ५६ ।।
अग्रे सर्वास्ताः प्रययुर्द्रव्येण च समायुताः ।।
यच्च किंचिद्गृहे वास्ति कृतं नारायणं प्रति ।। ५७ ।।
ततः पूर्वार्द्धयामेन माघमासे त्रयोदशी ।।
सर्वं स्वजनमामन्त्र्य सम्बद्धं च यथाविधि ।। ५८ ।।
मुहूर्त्तेन च तेनैव गमनं कुरुते ततः ।।
स्नात्वा च कृतशौचास्ते नारायणमुदावहाः ।। ५९ ।।
अथ दीर्घेण कालेन नारायणमुदावहाः ।।
वैशाखस्य तु द्वादश्यां मम क्षेत्रमुपागताः ।। 138.६० ।।
स्नाताः सन्तर्प्य च पितृन्मम वस्त्रविभूषिताः ।।
गावो विंशतिसाहस्रा याः पूर्वमुपकल्पिताः ।। ६१ ।।
तत्र भङ्गुरसो नाम मम कर्मपरायणः ।।
तेनैव ता गृहीता वै विधिदृष्टेन कर्मणा ।। ६२ ।।
ततः स प्रददौ तस्य विंशा गावो महाधनाः ।।
मङ्गल्याश्च पवित्राश्च सर्वाश्च वरदोहनाः ।। ६३ ।।
प्रददौ धनरत्नानि नित्यमेव दिने दिने ।।
मोदते सह पुत्रेण भार्यया स्वजनेन च ।। ६४ ।।
एवं तु वसतस्तस्य वर्षाकाल उपागतः ।।

प्रावृडुपस्थिता तत्र सर्वसस्यप्रवर्द्धिनी।।६५।।
पुष्पितानि कदम्बानि कुटजार्ज्जुनकानि च।।
एवं दुःखमनुप्राप्ता स्त्रियो या रहिताः प्रियैः।।६६।।
गर्ज्जतां गुञ्जतां चैव धारापातनिपातिताः।।
मेघाः सविद्युतश्चैव बलाकाङ्गदभूषिताः।।६७।।
नदीनां चैव निर्घोषो मयूराणां च निःस्वनः।।
कुटजार्ज्जुनगन्धाश्च कदम्बार्ज्जुनपादपाः।।६८।।
वाताः प्रवान्ति ते तत्र शिखीनां च सुखावहाः।।
शोकेन कामिनीनां च भर्त्रा च रहिताश्च याः।।६९।।
गच्छत्येवं स कालो हि मेघदुन्दुभिनादितः।।
ततः शरदनुप्राप्ता अगस्तिरुदितो महान्।।138.७०।।
तडागानि प्रसन्नानि कुमुदोत्पलवन्ति च।।
पद्मषण्डैः सुरम्याणि पुष्पितानि समन्ततः।।७१।।
प्रवान्ति सुसुखा वाताः सुगन्धाश्च सुशीतलाः।।
सप्तपर्णसुगन्धाश्च शीतलाः कामिवल्लभाः।।७२।।
एवं शरदि निर्वृत्ते कौमुदे समुपागते।।
सा तस्मिन्मासि सुश्रोणि शुक्लपक्षान्तरे तदा।।७३।।
एकादश्यां ततः सुभ्रु स्नातौ क्षौमविभूषितौ।।
उभौ तौ दम्पती तत्र पुत्रमूचतुरात्मनः।।७४।।
उषितास्त्वत्र षण्मासान्सुखं च द्वादशी भवेत्।।
किन्नो न वक्ष्यसे गुह्यं येन वै वारिता वयम्।।७५।।
पित्रोस्तु वचनं श्रुत्वा स पुत्रो धर्मनिष्ठितः।।
उवाच मधुरं वाक्यं तयोस्तु कृतनिश्चयः।।७६।।
एवमेतन्महाभाग यत्त्वया परिभाषितम्।।
कल्यं ते कथयिष्यामि इदं गुह्यं महौजसम्।।७७।।
एषा वै द्वादशी तात प्रभुनारायणप्रिया।।
मंगला च विचित्रा च विष्णुभक्तसुखावहा।।७८।।
ददतेऽस्यां प्रहृष्टाश्च द्वादश्यां कौमुदे सिते।।
दीक्षितास्ते योगिकुले विष्णुभक्तिपरायणाः।।७९।।
तेन दानप्रभावेण विष्णुतोषकरेण च।।
तरन्ति दुस्तरं तात घोरं संसारसागरम्।।138.८०।।
एवं कथयतां तेषां प्रभाता रजनी शुभा।।
ततः सन्ध्यामुपास्याथ उदिते सूर्यमण्डले।।८१।।

शुचिर्भूत्वा यथान्यायं क्षौमवस्त्रविभूषितः।।
प्रणम्य शिरसा देवं शंखचक्रगदाधरम्।।८२।।
उभौ तच्चरणौ गृह्य पितरौ समभाषत।।
शृणु तात महाभाग यदर्थं समुपागतः।।८३।।
यद्भवान्पृच्छते तात गुह्यं सौकरवं प्रति।।
खञ्जरीटो ह्यहं तात पक्षियोनिसमुद्भवः।।८४।।
भक्षिताश्च पतंगा मे अजीर्णेनातिपीडितः।।
अहं तेनैव दोषेण न शक्नोमि विचेष्टितुम्।।८५।।
दृष्ट्वा मां विह्वलं बाला गृहीत्वा क्रीडितुं गताः।।
हस्ताद्धस्तेन क्रीडन्तश्चान्योन्यपरिहासया।।८६।।
त्वया दृष्टो मया दृष्टो ह्यं चेति कलिः कृतः।।
तत एकेन बालेन भ्रामयित्वाऽक्षयेम्भसि।।८७।।
न ममेति तवेत्युक्त्वा ह्यादित्यं तीर्थमुत्तमम्।।
क्रोधेनादाय तीव्रेण क्षिप्तो गङ्गाम्भसि त्वरा।। ८८।।
तत्र मुक्ता मया प्राणाः सूर्यतीर्थे महौजसि।।
अकामेन विशालाक्षि तत्प्रभावादहं ततः ।। ८९ ।।
जातस्तव सुतो मातस्तदेतद्दिनमुत्तमम् ।।
अकामान्म्रियमाणस्य वर्षाण्यद्य त्रयोदश ।। 138.९० ।।
व्यतीतानि च गुह्यं ते कथनं मम चैव यत् ।।
एतत्ते कथितं तात गुह्यमागमनं प्रति ।। ९१ ।।
अहं कर्म करिष्यामि गच्छ तात नमोऽस्तु ते ।।
ततो माता पिता चैव पुत्रं पुनरुवाच ह ।। ९२ ।।
विष्णुप्रोक्तानि कर्माणि यं यं कारयिता भवान् ।।
तान्वयं च करिष्यामो विधिदृष्टेन कर्मणा ।। ९३ ।।
वटमाला यथान्यायं कर्मसंसारमोक्षणम् ।।
तेऽपि दीर्घेण कालेन मम कर्मपरायणाः ।। ९४ ।।
कृत्वा तु विपुलं कर्म ततः पंचत्वमागताः ।।
मम क्षेत्रप्रभावेण चात्मनः कर्मनिश्चयात् ।। ९५ ।।
विमुक्ताः सर्वसंसाराच्छ्वेतद्वीपमुपागताः ।।
योऽसौ परिजनः कश्चिद्गृहेभ्यश्च समागतः ।। ९६ ।।
सर्वः श्रिया युतस्तत्र रोगव्याधिविवर्जितः ।।
सर्वे च योगिनस्तत्र सर्वे चोत्पलगंधयः ।। ।। ९७ ।।
मोदन्ते तु यथान्यायं प्रसादात्क्षेत्रजान्मम ।।

एतत्ते कथितं देवि महाख्यानं महौजसम् ।। ९८ ।।
पुनरन्यत्प्रवक्ष्यामि यद्वृत्तं सौकरे मम ।।
एषा व्युष्टिर्महाभागे क्षेत्रे यत्क्रियते महत् ।। ९९ ।।
तिर्यग्योनिविनिर्मुक्ताः श्वेतद्वीपमुपागताः ।।
य एतत्पठते नित्यं कल्यमुत्थाय मानवः ।। 138.१०० ।।
स कुलं तारयेत्तूर्णं दश पूर्वान्दशावरान् ।।
न पठेन्मूर्खमध्ये तु पापिष्ठे शास्त्रदूषके ।। १०१ ।।
न पठेत्पिशुनानां च एकाकी तु पठेद्गृहे ।।
पठेद्ब्राह्मणमध्ये च ये च वेदविदां वराः ।। १०२ ।।
वैष्णवानां च पुरतो यै व शास्त्रगुणान्विताः ।।
विशुद्धानां विनीतानां सर्वसंसारमोक्षणम् ।। १०३ ।।
इति श्रीवराहपुराणे खञ्जरीटोपाख्यानं नामाष्टत्रिंशदधिकशततमोऽध्यायः ।। १३८ ।।
इति खञ्जरीटोपाख्यानं समाप्तम् ।।

अथ सौकरमाहात्म्यम् ।।

श्रीवराह उवाच ।।

शृणु तत्त्वेन मे देवि लिप्यमानस्य यत्फलम् ।।

सर्वं ते कथयष्यामि यथा प्राप्नोति मानवः ।। १ ।।

गृहीत्वा गोमयं भूमे मम वेश्मोपलेपयेत् ।।

न्यस्तानि तत्र यावन्ति पदानि च विलिम्पतः ।। २ ।।

तावद्वर्षसहस्राणि दिव्यानि दिवि मोदते ।।

यदि द्वादशवर्षाणि लिप्यते मम कर्मसु ।।३।।

जायते विपुले शुद्धे धनधान्यसमाकुले ।।

दिव्यैर्नमस्कृतो देवि कुशद्वीपं च गच्छति ।। ४ ।।

कुशद्वीपमनुप्राप्य सहस्राणि च जीवति ।।

दश चैव तु वर्षाणां मम भक्तो महाञ्छुचिः ।। ५ ।।

कुशद्वीपात्परिभ्रष्टो मम कर्मपरायणः।।

राजा वै जायते सुभ्रु सर्वधर्मेषु निष्ठितः ।। ६ ।।

तेन तस्य प्रभावेण मम कर्मपरायणः ।।

भक्तौ व्यवस्थितश्चापि सर्वशास्त्राणि पृच्छति ।।७।।

देवि कारयते सर्वं मम चायतनानि च।।

कारयित्वा यथान्यायं मम लोकं स गच्छति।।८।।

गोमयस्य तु वक्ष्यामि तच्छृणुष्व वसुन्धरे।।

गोमयन्तु समासाद्य यावल्लोकोऽनुगच्छति ।।९।।

समीपे यदि वा दूरे गत्वा नयति गोमयम्।।

यावन्ति तत्पदान्यस्य तावद्वर्ष सहस्रकम्।।139.१० ।।

गोमयानां च नेता वै स्वर्गलोके महीयते।।

ततः स शाल्मले द्वीपे रमते च मुदा युतः।।११।।

एकादशसहस्राणि एकादशशतानि च ।।

शाल्मलात्तु परिभ्रष्टो राजा भवति धार्मिकः।।१२।।

मद्भक्तश्चैव जायेत सर्वधर्मविदां वरः ।।

अथ द्वादशवर्षाणि मच्छ्रितः सुदृढव्रतः।।१३।।

वहते गोमयं सुष्ठु मम लोकं स गच्छति ।।

स्नानोपलेपने भूमे सलिलं यो ददाति च ।। १४ ।।

तस्य पुण्यं महाभागे शृणु तत्वेन निष्कलम् ।।

यावन्तो बिन्दवस्तत्र पानीयस्य वसुन्धरे ।। १५ ।।

तावद्वर्षसहस्राणि स्वर्गलोके महीयते ।।

स्वर्गलोकात्परिभ्रष्टः क्रौचद्वीपं च गच्छति ।। १६ ।।
क्रौंचद्वीपात्परिभ्रष्टो राजा भवति धार्मिकः ।।
तेनैव गुणयोगेन श्वेतद्वीपं च गच्छति ।। १७ ।।
संमार्ज्जनं प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।।
यां गतिं पुरुषा यान्ति स्त्रियो वा कर्मसु स्थिताः ।। १८ ।।
शुचिर्भागवतः शुद्धो अपराधविवर्जितः ।।
यावन्तः पांसवो भूमेरुड्डीयन्ते तु चालिताः ।। १९ ।।
तावद्वर्षशतान्याशु स्वर्गलोके महीयते ।।
स्वर्गलोकात्परिभ्रष्टः शाकद्वीपं स गच्छति ।। 139.२० ।।
तत्र स्थित्वा चिरङ्कालं राजा भवति धार्मिकः ।।
ततो भुक्त्वा सर्वभोगान्स्थित्वा संसारसागरे ।। २१ ।।
श्वेतद्वीपं ततो गच्छेन्मत्कर्मनिरतः शुचिः ।।
अन्यच्च ते प्रवक्ष्यामि शृणुष्व गदतो मम ।। २२ ।।
गायनं ये प्रकुर्वन्ति मम कर्मपरायणाः ।।
तेषां यद्यत्फलं भूमे शृणुष्व गदतो मम ।। २३ ।।
गीयमानस्य गीतस्य यावदक्षरपङ्क्तयः ।।
तावद्वर्षसहस्राणि इन्द्रलोके महीयते ।। २४ ।।
रूपवान्गुणवान् सिद्धः सर्ववेदविदां वरः ।।
नित्यं पश्यति तत्रस्थो देवराजं न संशयः ।। २५ ।।
मद्भक्तश्चैव जायेत इन्द्रलोकपथे स्थितः ।।
सर्वकर्मगुणश्रेष्ठस्तत्रापि मम पूजकः ।। २६ ।।
इन्द्रलोकात्परिभ्रष्टो मम गीतपरायणः ।।
नन्दनोपवने रम्ये रमन्देवगणैः सह ।। २७।।
ततः स भूमौ जायेत वैष्णवैः सह संस्थितः ।।
गायन्मम यशो नित्यं भक्त्या परमया युतः ।। २८ ।।
मत्प्रसादात्स शुद्धात्मा मम लोकं हि गच्छति ।। २९ ।।
सूत उवाच ।।
तस्य तद्वचनं श्रुत्वा माधवस्य यशस्विनी ।।
कृताञ्जलिपुटा भूयः प्रत्युवाच वसुन्धरा ।। 139.३० ।।
धरण्युवाच ।।
अहो गीतप्रभावो वै यस्त्वया कीर्त्तितो महान् ।।
के च गीतप्रभावेण सिद्धिं प्राप्ता महौजसः ।। ३१ ।।
वराह उवाच ।।

तत्रैव चाश्रमे भद्रे चाण्डालः कृतनिश्चयः ।।
दूराज्जागरणे याति मम भक्तौ व्यवस्थितः ।। ३२ ।।
गायमानश्च गीतानि संवत्सरगणान्बहून् ।।
श्वपाकः स गुणज्ञश्च मद्भक्तश्चैव सुन्दरि ।। ३३ ।।
कौमुदस्य तु मासस्य शुक्लपक्षे तु द्वादशी ।।
सुप्ते गते येन जाते वीणामादाय चंक्रमत् ।।३४।।
जाग्रंस्तत्र स चाण्डालो गृहीतो ब्रह्मरक्षसा ।।
अल्पप्राणः श्वपाको वै बलवान्ब्रह्मराक्षसः ।। ३५ ।।
दुःखशोकेन सन्तप्तो न शक्नोति विचेष्टितुम् ।।
तेन प्रोक्तः श्वपाकेन बलवान्ब्रह्मराक्षसः ।।३६।।
किं त्वया चेष्टितं मह्यं यस्त्वेवं परिधावसि ।।
श्वपाकवचनं श्रुत्वा तेन वै ब्रह्मरक्षसा ।।३७ ।।
ततः प्रोवाच तं श्वादं मानुषाहारलोलुपः ।।
अथेह दशरात्रं मे निराहारस्य तिष्ठतः ।।३८।।
विधात्रा विहितस्त्वं व आहारः पारणाविधौ ।।
अद्य तां भक्षयिष्यामि सवसामांसशोणितैः ।।३९।।
तृप्तिं यास्यामि परमां विधात्रा विहितां मम ।।
ब्रह्मरक्षोवचः श्रुत्वा श्वपाको गीतलालसः ।। 139.४० ।।
राक्षसं छन्दयामास मम भक्त्या व्यवस्थितः ।।
एवमेतन्महाभाग भक्ष्योऽहं समुपागतः ।। ४१ ।।
अवश्यमेतत्कर्तव्यं धात्रा दत्तं यथा तव ।।
किं त्वहं देवदेवस्य भक्त्या गातुं च जागरे ।।४२।।
उद्यंस्तत्र गत्वाहमुपास्य विधिना हरिम् ।।
पश्चात्खादस्व मां रक्षो जागराद्विनिवर्तितम् ।। ४३ ।।
विष्णोः सन्तोषणार्थाय यतो मे व्रतमास्थितम् ।।
जागरे विनिवृत्ते मां भक्षय त्वं यदीच्छसि ।। ४४ ।।
श्वपाकस्य वचः श्रुत्वा ब्रह्मरक्षः क्षुधार्दितः ।।
उवाच पुरुषं वाक्यं श्वपाकं तदनन्तरम् ।। ४६ ।।
मिथ्या किं भाषसे मूढ पुनरेष्यामि तेऽन्तिकम् ।।
मृत्योर्मुखमनुप्राप्य पुनर्जीवति मानवः ।। ४६ ।।
रक्षसो मुखविभ्रष्टः पुनरागन्तुमिच्छसि ।।
राक्षसस्य वचः श्रुत्वा चाण्डालस्तमथाब्रवीत् ।। ४७ ।।
यद्यप्यहं हि चाण्डालः पूर्वकर्मविदूषितः ।।

सम्प्राप्तो मानुषं भावं विहितेनान्तरात्मना ।।४८।।
शृणु मत्समयं रक्षो येनाहं पुनरागमम् ।।
दूराज्जागरणं कृत्वा लोकस्य द्विजराक्षस।।४९।।
सत्येन पुनरेष्यामि मन्यसे यदि मुंच माम् ।।
सत्यमूलं जगत्सर्वं लोकाः सत्ये प्रतिष्ठिताः।।139.५०।।
सत्येन सिद्धिं प्राप्ता हि ऋषयो ब्रह्मवादिनः ।।
सत्येन दीयते कन्या सत्यं जल्पन्ति ब्राह्मणाः ।। ५१ ।।
सत्यं जयन्ति राजानस्त्रीण्येतान्यब्रुवन्नृतम् ।।
सत्येन गम्यते स्वर्गो मोक्षः सत्येन चाप्यते ।। ५२ ।।
सत्येन तपते सूर्यः सोमः सत्येन रज्यते ।।
षष्ठ्यष्टमीममावास्यामुभे पक्षे चतुर्दशी ।। ५३ ।।
अस्नातानां गतिं यास्ये यद्यहं नागमे पुनः ।।
गुरुपत्नीं राजपत्नीं योऽभिगच्छति मोहितः।। ५४।।
तां गतिं सम्प्रपद्येऽहं यद्यहं नागमे पुनः।।
याजकानां च ये लोका ये च मिथ्याभिभाषिणाम्।।५५।।
तां गतिं सम्प्रपद्येऽहं यद्यं नागमे पुनः।।
ब्रह्मघ्ने च सुरापे वा स्तेने भग्नव्रते तथा।।५६।।
तेषां गतिं प्रपद्येऽहं यद्यहं नागमे पुनः।।
श्वपाकवचनं श्रुत्वा तुष्टो ब्राह्मणराक्षसः।।५७।।
उवाच मधुरं वाक्यं गच्छ शीघ्रं नमोऽस्तु ते।।
ब्रह्मराक्षसमुक्त्वा तु श्वपाकः कृतनिश्चयः।।५८।।
पुनर्गायति मह्यं वै मम भक्तौ व्यवस्थितः।।
अथ प्रभाते विमले गीते नृत्ये च जागरे।।५९।।
नमो नारायणायेति श्वपाकः परिवर्त्तते।।
ततस्त्वरितमागत्य पुमांस्तस्याग्रतः स्थितः।।139.६०।।
उवाच मधुरं वाक्यं चाण्डालं कृतनिश्चयम्।।
क्व यासि त्वरितः साधो न च त्वं गन्तुमर्हसि।।६१।।
जानन्कौणपपं तं च न त्वं मर्त्तुमिहार्हसि।।
पुरुषस्य वचः श्रुत्वा चाण्डालः पुनरब्रवीत्।।६२।।
समयो मे कृतः पूर्वं राक्षसेन हि भक्षता।।
तेन तत्र गमिष्यामि सत्यं च परिपालयन्।।६३।।
ततः स पद्मपत्राक्षः श्वपाकं प्रत्युवाच ह।।
मधुरां गिरमादाय विहितेनान्तरात्मना।।६४।।

मा गच्छ तत्र चाण्डाल यत्रासौ पापराक्षसः।।
जीवितार्थाय सत्यस्य न दोषः परिहापनात्।।६५।।
ततस्तस्य वचः श्रुत्वा श्वपाकः संशितव्रतः।।
उवाच मधुरं वाक्यं मरणे कृतनिश्चयः।।६६।।
नाहमेवं करिष्यामि यन्मां त्वं परिभाषसे।।
न चाहं नाशये सत्यमेतन्मे निश्चितं व्रतम्।।६७।।
सत्यमूलं जगत्सर्वं कुलं सत्ये प्रतिष्ठितम्।।
सत्यमेव परो धर्म आत्मा सत्ये प्रतिष्ठितः।।६८।।
न चैवाहं तदुत्सृज्य असत्यः स्यां कदाचन।।
नाहं मिथ्या चरिष्यामि गच्छ तात नमोऽस्तु ते।।६९।।
एवमुक्त्वा श्वपाकोपि नित्यं सत्यव्रते स्थितः।।
राक्षसं समनुप्राप्तस्तमुवाचाथ पूजयन्।।139.७०।।
आगतोऽस्मि महाभाग मा विलम्बय भक्षय।।
त्वत्प्रसादादहं गन्ता वैष्णवं स्थानमुत्तमम्।।७१।।
एतानि मम गात्राणि भक्षयस्व यथेष्टतः।।
पिबोष्णं रुधिरं मह्यं पीडितोऽसि क्षुधा भृशम्।।७२।।
तर्पयस्व स्वमात्मानं कुरुष्व मम वै हितम्।।
श्वपाकस्य वचः श्रुत्वा ततः स ब्रह्मराक्षसः।।७३।।
उवाच मधुरं वाक्यं श्वपाकं तदनन्तरम्।।
साधु तुष्टोऽस्म्यहं वत्स सत्यं धर्मं च पालितम्।।७४।।
चण्डालस्याविधिज्ञस्य यस्य ते मतिरीदृशी।।
ब्रह्मरक्षोवचः श्रुत्वा श्वपाकः सत्यसङ्गरः।।७५।।
उवाच मधुरं वाक्यं ब्रह्मराक्षसमेव तु।।
यद्यप्यहं वै चाण्डालः सर्वकर्मविवर्जितः।।७६।।
तथापि सत्यं वक्तव्यं ब्रह्मराक्षस नित्यशः।।
श्वपाकवचनं श्रुत्वा ब्रह्मरक्षो भयानकम् ।। ७७ ।।
उवाच मधुरं वाक्यं श्वपाकं संशितव्रतम् ।।
यत्त्वया गीयते रात्रौ विष्णोर्जागरणं प्रति ।। ७८ ।।
फलं गीतस्य मे देहि यदीच्छेर्जीवितं स्वकम् ।।
ततो मोक्ष्यामि कल्याण भक्ष्यामि न च भीषणः ।।७९।।
ब्रह्मरक्षोवचः श्रुत्वा श्वपाकः प्रत्युवाच ह।।
मनोऽज्ञातमिदं वाक्यं ब्रह्मरक्षो निभाषसे ।। 139.८० ।।
भक्षयामीति चोक्त्वा मां गीतपुण्यं किमिच्छसि ।।

श्वपाकवचनं श्रुत्वा ब्रह्मरक्षोऽब्रवीत्पुनः ।। ८१ ।।
देहि मे त्वेकयामीयं पुण्यं गीतस्य वै परम् ।।
ततो मोक्ष्यसि भक्ष्येण संगतः पुत्रदारकैः।। ८२ ।।
श्रुत्वा राक्षसवाक्यानि चाण्डालो गीतलोभितः ।।
उवाच मधुरं वाक्यं राक्षसं कृतनिश्चयः ।। ८३ ।।
न गायनफलं दद्मि ब्रह्मरक्षस्तवेप्सितम् ।।
भक्षयस्व यथान्यायं रुधिरं पिब चेप्सितम् ।। ८४ ।।
श्वपाकवचनं श्रुत्वा राक्षसः पुनरब्रवीत् ।।
एकगीतस्य मे देहि यत्त्वया विष्णुसंसदि ।। ८९ ।।
एतेन तारितोऽस्मीति तव गीतफलेन वै ।।
श्रुत्वा वाक्यानि चाण्डालो राक्षसस्य निवारयन् ।। ८६ ।।
उवाच मधुरं वाक्यं चाण्डालो विस्मयान्वितः ।।
किं त्वया विकृतं कर्म तद्ब्रूहि मम राक्षस ।। ८७ ।।
कर्मणो यस्य दोषेण राक्षसत्वं समागतः ।।
श्वपाकवचनं श्रुत्वा ब्रह्मरक्षो महायशाः ।। ८८ ।।
उवाच मधुरं वाक्यं दुःखसन्तप्तमानसः ।।
नाम्ना वै सोमशर्माहं चरको ब्रह्मयोनिजः ।। ८९ ।।
सूत्रमन्त्रपरिभ्रष्टो यज्ञकर्मसु निष्ठितः ।।
ततोऽहं याजयाम्यज्ञान् लोभमोहप्रपीडितः ।। 139.९० ।।
प्रवर्तमाने यज्ञे तु कदाचिद्दैवयोगतः ।।
उदरे जातशूलोऽहं तेन पंचत्वमागतः ।। ९१ ।।
अथ पञ्चमहारात्रे ह्यसमाप्ते क्रतौ तथा ।।
अस्य यज्ञस्य दोषेण मातंग शृणु मे वचः ।।९२।।
राक्षसत्वमनुप्राप्तस्तेन दुष्टेन कर्मणा ।।
मंत्रहीनं मया तत्र स्वरहीनं च तत्कृतम् ।। ९३ ।।
सूत्रहीनं तथा तत्र प्राग्वंशादि कृतं मया ।।
परिमाणं च रूपं च मया तत्रोपलक्षितम् ।।९४।।
कृतस्य तस्य दोषेण योनिं प्राप्तोऽस्मि राक्षसीम् ।।
स्वगीतफलदानेन निस्तारयितुमर्हसि ।।९५।।
मोचयस्वाधमं पापाद्विष्णुगीतेन सत्वरम् ।।
ब्रह्मरक्षोवचः श्रुत्वा श्वपाकः संशितव्रतः ।।९३।।
बाढमित्येव तद्वाक्यं राक्षसं प्राब्रवीत्तदा ।।
एतस्य मम गीतस्य सुस्वरस्य फलं तु यत् ।।९७ ।।

ददामि राक्षस त्वं चेन्मुच्यसे शुद्धमानसः ।।
यस्तु गायति संयुक्तं गीतकं विष्णुसन्निधौ ।।९८।।
स तारयति दुर्गाणीत्युक्त्वा तद्दत्तवान् फलम् ।।
एवं तस्मात्फलं प्राप्य श्वपाकाद्राक्षसस्तदा।।९९।।
जातः सुविमलो भद्रे शरदीव यथा शशी।।
श्वपकश्चापि सुश्रोणि मम चैवोपगायकः।।139.१००।।
कृत्वा सुविपुलं कर्म स ब्रह्मत्वमुपागतः।।
एतद्गीतफलं देवि प्राप्नोति मनुजो भुवि।।१०१।।
मह्यं जागरतो भद्रे गीयमानं मनस्विनि।।
यस्तु गायति सुश्रोणि कौमुदीं द्वादशीं प्रति।।१०२।।
सर्वसंगं परित्यज्य मम लोकं स गच्छति।।
यस्तु गायति गीतानि मम जागरणे सदा।।१०३।।
सर्वसंगात्प्रमुक्तो वै मम लोकं स गच्छति।।
एतत्ते कथितं देवि गायनस्य फलं महत्।।१०४।।
यस्य गीतस्य शब्देन तरेत्संसारसागरम्।।
वादित्रस्य प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे।।१०५।।
प्राप्तवान्मानुषो येन देवेभ्यः सबलां स्वयम्।।
शम्पातालप्रयोगेण सन्निपातेन वा पुनः।।१०६।।
नववर्षसहस्राणि नववर्षशतानि च ।।
कुबेरभवनं गत्वा मोदते वै यदृच्छया।।१०७।।
कुबेरभवनाद्भ्रष्टः स्वच्छन्दगमनालयः।।
शम्यादितालसम्पातैर्मम लोकं स गच्छति।।१०८।।
नृत्यमानस्य वक्ष्यामि तच्छृणुष्व वसुन्धरे।.
मानवो येन गच्छेत्तु च्छित्त्वा संसारबन्धनम्।।१०९।।
त्रिंशद्वर्षसहस्राणि त्रिंशद्वर्षशतानि च।।
पुष्करद्वीपमासाद्य स्वच्छन्दगमनालयः।।139.११०।।
फलं प्राप्नोति सुश्रोणि मम कर्मपरायणः।।
रूपवान् गुणवाञ्छूरः शीलवान्सत्पथे स्थितः।।१११।।
मद्भक्तश्चैव जायेत संसारपरिमोचितः।।
यस्तु जागरितो नित्यं गीतवाद्येन नर्त्तकः।।११२।।
जम्बूद्वीपं समासाद्य राजराजस्तु जायते।।
सर्वकर्मसमायुक्तो रक्षिता वै महीपतिः।।११३।।
मद्भक्तश्चैव जायेत मम कर्मपरायणः।।

उपहार्याणि पुष्पाणि मम कर्मपरायणः।।११४।।
यो मामुपनयेद्भूमे मम कर्मपथे स्थितः।।
पुष्पाणि तत्र यावन्ति मम मूर्द्धनि धारयेत्।।११५।।
स कृत्वा पुष्कलं कर्म मम लोकं स गच्छति।।
एतत्ते कथितं देवि भक्तानां तु महौजसाम्।।११६।।
मम भक्तसुखार्थाय सर्वसंसारमोक्षणम्।।
य एतत्पठते भूमे कल्यमुत्थाय मानवः।।११७।।
स तु तारयते जन्तुर्दश पूर्वान्दशापरान्।।
न पठेन्मूर्खमध्ये तु पिशुनानां पुरो न च।।११८।।
पठेद्भागवतानां च मध्ये मुक्तिरतात्मनाम्।।
अश्रद्दधाने क्रूरे वा न पठेद्देवले तथा।।११९।।
यदीच्छेत्सिद्धिकल्याणं मंगलं च मम प्रियम्।।
धर्माणां परमो धर्मः क्रियाणां परमा क्रिया।।139.१२०।।
मा पठेच्छास्त्रदूषाय अध्यायं वा कदाचन।।
यदीच्छेत्परमां सिद्धिं मम लोके महीयते।।१२१।।
इति श्रीवराहपुराणे भगवच्छास्त्रे सौकरे चाण्डालब्रह्मराक्षससंवादे सौकरमाहात्म्यं नामैकोनचत्वारिंशदधिकशततमोऽध्यायः।।१३९।।

अथ कोकामुख(बदरी) माहात्म्यम्।।
धरण्युवाच।।
श्रुतानि देवस्थानानि त्वया प्रोक्तानि यान्युत।।
कस्मिंस्तिष्ठसि नित्यं त्वं तद्भवान्वक्तुमर्हति।।१।।
किंच ते परमं स्थानं यत्र मूर्त्त्याकृतिर्भवान्।।
कस्मिन्स्थाने कृतं कर्म येन यात्युत्तमां गतिम्।।२।।
श्रीवराह उवाच।।
शृणु तत्त्वेन मे देवि भक्तानां भक्तवत्सले ।।
येषु स्थानेषु तिष्ठामि कथ्यमानानिमाञ्छृणु।।३।।
तव कोकामुखं नाम यन्मया पूर्वभाषितम्।।
बदरीति च विख्यातं गिरिराजशिलातलम्।।४।।
स्थानं लोहार्गलं नाम म्लेच्छराजसमाश्रितम्।।
क्षणं चापि न मुंचामि एवमेतन्न संशयः।।५।।
सचैत्यं पश्य मे स्थानं जगदेतच्चराचरम्।।
सर्वत्राहं वरारोहे न मन्न्यूनं हि जानते।।६।।
ये तु जानन्ति मां देवि गुह्यां कामगतिं मम।।
शीघ्रं कोकामुखं यान्तु मम कर्मपरायणाः।।७।।
ततो देववचः श्रुत्वा पृथिवी वाक्यमब्रवीत्।।
शिरस्यञ्जलिमाधाय निर्वृतेनान्तरात्मना।।८।।
धरण्युवाच।।
सर्वतो लोकनाथेश परं कौतूहलं हि मे।।
कथं कोकामुखं श्रेष्ठं तद्भवान्वक्तुमर्हसि।।९।।
श्रीवराह उवाच।।
नास्ति कोकामुखात्क्षेत्रं श्रेष्ठं कोकामुखाच्छुचि।।
नास्ति कोकामुखात्स्थानं नास्ति कोकामुखात्प्रियम्।।140.१०।।
यस्तु कोकामुखं गत्वा भूयो विनिवर्त्तते।।
कर्माणि तत्र कुर्वीत चेष्टं भवति चात्मनि।।११।।
यानि यानि च क्षेत्राणि त्वया पृष्टानि वै धरे।.
कोकामुखसमं स्थानं न भूतं न भविष्यति।।१२।।
मम सा परमा मूर्त्तिर्यां न जानन्ति गोपिताम्।।
स्थितं कोकामुखं नाम एतत्ते कथितं मया।।१३।।
श्रीवराह उवाच।।
शृणु तत्त्वेन मे देवि यन्मां त्वं परिपृच्छसि।।

तस्मिन् कोकामुखं रम्यं कथ्यमानं मयाऽनघे।।१५।।
जलबिन्दुरिति ख्यातात्पर्वतात्पत्तनाद्भुवि।।
तत्तु गुह्यतमं देवि कृत्वा कर्म महौजसम्।।१६।।
सर्वसङ्गान्परित्यज्य मम लोकं स गच्छति।।
विष्णुधारेति विख्याता कोकायां मम मण्डले।।१७।।
पर्वतात्पतिता भूमौ धारा मुसलसन्निभा।।
अहोरात्रोषितो भूत्वा स्नायात्तत्र प्रयत्नतः।।१८।।
अग्निष्टोमसहस्राणां फलं प्राप्नोति मानवः।.
न मुह्यति स कर्त्तव्ये फलं प्राप्नोति चोत्तमम्।।१९।।
जायते विपुले शुद्धे मम मार्गानुसारिणि।।
तत्राथ मुंचति प्राणान्विष्णुधारां समाश्रितः।।140.२०।।
पश्यते परमां मूर्त्तिमेतां मम न संशयः।।
तत्र विष्णुपदं नाम स्थानं कोकामुकाश्रितम्।।२१।।
एतत्कश्चिन्न जानाति धरे वाराहसंश्रितम्।।
तस्मिन्कृतोदको देवि नरो रात्रावुपोषितः।। २२।।
क्रौंचद्वीपे प्रजायेत मम भक्तिपरायणः।।
तत्राथ मुंचति प्राणान्गुह्यस्थाने परे मम।।२३।।
सर्वसङ्गान्परित्यज्य मम लोके स गच्छति।।
अस्ति विष्णुसरो नाम क्रीडितं यत्त्वया सह।।२४।।
यत्र दंष्ट्राप्रहारेण चाहृतासि वसुन्धरे।।
तत्र स्नानं तु कुर्वीत प्रातःकाले वसुन्धरे।।२५।।
सर्वपापविशुद्धात्मा मम लोकं स गच्छति ।।
सोमतीर्थमिति ख्यातं कोकायां मम मण्डले ।।२६।।
यत्र पञ्चशिलाभूभिर्विष्णुनाम्ना तथाङ्किता ।।
यस्तत्र कुरुते स्नानं पञ्चरात्रोषितो नरः ।। २७ ।।
गोमेदे जायते द्वीपे मम मार्गानुसारकः ।।
तत्राथ मुञ्चते प्राणन्गुह्यक्षेत्रे परे मम ।। २८ ।।
सर्वपापविनिर्मुक्तः शुद्धात्मा मां स पश्यति ।।
तुंगकूटेतिविख्यातं कोकायां मम मण्डले ।। २९ ।।
चतुर्धाराः पतन्त्यत्र पर्वतादुच्छ्रयं श्रिताः ।।
यस्तत्र कुरुते स्नानं पञ्चरात्रोषितो नरः।।140.३०।।
कुशद्वीपं समासाद्य मम लोकेषु तिष्ठति ।।
अनित्यमाश्रमं नाम क्षेत्रकर्मसुखावहम् ।।३१।।

देवाश्च यं न जानन्ति किम्पुनर्मनुजादयः ।।
तत्र स्नात्वा वरारोहे अहोरात्रोषितो नरः ।। ३२ ।।
जायते पुष्करद्वीपे मम कर्मपरायणः ।।
अथ तत्र मृतो भूमे पुण्यक्षेत्रे महाशुचिः ।। ३३ ।।
सर्वपापविनिर्मुक्तो मम लोकं स गच्छति ।।
अस्त्यत्राग्निसरो नाम परं गुह्यं मम स्थितम् ।।३४।।
पंच धाराः पतन्त्यत्र गिरिकुञ्जसमाश्रिताः ।।
तत्र चापि कृतस्नानः पञ्चरात्रोषितो नरः ।। ३५ ।।
कुशद्वीपे च जायेत मम कर्मपरायणः ।।
तत्राथ मुञ्चते प्राणान् कृत्वा कर्म महौजसम्।।३६।।
कुशद्वीपात्परिभ्रष्टो ब्रह्मलोकं स गच्छति।।
अस्ति ब्रह्मसरो नाम गुह्यं क्षेत्रं परं मम ।।३७।।।
यत्र धारा पतत्येका पुण्या भूमिशिलातले।।
तत्र स्नानं प्रकुर्वीत पञ्चरात्रोषितो नरः ।।३८।।
वसते सूर्यलोकेषु मम मार्गानुसारकः ।।
अथाऽत्र मुंचते प्राणान्सूर्यधारां समाश्रितः ।। ३९ ।।
सूर्यलोकमतिक्रम्य मम लोकं तु गच्छति ।।
अस्ति धेनुवटं नाम गुह्यं क्षेत्रं परं मम।।140.४०।।
एका धारा पतत्यत्र देवि पूर्णा शिलोच्चयात् ।।
तत्र स्नानं प्रकुर्वीत एकमेकं दिनं तथा ।। ४१ ।।
सप्तरात्रोषितो भूत्वा मम कर्म समाश्रितः ।।
स्नात्वा सप्तसमुद्रेषु लब्धसंज्ञः समाहितः ।। ४२ ।।
सप्तद्वीपेषु विहरेन्मम कर्मपरायणः ।।
तत्राथ मुंचते प्राणान्मम भक्तिसमन्वितः ।।४३ ।।
सप्तद्वीपमतिक्रम्य मम लोकं तु गच्छति ।।
अस्ति धर्मोद्भवं नाम तस्मिन्क्षेत्रे परे मम ।। ४४ ।।
गिरिकुञ्जात्पतत्येका धारा भूमितले शुभा ।।
तत्र स्नानं प्रकुर्वीत एकरात्रोषितो नरः ।। ४५।।
स वैश्यो जायते शूद्रो मम कर्मपरायणः ।।
तत्राऽथ मुंचते प्राणान्गुह्ये देवि शिलोच्चये ।। ४६ ।।
सांगयज्ञं सदक्षिण्यं भुक्त्वा मां प्रतिपद्यते ।।
अस्ति कोटिवटं नाम क्षेत्रं गुह्यं परं मम ।। ४७ ।।
एका धारा पतत्यत्र वटमूलमुपाश्रिता ।।

तत्र स्नानं तु कुरुते नरो रात्रावुपोषितः ।। ४८ ।।
यावन्ति वटपत्राणि तस्मिञ्छृंगे परे मम ।।
तावद्वर्षसहस्राणि रूपसंपत्समन्वितः ।। ४९।।
तिष्ठते तु वरारोहे मम मार्गानुसारिणि।।
तत्राऽथ मुंचते प्राणान्कृत्वा कर्म सुदुष्करम्।।140.५० ।।
अग्निवर्णस्ततो भूत्वा मम लोकं स गच्छति।।
पापप्रमोचनं नाम गुह्यमस्मिन्परं मम।।५१ ।।
पतत्येकतमा धारा स्थूला कुंभसमा ततः।।
यस्तत्र कुरुते स्नानमहोरात्रोषितो नरः।।५२।।
जायते च चतुर्वेदी मम कर्मपरायणः ।।
तत्राऽथ मुञ्चते प्राणान्कौशिकीमाश्रितो नदीम् ।। ५३ ।।
यस्तत्र कुरुते स्नानं पंचरात्रोषितो नरः ।।
मोदते वासवे लोके मम मार्गानुसारिणि ।। ५४ ।।
तत्राथ मुंचते प्राणान्मम कर्मपरायणः ।।
वासवं लोकमुत्सृज्य मम लोक च गच्छति ।। ५५ ।।
यमव्यसनकं नाम गुह्यमस्ति परं मम ।।
स्रोतो वहति तत्रैकं कौशिकीमाश्रितं नदीम् ।। ५६ ।।
यस्तत्र कुरुते स्नानमेकरात्रोषितो नरः ।।
न स गच्छति दुर्गाणि यमस्य व्यसनं महत् ।। ५७ ।।
अथ तत्र त्यजेत्प्राणान्मम कर्मपरायणः ।।
विशुद्धो मुक्तपापोऽसौ मम लोकं स गच्छति ।। ५८ ।।
मातंगं नाम विख्यातं तस्मिन्क्षेत्रे परं मम ।।
स्रोतो वहति तत्रैव आश्रितं कौशिकीं नदीम् ।।५९।।
स्नानं कुर्वंति ये तत्र एकरात्रोषिता नराः ।।
भेदं किम्पुरुषं प्राप्य जायते नात्र संशयः ।। 140.६० ।।
विद्वाञ्छुचिश्च जायेत ममकमार्नुसारकः ।।
तत्राऽथ मुंचते प्राणान्गुह्ये देवि परे मम ।। ६१ ।।
मुक्त्वा किम्पुरुषं भेदं मम लोकं च गच्छति।।
अस्ति वज्रभवं नाम गुह्ये तस्मिन्परं मम ।।६२ ।।
स्रोतो वहति तत्रैकमाश्रितं कौशिकीं नदीम् ।।
स्नानं करोति यस्तत्र एकरात्रोषितो नरः ।। ६३ ।।
जायते शक्रलोके तु मम कर्मानुसारकः ।।
शरीरचक्रसङ्घाते वज्रहस्तस्वरूपकः ।। ६४ ।।

तत्र स्नानप्रभावेण जायते नात्र संशयः ।।
अथाऽत्र मुच्यते प्राणान्मम चिन्तनतत्परः ।।६५।।
शक्रलोकमतिक्रम्य मम लोकं प्रपद्यते ।।
तत्र त्रिक्रोशमात्रेण गुह्यं क्षेत्रं परं मम ।। ६६ ।।
शक्ररुद्रेति विख्यातं तस्मिन्कोकाशिलातले ।।
स्नानं करोति यस्तत्र त्रिरात्रोपोषितो नरः ।। ६७ ।।
जम्बू द्वीपे प्रजायेत जम्बूर्यत्र प्रतिष्ठिता ।।
जंबूद्वीपं परित्यज्य जायते मम पार्श्वगः ।। १८ ।।
अस्ति चान्यन्महद्भद्रे क्षेत्रे गुह्ये विशेषितम् ।।
मनुजा येन गच्छन्ति मुक्त्वा संसारसागरम् ।। ६९ ।।
दंष्ट्रांकुरेति विख्यातं यत्र कोका विनिःसृता ।।
एतद्गुह्य न जानन्ति यतो मुंचंति जन्तवः।।140.७० ।।
कृतोदकस्तत्र भद्रे अहोरात्रोषितो नरः ।।
जायते शाल्मलिद्वीपे मम कर्मानुसारिणि ।। ७१ ।।
तत्राथ मुंचते प्राणान्मम कर्मसु निष्ठितः ।।
शाल्मलिद्वीपमुत्सृज्य मम पार्श्वे स तिष्ठति ।। ७२ ।।
तस्मिन्क्षेत्रे महागुह्ये परमस्ति फलोदयम् ।।
विष्णुतीर्थमिति ख्यातं मम भक्तसुखावहम् ।। ७३ ।।
ततः पर्वतमध्यात्तु कोकायां पतते जलम् ।।
त्रिस्रोतसं महाभागे सर्वसंसारमोक्षणम् ।। ७४ ।।
तस्मिन् कृतोदको भूमे छित्त्वा संसारबन्धनम् ।।
वायोः स भवनं प्राप्य वायुभूतस्तु तिष्ठति ।। ७५ ।।
तत्राऽथ मुंचते प्राणान्मम कर्मसु निष्ठितः ।।
वायुलोकमतिक्रम्य मम लोकं स गच्छति ।। ७६ ।।
अस्ति तत्र वरं स्थानं सङ्गमं कौशिकोकयोः ।।
सर्वकामिकेति विख्याता शिला तिष्ठति चोत्तरे ।। ७७।।
तत्र यः कुरुते स्नानमहोरात्रोषितो नरः ।।
विस्तीर्णे जायते वंशे जातिं स्मरति चात्मनः ।। ७८ ।।
स्वर्गे वा यदि वा भूमौ यं यं कामयते नरः ।।
तं तं प्राप्नोति वै कामं स्नातमात्रः शिलातले ।।७९ ।।
तत्राऽथ मुंचते प्राणान्मम कर्मण्यवस्थितः ।।
सर्वसंगं परित्यज्य मम लोकं स गच्छति ।।140.८०।।
अस्ति मत्स्यशिला नाम गुह्यं कोकामुखे वरम् ।।

धाराः पतन्ति तिस्रो वै कौशिकीमाश्रिता नदीम् ।। ८१ ।।
तत्र च स्नायमानस्तु यदि मत्स्यं प्रपश्यति ।।
ततो जानाम्यहं देवि प्राप्तो नारायणः स्वयम् ।। ८२ ।।
तत्र मत्स्यं पुनर्दृष्ट्वा यजमानस्तु सुन्दरि ।।
दद्यादर्घ्यं ततो भद्रे मधुलाजसमन्वितम् ।। ८३ ।।
यस्तत्र कुरुते स्नानं देवि गुह्ये ततः परे ।।
तिष्ठते पद्मपत्रे तु सोत्तरे मेरुसंश्रिते ।। ८४ ।।
अथ संप्राप्य मुच्येत मत्स्यं गुह्यं परं मम ।।
मेरुशृंगं समुल्लङ्घ्य गम लोकं च गच्छति ।। ८५।।
पंचयोजनविस्तारं क्षेत्रं कोकामुखं मम ।।
यस्त्वेतत्तु विजानाति न स पापेन लिप्यते ।। ८६ ।।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।।
तस्मिन्कोकामुखे रम्ये तिष्ठामि दक्षिणामुखः ।।८७।।
शिलाचन्दनसंकाशं देवानामपि दुर्लभम् ।।
वराहरूपमादाय तिष्ठामि पुरुषाकृतिः ।। ८८ ।।
वामोन्नतमुखं कृत्वा वामदंष्ट्रासमुन्नतम् ।।
पश्यामि च जगत्सर्वं ये च भक्ता मम प्रियाः ।।८९।।
ये मां स्मरन्ति वै भूमे पुरुषा मुक्तकिल्बिषाः ।।
तत्र कुर्वन्ति कर्माणि शुद्धाः संसारमोक्षणे ।।140.९०।।
यदि कोकामुखं गच्छेत् कदाचित्कालपर्यये ।।
मा ततो विनिवर्त्तेत यदीच्छेन्मम तुल्यताम् ।। ९१ ।।
गुह्यानां परमं गुह्यमेतत्स्थानं परं महत् ।।
सिद्धानां परमा सिद्धिर्गुह्यं कोकामुखं परम् ।। ९२ ।।
न च सांख्येन योगेन सिद्धिं यान्ति महापराम् ।।
याति कोकामुखं गत्वा रहस्यं कथितं मया ।।९३।।
एवं श्रेष्ठं महाभागे यत्त्वया परिपृच्छिम् ।।
परमं कथितं सर्वं किमन्यच्छ्रोतुमिच्छसे ।।९४।।
य एतत्कथितं भूमे कोकामुखमनुत्तमम् ।।
तारिताः पितरस्तेन दश पूर्वास्तथा पराः ।। ९५ ।।
मृतो वा तत्र जायेत शुद्धे भागवते कुले ।।
अनन्यमानसो भूत्वा मम मार्गप्रदर्शकः ।।९६।।
यश्चेदं शृणुयान्नित्यं कल्य उत्थाय मानवः ।।
त्यक्त्वा पंचशतं जन्म मम भक्तश्च जायते ।। ९७ ।।

य एतत्पठते नित्यं कोकाख्यानं तथोषसि ।।

गच्छते परमं स्थानमेवमेतन्न संशयः ।।९८।।

इति श्रीवराहपुराणे भगवच्छास्त्रे कोकामुखमाहात्म्यवर्णनं नाम चत्वारिंशदधिकशततमोऽध्यायः।। १४० ।।

अथ बदरिकाश्रममाहात्म्यम् ।।
श्रीवराह उवाच ।।
तस्मिन्हिमवतः पृष्ठे परं गुह्यमतः शृणु ।।
बदरीति च विख्याता देवानामपि दुर्ल्लभा ।।१ ।।
न तत्प्राप्नोति मनुजः कृत्वा कर्म सुदुष्करम् ।।
प्राप्नुवन्ति च भक्ता ये बदरीं विश्वतारिणीम् ।। २ ।।
दुर्ल्लभं तन्मम क्षेत्रं हिमकूटशिलातले ।।
यस्तत्प्राप्नोति हि क्षेत्रं कृतकृत्यो भवेन्नरः ।। ३ ।।
ब्रह्मकुण्डमिति ख्यातमास्ते तत्र शिलोच्चये ।।
हिमसंस्थं तथात्मानं कृत्वा तिष्ठामि माधवि ।। ४ ।।
स्नानं करोति यस्तत्र त्रिरात्रोपोषितो नरः ।।
अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः ।। ९ ।।
मुञ्चेत्प्राणांस्तत्र यदि व्रतनिष्ठो जितेन्द्रियः ।।
सत्यलोकमतिक्रम्य मम लोकं च गच्छति ।। ६ ।।
अग्निसत्यपदं नाम तस्मिन्क्षेत्रे परं मम ।।
शृङ्गत्रयात्पतन्त्यत्र धारा मुसलसन्निभाः ।। ७ ।।
यस्तत्र कुरुते स्नानं त्रिरात्रोपोषितो नरः ।।
सत्यवादी भवेद्दक्षो मम कर्मपरायणः ।। ८ ।।
यस्तत्र मुञ्चते प्राणान्यदि कृत्वा जलाशयम् ।।
सत्यलोकमतिक्रम्य मम लोके स मोदते ।। ९ ।।
इन्द्रलोकमिति ख्यातो बदर्यां च ममाश्रमः ।।
तत्राहं देवि शक्रेण निष्कलं परितोषितः ।।141.१० ।।
तत्र चैव तु शृङ्गेभ्यः स्थूलधारा पतेत्पुनः ।।
स्थूले शिलातले तत्र मम धर्मो व्यवस्थितः ।।११ ।।
स्नानं करोति यस्तत्र एकरात्रोषितो नरः।।
सत्यवादी शुचिर्भूत्वा सत्यलोके महीयते।।१२।।
अथात्र मुञ्चते प्राणान्कृत्वा चानाशकं व्रतम्।।
सत्यलोकमतिक्रम्य मम लोकेषु तिष्ठति ।।१ ३।।
अस्ति पञ्चशिखं नाम बदर्याश्रमतीर्थकम् ।।
यत्र धाराः पतन्त्यत्र पंचशृङ्गसमाश्रिताः ।।१४।।
यस्तत्र कुरुते स्नानं पंचस्रोतसि मानवः ।।
अश्वमेधफलं प्राप्य देवैश्च सह मोदते ।। १५ ।।
यद्यत्र मुञ्चते प्राणान् कृत्वा कर्म सुदुष्करम् ।।

स्वर्गलोकमतिक्रम्य मम लोके महीयते ।।१६।।
चतुःस्रोत इति ख्यातं तस्मिन्क्षेत्रे परे मम ।।
चतुर्धाराः पतन्त्यत्र चतस्रो दिश आश्रिताः ।।१७।।
यस्तत्र कुरुते स्नानमेकरात्रोषितो नरः ।।
मोदते नाकपृष्ठे तु मम भक्तश्च जायते।।१८।।
अथ प्राणान्परित्यज्य कृत्वा कर्म सुदुष्करम्।।
नाकपृष्ठमतिक्रम्य मम लोकं प्रपद्यते।।१९।।
वेदधारमिति ख्यातं तस्मिन्क्षेत्रे परे मम ।।
यत्र ब्रह्ममुखाद्भ्रष्टा वेदाश्चत्वार एव च ।। 141.२० ।।
तत्रैव हिमवत्पृष्ठे चतुःशृङ्गाद्बृहत्तराः ।।
चतुर्धाराः पतन्त्यत्र विषमाश्च शिलोच्चये ।।२१।।
यस्तत्र कुरुते स्नानं चतूरात्रोषितो नरः ।।
चतुर्णामपि वेदानां ग्रहणे कारणं भवेत्।।२२।।
अथात्र मुञ्चते प्राणान्मम कर्मपथे स्थितः।
देवलोकमतिक्रम्य मम लोकं प्रतिष्ठते ।। २३ ।।
द्वादशादित्यकुण्डेति तस्मिन्क्षेत्रे परे मम ।।
यत्र ते द्वादशादित्या देवि संस्थापिता मया ।।२४।।
तत्र पर्वतशृंगे तु स्थूलमूले शिलातले ।।
द्वादश पतन्ति धारा मम कर्मसुखावहाः ।। २५।।
यस्तत्र कुरुते स्नानं यां काञ्चिद्द्वादशीं यदि।।
यत्र ते द्वादशादित्यास्तत्र गच्छेन्न संशयः।।२६।।
अथात्र मुञ्चते प्राणान्मम कर्मणि संस्थितः ।।
समतिक्रम्य चादित्यान् मम लोके महीयते।।२७।।
लोकपालमिति ख्यातं तस्मिन्क्षेत्रे परे मम।।
तत्र ते लोकपालास्तु मया संस्थापिताः पुरा।।२८।।
तत्र पर्वतमध्ये तु स्थलकुण्डं बृहन्मम ।।
भित्वा पर्वतमुद्गीर्णं यत्र सोमसमुद्भवः ।। २९ ।।
तत्र स्नानं तु कुर्वीत ज्येष्ठमासस्य द्वादशीम् ।।
मोदते लोकपालेषु मम भक्तश्च जायते।।141.३० ।।
अथात्र मुञ्चते प्राणान्मम कर्मसु तत्परः ।।
लोकपालानतिक्रम्य मम लोकं प्रपद्यते।।३१ ।।
अस्ति मेरोर्वरं नाम तस्मिन् गुह्यं परं मम ।।
तत्र स्थितेन वै भूमे मेरुः संस्थापितः स्वयम् ।। ३२ ।।

धारास्तिस्रः पतन्त्यत्र सुवर्णसदृशप्रभाः ।।
पतेत्तु तज्जलं भूमौ व्यक्तिं नैवोपलभ्यते ।।३३।।
यस्तत्र कुरुते स्नानं त्रिरात्रोपोषितो नरः ।।
मोदते मेरुशृंगेषु मम भक्तश्च जायते ।।३४।।
अथ तत्र मृतो देवि तस्मिन् गुह्ये परे मम ।।
मेरुपृष्ठमतिक्रम्य मम लोकं तु गच्छति ।। ३५ ।।
मानसोद्भेदमिति च तत्रान्यत्तीर्थमुत्तमम् ।।
पृथ्वीमुद्भिद्य मध्ये तु जलं गच्छति सत्वरम् ।।३६।।
देवा अपि न जानन्ति तं देशं तत्र संस्थितम् ।।
मानुषा हि विजानन्ति भूम्यां पतति तज्जलम् ।।३७।।
यस्तत्र कुरुते स्नानमहोरात्रोषितो नरः ।।
मोदते मानसे दिव्ये मम भक्तश्च जायते ।।३८।।
अस्ति पञ्चशिरं नाम तस्मिन्गुह्यं परं मम ।।
ब्रह्मणा च्छिद्यते यत्र शिरश्चैव महाद्युति ।। ३९।।
तत्र वै पंच कुण्डानि स्थूलशीर्षशिलोच्चये ।।
पञ्चात्र शिरसः स्थाने बहुधारासमन्विताः ।। 141.४० ।।
यत्र तन्मध्यमं कुण्डं छिन्नमेव स्वयम्भुवा ।।
तत्र रक्तजला भूमिर्दृश्यते धारसंकुला ।।४१।।
यस्तत्र कुरुते स्नानं पंचरात्रोषितो नरः ।।
मोदते ब्रह्मलोकस्थो मम भक्तश्च जायते ।।४२।।
तथात्र मुञ्चते प्राणान् गुह्ये पञ्चशिरे मम ।।
जलचांद्रायणं कृत्वा मम कर्मसु निष्ठितः ।।४३।।
बुद्धिमान्मतिमांश्चैव रागमोहविवर्जितः ।।
ब्रह्मलोकमतिक्रम्य मम लोकं स गच्छति।।४४।।
अस्ति सोमाभिषेकेति तीर्थमन्यत्परं मम।
राजत्वे ब्राह्मणानां तु मया सोमोऽभिषेचितः ।।४५ ।।
तत्राहं तोषितस्तेन अत्रिपुत्रेण माधवि ।।
नवपञ्चककोट्यस्तु कृत्वा कर्म सुदुष्करम् ।।४६।।
प्राप्तश्च परमां सिद्धिं मत्प्रसादाद्वसुन्धरे ।।
तदायत्तं जगत्सर्वं व्रीहयः परमौषधीः ।।४७।।
जायतेऽस्मिन्प्रलीयंते स्कन्देन्द्राः समरुद्गणाः ।।
भूमे सोममयं सर्वं मम संस्थं भविष्यति ।।४८।।
तत्र सोमगिरिर्नाम यत्र धारा पतेद्भुवि ।।

कुण्डेऽरण्ये विशाले तु एतत्ते कथितं मया ।। ४९ ।।
यस्तत्र कुरुते स्नानं त्रिरात्रोपोषितो नरः ।।
मोदते सोमलोकेषु एवमेतन्न संशयः ।।141.५० ।।
अथात्र म्रियते देवि कृत्वा कर्म सुदुष्करम् ।।
सोमलोकमतिक्रम्य मम लोकं प्रपद्यते ।।५१।।
अस्ति चोर्वशिकुण्डेति गुह्यं क्षेत्रे परं मम ।।
यत्र चैवोर्वशी भित्त्वा दक्षिणोरुमजायत ।।५२।।
तत्र तप्याम्यहं देवि देवानामपि कारणात् ।।
न मां कश्चिद्विजानाति स्वात्मानो हि विजानते ।।५३।।
ततो मे तप्यमानस्य बहुवर्षव्यतिक्रमात् ।।
देवा अपि न जानन्ति वज्रिब्रह्ममहेश्वराः ।।५४।।
एकैकेन फलेनाऽत्र बदर्यां तु सुनिश्चितम् ।।
बहुवर्षसहस्रं तु तपश्चीर्णं मया भुवि ।।५५।।
तत्राहं दश कोट्यस्तु दशवर्षं दशार्बुदम् ।।
दश भूमे तथान्यानि पद्मानि तपसि स्थितः ।।५६।।
ततस्ते मां न पश्यन्ति देवा गुह्यपथे स्थितम् ।।
विस्मयं परमं जग्मुर्देवा दुःखपरायणाः ।। ५७।।
अहं पश्यामि सर्वं वै तपःसंस्थो वसुन्धरे ।।
न मां सर्वे प्रपश्यन्ति योगमायासमावृताः ।। ५८ ।।
ततस्ता देवताः सर्वाः प्रत्यूचुश्च पितामहम् ।।
विष्णुना च विना लोके शान्तिं नैव लभामहे ।। ५९ ।।
देवानां तु वचः श्रुत्वा ब्रह्मा लोकापितामहः ।।
योगमायापटच्छन्नं कथयामास मां तदा ।। 141.६० ।।
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।।
तत्र जग्मुर्महाभागे तुष्यन्तः परमं मुदा ।। ६१ ।।
विभावयन्ति मां तत्र देवा इन्द्रपुरोगमाः ।।
त्वया नाथ परित्यक्ता दुःखिताः श्रमवर्जिताः ।। ६२ ।।
त्रायस्व नो हृषीकेश परमानुग्रहेण वै ।।
एतत्कृत्वा विशालाक्षि देवान् प्रणतिपूर्वकम् ।। ६३ ।।
मया विलोकिताः सर्वे परां निर्वृतिमागताः ।।
एतस्मिन्नुर्वशीकुण्डे एकरात्रोषितो नरः ।। ६४ ।।
यः स्नाति सर्वपापेभ्यो मुच्यते नात्र संशयः ।।
उर्वशीलोकमासाद्य क्रीडते कालमक्षयम् ।। ६५ ।।

यस्तत्रोत्सृजते प्राणान्मम कर्मपरायणः ।।
पुण्यपापविनिर्मुक्तो याति मल्लीनतां प्रिये ।। ६६ ।।
श्रीबदर्याश्रमं पुण्यं यत्र यत्र स्थितः स्मरेत् ।।
स याति वैष्णवं स्थानं पुनरावृत्तिवर्जितः ।। ६७ ।।
य इदं शृणुयान्नित्यं मद्भक्तः सततं पठेत् ।।
ब्रह्मचारी जितक्रोधः सत्यवादी जितेन्द्रियः ।। ६८ ।।
ध्यानयोगरतो नित्यं स मुक्तिफलभाग्भवेत् ।।
यस्यैतद्विदितं सर्वं ध्यानयोगं वसुन्धरे ।। ६९ ।।
योऽवगच्छति चात्मानं स गच्छेत्परमां गतिम् ।।141.७० ।।
इति श्रीवराहपुराणे भगवच्छास्त्रे बदरिकाश्रममाहात्म्यवर्णनं नामैकचत्वारिंशदधिकशततमोऽध्यायः ।।१४१ ।।

अथ गुह्यकर्ममाहात्म्यम् ।।
सूत उवाच ।।
ततो देववचः श्रुत्वा धर्मकामा वसुन्धरा ।।
कृताञ्जलिपुटा भूत्वा प्रसादयति माधवम् ।। १ ।।
धरण्युवाच ।।
दास्यां मे प्रणयं कृत्वा विज्ञाप्यं शृणु माधव ।।
मृदुना च स्वभावेन वक्ष्यामि त्वां जनार्दन ।। २ ।।
अल्पप्राणबला नार्यो यत्त्वया परिभाषितम् ।।
अशक्ताः सहितुं ह्येताः क्षुधात्वनशनेऽबलाः ।। ३ ।।
भुञ्जमाना नरा ह्यत्र रजसा यांति शं परम् ।।
अन्नं ह्यनुग्रहं देव येन ते कर्म संश्रिताः ।। ४ ।।
तस्यास्तद्वचनं श्रुत्वा माधव्याः स तु माधवः ।।
प्रहस्य भावशुद्धात्मा तत एवमभाषत ।। ५ ।।
श्रीवराह उवाच ।।
साधु देवि वरारोहे मम कर्मव्यवस्थिते ।।
पृष्टोऽहं परमं गुह्यं मम भक्तसुखावहम् ।। ६ ।।
स्पृष्टा या रजसा देवि मम कर्मपरायणा ।।
मां संस्पृशन्तु तत्रस्थं यत्र तिष्ठामि सुन्दरि ।। ७ ।।
यदि भावस्तदा कश्चिद्भोजने कायसाधने ।।
चित्तं न्यस्य मयि क्षोणि भोक्तव्यं च न संशयः ।। ८ ।।
न सा लिप्यति दोषेण भुञ्जमाना रजस्वला।।
अञ्जलिं शिरसा कृत्वा मयोक्तं मन्त्रमुत्तमम् ।।९ ।।
( अनादिमध्यान्तमजं पुराणं रजस्वला देववरं नमामि ।।)
तत एतेन मन्त्रेण भुक्त्वा देवि रजस्वला ।।
करोति यानि कर्माणि न तैर्दुष्येत कर्हिचित् ।। 142.१० ।।
स्नात्वा सा तु महाभागे पंचमात्तु दिनात्पुनः ।।११ ।।
यथार्हं कुरुते कर्म मच्चित्ता मत्परायणा ।।
प्राप्नुयात्पुरुषत्वं च न्यस्तसंसारचिन्तनात् ।। १२ ।।
धरण्युवाच ।।
पुरुषा वा स्त्रियो वापि न पुमांसो न वा स्त्रियः ।।
कथं दोषेण मुच्यन्ते जन्मसंसारबन्धनात् ।।१३ ।।
श्रीवराह उवाच ।।
इन्द्रियाणि निगृह्याथ चित्तमप्यनुवेश्य च ।।

मयि संन्यासयोगेन मम कर्मपरायणः ।। १४ ।।
मम योगेषु संन्यासमेकचित्तो दृढव्रतः ।।
एवं कुर्वन्महाभागे स्त्रियो वा पुन्नपुंसकम् ।। १५ ।।
ज्ञानसंन्यासयोगं वा यदीच्छेत्परमां गतिम् ।।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।। १६ ।।
मनो बुद्धिश्च चित्तं च ते ह्यनीशाः शरीरिणाम् ।।
एकचित्तं मनः कृत्वा ज्ञानेन पृथुलोचने ।। १७ ।।
समचित्तं प्रपद्यन्ते न ते लिप्यन्ति मानवाः ।।
सर्वभक्ष्याणि भक्षन्तः पेयापेयांस्तथैव च ।। १८।।
समं चित्तं मयि यदि तदा तस्य न च क्रिया ।।
चित्तं मनश्च बुद्धिश्च मत्संस्थं च समं यदि ।।१९।।
यत्किंचित्कुर्वतः कर्म पद्मपत्रमिवांभसि ।।
संयोगान्न च लिप्येत समत्वादेव नान्यथा ।।142.२०।।
रात्रिन्दिवं मुहूर्तं वा क्षणं वा यदि वा कला।।
निमेषं वा त्रुटिं वाथ देवि चित्तं समं कुरु।।२१।।
सदा दिवानिशोश्चैव कुर्वन्तः कर्मसङ्करम् ।।
तेऽपि यान्ति परां सिद्धिं यदि चित्तं व्यवस्थितम्।।२२।।
जाग्रतः स्वपतो वापि शृण्वतः पश्यतोऽपि वा ।।
यो मां चित्ते चिंतयति मच्चिन्तस्य च किं भयम् ।।२३।।
दुर्वृत्तमपि चाण्डालं ब्राह्मणं चाऽपथि स्थितम् ।।
तं तु देवि प्रशंसामि नान्यचित्तं कदाचन ।। २४ ।।
यजन्तः सर्वधर्मज्ञा ज्ञानसंस्कारसंस्कृताः ।।
मयि चित्तं समाधाय मम कर्मपरायणाः ।।२५।।
ये मत्कर्माणि कुर्वन्ति मया हृदि समाश्रिताः ।।
सुखं निद्रां समाधाय स्वपन्तः कर्मसंस्थिताः ।। २६ ।।
येषां प्रशांतं चित्तं वै तेऽपि देवि मम प्रियाः ।।
सर्वमात्मनि कर्म स्वं शुभं वा यदि वाऽशुभम् ।।२७।।
प्राप्नुवन्ति च दुःखानि भ्रमच्चित्ता नराधमाः ।।
चित्तं नाशो हि लोकस्य चित्तं मोक्षस्य कारणम् ।।२८।।।
तस्माच्चित्तं समादाय मां प्रपद्यस्व मेदिनि ।।
न्यस्य ज्ञानं च योगं च एकचित्ता भजस्व माम् ।। २९ ।।
मच्चित्तः सततं यो मां भजेत नियतव्रतः ।।
मत्पार्श्वं प्राप्य परमं मद्भावायोपपद्यते ।। 142.३० ।।

मया चैव पुरा सृष्टं प्रजार्थेन वसुन्धरे ।।
मासे मासे तु गन्तव्यमृतुकाले व्यवस्थितम् ।। ३१ ।।
एकचित्तं समादाय यदीच्छेत्तु मम प्रियम् ।।
न गच्छेद्यदि मासे तु ऋतुकालव्यवस्थितम् ।। ३२ ।।
पितरस्तस्य हन्यन्ते दश पूर्वा दशापराः ।।
न तत्र कामलोभेन मोहेन च वसुन्धरे ।। ३३ ।।
त्यक्त्वानङ्गं च मोहं च पित्रर्थाय स्त्रियं व्रजेत् ।।
द्वितीयां न स्पृशेन्नारीं लोभमोहात्कथंचन ।। ३४ ।।
न संस्पृशेत्तृतीयां तु चतुर्थीं न कदाचन ।।
कृते संभोगधर्मे तु कृतकौतुकसंस्थितः ।। ३५ ।।
शयने न स्त्रियं पश्येद्यदीच्छेच्छुद्धिमुत्तमाम् ।।
कौतुके कृतकृत्ये तु मम कर्मपरायणः ।। ३३ ।।
जलस्नानं ततः कुर्यादन्यवस्त्रपरिग्रहम् ।।
अपूर्णे ऋतुकाले तु योऽभिगच्छेद्रजस्वलाम् ।।३७ ।।
रेतःपाः पितरस्तस्य एवमेतन्न संशयः ।।
एकां तु पुरुषो याति द्वितीयां काममोहितः ।।३८ ।।
तृतीयां वा चतुर्थीं वा तदा स पुरुषोऽधमः ।।
सर्वस्यैव तु लोकस्य समयोऽयं हि मत्कृतः ।। ३९ ।।
ऋतुकाले तु सर्वासां पित्रर्थं भोग इष्यते ।।
ऋतुकालाभिगामी यो ब्रह्मचार्येव संमतः ।। 142.४० ।।
न गच्छति च यः क्रोधान्मोहाद्वा पुरुषाधमः ।।
ऋतौ ऋतौ भ्रूणहत्यां प्राप्नोति पुरुषश्चरन् ।। ४१ ।।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे।।
ज्ञानं तु चित्तयोगस्य कर्मयोगस्य यत्क्रिया।।४२।।
कर्मणा यान्ति मत्स्थानं यान्ति मद्गाननिष्ठिताः ।।
यान्ति योगविदः स्थानं नास्ति चान्या परा गतिः ।। ४३ ।।
ज्ञानं योगं च सांख्यं च नास्ति चित्तव्यपाश्रितम् ।।
लभन्ते पुष्कलां सिद्धिं मम मार्गानुसारिणः ।। ४४ ।।
यस्तु भागवतो भूत्वा ऋतुकाले व्यवस्थितः ।।
वायुभक्षस्ततस्तिष्ठेद्भूमे त्रीणि दिनानि च ।।४९ ।।
अथ तत्र चतुर्थे तु दिने प्राप्ते वसुन्धरे ।।
कृत्वा वै सिद्धिकर्म्माणि न गच्छत्यपराणि च ।। ४६ ।।
ततः स्नानेन कुर्वीत शिरसो मलशोधनम् ।।

शुक्लांबरधरो भूत्वा चित्तं कृत्वा समाहितम् ।। ४७ ।।
ततो बुद्धिं मनश्चैव समं कृत्वा वसुन्धरे ।।
पश्चात्कुर्वन्ति कर्माणि सदा ते मे हृदि स्थिताः ।। ४८ ।।
मम प्रापणकं कृत्वा ततः कुर्वन्ति भोजनम् ।।
अञ्जलिं शिरसा कृत्वा मयोक्तं कर्म सस्मितम् ।। ४९ ।।
तत्र मन्त्रः –
आदिर्भवान्गुप्तमनन्तमध्यो रजस्वला देव वयं नमामः ।।
उपोषितास्त्रीणि दिनानि चैवं मुक्तौ रतं वासुदेवं नमामः ।। 142.५० ।।
तत एतेन मन्त्रेण शुद्धा भूमे रजस्वलाः ।।
ये तु कुर्वन्ति कर्माणि स्नातास्नातानि भागशः ।। ५१ ।।
एवं दुष्यति नो देवि नारी वा पुरुषोऽपि वा ।।
कुर्वन्ति मम कर्माणि ते यथावन्मम प्रियाः ।। ५२ ।।
सर्वाण्यनुदिनं भद्रे मम चित्तानुसारिणः ।।
प्राप्नुयात्पुरुषः स्त्री वा रजसा दूषिता अपि ।। ५३ ।।
एकचित्तस्ततो भूत्वा भूमे चेन्द्रियनिग्रहात् ।।
मम योगेष्टसंन्यासं यदीच्छेत्परमां गतिम् ।।५४ ।।
एवं कुर्वन्ति ये नित्यं स्त्रियः पुंसो नपुंसकम् ।।
ज्ञाने सत्यप्ययोगानां मम कर्मसु कर्मणाम् ।। ५५ ।।
अद्यापि मां न जानन्ति नराः संसारसंश्रिताः ।।
ते वै भूमे विजानन्ति ये तद्भक्त्या व्यवस्थिताः ।। ५६ ।।
मातापितृसहस्राणि पुत्रदारशतानि च ।।
चक्रवत्परिवर्तन्ते यन्मोहान्मां न जानते ।। ५७ ।।
अज्ञानेनावृतो लोको मोहेन च वशीकृतः ।।
सङ्गैश्च बहुभिर्बद्धस्तेन चित्तं न संन्यसेत् ।। ५८ ।।
गच्छत्यन्यत्र माता वै पिता चान्यत्र गच्छति ।।
पुत्राश्चान्यत्र गच्छन्ति दासश्चान्यत्र गच्छति ।। ५९ ।।
जायन्ते चात्मनः स्थाने स्वस्वकर्मसमुद्भवे ।।
ज्ञानमूढा वरारोहे नराः संसारमोहिताः ।। 142.६० ।।
अल्पकालपरं चैव माससंवत्सरेति च ।।
भविष्यन्ति पुनः कृत्वा न मे मूर्त्या सहासते ।। ६१ ।।
यस्यैतद्विदितं सर्वं न्यासयोगं वसुन्धरे ।।
योगे न्यस्य सदात्मानं मुच्यते न च संशयः ।। ६२ ।।
य एतच्छृणुयान्नित्यं कल्यमुत्थाय मानवः ।।

पुष्कलां लभते सिद्धिं मम लोकं च गच्छति ।। ६३ ।।
एतत्ते कथितं भद्रे रहस्यं परमं महत्।।
त्वया पृष्टं च यद्देवि मम भक्तसुखावहम् ।। ६४ ।।
इति श्रीवराहपुराणे भगवच्छास्त्रे गुह्यकर्ममाहात्म्यवर्णनं नाम द्वाचत्वारिंशदधिकशततमोऽध्यायः ।। १४२ ।।

अथ मन्दारमहिमनिरूपणम् ।।
श्रीवराह उवाच ।।
पुनरन्यत्प्रवक्ष्यामि एकान्तं शृणु सुन्दरि ।।
स्थानं मे परमं गुह्यं मद्भक्तानां सुखावहम् ।। १ ।।
जाह्नव्या दक्षिणे कूले विन्ध्यपृष्ठसमाश्रितम्।।
मन्दारेति च विख्यातं सर्वभागवतप्रियम् ।। २ ।।
तत्र त्रेतायुगे भूमे रामो नाम महाद्युतिः ।।
भविष्यति न सन्देहः स च मां स्थापयिष्यति ।।३।।
नारायणमुखाच्छ्रुत्वा धर्मकामा वसुन्धरा ।।
उवाच मधुरं वाक्यं लोकनाथं जनार्दनम् ।। ४।।
धरण्युवाच ।।
देवदेव महादेव हरे नारायण प्रभो ।।
मन्दारेति त्वया प्रोक्तं देवधर्मार्थसंयुतम् ।। ५।।
मन्दारे कानि कर्माणि कुर्वन्ति च ततो नराः ।।
कांश्च लोकान्प्रपद्यन्ते तत्र कर्मकृतो नराः ।।६।।
मन्दारे कानि गुह्यानि रहस्यं किंच तत्र वै ।।
वक्तुमर्हस्यशेषेण परं कौतूहलं मम ।।७।।
श्रीवराह उवाच ।।
शृणु सुन्दरि यत्नेन यन्मां त्वं परिपृच्छसि ।।
कथयिष्यामि ते गुह्यां मन्दारस्य महाक्रियाम् ।। ८ ।।
क्रीडमानोऽस्म्यहं तत्र मन्दारे पुष्पिते तदा ।।
मन्दारपुष्पमादाय मनोज्ञं न्यस्य वै हृदि ।। ९ ।।
ततो ममाभवच्चिन्ता मन्दारे पर्वतस्थिते ।।
तत्रैकादशकुण्डानि निस्सृतानि गिरौ धरे ।। 143.१० ।।
विन्ध्ये च मत्प्रभावेण मन्दारश्च महाद्रुमः ।।
स्थितोऽहं तत्र सुभगे भक्तानुग्रहकाम्या ।। ११ ।।
दर्शनीयतमं स्थानं मनोज्ञं च शिलातलम् ।।
यत्र तिष्ठाम्यहं देवि मन्दारद्रुममाश्रितः ।। १२ ।।
विस्मयं शृणु सुश्रोणि मन्दारेऽस्मिन्महाद्रुमे ।।
द्वादश्यां च चतुर्दश्यां स पुष्पति महाद्रुमः ।। १३ ।।
तत्र मध्याह्नवेलायां वीक्ष्यमाणो जनैस्ततः ।।
ततोऽन्यदिनमासाद्य दृश्यते न कदाचन ।।१४।।
तस्मिन्मंदारकुण्डे तु एकभक्तोषितो नरः ।।

स्नानं करोति शुद्धात्मा स गच्छेत्परमां गतिम् ।। १९ ।।
अथ प्राणान्प्रमुच्येत कुण्डे मन्दारसंस्थिते ।।
तपः कृत्वा वरारोहे मम लोकं स गच्छति ।। १६ ।।
तस्य चोत्तरपार्श्वे च प्रापणं नाम वै गिरिः ।।
तिस्रो धाराः पतन्त्यत्र दक्षिणां दिशमाश्रिताः ।। १७ ।।
स्नानकुण्डमिति ख्यातं तस्मिन्क्षेत्रे परं मम ।।
दक्षिणे पतते धारा स्रवते चोत्तरामुखम् ।। १८ ।।
तत्र स्नातो वरारोहे एकरात्रोषितो नरः ।।
मोदनं दक्षिणे शृंगे तस्मिन्मेरौ शिलोच्चये ।। १९ ।।
तत्राथ मुंचते प्राणान्मम कर्मपरायणः ।।
सर्वसंगं परित्यज्य मम लोकं स गच्छति ।। 143.२० ।।
तस्य पूर्वोत्तरे पार्श्वे गुह्यं वैकुण्ठकारणम् ।।
यत्र धारा पतत्येका हरिद्रावर्णसन्निभा ।। २१ ।।
यस्तत्र कुरुते स्नानमैकरात्रोषितो नरः ।।
नाकपृष्ठं समासाद्य मोदते सह दैवतैः ।। २२ ।।
तथाऽत्र मुंचते प्राणान्कृतकृत्यः सुनिश्चितः ।।
तारयित्वा कुलं सर्वं मम लोकं प्रपद्यते ।। २३ ।।
तस्य दक्षिणपूर्वेण समस्रोतो वरांगणे ।।
पतते विन्ध्यशृंगेषु अगाधश्च महाह्रदः ।। २४ ।।
तत्र स्नानं तु कुर्वीत एकभक्तोषितो नरः ।।
मोदते पूर्वपार्श्वे तु तस्मिन्मेरौ शिलोच्चये ।। २५ ।।
अथात्र मुंचते प्राणान्मम चित्तव्यवस्थितः ।।
छित्वा वै सर्वसंसारं मम लोकं स गच्छति ।। २६ ।।
मन्दारस्य तु पूर्वेण गुह्यं कोटरसंस्थितम् ।।
यत्र धारा पतत्येका मुसलाकृतिका शुभा ।।२७।।
तत्र स्नानं प्रकुर्वीत पंचभक्तोषितो नरः ।।
मोदते पूर्वपार्श्वे च मेरौ तस्मिञ्छिलोच्चये ।। २८ ।।
अथात्र मुंचते प्राणान् कृत्वा कर्म सुदुष्करम् ।।
मेरुशृङ्गं समुत्सृज्य मम लोकं च गच्छति।।२९।।
तस्य दक्षिणपार्श्वे तु गुह्यं विन्ध्यविनिःसृतम् ।।
पंच धाराः पतन्त्यत्र मुसलाकृतिकाः शुभाः ।। 143.३० ।।
तत्र स्नानं प्रकुर्वीत अहोरात्रोषितो नरः ।।
मोदते दक्षिणे शृङ्गे महामेरौ शिलोच्चये ।। ३१ ।।

अथात्र मुंचते प्राणान्कृत्वा कर्म सुदुष्करम् ।।
मेरुशृङ्गं परित्यज्य मम लोकं प्रपद्यते ।। ३२ ।।
दक्षिणे पश्चिमे भागे मन्दारस्य यशस्विनि ।।
अत्र धारा पतत्येका आदित्यसमतेजसा ।। ३३ ।।
तत्र स्नानं प्रकुर्वीत अहोरात्रोषितो नरः ।।
मोदते पश्चिमे भागे ध्रुवो यत्र प्रवर्तते ।। ३४ ।।
अथात्र मुंचते प्राणान्मम कर्मव्यवस्थितः ।।
सर्वपापविनिर्मुक्तो मम लोके च मोदते ।। ३५ ।।
तस्य पश्चिमपार्श्वे तु गुह्यं देवसमन्वितम् ।।
चक्रावर्त्तमिति ख्यातमगाधश्च महाह्रदः ।। ३६ ।।
स्नानं करोति यस्तत्र पंचभक्तोषितो नरः ।।
मोदते मेरुशृङ्गेषु स्वच्छन्दगमनालयः ।। ३७ ।।
अथ वै मुंचते प्राणांश्चक्रवर्ती महायशाः ।।
शृंगान्सर्वान्परित्यज्य मोदते मम सन्निधौ ।। ३८ ।।
दिशं वायव्यमाश्रित्य तस्मिन्विन्ध्यशिलोच्चये ।।
तिस्रो धाराः पतन्त्यत्र मुसलाकृतयः शुभाः ।। ३९ ।।
तत्र स्नानं प्रकुर्वीत मम चित्तव्यवस्थितः ।।
मोदते सर्वशृंगेषु चैकचित्तं समाश्रितः ।। 143.४० ।।
अथात्र मुञ्चते प्राणान् तस्मिन्गुह्ये यशस्विनि ।।
सर्वसंगं परित्यज्य मम लोकं स गच्छति ।।४१।।
तस्य विक्रोशमात्रेण दक्षिणां दिशमाश्रितः ।।
गुह्यो गभीरको नाम अगाधश्च महाह्रदः ।। ४२ ।।
तत्र स्नानं प्रकुर्वीत अष्टरात्रोषितो नरः ।।
मोदते सर्वद्वीपेषु स्वच्छन्दगमनालयः ।। ४३ ।।
अथ वै मुञ्चते प्राणान्मम कर्मव्यवस्थितः ।।
सर्वद्वीपान् परित्यज्य मम लोकं प्रपद्यते ।।४४।।
तस्य पश्चिमपार्श्वे तु गुह्यं वै परमं महत् ।।
सप्त धाराः पतन्त्यत्र अगाधश्च महाह्रदः ।। ४५।।
तत्र स्नानं प्रकुर्वीत अहोरात्रोषितो नरः ।।
मोदते शक्रलोके तु स्वच्छन्दगमनालयः ।। ४६ ।।
अथ वै मुञ्चते प्राणान्स्वकर्मपरिनिष्ठितः ।।
सर्वसंगं परित्यज्य मम लोकं प्रपद्यते ।। ४७ ।।
क्षेत्रस्य मण्डलं तस्य कथ्यमानं मया शृणु ।।

स्यमन्तपञ्चकं चैव मन्दारस्य गिरौ मम ।।४८।।
तत्र तिष्ठामि सुश्रोणि विन्ध्यस्य गिरिमूर्द्धनि ।।
मन्दारे परमं गुह्यं तस्मिन्गुह्यशिलोच्चये ।। ४९ ।।
दक्षिणे संस्थितं चक्रं वामे स्थाने च वै गदा ।।
य एतच्छृणुयान्नित्यं गुह्यं मन्दारसंस्थितम् ।। 143.५० ।।
लांगले मुसलं चैव शंखस्तिष्ठति चाग्रतः ।।
तव चैव प्रियार्थाय मम भक्तसुखावहम् ।। ५१ ।।
एतन्न जानते केचिन्मम माया विमोहिताः ।।
मुच्य भागवताञ्छुद्धान्ये च वाराहमाश्रिताः ।। ५२ ।।
इति श्रीवराहपुराणे भगवच्छास्त्रे मन्दारमहिमानिरूपणं नाम त्रयश्चत्वारिंशदधिकशततमोध्यायः ।।
१४३ ।।

अथ सोमेश्वरादिलिङ्गमुक्तिक्षेत्रत्रिवेण्यादिमाहात्म्यम्
।। सूत उवाच ।।
श्रुत्वा मन्दारमाहात्म्यं धर्मकामा वसुन्धरा ।।
विस्मयं परमं गत्वा पुनः पप्रच्छ माधवम् ।। १।।
धरण्युवाच ।।
मया देवप्रसादेन श्रुतं मन्दारवर्णनम् ।।
मन्दारात्परमं स्थानं विष्णो तद्वक्तुमर्हसि ।। २ ।।
श्रीवराह उवाच ।।
शृणु तत्त्वेन मे देवि यन्मां त्वं परिपृच्छसि ।।
कथयिष्यामि मे गुह्यं शालग्राममिति स्मृतम् ।। ३ ।।
द्वापरे तु युगे भूमे यदूनां कुलसंकुले ।।
तत्र शूर इति ख्यातो यदूनां वंशवर्द्धनः ।।४।।
तस्य पुत्रो महाभागो सर्वकर्मपरायणः ।।
वसुदेवो गृहे जातो यादवानां कुलोद्वहः ।। ५ ।।
तस्य भार्या च वसुधे सर्वावयवसुन्दरी ।।
देवकी नाम नामा च मनोज्ञा शुभदर्शना ।। ६ ।।
तस्या गर्भे महाभागे भविष्यामि न संशयः ।।
वासुदेव इति ख्यातो देवानामरिमर्दनः ।। ७ ।।
ततोऽपि संस्थिते तत्र यादवानां कुलोद्वहे ।।
तत्र ब्रह्मर्षिपरमः साल ङ्कायन एव च ।। ८ ।।
ममैवाराधनार्थाय भ्रमते स दिशो दश ।।
पुत्रार्थं स तपस्तेपे मेरुशृङ्गे समाहितः ।। ९ ।।
ततः पिण्डारके गता मम क्षेत्रे वसुन्धरे ।।
लोहार्गले ततो गत्वा सहस्रं चैव तिष्ठति ।। १४४.१० ।।
ईश्वरेण समं पूर्वं सर्वयोगेश्वरं स्थितम् ।।
न च पश्यति मां देवि मार्गमाण इतस्ततः ।। ११ ।।
ईश्वरेण समं पूर्वमहमासं वसुन्धरे ।।
तस्यैव तप्यमानस्य सालंकायनकस्य ह ।। १२ ।।
तस्मिन्क्षेत्रे हरो देवो मत्स्व रूपेण संयुतः ।।
शालग्रामे गिरौ तस्मिञ्छिलारूपेण तिष्ठति ।। १३ ।।
अहं तिष्ठामि तत्रैव गिरिरूपेण नित्यशः ।।
तस्मिञ्छिलाः समग्रास्तु मत्स्वरूपा न संशयः ।। १४ ।।
पूजनीयाः प्रयत्नेन किंपुनश्चक्रलाञ्छिताः ।।

लिङ्गरूपेण च हरस्तत्र देवालये गिरौ ।। १५ ।।
शिवनाभाः शिलास्तत्र चक्रनाभास्तथा शिलाः ।।
सोमेश्वराधिष्ठितस्तु शिवरूपो गिरिः स्मृतः ।। १६ ।।
सोमेन तत्र संस्थाप्य स्वनाम्ना लिंगमुत्तमम् ।।
वर्षाणां तु सहस्रं वै स्वशापस्य निवृत्तये ।। १७ ।।
ततः शापाद्विनिर्मुक्तः तेजसा च परिप्लुतः ।।
स्वकं तेजोबलं प्राप्य तुष्टाव गिरिजा पतिम् ।। १८ ।।
सोमेश्वराच्च वरदमाविर्भूतं त्रियम्बकम् ।। १९ ।।
सोम उवाच ।।
शिवं सौम्यमुमाकान्तं भक्तानुग्रहकातरम् ।।
नतोऽस्मि पंचवदनं नीलकण्ठं त्रिलोचनम् ।। १४४.२० ।।
शशांकशेखरं दिव्यं सर्वदेवनमस्कृतम् ।।
पिनाकपाणिं देवेशं भक्तानामभयप्रदम् ।। २१ ।।
त्रिशूलिनं डमरुणा लसद्धस्तं वृषध्वजम् ।।
नानामुखैर्गणैर्जुष्टं नानारूपैर्भयानकैः ।। २२ ।।
त्रिपुरघ्नं महाकालमन्धकादिनिषूदनम् ।।
गजाजिनावृतं स्थाणुं व्याघ्रचर्मविभूषितम् ।। २३ ।।
नागभोगोपवीतं च रुद्रमालधरं प्रभुम् ।।
अरूपमपि सर्वेशं भक्तेच्छोपात्तविग्रहम् ।।२४।।
वह्निसोमार्क नयनं मनोवाचामगोचरम् ।।
जटाजूटप्रकटितं गंगासम्मार्ज्जितांहसम् ।। २५ ।।
कैलासनिलयं शम्भुं हिमाचलकृताश्रमम् ।।
एवं स्तुतस्तदा शम्भुरिन्दुं वचनमब्रवीत् ।। २६ ।।
वरं वरय भद्रं ते यत्ते मनसि वर्त्तते ।।
दुर्ल्लभं दर्शनं यस्मात्प्राप्तवानसि गोपते ।। २७ ।।
सोम उवाच ।।
वरं ददासि चेद्देव मम लिंगे सदा वस ।।
एतल्लिंगस्य भक्तानां पूरयस्व मनोरथम् ।। २८ ।।
देवदेव उवाच ।।
विष्णुसान्निध्यमप्यत्र सदैव निव साम्यहम् ।।
विशेषतस्त्वदीयेऽस्मिन्नद्यप्रभृतिगोपते ।। २९ ।।
ममैवान्या परा मूर्त्तिस्त्वं शशाङ्क न संशयः ।।
एतल्लिंगार्च्चकानां च भक्तानां मम सर्वदा ।। १४४.३० ।।

वरान्दास्यामि भद्रं ते देवानामपि दुर्लभान् ।।
सालङ्कायनकाख्यस्य मुनेस्तु तपसो बलात् ।। ३१ ।।
विष्णुना सह संमन्त्र्य स्थितावावां कलानिधे ।।
शालग्रामगिरिर्विष्णुरहं सोमेश्वराभिधः ।। ३२ ।।
तयोः पर्वतयोर्या वै शिला विष्णुशिवाभिधा ।।
रेवया च कृतं पूर्वं तपः शिवसुतुष्टिदम् ।।३३ ।।
मम त्वत्सदृशः पुत्रो भूयादिति मनीषया।।
अहं कस्यापि न सुतः किं करोमीति चिन्तयन् ।।३४।।
रेवायास्तु वरो देयस्त्ववश्यं मृगलाञ्छन ।।
निश्चित्यैवं तदा प्रोक्तः प्रसन्नेनान्तरात्मना ।। ३५ ।।
लिंगरूपेण ते देवि गजाननपुरस्कृतः ।।
गर्भे तव वसिष्यामि पुत्रो भूत्वा शिवप्रिये।।३६।।
मम त्वमपरा मूर्त्तिः ख्याता जलमयी शिवा।।
शिवशक्तिविभेदेन आवामेकत्रसंस्थितौ।।३७।।
एवं दत्तवरा रेवा मत्सान्निध्यमिहागता ।।
रेवाखण्डमिति ख्यातं ततः प्रभृति गोपते ।।३८।।
गण्डक्यापि पुरा तप्तं वर्षाणामयुतं विधो ।।
शीर्णपर्णाशनं कृत्वा वायुभक्षाऽप्यनन्तरम् ।।३९।।
दिव्यवर्षशतं तेपे विष्णुं चिन्तयती तदा ।।
ततः साक्षाज्जगन्नाथो हरिर्भक्तजनप्रियः ।। १४४.४०।।
उवाच मधुरं वाक्यं प्रीतः प्रणतवत्सलः ।।
गण्डकि त्वां प्रसन्नोऽस्मि तपसा विस्मितोऽनघे ।।४१।।
अनविच्छिन्नया भक्त्या वरं वरय सुव्रते ।।
किं देयं तद्वदस्वाशु प्रीतोऽस्मि वरवर्णिनि ।।४२।।
गण्डक्यपि पुरा दृष्ट्वा शंखचक्रगदाधरम् ।।
दण्डवत्प्रणता भूत्वा ततः स्तोतुं प्रचक्रमे ।। ४३ ।।
अहो देव मया दृष्टो दुर्दर्शो योगिनामपि ।।
त्वया सर्वमिदं सृष्टं जगत्स्थावरजङ्गमम् ।। ४४ ।।
तदनु त्वं प्रविष्टोऽसि पुरुषस्तेन चोच्यते ।।
त्वल्लीलोन्मीलिते विश्वे कः स्वतन्त्रोऽस्ति वै पुमान् ।।४५।।
अनाद्यन्तमपर्यंतं यद्ब्रह्म श्रुतिबोधितम् ।।
तदेव त्वं महाविष्णो यस्त्वां वेद स वेदवित्।। ४६।।
तवैवाद्या जगन्माता या शक्तिः परमा स्मृता ।।

तां योगमायां प्रकृति प्रधानमिति चक्षते ।। ४७ ।।
निर्गुणः पुरुषोऽव्यक्तश्चित्स्वरूपो निरञ्जनः ।।
आनन्दरूपः शुद्धात्मा ह्यकर्त्ता निर्विकारकः ।। ४८ ।।
स्वां योगमायामाविश्य कर्तृत्वं प्राप्तवानसि ।।
प्रकृत्या सृज्यमानेऽस्मिन्द्रष्टा साक्षी निग द्यते ।। ४९ ।।
प्रकृतैस्त्रिगुणैरस्मिन्सृज्यमानेऽपि नान्यथा ।।
सान्निध्यमात्रतो देव त्वयि स्फुरति कारणे ।।१४४.५०।।
स्फटिके हि यथा स्वच्छे जपा कुसुमरागतः ।।
प्रकाश्यते त्वप्रकाशाज्ज्योतीरूपं नताऽस्मि तत् ।। ५१ ।।
ब्रह्मादयोऽपि कवयो न विदन्ति यथार्थतः ।।
तत्कथं वेद्म्यहं मूढा तव रूपं निरञ्जनम् ।। ५२ ।।
मूढस्य जगतो मध्ये स्थिता किंचिदजानती ।।
त्वया धृता कृता चास्मि योग्यायोग्यमविन्दती ।। ५३ ।।
तेन लोके महत्त्वं च त्वत्प्रसादेन चैषिता ।।
ययाचेऽज्ञतयोदार तन्मे दातुं त्वमर्हसि ।।५४।।
दयालुरसि दीनेषु नेति मां न वद प्रभो ।।
ततः प्रोवाच भगवान्देवि यद्यत्त्वमिच्छसि ।। ५५ ।।
तद्याचय वरारोहे अदेयमपि सर्वथा ।।
यद्दुर्लभं मनुष्याणां शीघ्रं याचय मां प्रति ।। ५६ ।।
मद्दर्शनमनु प्राप्य को वाऽपूर्णो मनोरथः ।।
ततो हिमांशो सा देवी गण्डकी लोकतारिणी ।। ५७ ।।
प्रांजलिः प्रणता भूत्वा मधुरं वाक्यमब्रवीत् ।।
यदि देव प्रसन्नोऽसि देयो मे वाञ्छितो वरः ।। ५८ ।।
मम गर्भगतो भूत्वा विष्णो मत्पुत्रतां व्रज ।।
ततः प्रसन्नो भगवांश्चिन्तयामास गोपते ।। ५९।।
किं याचितं निम्नगया नित्यं मत्सङ्गलुब्धया ।।
दास्यामि याचितं येन लोकानां भवमोक्षणम् ।। १४४.६०।।
इत्येवं कृपया देवो निश्चित्य मनसा स्वयम्।।
गण्डकीमवदत्प्रीतः शृणु देवि वचो मम ।।६१ ।।
शालग्रामशिलारूपी तव गर्भगतः सदा ।।
स्थास्यामि तव पुत्रत्वे भक्तानुग्रहकारणात।।।६२।।
मत्सान्निध्यान्नदीनां त्वमतिश्रेष्ठा भविष्यसि ।।
दर्शनात्स्पर्शनात्स्नानात्पानाच्चैवावगाहनात् ।।६३।।

हरिष्यसि महापापं वाङ्मनःकायसम्भवम् ।।
यः स्नास्यति विधानेन देवर्षिपितृतर्पकः।। ६४।।
तर्पयेत्स्वपितृंश्चापि तारयित्वा दिवं नयेत् ।।
स्वयं मम प्रियो भूत्वा ब्रह्मलाके गमिष्यति ।।६५।।।
यदि त्वय्युत्सृजेत्प्राणान् मम कर्मपरायणः ।।
सोऽपि याति मम स्थानं यत्र गत्वा न शोचति।।६६।।
एवं दत्त्वा वरान्देव्यै तत्रैवान्तरधीयत।।
ततः प्रभृति तिष्ठामः क्षेत्रेऽस्मिञ्छशलाञ्छन ।।६७।।
अहं च भगवान्विष्णुर्भक्तेच्छोपात्तविग्रहः ।।
एवमुक्त्वा द्विजपतिमन्वगृह्णाद्धरः प्रभुः।।६८।।
प्रभासयन्नुडुपतेरंगानि प्रममार्ज्ज ह ।।
शङ्करेण करेणापि नीरुजानि विधाय च ।।६९ ।।
पश्यतस्तस्य तु विधोस्तत्रैवांतरधीयत ।।
सोमेशाद्दक्षिणे भागे बाणेनाद्रिं विभिद्य वै ।। १४४.७० ।।
रावणेन प्रकटिता जलधाराऽतिपुण्यदा ।।
बाणगंगेति विख्याता या स्नाता चाघहारिणी ।।७१ ।।
सोमेशात्पूर्व दिग्भागे रावणस्य तपोवनम् ।।
यत्र स्थित्वा त्रिरात्रेण तपसः फलमश्नुते ।। ७२ ।।
यत्र नृत्येन देवेशस्तुष्टस्तस्मै वरं ददौ ।।
तेन रावणनृत्येन प्रख्यातो नर्त्तनाचलः ।।७३ ।।
स्नात्वा तु बाणगंगायां दृष्ट्वा बाणेश्वरं प्रभुम् ।।
गंगास्नानफलं प्राप्य मोदते देववद्दिवि ।। ७४ ।।
सालङ्कायनकोऽप्याशु क्षेत्रे तस्मिन्परं मम ।।
शालग्रामे महातीव्रमास्थितं परमं तपः ।। ७५ ।।
अन्यच्च ते प्रवक्ष्यामि परं गुह्यं वसुन्धरे ।।
तप्यतस्तस्य तु मुने रीश्वरेण समं सुतम् ।।७६।।
प्राप्यामीति परं भावं ज्ञात्वा देवो महेश्वरः ।।
सुन्दरं त्वपरं रूपं धृत्वा दृष्टिसुखावहम् ।। ७७ ।।
सालङ्कायनपुत्रत्वं योगमायामुपाश्रितः ।।
प्राप्तोऽपि तं न जानाति दक्षिणं पाश्वर्मास्थितः ।।७८।।
मायायोगबलोपेतस्त्र्यक्षो वै शूलपाणिधृक् ।।
रूपवान् गुणवांश्चैव वपुषादित्यसन्निभः ।। ७९ ।।
स तं न ज्ञायते जातं ममैवाराधने स्थित. ।।

अथ नन्दी प्रहस्याह महादेवाज्ञया मुनिम् ।। १४४.८० ।।
उत्तिष्ठ मुनि शार्दूल सफलस्ते मनोरथः ।।
त्वद्दक्षिणाङ्गाज्जातोऽस्मि पुत्रस्ते शाधि मां प्रभो ।।८१ ।।
त्वया तपः समारब्धमीश्वरेण समं सुतम् ।।
प्राप्स्यामीति ततो मह्यं सदृशोऽन्यो न कश्चन ।।८२।।
विचार्येति तवाहं वै जातोऽस्मि स्वयमेव च ।।
तपसाराधयन्देवं शङ्खचक्रगदाधरम् ।।८३।।
प्राप्तोऽसि परमां सिद्धिं त्वत्पुत्रोऽहं यतः स्थितः ।।
श्रुत्वा तन्नन्दिनो वाक्यं प्रहृष्टवदनो मुनिः ।। ८४ ।।
विस्मितस्तु तदोवाच कथं नाद्यापि मे हरिः।।
दृग्गोचरत्वमायाति जातं चेत्तपसः फलम् ।। ८५ ।।
यावत्तं न समीक्षिष्ये तावन्न विरतं तपः ।।
अहमत्रैव वत्स्यामि यावदच्युतदर्शनम् ।।८६।।
त्वमपि योगेन मथुरां व्रज सत्वरम् ।।
मदाश्रमे तत्र पुण्ये धनं गोव्रजसंकुलम् ।। ८७ ।।
आमुष्यायणमादाय शीघ्रमत्र समानय ।। ८८ ।।
ततस्त्वाज्ञां समादाय नन्दी सत्वरमाव्रजत् ।।
गत्वा च मथुरां तस्य ऋषेराश्रममीक्ष्य च।। ८९ ।।
दृष्ट्वामुष्यायणं तत्र पृष्ट्वा नाम तमप्युत ।।
गृहे वित्ते च कुशलमपृच्छद्गोधनेषु च ।। १४४.९० ।।
सालंकायनशिष्योऽपि आमुष्यायणसंज्ञितः ।।
सर्वत्र कुशलं साधो प्रभावात्तु गुरोर्मम ।।९१ ।।
गुरोश्च कुशलं ब्रूहि कुत्रास्ते स तपोधनः ।।
भवान् कुतः समायातः किमत्रागमकारणम् ।।९२ ।।
तन्मे विस्तरतो ब्रूहि अर्घ्यश्चैवोपगृह्यताम् ।।
इत्युक्तः सोऽर्घ्यमादाय विश्रम्य च ततो गुरोः ।। ९३ ।।
वृत्तान्तं कथयामास त्वागमस्य च कारणम् ।।
ततस्तेनैव सहितो गोधनं तत्प्रगृह्य च ।। ९४ ।।
दिनैः कतिपयैश्चैव गण्डकीतीरमाश्रितः ।।
शनैरुत्तीर्य च ततस्त्रिवेणीं प्राप्य हर्षितः ।। ९५ ।।
देविका नाम देवानां प्रभावाच्च तपस्यताम् ।।
नियमार्थं समुद्भूता गंडक्या मिलिता शुभा ।। ९६ ।।
आश्रमादपरा चासीत्पुलस्त्यपुलहाश्रमात् ।।

गंडक्या मिलिता सापि त्रिवेणी गण्डकीत्यभूत् ।। ९७।।
कामिकं तन्महातीर्थं पितृणामतिवल्लभम् ।।
तत्र स्थितं महालिङ्गं त्रिजलेश्वरसंज्ञितम् ।।९८।।
मुक्तिभुक्तिप्रदं देवि दर्शनादघनाशनम् ।। ९९ ।।
धरण्युवाच ।।
प्रयागे या त्रिवेणीति यत्र देवो महेश्वरः ।।
शूलटङ्क इति ख्यातः सोमेश इति चापरः ।। १४४.१०० ।।
वेणीमाधवनाम्नाऽपि यत्र विष्णुः स्वयं स्थितः ।।
गङ्गा च यमुना चैव सरस्वत्यपरा नदी ।। १०१ ।।
सर्वेषां चैव देवानामृषीणां सरसामपि।।
सर्वेषां चैव तीर्थानां समाजस्तत्र मे श्रुतः ।।१०२।।
यत्राप्लुता दिवं यान्ति मृता मुक्तिं प्रयान्ति च ।।
तीर्थराज इति ख्यातं तत्तीर्थं केशवप्रियम् ।। १०३।।
सैव त्रिवेणी विख्याता किमपूर्वां प्रशंससि ।।
एतद्गुह्यतमं प्रोक्तं त्वया विष्णो न संशयः ।।१०४ ।।
तत्कथ्यतां महाभाग लोकानां हितकाम्यया ।।
मय्यनुक्रोशुबुद्ध्या च कृपां कुरु दयानिधे ।। १०५ ।।
श्रीवराह उवाच ।।
शृणुष्व देवि भद्रं ते यद्गुह्यं परि पृच्छसि ।।
अत्र ते कीर्त्तयिष्यामि सेतिहासां कथां शुभाम् ।। १०६ ।।
पुरा विष्णुस्तपस्तेपे लोकानां हितकाम्यया ।।
हिमालये गिरौ रम्ये देवतागणसेविते ।। १०७ ।।
ततो बहुतिथे काले याते सति तपस्यतः।।
तीव्रं तेजः प्रादुरासीद्येन लोकाश्चराचराः ।।१०८ ।।
तस्योष्मणा समुद्भूतः स्वेदपूरस्तु गण्डयोः ।।
तेन जाता धुनी दिव्या लोकानामघहारिणी ।। १०९ ।।
महर्लोकादयः सर्वे विस्मिताः सर्वतो दिशम् ।।
तस्य प्रभवमिच्छन्तो ज्ञातुं नेशुः कथंचन।।१४४.११०।।
देवाः सर्वे ततो जग्मुर्ब्रह्माणं प्रति चोत्सुकाः।।
पप्रच्छुः प्रभवं तस्य प्रणम्य च पुनःपुनः।।१११।।
ब्रह्मापि हि न जानाति मोहितस्तस्य मायया ।।
ततो देवैः समं ब्रह्मा शङ्करं प्रत्युपस्थितः ।। ११२ ।।
तं दृष्ट्वा सहसा देवैः समेतं प्रत्युपस्थि तम्।।

पप्रच्छ तं महादेवस्तदामनकारणम्।।११३।।
ब्रह्मा तं च महादेवं पप्रच्छ प्रणतः स्थिताः।।
अत्यद्भुतं महत्तेजश्चाद्भुतं किं महेश्वर ।।११४ ।।
येन प्रत्याहता क्ष्माऽसौ जगद्व्यतिकरावहा ।।
किन्नु स्यात्कथमतेत्स्यात्कश्चास्य प्रभवो विभो ।। ११५ ।।
शिवः क्षणं ततो ध्यात्वा ब्रह्माद्यान् प्रत्युवाच ह ।।
महसोऽस्य समुत्पत्तिं महतो दर्शयामि वः ।। ११६ ।।
जगाम देवसहितः सोमः सहगणः प्रभुः ।।
यत्रास्ते भगवान्विष्णुर्महता तपसान्वितः ।। ११७ ।।
उवाच परमप्रीतस्तदा शम्भुः स्मयन्निव ।।
तपस्यसि किमिच्छन्तस्त्वं कर्त्ता जगतां प्रभुः ।। ११८ ।।
सर्वाधारोऽ खिलाध्यक्षस्तत्किं यत्तव दुर्ल्लभम् ।।
एवमुक्तः प्रत्युवाच प्रणम्य जगतां प्रभुः ।। ११९ ।।
अहं लोकहितार्थाय तपस्तप्तुं समुद्यतः ।।
त्वत्तो वरानभीप्सन्वै त्वद्दर्शनसमुत्सुकः ।। १४४.१२० ।।
त्वद्दर्शनममनुप्राप्य कृतार्थोऽस्मि जगत्पते ।। १२१ ।।
शिव उवाच ।।
मुक्तिक्षेत्रमिदं देव दर्शनादेव मुक्तिदम् ।।
गण्डस्वेदोद्भवा यत्र गण्डकी सरितां वरा ।। १२२ ।।
भविष्यति न सन्देहो यस्या गर्भे भविष्यति ।।
त्वयि स्थिते जग न्नाथे तव सान्निध्यकारणात् ।। १२३ ।।
अहं ब्रह्मा च देवाश्च ऋषिभिः सह केशव ।।
सर्वे वेदाश्च यज्ञाश्च सर्वतीर्थानि चाप्युत ।। १२४ ।।
वसिष्यामः सदैवात्र गण्डक्यां जगतां पते ।।
कार्त्तिकं सकलं मासं यः स्नास्यति नरः प्रभो ।। १२५ ।।
सर्वपापविनिर्मुक्तो मुक्तिभागी न संशयः ।।
तीर्थानां परमं तीर्थं मङ्गलानां च मङ्गलम् ।।१२६ ।।
यत्र स्नानेन लभ्येत गंगास्नानफलं नरैः ।।
स्मरणाद्दर्शनात्स्पर्शान्निष्पापो जायते नरः ।। १२७ ।।
यस्यास्तत्समतां कान्या लभेद्गंगां विना नदीम् ।।
यत्र सा परमा पुण्या गण्डकी भुक्तिमुक्तिदा ।। १२८ ।।
अपरा देविका नाम्ना गण्डक्या सह संगता ।।
पुलस्त्यपुलहौ पूर्वं तेपाते परमं तपः ।। १२९ ।।

यत्र सृष्टिविधानार्थं कृत्वाश्रमपदं पृथक् ।।
सृष्टेर्विधानसामर्थ्यं यत्र लब्धं ततः परम् ।। १४४.१३० ।।
ततोऽभूद्ब्रह्मतनया पुण्या सा सरितां वरा ।।
गण्डक्या यत्र मिलिता ब्रह्मपुत्री यशस्विनी ।। १३१ ।।
त्रिवेणी सा महापुण्या देवानामपि दुर्ल्लभा ।।
धरे जानीहि तत्क्षेत्रं योजनं परमार्च्चितम्।।१३२।।
पुरा वेदनिधेः पुत्रौ जयो विजय एव च ।।
यजनाय गतौ राज्ञा वृतौ तौ कर्दमात्मजौ ।।१३३।।
तृणबिन्दोः सुतौ पापौ जातौ दृष्ट्यैव सुव्रतौ ।।
यज्ञविद्यासुनिपुणौ वेदवेदांगपारगौ ।।१३४।।
पूजयन्तौ हरिं भक्त्या तन्निष्ठेन्द्रियमानसौ ।।
ययोः पूजयतोर्नित्यं सान्निध्यं किल केशवः ।। १३५ ।।
ददाति पूजावसरे भक्त्या किल वशीकृतः ।।
मरुत्तेन कदाचित्तावाहूतौ कुशलौ द्विजौ ।। १३६ ।।
राज्ञा समाप्तयज्ञेन पूजयित्वा पुरस्कृतौ ।।
दक्षिणाभिस्तोषयित्वा विसृष्टौ गृह मागतौ ।। १३७ ।।
विभागं कर्त्तुमारब्धौ पस्पर्द्धाते परस्परम् ।।
समो विभागः कर्त्तव्य इति ज्येष्ठोऽभ्यभाषत ।।१३८ ।।
विजयश्चाब्रवीच्चैनं येन लब्धं हि तस्य तत् ।।
जयोऽब्रवीदसामर्थ्यं मन्वानो मां ब्रवीषि किम् ।। १३९ ।।
न ददासि गृहीत्वा यत्तस्माद्ग्राहत्वमाप्नुहि ।।
विजयोऽप्यब्रवीन्नूनमन्धीभूतोऽति किं धनैः ।। १४४.१४० ।।
गजो भव मदान्धस्त्वं यो मामेवं प्रभाषसे ।।
एवं तौ ग्राहमातंगावभूतां शापतः पृथक् ।। १४१ ।।
गण्डक्यामेव सञ्जातो ग्राहः पूर्वस्मृतिर्द्विजः ।।
त्रिवेणीक्षेत्रमध्ये तु जयोऽभूद्वै महान्गज।।१४२।।
करिशावैर्गजीभिश्च क्रीडमानो वने वसन् ।।
बहून्यब्दसहस्राणि व्यतीतानि तयोस्तदा।।१४३।।
वने विहरतोर्भूमे शापमोहितयोः सतोः ।।
कदाचित्स गजः स्नातुं करेणु गणसंवृतः ।। १४४ ।।
त्रिवेणीमभितो यातोऽवगाहनपरायणः ।।
सिंचन्करेणूस्ताभिश्च सिच्यमानो जलं पिबन् ।। १४५ ।।
स्वयं च पाययंस्ताश्च चिक्रीड प्रीतमानसः ।।

एवं संक्रीडतस्तत्र दैवयोगेन तस्य हि ।। १४६ ।।
ग्राहः सम्प्रेरितः पूर्वं वैरयोगमनुस्मरन् ।।
जग्राह सुदृढं पादं गजोऽपि च विषाणतः ।। १४७ ।।
ग्राहं विव्याध सोऽप्येनमाकर्षयत तज्जले ।।
तयोर्युद्धं समभवदनेकाब्दं विकर्षणैः ।। १४८ ।।
आकर्षणैश्च बहुभिर्द्दन्तभेदैः परस्परम्।।
प्रयुध्यतोस्तयोरेवं मत्सरग्रस्तयोः सतोः ।।१४९।।
तत्त्वानि पीडितान्यासन्ननेकानि क्षयं ययुः ।।
ततो जलेश्वरो राजा भगवन्तं व्यजिज्ञपत् ।।१४४.१५०।।
तेन विज्ञापितो देवो भगवान्भक्तवत्सलः ।।
सुदर्शनेन चक्रेण ग्राहास्यं समपाटयत् ।। १५१ ।।
क्षिप्तं पुनः पुनस्तत्तु शिलाः सङ्घट्टयद्धरे ।।
सङ्घट्टनात्तु चक्रस्य शिलाश्चक्रेण लाच्छिताः ।। १५२ ।।
बाहुल्येन बभूवुर्हि तस्मिन्क्षेत्रे परे मम ।।
वज्रकीटैश्च ज्ञातानि सन्ततानि विलोकय ।। १५३ ।।
न सन्देहस्त्वया कार्यस्त्रिवेणीं प्रति सुन्दरि ।।
त्रिवेणीक्षेत्रमहिमा एवं ते परिकीर्त्तितः ।। १५४ ।।
यदा च भरतो राजा पुलस्त्यस्याश्रमान्तिके ।।
स्थित्वा पर्यचरद्विष्णुं त्रिजलेशमपूजयत् ।। १५५ ।।
ततःप्रभृति तस्यासीद्भरतेनारतिः स्फुटम् ।।
पुनश्च मृगदेहान्ते जडः स भरतोऽभवत् ।। १५६ ।।
तैनैव पूजितो यस्माज्जलेश्वर इति स्मृतः ।।
यस्य संपूजनाद्भक्त्या योगसिद्धिः प्रजायते ।। १५७ ।।
शालग्रामे परे क्षेत्रे यदाहं सुभगे स्थितः ।।
तत्र ज्ञात्वा जलेशेन स्तुतोऽहं वसुधे महि ।। १५८ ।।।
ततो भक्तकृपावेशात्क्षिप्तवांस्तत्सुदर्शनम् ।।
प्रथमं पतितं यत्र तत्र तीर्थं ततोऽभवत् ।। १५९ ।।
तत्र स्नानेन तेजस्वी सूर्यलोके महीयते ।।
यदि प्राणैर्वियुज्येत मम लोके महीयते ।।१४४.१६०।।
भक्तसंरक्षणार्थाय मयाज्ञप्तं सुदर्शनम् ।।
यत्र यत्र भ्रमति तत्तत्र तत्रांकिताः शिलाः ।। १६१।।
एवं तद्वै भ्रमाक्षिप्तं सर्वं चकमयं त्वभूत् ।।
ततः स पंचरात्राणि स्थित्वा वै विधिपूर्वकम् ।। १६२ ।।

गोधनान्यग्रतः कृत्वा हरिक्षेत्रं जगाम ह ।।
हरिणाधिष्ठितं क्षेत्रं पूजनीयं ततः स्मृतम् ।। १६३ ।।
यदा नन्दी शूलपाणिर्गोधनेन पुरस्कृतः ।।
स्थितवांस्तद्दिनादेतत्ख्यातं हरिहरप्रभम्।।१६४।।
देवानामटनाच्चैव देवाट इति संज्ञितम् ।।
तस्य देवस्य महिमा केन वक्तुं हि शक्यते ।।१६५।।
स शूलपाणिर्देवेशो भक्ताभयविधायकः ।।
मुनिभिर्देवगन्धर्वैः सेव्यतेऽचिन्त्यशक्तिमान् ।। १६६ ।।
तस्मिन्स्थाने महादेवः सालङ्कायनकस्य हि ।।
पुत्रत्वं नन्दिरूपेण प्राप्तः साक्षाच्छिवः प्रभुः ।। १६७ ।।
स्वयं चैव महायोगी योगसिद्धिविधायकः ।।
आस्थितः परमं पीठं तीर्थे चैव त्रिधारके ।। १६८ ।।
त्रिजटाभ्योऽभवन्धारा स्तिस्रो वै परमाद्भुताः ।।
गंगा च यमुना चैव पुण्या चैव सरस्वती ।। १६९ ।।
एतत्त्रैधारिकं तीर्थं त्रिजटाभ्यः समुत्थितम् ।।
यत्र शम्भुः स्थितः साक्षान्महायोगी महेश्वरः ।। १४४.१७० ।।
शालग्रामाभिधे क्षेत्रे हरिशीलनतत्परः ।।
दिशञ्ज्ञानं स्वभक्तानां संसाराद्येन मुच्यते ।। १७१ ।।
तीर्थे त्रिधारे यः स्नात्वा सन्तर्प्य पितृदेवताः ।।
महायोगिनमभ्यर्च्य न भूयो जन्मभाग्भवेत् ।। १७२ ।।
तस्यैव पूर्वदिग्भागे हंसतीर्थमिति स्मृतम् ।।
तत्रैकं कौतुकं वृत्तं तच्छृणुष्व महत्तरम् ।। १७३ ।।
कदाचिच्छिवरात्र्यां तु भक्तैः पूजामहोत्सवे ।।
नैवेद्यैर्विविधैः सृष्टैः पूजयित्वा तु योगिनम् ।। १७४ ।।
तत्र काकाः समुत्पेतुरन्ने तस्मिन्बुभुक्षिताः ।।
गृहीत्वान्नं तु तत्काकस्तेन चोड्डीय निर्गतः ।।१७५।।
तद्गृहीतुं परः काक स्तेनायुध्यत चांबरे ।।
तावुभौ युध्यमानौ तु कुण्डे तस्मिन्निपेततुः ।।१७६।।
तत्र हंसौ ततो भूत्वा निर्गतौ चन्द्रवर्चसौ ।।
तद्दृष्ट्वा महदाश्चर्यं तत्र ये मिलिता जनाः ।। १७७ ।।
हंसतीर्थमिति प्रोचुस्ततःप्रभृति सत्तमे ।।
ततः प्रभृति तत्तीर्थं हंसतीर्थमिति स्मृतम् ।। १७८ ।।
पूर्वं यक्षकृतं तत्तु यक्षतीर्थमिति स्मृतम् ।।

तत्र स्नातो नरः शुद्धो यक्षलोके महीयते ।। १७९ ।।
तत्राऽथ मुंचते प्राणाञ्छिवभक्तिपरायणः ।।
यक्षलोकमतिक्रम्य मम लोकं प्रपद्यते ।। १४४.१८० ।।
एवं प्रभावं तत्तीर्थं महायोगिप्रभावतः ।।
अहं शिवश्च लोकानामनुग्रहपरायणौ ।। १८१ ।।
एतत्ते सर्वमाख्यातं क्षेत्रं गुह्यं वसुन्धरे ।।
आरभ्य मुक्तिक्षेत्रं तत्क्षेत्रं द्वादशयोजनम् ।। १८२।।
शालग्रामस्वरूपेण मया यत्र स्थितं स्वयम् ।।
स्वभक्तानां विशेषेण परमानन्ददायकम् ।। १६३ ।।
गुह्यानां परमं गुह्यं किमन्यच्छ्रोतुमिच्छसि ।। १८४ ।।
इति श्रीवराहपुराणे भगवच्छास्त्रे सोमेश्वरादिलिंग हरिहरमुक्तिक्षेत्र त्रिवेण्यादिमहिमानिरूपणं नाम चतुश्चत्वारिंशदधिकशततमोध्यायः ।। १४४ ।।

अथ सालग्रामक्षेत्रमाहात्म्यम् ।।
धरण्युवाच ।।
भगवन्देवदेवेश सालंकायनको मुनिः ।।
किं चकार तपः कुर्वंस्तव क्षेत्रे विमुक्तिदे ।। १ ।।
श्रीवराह उवाच।।
अथ दीर्घेण कालेन स ऋषिः संशित व्रतः ।।
तप्यमानो यथान्यायं पश्यन्वै सालमुत्तमम् ।। २ ।।
अभिन्नमतुलच्छायं विशालं पुष्पितं तथा ।।
मनोज्ञं च सुगन्धं च देवानामपि दुर्ल्लभम् ।। ३ ।।
ऋषिर्ज्ञानपरिश्रान्तः सालंकायनकोऽद्भुतम् ।।
ददर्श च पुनः सालं शुभानां शुभदर्शनम् ।। ४ ।।
ततो दृष्ट्वा महासालं परिश्रान्तो महामुनिः ।।
विश्रामं कुरुते तत्र द्रष्टुकामोऽथ मां मुनिः ।। ५ ।।
सालस्य तस्य पूर्वेण स्थितः पश्चान्मुखो मुनिः ।।
मायया मम मूढात्मा शक्तो द्रष्टुं न मामभूत् ।। ६ ।।
ततः पूर्वेण पार्श्वेन तस्य सालस्य सुन्दरि ।।
वैशाखमासद्वादश्यां मद्दर्शनमुपागतः ।। ७ ।।
दृष्ट्वा मां तत्र स मुनिस्त पस्वी संशितव्रतः ।।
तुष्टाव वैदिकैः सूक्तैः प्रणम्य च पुनःपुनः ।। ८ ।।
मत्तेजसा ताडिताक्षः शनैरुन्मील्य लोचने ।।
यावत्पश्यति मां तत्र स्तुवन्स तपसान्वितः ।। ९ ।।
वृक्षस्य दक्षिणे पार्श्वे गतस्तावदहं धरे ।।
पूर्वस्थानं परित्यज्य स ऋषिः संशितव्रतः ।। १४५.१० ।।
स्थित्वा मत्प्रमुखे चैव स्तुवन्नेवं मम प्रियम् ।।
ततोऽहं स्तूयमानौ वै ऋग्वेदस्यैव ऋग्गतैः ।। ११ ।।
स्तोत्रैः सम्पूज्यमानो हि गतोऽहं पश्चिमां दिशम् ।।
ततः पश्चिमपार्श्वे तु स्थितस्तत्रैव माधवि ।। १२ ।।
यजुर्वेदोक्तमन्त्रेण संस्तुतः पश्चिमां गतः ।।
स्तुवतीत्थं मुनौ देवि गतोऽहं चोत्तरां दिशम् ।। १३।।
तत्रापि सामवेदोक्तैर्मन्त्रैस्तुष्टाव मां मुनिः ।।
ततोऽहं स्तूयमानो वै ऋषिमुख्येन सुन्दरि ।। १४।।
प्राप्तश्च परमां प्रीतिं तमवोचमृषिं तदा ।।
साधु ब्रह्मन्महाभाग सालंकायन सत्तम ।। १५ ।।

तपसानेन सन्तुष्टः स्तुत्या चैवानया तव ।।
वरं वरय भद्रं ते संसिद्धस्तपसा भवान् ।। १६ ।।
एवमुक्तः स तु मया सालंकायनको मुनिः ।।
सालवृक्षं समाश्रित्य निभृतेनान्तरात्मना ।। १७ ।।
ततो मां भाषते देवि स ऋषिः संशितव्रतः ।।
तवैवाराधनार्थाय तपस्तप्तं मया हरे ।। १८ ।।
पर्यटामि महीं सर्वां सशैलवनकाननाम् ।।
इदानीं खलु दृष्टोऽसि चक्रपाणे महाप्रभो ।। १९ ।।
यदि तुष्टोऽसि मे देव सर्वशान्तिकरः परः ।।
यदि देयो वरो मह्यं तपसाराधितेन च ।। १४५.२० ।।
तदा देहि जगन्नाथ ममेश्वर समं सुतम् ।।
एष एव वरो मह्यं दीयतां मधुसूदन ।। २१ ।।
एवं वरं याचितोऽस्मि मुनिना भीमकर्मणा ।।
पुत्रकामेन विप्रेण दीर्घ कालं तपस्यता ।। २२ ।।
एवं तस्य वचः श्रुत्वा ब्राह्मणस्य तपस्विनः ।।
मधुरां गिरमादाय प्रत्यवोचमृषिं प्रति ।। २३ ।।
चिरकालं व्रतस्थेन यत्त्वया चिन्तितं मुने ।।
स कामस्तव सञ्जातः सिद्धोऽसि तपसा भवान् ।। २४ ।।
ईश्वरस्य परा मूर्त्तिर्नाम्ना वै नन्दिकेश्वरः ।।
त्वद्दक्षिणांगादुद्भूतः पुत्रस्तव मुनीश्वर ।। २५ ।।
संहरस्व तपो ब्रह्मञ्शान्तिं गच्छ महामुने ।।
अथ चैतस्य जातस्य कल्पा वै सप्त सप्त च ।। २६ ।।
त्वं न जानासि विप्रर्षे स जातो नन्दिकेश्वरः ।।
मायायोगबलोपेतो गोव्रजं स मया स्थितः ।।२७।।
मथुरायाः समानीय आमुष्यायणसंज्ञितम् ।।
तव शिष्यं पुरस्कृत्य शूलपाणिरवस्थितः ।।२८।।
तत्राश्रमे महाभाग स्थित्वा त्वं तपसां निधे ।।
पुत्रेण परमप्रीतो मत्क्षेत्रेऽस्मत्समो भव।।२९।।
अन्यच्च गुह्यं वक्ष्यामि सालङ्कायन तच्छृणु ।।
तव प्रीत्या प्रवक्ष्यामि येनैतत्क्षेत्रमुत्तमम् ।। १४५.३० ।।
शालग्राममिति ख्यातं तन्निबोध मुने शुभम् ।।
योऽयं वृक्षस्त्वया दृष्टः सोऽहमेव न संशयः ।। ३१ ।।
एतत्कोऽपि न जानाति विना देवं महेश्वरम् ।।

माययाऽहं निगूढोऽस्मि त्वत्प्रसादात्प्रकाशितः ।। ३२ ।।
एवं तस्मै वरं दत्त्वा सालंकायनकाय वै ।। ३३ ।।
पश्यतस्तस्य वसुधे तत्रैवान्तर्हितोऽभवम् ।।
वृक्षं दक्षिणतः कृत्वा जगाम स्वाश्रमं मुनिः ।। ३४ ।।
मम तद्रोचते स्थानं गिरिकूटशिलोच्चये ।।
शालग्राम इति ख्यातं भक्तसंसारमोक्षणम् ।। ३५ ।।
तत्र गुह्यानि मे भूमे वक्ष्यमाणानि मे शृणु ।।
तरन्ति मनुजा येभ्यो घोरं संसारसागरम् ।। ३६ ।।
गुह्यानि तत्र वसुधे तीर्थानि दश पंच च ।।
नाद्यापि किंचिज्जानन्ति मुच्यन्ते यैरिह स्थिताः ।। ३७ ।।
तत्र बिल्वप्रभं नाम गुह्यं क्षेत्रं मम प्रियम् ।।
कुञ्जानि तत्र चत्वारि क्रोशमात्रे यशस्विनि ।। ३८ ।।
ह्रद्यं तत्परमं गुह्यं भक्तकर्मसुखावहम् ।।
तत्र स्नानं तु कुर्वीत अहोरात्रोषितो नरः ।। ३९ ।।
चतुर्णामश्वमेधानां फलं प्राप्नोति मानवः ।।
अथात्र मुंचते प्राणान्मम कर्मसु निष्ठितः ।। १४५.४० ।।
अश्वमेधफलं भुक्त्वा मम लोके स मोदते ।।
चक्रस्वामीति विख्यातं तस्मिन्क्षेत्रे परं मम ।। ४१ ।।
चक्राङ्कितशिलास्तत्र दृश्यन्ते च इतस्ततः ।।
चक्राङ्कितशिला यत्र वरवर्णिनि तिष्ठति ।। ४२ ।।
तदेतद्विद्धि वसुधे समन्ता द्योजनत्रयम् ।।
तत्र स्नानं तु कुर्वीत त्रिरात्रोपोषितो नरः ।।४३।।
त्रयाणामपि यज्ञानां फलं प्राप्नोति निश्चितम् ।।
अथात्र मुंचते प्राणान्मम कर्म परायणः ।। ४४ ।।
वाजपेयफलं भुक्त्वा मम् लोकं च गच्छति।।
तत्र विष्णुपदं नाम क्षेत्रं गुह्यं परं मम ।।४५।।
तिस्रो धाराः पतन्त्यत्र हिमकूटं समाश्रिताः ।।
तत्र स्नानं तु कुर्वीत त्रिरात्रोपोषितो नरः।।४६।।
त्रयाणामपि रात्रीणां फलं प्राप्नोति निष्कलम् ।।
तथैव मुंचते प्राणान्मुक्तसंगो गत क्लमः ।। ४७ ।।
अतिरात्रफलं भुक्त्वा मम लोके महीयते ।।
तत्र कालीह्रदं नाम गुह्यं क्षेत्रं परं मम ।। ४८ ।।
अत्र चैव ह्रदस्रोतो बदरीवृक्षनिःसृतः ।।

तत्र स्नानं तु कुर्वीत षष्टिकालोषितो नरः ।। ४९ ।।
नरमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ।।
अथात्र मुंचते प्राणान्मुक्तरागो गत क्लमः ।। १४५.५० ।।
नरमेधफलं भुक्त्वा मम लोके च मोदते ।।
अन्यच्च ते प्रवक्ष्यामि महाश्चर्यं वसुन्धरे ।। ५१ ।।
तत्र शङ्खप्रभं नाम गुह्यं क्षेत्रं परं मम।।
श्रूयते शंखशब्दश्च द्वादश्यामर्द्धरात्रके ।। ५२ ।।
गदाकुण्डमिति ख्यातं तस्मिन्क्षेत्रे परं मम ।।
यत्र वै कम्पते स्रोतो दक्षिणां दिशामाश्रि तम् ।। ५३ ।।
तत्र स्नानं तु कुर्वीत त्रिरात्रोपोषितो नरः ।।
वेदान्तगानां विप्राणां फलं प्राप्नोति मानवः ।। ५४ ।।
अथ वै मुंचते प्राणान्कृतकृत्यो गुणान्वितः ।।
गदापाणिर्महाकायो मम लोकं प्रपद्यते ।। ५५ ।।
पुनश्चाग्निप्रभं नाम गुह्यं क्षेत्रं परं मम ।।
धारा पतति तत्रैका पूर्वोत्तरसमाश्रिता ।।५६।।
यस्तत्र कुरुते स्नानं चतूरात्रोषितो नरः ।।
अग्निष्टोमात्पंचगुणं फलं प्राप्नोति मानवः ।।५७।।
अथात्र मुंचते प्राणान् मम कर्मसु निष्ठितः ।।
अग्निष्टोमफलं भुक्त्वा मम लोकं प्रपद्यते ।।५८।।
तत्राश्चर्यं महाभागे कथ्यमानं मया शृणु ।।
हेमन्ते चोष्णकं तीर्थं ग्रीष्मे भवति शीतलम् ।। ५९ ।।
गुह्यं सर्वायुधं नाम तत्र क्षेत्रे परं मम ।।
पतन्ति सप्त स्रोतांसि हिमवन्निःसृतानि वै ।। १४५.६० ।।
तत्र स्नानं प्रकुर्वीत सप्तरात्रोषितो नरः ।।
राजा भवति सुश्रोणि सवार्युधकलान्वितः ।। ६१ ।।
अथ वै मुंचते प्राणान्मम कर्माविनिश्चितः ।।
स भुक्त्वा राज्य भोज्यानि मम लोकं च गच्छति ।। ६२ ।।
तत्र देवप्रभं नाम गुह्यं क्षेत्रं परं मम ।।
धाराः पंचमुखास्तत्र पतंति गिरिसंश्रिता ।। ६२।।
तत्र स्नानं तु कुर्वीत त्वष्टकालोषितो नरः ।।
चतुर्णामपि वेदानां याति पारं न संशयः ।। ६४ ।।
अथात्र मुंचते प्राणाँल्लोभमोहविवर्ज्जितः ।।
वेदकर्म समुत्सृज्य मम लोके महीयते ।। ६५ ।।

गुह्यं विद्याधरं नाम तत्र क्षेत्रं परं मम ।।
पंच धाराः पतन्त्यत्र हिमकूटविनिःसृताः ।। ६६ ।।
यस्तत्र कुरुते स्नानं मेकरात्रोषितो नरः ।।
याति वैद्याधरं लोकं कृतकृत्यो न संशयः ।।६७।।
अथात्र मुंचते प्राणान्वीतरागो गतक्लमः ।।
भुक्त्वा वैद्याधरान्भोगान्मम लोकं स गच्छति ।।६८।।
तत्र पुण्यनदी नाम गुह्यक्षेत्रे परे मम ।।
शिलाकुञ्जलताकीर्णा गन्धर्वाप्सरसेविता ।।६९।।
तत्र स्नानं तु कुर्वीत अष्ट रात्रोषितो नरः ।।
सप्तद्वीपेषु भ्रमति स्वच्छंदगमनालयः ।। १४५.७० ।।
अथात्र मुञ्चते प्राणान्मम कमार्नुसारकः ।।
सप्तद्वीपान् समुत्सृज्य मम लोकं स गच्छति ।।७१।।
गन्धर्वेति च विख्यातं तस्मिन् क्षेत्रं परं मम ।।
एकधारा पतत्यत्र पश्चिमां दिशमाश्रिता ।।७२।।
तत्र स्नानं तु कुर्वीत चतूरात्रो षितो नरः ।।
मोदते लोकपालेषु स्वच्छंदगमनालयः ।। ७३ ।।
अथात्र मुञ्चते प्राणान्ममकर्मपरायणः ।।
लोकपालान्परित्यज्य मम लोकं स गच्छति ।।७४।।
तत्र देवह्रदं नाम मम क्षेत्रं वसुन्धरे ।।
यत्र कांतासि मे भूमे बलेर्यज्ञविनाशनात्।।७५।।
स ह्रदो वरदः श्रेष्ठो मनोज्ञः सुखशीतलः ।।
अगाधः सौख्यदश्चापि देवानामपि दुर्ल्लभः ।।७६।।
तस्मिन् ह्रदे महाभागे मम वै नियमोदके ।।
मत्स्याश्चक्रांकिताश्चैव पर्यटन्ते इतस्ततः ।।७७।।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुंधरे ।।
महाश्चर्यं विशालाक्षि यत्र तत्परिवर्त्तते ।।७८।।
पश्येति श्रद्दधानस्तु न पश्यत्पापपूरुषः।।
तस्मिन्देवह्रदे पुण्यं चतुर्विंशतिर्द्वादश ।।७९।।
सौवर्णानि च पद्मानि दृश्यन्ते भास्करोदये ।।
तावत्पश्यन्ति भूतानि यावन्मध्यन्दिनं भवेत् ।। १४५.८० ।।
यत्र स्नाता दिवं यांति शुद्धा वाक्कायजैर्मलैः ।।
तत्र स्नानं प्रकुर्वीत दशरात्रोषितो नरः ।।८१।।
दशानामश्वमेधानां प्राप्नोत्यविकलं फलम् ।।

अथाऽत्र मुञ्चते प्राणान्मम चिंताव्यवस्थितः ।।८२।।
अश्वमेधफलं भुक्त्वा भूमे मत्समतां व्रजेत् ।।
अन्यच्च ते प्रवक्ष्यामि क्षेत्रं गुह्यं परं मम।।८३।।
संभेदो देवनद्योस्तु समस्तसुखवल्लभः ।।
दिवोऽवतीर्य तिष्ठन्ति देवा यत्र सहप्रियाः ।।८४।।
गन्धर्वाप्सरसश्चैव नागकन्याः सहोरगैः ।।
देवर्षयश्च मुनयः समस्तसुरनायकाः ।। ८५ ।।
सिद्धाश्च किन्नराश्चैव स्वर्गादवतरन्ति हि ।।
नेपाले यच्छिवस्थानं समस्तसुखवल्लभम् ।। ८६ ।।
तेभ्यस्तेभ्यश्च स्थानेभ्यस्तीर्थेभ्यश्च विशेषतः ।।
महादेवजटाजूटान्नीलकण्ठाच्छिवालयः ।। ८७ ।।
श्वतेगंगेति या प्रोक्ता तया संभूय सादरम् ।।
नाना नद्यः समायाता दृश्यादृश्यतया स्थिताः ।। ८८।।
गण्डक्या कृष्णया चैव या कृष्णस्य तनूद्भवा ।।
तया संभेदमापन्ना या सा शिवतनूद्भवा ।।८९।।
त्रिशूलगंगेत्याख्याता सापि तत्र महानदी ।।
एवं नदीसमुद्भेदः सर्वतीर्थकदंबकम् ।। १४५.९० ।।
मम क्षेत्रे समाख्यातं पुण्यं परमपावनम् ।।
वसुधे त्वं विजानीहि देवानामपि दुर्ल्लभम् ।। ९१ ।।
यच्च सिद्धाश्रम इति विख्यातः पुण्यवर्द्धनः ।।
शंभोस्तपोवनं तत्र सर्वाश्रमवरं प्रति ।। ९२ ।।
नानापुष्पफलोपेतं कदलीषण्डमण्डितम् ।।
निचुलैश्चैव पुन्नागैः केसरैश्च विराजितम् ।। ९३ ।।
खर्ज्जूराशोकबकुलैश्चूतैश्चैव प्रियालकैः ।।
नारिकेलैश्च पूगैश्च चंपकैर्जंबुभिर्धवैः ।। ९४ ।।
नारंगैर्बदरीभिश्च जंबीरैर्मातुलुंगकैः ।।
केतकीमल्लिकाजातीयूथिकाराजिराजितम् ।। ९५ ।।
कुन्दैः कुरवकैर्नागैः कुटजैर्दाडिमैरपि ।।
आगत्य यत्र क्रीडन्ति देवानां मिथुनानि च ।। ९६ ।।
तस्मिन्ह्रदे महापुण्ये पुण्यनद्योस्तु संगमे ।।
स्नानाच्छताश्वमेधानां फलं प्राप्नोति मानवः ।। ९७ ।।
स्नात्वा तत्र तु वैशाखे गोसहस्रफलं भवेत् ।।
माघमासे पुनः स्नात्वा प्रयागस्नानजं फलम् ।।९८।।

कार्त्तिके मासि यः स्नाति तुलासंस्थे दिवाकरे ।।
विधिना नियतः सोऽपि मुक्तिभागी न संशयः ।। ९९ ।।
यस्त्रिरात्रमुषित्वा तु नियते नियता शनः ।।
राजसूयफलं प्राप्य मोदते देववद्दिवि ।। १४५.१०० ।।
यज्ञस्तपोऽथवा दानं श्राद्धमिष्टस्य पूजनम् ।।
यत्किंचित्क्रियते कर्म तदनन्तफलं भवेत् ।। १०१ ।।
भूमे तस्यापराधांश्च सर्वानेव क्षमाम्यहम् ।।
गंगायमुनयोर्यद्वत्संगमो मर्त्त्यदुर्ल्लभः ।। १०२ ।।
तथैवायं देवनद्यो संगमः समुदाहृतः ।।
एतद्गुह्यं परं देवि मम क्षेत्रे वसुन्धरे ।। १०३ ।।
अहमस्मिन्महाक्षेत्रे धरे पूर्वमुखः स्थितः ।।
शालग्रामे महाक्षेत्रे भूमे भागवत प्रियः ।। १०४ ।।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।।
अन्तर्गुह्यं परं श्रेष्ठं यन्न जानन्ति मोहिताः ।। १०५ ।।
शिवो मे दक्षिणस्थाने तिष्ठन्वै विगतज्वरः ।।
लोकानां प्रवरः श्रेष्ठः सर्वलोकवरो हरः ।।१०६।।
तं ये विन्दन्ति ते देवि नूनं मामेव विन्दति ।।
ये मां विदन्ति देवेशि ते विदन्ति शिवं परम् ।।१०७।।
अहं यत्र शिवस्तत्र शिवो यत्र वसुन्धरे ।।
तत्राहमपि तिष्ठामि आवयोर्नान्तरं क्वचित् ।।१ ०८।।
शिवं यो वन्दते भूमे स हि मामेव वन्दते ।।
लभते पुष्कलां सिद्धिमेवं यो वेत्ति तत्त्वतः ।। १०९ ।।
एवमेतन्महाभागे क्षेत्रं हरिहरात्मकम् ।।
मृता येऽत्र गतिं यान्ति मम कर्मानुसारिणः ।।१४५.११०।।
मुक्तिक्षेत्रं प्रथमतो रुरुखण्डं ततः परम् ।।
संभेदो देवनद्योश्च त्रिवेणी च ततः परम् ।।१११।।
क्षेत्रं प्रमाणं विज्ञेयं गण्डकी सङ्गतं परम् ।।
एवं सा गण्डकी देवि नदीनामुत्तमा नदी ।।११२।।
गङ्गया मिलिता यत्र भागीरथ्या महाफला ।।
अपरं तन्महत्क्षेत्रं हरिक्षेत्रमिति स्मृतम् ।।११३।।
आदौ सा गण्डकी पुण्या भागीरथ्या च सङ्गता ।।
तस्य तीर्थस्य महिमा ज्ञायते न सुरैरपि ।।११४।।
एतत्ते कथितं भद्रे शालग्रामस्य सुन्दरि ।।

गण्डक्याश्चैव माहात्म्यं सर्वकल्मषनाशनम् ।।११५।।
पूर्वपृष्टं तया यच्च पुण्यं भागवतप्रियम् ।।
आख्यानानां महाख्यानं द्युतीनां परमा द्युतिः ।।११६।।
पुण्यानां परमं पुण्यं तपसां च महत्तपः ।।
गुह्यानां परमं गुह्यं गतीनां परमा गतिः ।।११७ ।।
महालाभस्तु लाभानां नास्त्यस्मादपरं महत् ।।
पिशुनाय न दातव्यं न शठाय गुरुद्रुहे ।।११८।।
ये च पापाः कृतघ्नाश्च द्विजदेवापराधिनः ।।
कुशिष्याय न दातव्यं न दद्याच्छास्त्रदूषके ।।१ १९।।
नीचाय न च दातव्यं ये न जानन्ति सेवितुम् ।।
सुशिष्याय च दातव्यं धीराय शुभ बुद्धये ।।१४५.१२०।।
लोभमोहमदाद्यैर्ये वर्जिताः पुण्यबुद्धयः ।।
य एतत्पठते नित्यं कल्यमुत्थाय मानवः ।।१२१।।
कुलानि तारितान्येवं सप्त सप्त च सप्त च ।।
एवं मरणकाले तु न कदाचिद्विमुह्यते ।।१२२।।
यदीच्छेत्परमां सिद्धिं मम लोकं स गच्छति ।।
क्षेत्रस्य शालग्रामस्य माहात्म्यं परमं मया ।।१२३।।
कथितं ते महादेवि किमन्यच्छ्रोतुमिच्छसि ।।१२४।।
इति श्रीवराहपुराणे भगवच्छास्त्रे शालग्रामक्षेत्रमाहात्म्यं नाम पंचचत्वारिंशदधिकशततमोऽध्यायः ।।
१४५।।

अथ रुरुक्षेत्रस्थहृषीकेशमाहात्म्यम् ।।

सूत उवाच ।।

शालग्रामस्य माहात्म्यं श्रुत्वा गुह्यं महौजसम् ।।
विस्मयं परमं गत्वा हृष्टा वचनमब्रवीत् ।। १ ।।

धरण्युवाच ।।

अहो क्षेत्रस्य माहात्म्यं यत्त्वया भाषितं हरे ।।
एतच्छ्रुत्वा महाभाग जातास्मि विगतज्वरा ।। २ ।।
रुरुषण्डमिति प्रोक्तं यत्त्वया परमार्च्चितम् ।।
रुरुर्नाम कथं को वा आसीत्पूर्वं जनार्दन ।। ३ ।।
यन्नाम्ना परमं क्षेत्रं हृषीकेश त्वयाश्रितम् ।।
कथयस्व जगन्नाथ यद्यनुग्राह्यता मयि ।। ४ ।।

श्रीवराह उवाच ।।

आसीत्पुरा महाभागो देवदत्त इति द्विजः ।।
भृगुवंशे समुत्पन्नो वेदवेदाङ्गपारगः ।।५।।
यज्ञविद्यासु कुशलो व्रतनिष्ठोऽतिथिप्रियः ।।
तत्राश्रमपदं पुण्यं पुण्यद्रुमलतान्वितम्।।६।।
शान्तैर्मृगगणैः कीर्णं कन्दमूलफलान्वितम् ।।
तत्र तीव्रं तपोऽतप्यद्देवदत्तो मुनीश्वरः ।।७।।
वर्षाणामयुतं साग्रं तत इन्द्रो व्यचिन्तयत् ।।
कामं वसन्तसहितं गन्धर्वान् स सखीन्पुनः ।। ८ ।।
उवाच मधुरं वाक्यं क्षुब्धेन्द्रियमनाः प्रभुः ।।
अहो सखायः किंचिन्मे महत्कार्यमुपस्थितम् ।। ९ ।।
तस्य मे चिन्तयानस्य यूयमेव परा गतिः ।।
भवत्प्रसादात्स्वस्थोऽहं निर्भयस्तद्विचिन्त्यताम् ।। 146.१० ।।
तदिन्द्रस्य वचः श्रुत्वा ते काममलयानिलाः ।।
प्रत्यूचुर्देवराजानमाज्ञापय निजं प्रियम् ।। ११ ।।
जितेन्द्रियस्यापि मनः कस्य संक्षोभयामहे ।।
कं वा सुतीव्रात्तपसो भ्रंशयामः सुपेशलम् ।। १२ ।।
आज्ञाप्रसादं ते लब्ध्वा वद शीघ्रं सुखी भव ।।
इत्युक्तः शतमन्युर्वै प्रत्युवाचाऽथ मानयन् ।। १३ ।।
तदैव मे गता चिन्ता भवतां दर्शनं यदा ।।
जातमेवाऽखिलं कार्यं मम तच्छृणुताखिलाः ।। १४ ।।
हिमशैले महारम्ये हृषीकेशाश्रितो मुनिः ।।

देवदत्त इति ख्यातस्तपस्यति महत्तपः ।।१५।।
जिघृक्षुर्मे पदं नूनं तत्तपो विनिवर्त्यताम् ।।
इत्युक्तास्ते तदाज्ञां वै गृहीत्वा शिरसा द्रुतम् ।। १६ ।।
प्रस्थानाय मतिं चक्रुः कामदेवपुरःसराः ।।
प्रस्थाप्याग्रे वसन्तं च मलयानिलमेव च ।। १७ ।।
ततः सुरपतिः शक्रः प्रम्लोचां नाम नामतः ।।
प्रशस्य प्रणयात्पूर्वं मानयन्निदमब्रवीत् ।। १८।।
गच्छ स्वस्तिमती देवि विजयाय मुनेर्भुवि ।।
यत्राश्रमपदं तस्य देवदत्तस्य वै मुनेः ।। १९ ।।
ललितैः स्वैर्विलासैस्तं मोहयित्वा वशं कुरु ।।
यथा मत्प्रीतिरतुला त्वं मे कार्यकरी सदा ।।146.२०।।
तथा कुरुष्व भद्रं ते हृषीकेशसमीपतः ।।
इन्द्रस्याज्ञां समादाय ययौ तस्याश्रमं प्रति ।। २१ ।।
समीपोपवने रम्ये नानाद्रुमलताकुले ।।
मधुरालापबहुले कोकिलानां कलाकुले ।। २२ ।।
रसालमञ्जरीव्याप्तरसामोदालिसंकुले ।।
गुंजन्मत्तालिसन्नादश्रुतिश्रुतिधरान्विते ।। २३ ।।
गन्धर्वगीतसंमिश्रे मलयानिलशीतले ।।
सम्फुल्लपङ्कजवने सुनिर्मलजलाशये ।। २४ ।।
मुनिप्रभावसन्त्यक्तक्रौर्यस्थलजलाशये ।।
मधुरामोदमधुरे चित्तक्षोभविधायिनि ।।२५।।
प्रविश्य सा वरारोहा गीतं सुमधुरं जगौ ।।
यदा ध्यानादुपरतः समाधेर्विरताश्चिरात् ।।२६।।
गान्धर्वं प्रारभंस्ते तु गन्धर्वाः सुरसम्मताः ।।
तस्मिन्नेव क्षणे लब्ध्वाऽवसरं पंच सायकः ।। २७ ।।
विचकर्ष धनुः पौष्पं सायकान् समयूयुजत् ।।
संलक्ष्य तं मुनिं शान्तं भाविदैवबलात्कृतम् ।।२८।।
श्रुत्वा तन्मधुरं गीतं पञ्चमालापसुन्दरम् ।।
क्षुब्धचित्तः समभवत्स मुनिः संशितव्रतः ।।२९।।
चकर्ष च धनुः कामः पुनःपुनरतन्द्रितः ।।
देवव्रतोऽपि स मुनिः क्षुब्धात्मा नियतोऽपि सन्।।146.३०।।
विचचाराश्रमपदं पश्यन्सन्तुष्टमानसः।।
दूराद्ददर्श तन्वङ्गीं क्रीडन्तीं कन्दुकेन ताम्।।३१।।

दृष्ट्वैव तां तु चार्वंगीं विद्धः कामेन पत्रिणा ।।
तस्याः समीपमगमत्स्मयमानो महामुनिः ।।३२।।
सापि दृष्ट्वा देवदत्तं सज्जन्ती हरिणेक्षणा ।।
कटाक्षयन्ती सहसा लज्जमाना विगूहति ।। ३३ ।।
करेण कन्दुकं घ्नन्ती चञ्चलाक्षी सुपेशला ।।
स्रंसता केशपासेन गलत्पुष्पेण राजता ।। ३४ ।।
मनो हरन्ती तस्यर्षेः ललितैर्विभ्रमोद्भवैः ।।
एतस्मिन्नन्तरे तस्या दक्षिणः पवनोऽहरत्।।३५।।
वासः सूक्ष्मंगलन्नीवि कांचीदामगुणान्वितम् ।।
पुष्पबाणोऽप्यविध्यत्तं दृष्ट्वा ऽवसरमन्तिके ।।३६।।
सम्मोहितः स तु मुनिर्गत्वान्तिकमथाब्रवीत् ।।
का त्वं कस्यासि सुभगे वनेऽस्मिन्किञ्चिकीर्षसि ।। ३७ ।।
मादृशान्किं मृगयसे बाहुपाशेन वा मृगान् ।।
बद्ध्वा गृहीत्वा वामोरु किं वाऽस्मान्कर्त्तुमिच्छसि।।३८।।
सर्वथाऽस्मांस्तवाधीनान् यद्यद्वा कारयिष्यति ।।
तत्तत्कुर्मो वयं नित्यं तदधीनाः स्म सर्वथा ।।३९।।
अथ तां हसमानां च गृहीत्वा दक्षिणे करे।।
समालिङ्ग्य विषज्जंतीं रमयामास मोहितः ।।146.४०।।'
रममाणस्तया सार्द्धं भुञ्जन्भोगान् मनोरमान् ।।
तपःप्रभावोपनतान्दिवारात्रमतंद्रितः ।।४१ ।।
बहूनहर्गणानेवं रममाणो यदृच्छया ।।
सुप्तोत्थित इवाकस्माद्विवकेन समन्वितः ।।४२।।
निर्वेदं प्राप्तवान्सद्यस्तदोवाच भृशातुरः ।।
अहो भागवती माया ययाहं भृशमोहितः ।। ४३ ।।
जानन्नपि तपोभ्रंशं प्राप्तो दैवबलात्कृतः ।।
अग्निकुण्डसमा नारी घृतकुम्भसमः पुमान् ।।४४।।
इति प्रवादो मूर्खाणां विचारान्महदन्तरम् ।।
घृतकुम्भोऽग्नि योगेन द्रवते न तु दर्शनात् ।।४५।।
पुमांस्त्रीदर्शनादेव द्रवते यद्विमोहितः ।।
नापराधस्त्वतो नार्याः स्वयं यदजितेन्द्रियः ।।४६।।
इत्युक्त्वाऽसौ निवृत्तात्मा विससर्ज सुराङ्गनाम् ।।
प्रम्लोचा दैववशगो मनस्येतदचिन्तयत् ।। ४७ ।।
उपसर्गो महानत्र तपसो भ्रंशकारकः ।।

त्यक्त्वाश्रममिमं चान्यत्स्थानं गत्वा समाहितः ।। ४८ ।।
तपस्तीव्रं समास्थाय शोषयिष्ये कलेवरम् ।।
इति निश्चित्य मनसा गत्वा भृग्वाश्रमं प्रति ।।४९।।
गण्डकीसंगमे स्नात्वा सन्तर्प्य पितृदेवताः ।।
विष्णुं शिवं च सम्पूज्य तपःस्थानं विचिंतयन् ।।146.५० ।।
पश्यन्भृग्वाश्रमं रम्यमुत्तरं गतवान् शनैः ।।
गण्डक्याः पूर्वभागे तु विविक्तं विजनं शुभम् ।। ५१ ।।
दृष्ट्वा तीरेषु विश्रांतस्तपोभूमिमचिंतयत् ।।
भृगुतुंगं समासाद्य शङ्कराराधने रतः ।।५२।।
अतप्यत तपो घोरं शिवदर्शनलालसः ।।
अथ दीर्घेण कालेन सन्तुष्टः स महेश्वरः ।। ५३ ।।
लिंगरूपधरः साक्षादुपर्यपि तथा ह्यधः ।।
तिर्यक् च जलधाराभिर्युक्तस्तत्तापशांतिकृत् ।। ५४ ।।
उवाच च प्रसन्नात्मा मुने पश्य च मां शिवम् ।।
मामेवावेहि विष्णुं त्वं मा पश्यस्वांतरं मम ।। ५५ ।।
पूर्वमन्तरभावेन दृष्टवानसि यन्मम ।।
तेन विघ्नोऽभवद्येन गलितं त्वत्तपो महत् ।। ५६ ।।
आवामेकेन भावेन पश्यंस्त्वं सिद्धिमाप्स्यसि ।।
तपःप्रभावाल्लिंगानि प्रादुर्भूतानि यत्र वै ।।५७।।
समंगमिति विख्यातमेतत्स्थानं भविष्यति ।।
स्नात्वाऽत्र गण्डकीतीर्थे मम लिंगानि योऽर्च्चयेत् ।।५८।।
तस्य योगफलं सम्यग्भविष्यति न संशयः ।।
इति दत्त्वा वरं शम्भुस्तत्रैवान्तरधीयत ।।५९।।
देवदत्तोऽपि स मुनिः सम्प्राप्य ज्ञानमुत्तमम् ।।
शिवोपदिष्टमार्गेण सायुज्यं परमं गतः ।। 146.६० ।।
प्रम्लोचापि मुनेर्गर्भं सम्प्राप्याश्रममन्तिकात् ।।
प्रसूतां कन्यकां त्यक्त्वा स्वर्गमेव जगाम ह ।। ६१ ।।
पुनर्जातमिवात्मानं मन्यमाना शुचिस्मिता ।।
सापि कन्या मृगैस्तत्र रुरुभिर्वर्द्धिता सती ।। ६२ ।।
रुरुरित्वेव विख्याता पितुरेवाश्रमे स्थिता ।।
युवभिः प्रार्थ्यमानापि चित्ते कञ्चन नाध्यगात् ।।५३।।
ततः सुनिश्चयं कृत्वा तपसे धृतमानसा ।।
चिन्तयन्ती जगन्नाथं भगवन्तं रमापतिम् ।।६४।।

मासे सा प्रथमे बाला फलाहारपरायणा ।।
एकांतरं दिनं प्राप्य द्वितीये त्रिदिनान्तरे ।। ६५।।
तृतीये पंचम दिने चतुर्थे सप्तमांतरे ।।
पञ्चमे नवरात्रेण षष्ठे पञ्चदशाहके ।। ६६ ।।
मासेन सप्तमे चैव शीर्णपर्णाशनाष्टमे ।।
त्यक्त्वा तान्यपि सा बाला वाय्वाहारा बभूव ह ।। ६७ ।।
सैवं वर्षशतं स्थित्वा हरावेकाग्रमानसा ।।
समाधिना समा भूत्वा स्थाणुवन्निश्लाऽभवत् ।। ६८ ।।
द्वन्द्वानि नाविदच्चापि आत्मभूतान्तरं विना ।।
परां काष्ठां समापन्ना प्रकाशमयकांतिधृक् ।। ६९ ।।
तत्तेजसा वृतं सर्वं तदा दृष्ट्वा वसुन्धरे ।।
अहं विस्मयमापन्नस्तस्याः प्रत्यक्षतां गतः ।। 146.७० ।।
सन्निरुद्धेन्द्रियग्रामा नाचक्षत बहिःस्थितम् ।।
तदा हृषीकाण्याविश्य संहृत्य स्वं हृदो बहिः ।। ७१ ।।
स्थितोऽहं वसुधे देवि अक्ष्णोः प्रत्यक्षतां गतः ।।
हृषीकाणि नियम्याहं यतः प्रत्यक्षतां गतः ।। ७२ ।।
हृषीकेश इति ख्यातो नाम्ना तत्रैव संस्थितः ।।
सा मां यदैव नापश्यदुन्मील्य नयने ततः ।। ७३ ।।
बहिः स्थितं च मां दृष्ट्वा प्रणनाम कृताञ्जलिः ।।
गद्गदस्वरसंयुक्ता अश्रुक्लिन्नविलोचना ।। ७४ ।।
रोमांचिततनुश्चासीत्कदम्बमुकुलाकृतिः ।।
तथा भूतां तु तां दृष्ट्वा प्रावोचमहमङ्गनाम् ।। ७९ ।।
अयि बाले विशालाक्षि तुष्टोऽहं तपसस्तव ।।
वरं याचय मत्तस्त्वं यत्ते मनसि वर्त्तते ।। ७६ ।।
अदेयमपि ते दद्मि यदन्येषां सुदुर्ल्लभम् ।।
इति श्रुत्वा प्रभोर्वाक्यं प्रणम्य च पुनः पुनः ।। ७७ ।।
स्तुत्वा तं देवदेवेशं प्रबद्धकरसंपुटा ।।
ददासि चेद्वरं मह्यं देवदेव जगत्पते ।। ७८ ।।
अनेनैव स्वरूपेण भगवन्स्थातुमर्हसि ।।
स्थितोऽस्म्यत्रैव भद्रं ते अपरं वरयाशु मे ।। ७९ ।।
दुर्लभं ते वरं दद्मि तपसाहं प्रतोषितः ।।
इत्युक्त्वा मां प्रणम्याह रुरुः सा संशितव्रता ।। 146.८० ।।
यदि प्रसन्नो देवेश तदा मां कुरु पावनीम् ।।

मन्नाम्ना क्षेत्रमेतच्च ख्यातं भवतु नान्यथा ।। ८१ ।।
तामहं देवि सुभगे प्रावोचं पुनरेव हि।।
तीर्थानां परमं तीर्थं तव देहो भवत्वयम् ।। ८२ ।।
तव नाम्नां च विख्यातमेतत्क्षेत्रं भविष्यति ।।
तव तीर्थे कृतस्नानस्त्रिरात्रोपोषितो नरः।।८३।।
विलोक्य मां भवेत्पूतो मम वाक्यान्न संशयः ।।
ब्रह्महत्यादि पापानि ज्ञात्वाऽज्ञात्वा कृतान्यपि ।। ८४ ।।
यास्यन्ति विलयं क्षिप्रमेवमेतन्न संशयः ।।
इति दत्त्वा वरांस्तस्यै तत्रैवान्तर्हितः स्थितः ।। ८९ ।।
सापि कालेन सञ्जाता तीर्थभूता तथाऽभवत् ।।
एतत्ते कथितं देवि रुरुमाहात्म्यमुत्तमम् ।। ८६ ।।
रुरुक्षेत्रस्य प्रभवमेतद्गुह्यं परं मम ।।८७।।
इति श्रीवराहपुराणे भगवच्छास्त्रे रुरुक्षेत्रऋषीकेशयोर्माहात्म्यं नाम
षट्चत्वारिंशदधिकशततमोऽध्यायः।।१४६।।

अथ गोनिष्क्रमणमाहात्म्यम्।।

धरण्युवाच ।।

अत्याश्चर्यं श्रुतं ह्येतद्गुरुक्षेत्रसमुद्भवम् ।।

हृषीकेशस्य महिमा त्वया य उपवर्णितः ।। १ ।।

अन्यच्च यत्परं गुह्यं क्षेत्रं परमपावनम् ।।

वक्तुमर्हसि देवेश परं कौतूहलं मम ।। २ ।।

श्रीवराह उवाच ।।

शृणु भूमे प्रयत्नेन कारणं परमं मम ।।

गुह्यमस्त्यपरं चैव हिमशृङ्ग शिलोच्चये ।। ३ ।।

गोनिष्क्रमणकं नाम गावो यत्र प्रतारिताः ।।

यथा निष्क्रमणं प्राप्य सुरभीणां वसुन्धरे ।।४।।

सप्ततिर्यत्र कल्पानि औौर्वो यत्र प्रजापतिः ।।

तपश्चचार परमं मम मायाबलान्वितः ।। ५ ।।

तस्यैवं वर्त्तमानस्य याति काले महत्तरे ।।

एवं हि तप्यमानस्य सर्वलोकस्य संशयः ।। ६ ।।

न वरं प्रार्थयत्येष लाभालाभसमन्वितः ।।

सूचकोऽपि न विद्येत बलिकर्मसु संयतः ।। ७ ।।

अथ दीर्घस्य कालस्य कश्चिद्ब्रह्मयतिस्तदा ।।

तपस्तपस्यति मुनौ तस्मिन्शैलोच्चये धरे ।।८।।

ईश्वरोऽपि महाभागे तत्पार्श्वं समुपागतः ।।

गोनिष्क्रमेति विख्याते तस्मिंस्तीर्थे महौजसि ।। ९ ।।

तत्र त्वौर्वो महाभागे तप्यते समदर्शनः ।।

पद्मानां कारणादौर्वो गंगाद्वारमुपागतः ।। 147.१० ।।

तन्निर्गतं ततो ज्ञात्वा औौर्वं सर्वे तपस्विनः ।।

महेश्वरो महातेजाः सम्भ्रमात्समुपागतः ।। ११ ।।

फलपुष्पसमाकीर्णा लक्ष्मीश्चैवोपजायते ।।

आश्रमं रूपसम्पन्नं फलपुष्पोपशोभितम्।।१२।।

तच्च वै भस्मसाद्भूतं महारुद्रस्य तेजसा।।

दग्ध्वा तं चाश्रमं पुण्यमौरवस्य सुमहत्प्रियम्।।१३।।

ईश्वरोऽपि ततः प्राप्तः शीघ्रमेव हिमालयम् ।।

एतस्मिन्नन्तरे देवि गृह्य पुष्पकरण्डकम् ।।१४।।

आश्रमं समनुप्राप्त औौर्वोऽपि मुनिपुंगवः ।।

शान्तो दान्तः क्षमाशीलः सत्यव्रतपरायणः ।। १५ ।।

दृष्ट्वा स्वमाश्रमं दग्धं बहुपुष्पफलोदकम् ।।
मन्युना परमाविष्टो दुःखनेत्रपरिप्लुतः ।। १६ ।।
उवाच क्रोधरक्ताक्षो वचनं निर्दहन्निव ।।
येनैष चाश्रमो दग्धो बहुपुष्पफलोदकः ।। १७ ।।
सोऽपि दुःखेन सन्तप्तः सर्वलोकान्भ्रमिष्यति ।।
एवमौर्वेण दत्ते तु शापे तस्मिन्महौजसि ।। १८ ।।
महाभयात्तु लोकानां न कश्चित्पर्यवारयत् ।।
तत्क्षणादेव देवेशि ईशोऽपि जगतो विभुः ।। १९ ।।
महादाहेन सन्तप्तः शम्भुर्देवीमुवाच ह ।।
औौर्वस्य तु तपो दृष्ट्वा भीतैर्देवैरुदाहृतम् ।। 147.२० ।।
दह्यते स्म जगत्सर्वं स तु किञ्चिन्न चेच्छति ।।
को वा प्रति विधिस्तत्र यथा सर्वस्य सम्भवेत् ।। २१ ।।
एवमुक्ते मया क्रोधादीक्षितस्तस्य चाश्रमः ।।
दग्धोऽभवत्क्षणेनैव वयं तस्माद्विनिर्गताः ।। २२ ।।
एतद्दुःखेन सन्तप्तो मन्युना च परिप्लुतः ।।
औौर्वः शशाप रोषेण तेन तप्ता वयं शिवे ।।२३।।
ततोऽभ्रमद्विरूपाक्षः शं न प्राप्नोति कर्हिचित् ।।
अहं च परितप्तोऽस्मि आत्मत्वादीश्वरस्य च ।। २४ ।।
तेन दाहेन सन्तप्तो न शक्नोमि विचेष्टितुम् ।।
पार्वत्या च ततः प्रोक्तः आवां नारायणं प्रति ।। २५ ।।
गच्छावस्तस्य वाक्येन सुखं यत्र भविष्यति ।।
ततो नारायणं गत्वा सह तेन तमौर्वकम् ।। २६ ।।
विज्ञापयामो रुद्रस्य शापोऽयं विनिवर्त्तताम् ।।
सन्तप्ताः स्म वयं सर्वे तस्माच्छापं निवर्त्तय ।। २७ ।।
और्वोऽप्युवाच नोक्तं मे अनृतं तु कदाचन ।।
सुरभीगणमानीय गत्वैतं स्नापयन्तु वै ।। २८ ।।
रुद्रशापो निवृत्तः स्यात्तेनैव किल नान्यथा ।।
एतस्मिन्नन्तरे देवि मया गावोऽवतारिताः ।। २९ ।।
सप्तसप्ततिः कल्याणि सौरभेया महौजसः ।।
तेनाप्लावितदेहाश्च परां निर्वृतिमागताः ।। 147.३० ।।
तच्च गोनिष्क्रमं नाम तीर्थं परमपावनम् ।।
तत्र स्नानं तु कुर्वीत एकरात्रोषितो नरः ।।३१।।
गोलोकं च समासाद्य मोदते नात्र संशयः ।।

अथात्र मुञ्चते प्राणान्कृत्वा कर्म सुदुष्करम् ।।३२।।
शंखचक्रगदायुक्तो मम लोके महीयते ।।
पंच धाराः पतन्त्यत्र मूले मूलवटस्य हि ।। ३३ ।।
तत्र स्नानं प्रकुर्वीत पंचरात्रोषितो नरः ।।
पंचानामपि यज्ञानां फलमाप्नोति मानवः ।। ३४ ।।
अथात्र मुञ्चते प्राणान्कृत्वा कर्म सुदुष्करम् ।।
पंचयज्ञफलं भुक्त्वा मम लोकं प्रपद्यते।।३५।।
अस्ति पंचपदं नाम तस्मिन्क्षेत्रे परं मम।।
मम पूर्वेण पार्श्वेण दृढाः पंच महाशिलाः।।३६।।
मत्पूर्वां दिशमाश्रित्य तत्र ब्रह्मपदद्वयम् ।।
मध्ये तु तस्य कुण्डस्य शिला विस्तीर्णसंश्रिता ।। ३७ ।।
ऊर्द्ध्वं नालपरीणाहं तत्र विष्णुपदं मम ।।
तत्र स्नानं तु कुर्वीत पंचरात्रोषितो नरः ।। ३८ ।।
यांति शुद्धांस्तु लोकांस्ते ये च भागवतप्रियाः ।।
अथात्र मुञ्चते प्राणान्युक्तः पञ्चपदे नरः ।। ३९ ।।
विमुक्तः सर्वसंसारान्मम लोकं च गच्छति ।।
ततो ब्रह्मपदं नाम क्षेत्रं गुह्यं परं मम ।। 147.४० ।।
यत्र धारा पतत्येका पश्चिमां दिशमाश्रिता ।।
तत्र स्नानं तु कुर्वीत एकरात्रोषितो नरः ।। ४१ ।।
ब्रह्मलोकमवाप्नोति ब्रह्मणा सह मोदते ।।
कौमुदस्य तु मासस्य शुक्लपक्षस्य द्वादशी ।। ४२ ।।
यज्ञानां वाजपेयानां फलं प्राप्नोति मानवः ।।
अथात्र मुंचते प्राणान्मम कर्मसु निष्ठितः ।। ४३ ।।
वाजपेयफलं भुक्त्वा मम लोकं प्रपद्यते ।।
अस्ति कोटिवटं नाम तस्मिन् क्षेत्रे परं मम ।। ४४ ।।
पंचक्रोशं ततो गत्वा वायव्यां दिशि संस्थितः ।।
तत्र स्नानं तु कुर्वीत षष्ठकालोषितो नरः ।। ४५ ।।
बहुयज्ञस्य कोटीनां फलं प्राप्नोति निष्कलम् ।।
अथात्र मुंचते प्राणान्भूमे कोटिवटे शुभे ।।४६।।
यज्ञकोटिफलं भुक्त्वा मम कोटिं प्रपद्यते ।।
अस्ति विष्णुसरो नाम तस्मिन् क्षेत्रे परं मम ।। ४७ ।।
पूर्वोत्तरेण पार्श्वेन पंचक्रोशं न संशयः ।।
मत्सरः पद्मपत्राक्षि आगाधं परिसंस्थितम् ।। ४८ ।।

पंचक्रोशश्च विस्तारः पर्वतः परिमण्डलः ।।
तत्र भ्रमति यो भद्रे कुर्याच्चैव प्रदक्षिणम् ।। ४९ ।।
उपवासं त्रिरात्रं तु कृत्वा कर्म सुदुष्करम् ।।
यावन्ति भ्रममाणस्य पदानि ननु सुन्दरि ।। 147.५० ।।
तावद्वर्षसहस्राणि ब्रह्मलोके महीयते ।।
अथाऽत्र मुंचते प्राणान्स्वकर्मपरिनिष्ठितः ।। ५१ ।।
ब्रह्मलोकं समुत्सृज्य मम लोके महीयते ।।
तस्मिन् क्षेत्रे महाभागे आश्चर्यं शृणु सुन्दरि ।। ५२ ।।
गवां वै श्रूयते शब्दो मम कर्मसुखावहः ।।
अथात्र ज्येष्ठमासस्य शुक्लपक्षस्य द्वादशी ।। ५३ ।।
श्रूयते सुमहाञ्छब्दः स्वयमेतन्न संशयः ।।
एवं गोस्थलके पुण्ये महाभागवतः शुचिः ।।५४।।
करोति शुभकर्माणि शीघ्रं मुच्येत किल्बिषात् ।।
एवं तेन महाभागे ईश्वरेण यशस्विनि ।।५५।।
शापदाहो विनिर्मुक्तः सर्वैः सह मरुद्गणैः।।
एतद्गोस्थलकं नाम सर्वशान्तिकरं परम् ।।५६।।
कथितं देवि कात्स्न्र्येन तवानुग्रहकाम्यया।।
एषोऽध्यायो महाभागे सर्वमङ्गलकारकः ।। ५७ ।।
मम मार्गानुसाराणां मम च प्रीतिवर्द्धनः ।।
श्रेष्ठानां परमं श्रेष्ठं मङ्गलानां च मङ्गलम् ।। ५८ ।।
लाभानां परमो लाभो धर्माणां धर्म उत्तमः ।।
लभन्ते पठमाना वै मम मार्गानुसारिणः ।। ५९।।
तेजः श्रियं च लक्ष्मीं च सर्वकामान्यशस्विनि ।।
यावन्ति चाक्षराणि स्युरत्राध्याये मनस्विनि ।। 147.६० ।।
तावद्वर्षसहस्राणि मम लोके महीयते ।।
पतनं च न विद्येत पठमानो दिने दिने ।। ६१ ।।
तारितानि कुलान्येभिः सप्त सप्त च सप्त च ।।
पिशुनाय न दातव्यं न मूर्खाय शठाय च ।। ६२ ।।
देयं पुत्राय शिष्याय यश्च जानाति सेवितुम् ।।
एतन्मरणकाले तु न कदाचित्तु विस्मरेत् ।। ६३ ।।
श्लोकं वा यदि वा पादं यदीच्छेत्परमां गतिम् ।।
तत्क्षेत्रं तु महाभागे पंचयोजनमण्डलम् ।।६४ ।।
तिष्ठामि परया प्रीत्या दिशं पूर्वामुपाश्रितः ।।

पश्चिमेन वहेद्गङ्गां निष्कामेन वसुन्धरे ।। ६५ ।।
एवं रहस्यं गुह्यं च सर्वकर्मसुखावहम् ।।
एतत्ते परमं भद्रे गुह्यं धर्मसमन्वितम् ।। ६६ ।।
मम क्षेत्रं महाभागे यत्त्वया परिपृच्छितम् ।। ६७ ।।
इति श्रीवराहपुराणे भगवच्छास्त्रे गोनिष्क्रमण माहात्म्यं नाम सप्तचत्वारिंशदधिकशततमोऽध्यायः ।। १४७ ।।

अथ स्तुतस्वामिमाहात्म्यम् ।।
सूत उवाच ।।
गोनिष्क्रमणमाहात्म्यं श्रुत्वा गुह्यमनुत्तमम् ।।
विस्मयं परमं गत्वा सर्वरत्नविभूषिता ।।१।।
धरण्युवाच ।।
अहो गवां हि माहात्म्यं तव चैवं श्रुतं मया ।।
यच्छ्रुत्वाऽहं जगन्नाथ जातास्मि परिनिर्वृता ।। २ ।।
एवमेव परं गुह्यं ब्रूहि नारायण प्रभो ।।
अस्मात्क्षेत्रात्परं देव यदि क्षेत्रं विशिष्यते ।। ३ ।।
श्रीवराह उवाच ।।
अहं नारायणो देवः सर्वधर्मव्यपाश्रयः ।।
मात्सर्यं चैव मे नास्ति तेनाहं परमः प्रभुः ।।४।।
एतच्छास्त्रं महाभागे प्रयुक्तं लीलया मया ।।
वराहरूपमादाय सर्वभागवतप्रियम् ।। ५ ।।
धरण्युवाच ।।
यथा यथा भाषसि धर्मकारणमिदं वचो धर्मविनिश्चयं महत् ।।
तथा तथा देव वराऽप्रमेयं हृद्यं मनो भावयसे जनार्दन ।। ६ ।।
ततो महीवचः श्रुत्वा धर्मश्रेष्ठी महामनाः ।।
वराहरूपी भगवान्प्रत्युवाच वसुन्धराम् ।। ७ ।।
श्रीवराह उवाच ।।
साधु भूमे महाभागे मम कर्मव्यवस्थिते ।।
कथयिष्याम्यहं ह्येवं गुह्यं लोकसुखावहम् ।। ८ ।।
स्तुतस्वामीति विख्यातं गुह्यं क्षेत्रं परं मम ।।
ह्यपरं युगमासाद्य तत्र स्थास्यामि सुन्दरि ।।९।।
पुत्रोऽहं वसुदेवस्य देवक्या गर्भसम्भवः।।
वासुदेव इति ख्यातः सर्वदानवसूदनः ।।148.१०।।
पञ्च तस्य सुशिष्याश्च भविष्यन्ति विचक्षणाः ।।
ऋषयो धर्मसंयुक्ता मत्प्रसादाद्बलाश्रिताः ।। ११ ।।
ते मां संस्थापयिष्पन्ति धर्ममूर्त्तिं महीं गतम् ।।
शाण्डिल्यो जाजलिश्चैव कपिलश्चोपसायकः ।। १२ ।।
भृगुश्चैव महाभागे मम मागार्नुसारिणः ।।
ते च प्रसन्नमनस आत्मदृष्टान्तदर्शिनः।।१३।।
स्वयं ज्ञानप्रभावेण भासयिष्यन्ति मां सदा।।

सङ्कर्षणो वासुदेवो प्रद्युम्नो ह्यनिरुद्धकः ।।१४।।
गच्छता बहुकालेन मम कर्मपरायणः ।।
ततो दीर्घेण कालेन इज्यापूर्वस्थितेन च ।। १५ ।।
वरं तेषां प्रदास्यामि यो यस्य हृदि संस्थितः ।।
ते प्रवक्ष्यन्ति मां देवि आत्मशास्त्रव्यवस्थिताः ।। १६ ।।
आत्मशास्त्रं प्रतिष्ठेत यत्र धर्मः सुनिष्ठितः ।।
भवत्वेतन्निश्चयेन न तु मिथ्या कदाचन ।। १७ ।।
तव देव प्रसादेन इहलोकः प्रवर्तताम् ।।
तानप्येवं वदिष्यामि शिष्याय भवतां प्रियम् ।। १८ ।।
भविष्यति न संदेहो यतो यूयं मम प्रियाः ।।
सुशिष्या बाढमित्येवं भविष्यन्ति न संशयः ।। १९ ।।
तदेते प्रवदिष्यन्ति सर्वभागवतप्रियम् ।।
यथा च मथ्यमानाद्वै दध्नश्चोद्ध्रियते घृतम् ।। 148.२० ।।
एवं सर्वेषु शास्त्रेषु वाराहं घृतसम्मितम् ।।
वाराहं ज्ञानमुत्सृज्य महाभागं महौजसम् ।। २१ ।।
एवं समं मया चैव ह्यात्मना परिभाषितम् ।।
ते प्रणामं करिष्यन्ति सिद्धिं प्राप्स्यन्ति वै पराम् ।। २२ ।।
महाज्ञानमिदं सूक्ष्मं भूमे भक्तेषु दृश्यते ।।
शास्त्राणां परमं शास्त्रं सर्वसंसारमोक्षणम् ।। २३ ।।
किञ्चिदन्यत्प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।।
शास्त्रमेतन्महाभागे स्थूलकर्म महौजसम् ।। २४ ।।
केचित्तरन्ति ज्ञानेन केचित्कर्मणि निष्ठिताः ।।
केचिद्यथेष्टं सुश्रोणि केचिद्दानेन कर्मणा ।। २५ ।।
केचिद्योगबलं भुक्ता पश्यन्ति मम संस्थितम् ।।
विधिपूर्वं तु मे किञ्चिन्नराः पश्यन्ति निष्ठिताः ।। २६ ।।
सर्वधर्मकराः केचित्सर्वाशाः सर्वविक्रयाः ।।
ते मां पश्यन्ति वै भूमे एकचित्त व्यवस्थिताः ।। २७ ।।
एवमेतन्महाशास्त्रं देवि संसारमोक्षणम् ।।
मम भक्तव्यवस्थायै प्रयुक्तं परमं प्रियम् ।। २८ ।।
ते तथा च प्रवक्ष्यन्ति यच्च यस्याभिरोचते ।।
अन्यथान्यस्य दृष्टानामृषिभिर्यत्प्रयोजितम् ।। २९ ।।
तद्युगस्य प्रभावेण भूमे कुर्वन्ति मानवाः ।।
तैः स्वशिष्यैः समं देवि ये शास्त्रविनियोजिताः ।।148.३०।।

मत्प्रसादेन ते सर्वे सिद्धिं यास्यन्ति मत्पराम् ।।
मम शिष्येषु येषां च मात्सर्योपहतात्मनाम् ।।३१।।
मच्छास्त्रे च भवेद्दोषस्तेषामत्र पुनर्भवः ।।
मात्सर्यं ये च कुर्वन्ति मद्धर्मपरमे जने ।।३२।।
तेषां नायं परो लोको मात्सर्योपहतात्मनाम् ।।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।। ३३ ।।
मम मार्गानुसारेण परं गुह्यं मम प्रिये ।।
शास्त्रवन्तो विनीताश्च बहुदोषविवर्विताः ।। ३४ ।।
ते तु मात्सर्यदोषेण नष्टाचाराः पतन्त्यधः ।।
मात्सर्यं सर्वनाशाय मात्सर्यं धर्मनाशकम् ।। ३९ ।।
यस्तु मात्सर्यसंयुक्तो न स पश्यति मां क्वचित् ।।
बहुकर्मसमायुक्ता दानाध्ययननिष्ठिताः ।।३६।।
तपसा ज्ञानयुक्ता वा नित्यं कर्मसु चोद्यताः ।।
अनेन हि स्वभावेन मात्सर्यं चैव कुर्वते ।।३७।।
न ते पश्यन्ति मां भूमे मायया परिदूषिताः ।।
न कर्त्तव्यं ततः सर्वैर्मात्सर्यं धर्मघातकम् ।।
मम शास्त्रपरेणेह यदीच्छेत्परमां गतिम् ।। ३८ ।।
एतद्गुह्यं महाभागे न जानन्ति मनीषिणः ।।
मात्सर्यस्य तु दोषेण बहवो निधनं गताः ।। ३९ ।।
एतच्छास्त्रं महाभागे प्रयुक्तं विधिना मया ।।
वराहरूपमादाय सर्वभागवतप्रियम् ।।148.४०।।
तत्राश्चर्यं महाभागे शृणु भूतगिरौ मम ।।
आयसी प्रतिमा तत्र ह्यभेद्या चैव दृश्यते।।४१।।
ब्रुवन्ति केचित्कांस्येति आयसीत्यपरेऽब्रुवन् ।।
पाषाणीत्यपरे केचिदन्ये वज्रमयीति च ।। ४२ ।।
ऊर्द्ध्वं वा यदि वाऽधो वा ये कुर्वन्ति ममार्चनम् ।।
तथापि मां संस्पृशन्ति शिरोमध्ये तु सुन्दरि ।। ४३ ।।
ये तु पश्यन्ति मां भूमे मणिपूरगिरौ स्थितम् ।।
स्तुवन्त्याचार्यवन्तश्च मत्प्रसादत्सु संयताः ।।४४।।
आचार्याणां गुणान्भुक्त्वा मम कर्मपथे स्थिताः ।।
सर्वकिल्बिषमुक्ताश्च यान्ति ते परमां गतिम् ।। ४५ ।।
तस्मिन्क्षेत्रे महाभागे अस्ति गुह्यं परं मम ।।
पंचारुमेति विख्यातमुत्तरां दिशमाश्रितम् ।।४६।।

तत्र स्नानं प्रकुर्वीत पंचकालोषितो नरः ।।
मोदते नन्दने दिव्ये ह्यप्सरोभिः समाकुले ।। ४७ ।।
अथात्र मुंचते प्राणान्कृतकृत्यो भवेन्नरः ।।
नन्दनं वनमुत्सृत्य मम लोकं च गच्छति ।।४८।।
भृगुकुण्डेति विख्यातमत्र गुह्यं परं मम ।।
मम दक्षिणपार्श्वे तु अदूरादर्धयोजनात् ।। ४९ ।।
तत्र स्नानं तु कुर्वीत मम मार्गानुसारकः ।।
भूपृष्ठे न तु जायेत कालेन विजितेन्द्रियः ।। 148.५० ।।
ध्रुवो यत्र तु तिष्ठेत मेरुशृंगे शिलोच्चये ।।
तत्र मोदति सुश्रोणि अप्सरोभिर्यथासुखम् ।।५१।।
अथात्र मुंचते प्राणान् मम कर्मपथे स्थितः ।।
ध्रुवलोकं परित्यज्य मम लोके महीयते ।। ५२ ।।
मणिकुण्डेति विख्यातं तत्र गुह्यं परं मम ।।
मणयो यत्र दृश्यन्ते अनेकालयसंस्थिताः ।। ५३ ।।
अगाधं तं ह्रदं भद्रे देवानामपि दुर्लभम् ।।
विस्मयं किं पुनस्तत्र मलयश्चंचलः स्थितः ।। ५४ ।।
तत्र स्नानं प्रकुर्वीत पंचकालोषितो नरः ।।
रत्नभागी भवेद्वीरो राजलक्षणसंयुतः ।। ५५ ।।
अथात्र मुंचते प्राणान्मम कर्मपथे स्थितः ।।
छित्त्वा वै सर्वसंसारं मम लोकं प्रपद्यते ।। ५६ ।।
सुगुह्यं पूर्वपार्श्वेन मम क्षेत्रस्य सुन्दरि ।।
अदूरतस्त्रिकोशेन परिमाणं विधीयते ।।५७।।
तत्र स्नानं तु कुर्वीत मम लोकं स गच्छति ।।
धूतपापेति विख्यातं तत्र गुह्यं परं मम ।। ५८ ।।
पंचक्रोशाददूराद्वै मम क्षेत्रस्य पश्चिमे ।।
तत्र कुण्डं महाभागे मम तद्रोचते जलम् ।। ५९ ।।
सुवर्णाभं मारकतमगाधं निर्मितं मया ।।
तत्र स्नानं प्रकुर्वीत पंचभक्तोषितो नरः ।।148.६०।।
धुन्वानो दुष्करं कर्म पंचभूतात्मनिष्ठितम् ।।
कृतोदकस्तत्र भद्रे धूतपापो यशस्विनि ।।६१।।
गत्वेन्द्रलोकं सुश्रोणि देवैः सह स मोदते ।।
अथात्र मुंचते प्राणान्मम कर्मपरायणः ।। ६२ ।।
इन्द्रलोकं परित्यज्य मम लोकं प्रपद्यते ।।

तत्राश्चर्यं महाभागे धूतपापे शृणुष्व मे ।। ६३ ।।
वर्त्तते च विशालाक्षि मणिपूरे गिरौ मम ।।
तावन्न पतते धारा यावत्पापं न धूयते ।। ६४ ।।
धूते पापे च सुश्रोणि धारा च पतति क्षितौ ।।
एवं तत्र विशालाक्षि वृक्षमश्वत्थमिश्रितम् ।। ६५ ।।
धूतपापं न प्रविशेत्प्रविशत्यमले नरे ।।
तस्मिन्क्षेत्रे वरारोहे समन्तात्पंचयोजने ।। ६६।।
यत्र तिष्ठाम्यहं देवि पश्चिमां दिशमाश्रितः ।।
तत्र चामलकं भद्रे अदूराद‍र्द्धयोजनात् ।। ६७ ।।
मम चैव प्रभावेण सर्वकालफलोदयम् ।।
तत्र कश्चिन्न जानाति पापकर्मा नराधमः ।। ६८।।
भक्तं भागवतं शुद्धं मम कर्मव्यवस्थितम् ।।
उपोष्य च त्रिरात्राणि श्रद्दधानो जितेन्द्रियः ।।६९।।
तत्र गत्वा वरारोहे उदिते च दिवाकरे ।।
अथ मध्याहनवेलायां यदि वाऽस्तंगतेऽपि वा ।। 148.७० ।।
एकचित्तेन गन्तव्यं धृतिं कृत्वा सुपुष्कलाम् ।।
यत्तत्र लभते भद्रे फलमामलकं शुभम् ।। ७१ ।।
पंचरात्रेण लभते तस्मिन्भूतगिरौ मम ।।
ततो हरिवचः श्रुत्वा सा मही संशितव्रता ।। ७२ ।।
पुनर्नारायणं तत्र प्रोवाच विनयान्विता ।।
स्तुतस्वामी श्रुतोऽसि त्वं तत्र स्थानानि यानि च ।। ७३ ।।
एतन्नामनिरुक्तिं त्वं वक्तुमर्हसि साम्प्रतम् ।। ७४ ।।
श्रीवराह उवाच ।।
भूमे हित्वा तु संसारान्ये चान्ये देवकण्टकाः ।।
द्वापरे युगमासाद्य यत्र स्थास्यामि सुन्दरि ।। ७५ ।।
ततोऽमरैश्च ब्रह्माद्यैर्बहुभिर्मन्त्रवादिभिः ।।
स्तुतिं कर्त्तुं समारब्धं मणिपूराश्रितस्य मे ।।७६ ।।
ततो मां नारदो देवि असितो देवलस्तथा ।।
पर्वतश्च महाभागे मम भक्त्या व्यवस्थितः ।। ७७ ।।
नाम कुर्वन्ति मे तत्र मणिपूरगिरौ ततः ।।
स्तुतस्वामीति विख्यातं मम कर्मव्यपाश्रितम् ।। ७८ ।।
एतत्ते कथितं भद्रे निरुक्तिकरणं मया ।।
त्वया पृष्टं हि यद्भद्रे सर्वभागवतप्रियम् ।। ७९ ।।

एतत्स्तुतगिरेर्देवि माहात्म्यं कथितं मया ।।
द्वापरं युगमासाद्य यत्र स्थास्यामि सुन्दरि ।।148.८०।।
एतानि भूमे गुह्यानि तत्र भूतगिरौ मम ।।
श्रद्धधानेन मर्त्त्येन श्रोतव्यं नात्र संशयः ।।८१।।
एतत्ते कथितं भद्रे सर्वधर्मव्यपाश्रयम् ।।
श्रीस्तुतस्वामिमाहात्म्यं किमन्यत्परिपृच्छसि।।८२।।
इति श्रीवराहपुराणे भगवच्छास्त्रे स्तुतस्वामिमाहात्म्यं नामाष्टचत्वारिंशदधिकशततमोऽध्यायः ।।
१४८ ।।

अथ द्वारकामाहात्म्यम् ।।

सूत उवाच ।।

श्रीस्तुतस्वामिमाहात्म्यं श्रुत्वा धर्मपरायणा ।।

परितुष्टमना देवी वाक्यमेतदुवाच ह।।१ ।।

धरण्युवाच।।

एतच्छ्रुत्वा तु माहात्म्यं देव देववर प्रभो ।।

मम चित्तस्य परमा जाता शान्तिरनुत्तमा ।।२।।

नाराचधारावरणासिधारी सुररिपुवधकारी धरणीधरः ।।

धृतशङ्खगदाब्जचक्रपाणिः स्वयमिह शास्त्रमुदावहत्प्रधानम्।।३।।

एवं हि गुणमाहात्म्यं स्तुतस्वामिनि मच्छ्रुतम् ।।

अस्माच्चेदं परं श्रेष्ठं तन्मे वद कृपानिधे ।।४ ।।

श्रीवराह उवाच ।।

एवं भूमे वरं श्रेष्ठे फुल्लपंकजमालिनि ।।

कथयिष्यामि चान्यत्ते गुह्यं पापभयापहम् ।।५ ।।

द्वापरं युगमासाद्य यादवानां कुलोद्वहः ।।

शौरीति तत्र विख्यातो भविष्यति पिता मम ।। ६ ।।

द्वारकेति च विख्याता पुरी तत्र स्थिताऽभवत् ।।

या च देवपुरी रम्या विश्वकर्मविनिर्मिता ।। ७ ।।

पंचयोजनविस्तारा दशयोजनमायता ।।

वसाम्यत्र वरारोहे शतपञ्चसमास्तथा ।। ८ ।।

भारावतरणं कृत्वा देवानां सुमहत्प्रियम् ।।

पुनरप्यागमिष्यामि स्वर्लोकं प्रति सुन्दरि ।। ९ ।।

भविष्यति वरारोहे ईश्वरः सदृशो मम।।

दुर्वासा इति विख्यातः शपिष्यति कुलं मम ।। 149.१० ।।

तस्य शापाभिसन्तापाद्द्वारकावासिनो धरे ।।

वृष्ण्यन्धकाश्च भोजाश्च गमिष्यन्ति यमक्षयम् ।। ११ ।।

चन्द्रपाण्डुरसंकाशो वनमाली हलायुधः ।।

हलेनाकृष्य नगरं समुद्रं गमयिष्यति ।। १२।।

नारायणवचः श्रुत्वा धर्मकामा वसुन्धरा ।।

उभौ तौ चरणौ गृह्य पुनः पप्रच्छ माधवी ।।१३।।

धरण्युवाच ।।

लोकनाथोऽसि सर्वेषां देव मायाकरण्डक ।।

शपिष्यति कथं तत्र दुर्वासास्तद्वदस्व मे ।। १४ ।।

श्रीवराह उवाच ।।
तत्र जाम्बवती नाम मम पत्नी भविष्यति ।।
रूपयौवनसम्पन्ना मम भोगसमन्विता ।। १५ ।।
तस्याः पुत्रो महाभागो रूपयौवनदर्पितः ।।
सांब इत्यभिविख्यातो ममैव सततं प्रियः ।। १६ ।।
तेनैव क्रीडमानेन कृत्वा गर्भमतथ्यतः ।।
स पृष्टः परमश्रेष्ठ ऋषिरेषा प्रसोष्यति ।। १७।।
पुत्रकामा त्वियं बाला मुने तत्प्रब्रवीहि मे ।।
साम्बोऽयमिति च ज्ञात्वा स मुनिः कोपमूर्च्छितः ।। १८ ।।
उवाच तर्हि ते गर्भान्मुसलं कुलनाशनम् ।।
येन वृष्ण्यन्धकाः सर्वे गमिष्यन्ति यमक्षयम् ।। १९ ।।
श्रुत्वा दुर्वाससः शापं ते च सर्वे कुमारकाः ।।
शापेन सन्तप्तधियो मामूचुर्भयसंयुताः ।।149.२० ।।
ततस्तानागतान्दृष्ट्वा कुमारान् पृष्टवानहम् ।।
ते च मामब्रुवन्सर्वे यथावृत्तं समुत्सुकाः ।। २१ ।।
तच्च तेषां वचः श्रुत्वा प्रोक्तवानस्मि तच्छृणु ।।
भविष्यति न सन्देहो दुर्वासा यदुवाच ह ।।२२।।
एवं ते कथितं भूमे वृष्ण्यादेः शापकारणम् ।।
तत्र स्थानानि मे भूमे कथ्यमानानि मे शृणु ।। २३ ।।
द्वारकायां महाभागे वैष्णवानां सुखावहे ।।
अस्ति पंचसरो नाम गुह्यं क्षेत्रं परं मम ।। २४ ।।
समुद्रतीरमुत्सृज्य मम कर्मसुखावहम् ।।
तत्र स्नानं तु कुर्वीत षष्ठकालोषितो नरः ।। २५ ।।
मोदते नाकपृष्ठे तु अप्सरोगणसंकुले ।।
अथात्र मुंचते प्राणान्क्षेत्रे पंचसरे मम ।।२६।।
देवलोकं समुत्सृज्य मम लोके महीयते ।।
प्लक्षो वै तत्र सुश्रोणि शतशाखो महाद्रुमः ।। २७ ।।
सुफलैः शोभनैः कुम्भाकृतिभिर्बहुभिः फलैः ।।
बहवस्तत्र गच्छन्ति लाभलौल्येन मानवाः।।२८।।
फलं न लभते कश्चिन्मुक्त्वा भागवतं नरम् ।।
लभन्ते ये फलं तत्र मुक्ताः पापेन कर्मणा ।। २९ ।।
ते लभन्ते परां सिद्धिं मम कर्मणि संस्थिताः ।।
प्रभासमिति विख्यातं तस्मिंस्तीर्थे परे मम ।। 149.३० ।।

मनुजा यं न पश्यन्ति रागलोभसमन्विताः ।।
तत्र स्नानं प्रकुर्वीत पंचभक्तोषितो नरः ।। ३१ ।।
मोदते सप्तद्वीपेषु गुह्यानि च स गच्छति ।।
अथ चेन्मुंचते प्राणान्प्रभाते गतकिल्बिषः ।।३२ ।।
सर्वसंगं परित्यज्य मम लोकं स गच्छति ।।
तत्राश्चर्यं महाभागे कथ्यमानं मया शृणु ।।३३।।
प्रभासे यत्र शृण्वन्ति सागरे न म (ग) रं प्रति ।।
मकरास्तत्र दृश्यंते भ्रममाणा इतस्ततः ।।३४।। ।।
न किंचिदपराध्यन्ति स्नायमाना जले ततः ।।
अथात्र प्रक्षिपेत्पिण्डान्प्रसन्ने सलिले नरः ।। ३५ ।।
असम्प्राप्ते च गृह्णन्ति एवमेतन्न संशयः ।।
पापकर्मरतस्यापि न गृह्णन्ति जलं प्रति ।।३६।।
धर्मात्मनां च गृह्णन्ति पिण्डमेव न संशयः ।।
पञ्चपिण्डमिति ख्यातं तस्मिन्गुह्यं परं मम ।।३७।।
अगाधस्याप्यपारस्य क्रोशविस्तार एव च ।।
तत्राभिषकं कुर्वीत पञ्चकालोषितो नरः ।। ३८ ।।
मोदते शक्रलोके स एवमेतन्न संशयः ।।
अथात्र मुञ्चते प्राणान्पञ्चकुण्डे यशस्विनि ।।३९।।
शक्रलोकं परित्यज्य मम लोकं स गच्छति ।।
तत्राश्चर्यं महाभागे कथ्यमानं मया शृणु ।।149.४० ।।
न पश्येत्पापकर्मा वै शुभकर्मैव पश्यति ।।
चतुर्विंशतिद्वादश्यां मध्याह्ने च दिवाकरे ।।४१ ।।
रौप्यं सुवर्णकं पद्मं दृश्यते नात्र संशयः ।।
क्षेत्रं संगमनं नाम तस्मिंस्तीर्थे परं मम ।।४२।।
चतुर्धाराः पतन्त्यत्र मणिपूरगिरिं श्रिताः ।।
तत्राभिषेकं कुर्वीत चतुर्भक्तोषितो नरः ।।४३।।
वैखानसेषु लोकेषु मोदते नाऽत्र संशयः ।।
अथात्र मुंचते प्राणान्मम् भक्तिपरायणः ।। ४४ ।।
त्यक्त्वा वैखानसाँल्लोकान्मम लोकं स गच्छति ।।
तत्रापि परमाश्चर्यं कथ्यमानं शृणुष्व मे ।। ४५।।
दृश्यन्ते यानि कुण्डेषु मणिपूरगिरौ तथा ।।
प्रक्षीयमाणे पापे तु नयते तज्जलं भुवि ।।४६।।
स्नायमानेषु पापेषु न पतेत्तद्यथा पुरा ।।

हंसकुण्डेति विख्यातं तस्मिन्क्षेत्रे परे मम ।।४७।।
धारा चैका पतत्यत्र मणिपूरगिरौ श्रिता ।।
तत्राभिषेकं कुर्वीत षष्ठकालोषितो नरः ।। ४८ ।।
मुक्तसंगो महाभागे मोदते वरुणालये ।।
अथाऽत्र मुंचते प्राणान् हंसकुण्डे वरानने ।।४९।।
वारुणं लोकमुत्सृज्य मम लोके महीयते ।।
तत्राश्चर्यं प्रवक्ष्यामि हंसकुण्डे यशस्विनि ।। 149.५० ।।
शुद्धाः पश्यन्ति मनुजाः पापकर्मा न पश्यति ।।
चतुर्विंशतिद्वादश्यां मध्याह्ने च दिवाकरे ।।५१।।
हंसाश्चैवात्र दृश्यन्ते चन्द्रकुन्दसमप्रभाः ।।
हंसान्पश्यति यस्तत्र भ्रममाणानितस्ततः ।।५२।।
लभन्ते ते परां सिद्धिं धरे नास्त्यत्र संशयः ।।
कदम्बमिति विख्यातं तस्मिन्क्षेत्रे परं मम ।।५३।।
वृष्णयो यत्र वै शुद्धाः संप्राप्ताश्च ममालयम् ।।
तत्राभिषेकं कुर्वीत चतुःकालोषितो नरः ।। ५६ ।।
मोदते ऋषिलोकेषु पुण्यात्मा वै न संशयः ।।
अथात्र मुञ्चते प्राणान्कृत्वा कर्म सुदुष्करम् ।। ५५ ।।
ऋषिलोकं परित्यज्य मम लोकं प्रपद्यते ।।
तत्राश्चर्यं महाभागे कथ्यमानं शृणुष्व मे ।। ५६ ।।
कदम्बात्पतते धारा तत्र पूर्वविनिःसृता ।।
स कदम्बो महाभागे माघमासस्य द्वादशी ।। ५७ ।।
पुष्पाणि वै प्रकटयत्युदयस्थे दिवाकरे ।।
ये वा लभन्ते तत्पुष्पं मम मार्गानुसारिणः ।। ५८ ।।
ते लभन्ते परां सिद्धिमेवमेतन्न संशयः ।।
चक्रतीर्थमिति ख्यातं तस्मिन्क्षेत्रे परं मम ।। ५९ ।।
पंच धाराः पतन्त्यत्र मणिपूरसमाश्रिताः ।।
तत्राभिषेकं कुर्वीत पंचकालोषितो नरः ।। 149.६० ।।
दशवर्षसहस्राणि स्वर्गलोके स मोदते ।।
अथात्र मुंचते प्राणाँल्लोभमोहविवर्जितः ।। ६१ ।।
सर्वान्स्वर्गान्समुत्सृज्य मम लोकं स गच्छति।।
तत्राश्चर्यं प्रवक्ष्यामि कथ्यमानं शृणुष्व मे ।। ६२ ।।
अन्यथैतन्न पश्यन्ति मम कर्मपरायणाः ।।
चतुर्विंशतिद्वादश्यामर्द्धरात्रे यशस्विनि ।। ६३ ।।

श्रूयते तत्र निर्घोषो मनःकर्णसुखावहः ।।
सुगन्धो वहते वायुर्बहुमाल्यसमन्वितः ।। ६४ ।।
दुर्ल्लभः पापिनां चैव सुलभः पुण्यकर्मिणाम्।।
तस्य चोत्तरपार्श्वेन अशोकश्च महाद्रुमः ।। ६५।।
पुष्प्यते सोऽथ तत्रापि सूर्ये चाभ्युदिते सति ।।
ये तत्र लभते पुष्पं मम मार्गानुसारिणः ।।६६।।
ते लभन्ते परां सिद्धिं एवं भूमे न संशयः ।।
अस्ति रैवतकं नाम तस्मिन् क्षेत्रे परं मम ।।६७।।
सर्वलोकेषु विख्यातं यत्र विक्रीडितं मया ।।
बहुगुल्मलताकीर्णं बहुपुष्पैश्च शोभितम् ।।६८।।
बहुवर्णशिलापङ्क्तिर्गुहाश्चापि दिशो दश ।।
वाप्यश्च कन्दराश्चैव देवानामपि दुर्ल्लभाः ।। ६९ ।।
तत्राभिषेकं कुर्वीत षष्ठकालोषितो नरः ।।
गच्छेत्तु सोमलोकं तु कृतकृत्यो न संशयः ।।149.७०।।
अथात्र मुंचते प्राणान्मम कर्मसु निष्ठितः ।।
सोमलोकं समुत्सृज्य मम लोकं प्रपद्यते ।। ७१ ।।
तत्राश्चर्यं महाभागे कथ्यमानं मया शृणु ।।
पश्यन्ति मनुजाः सर्वे धर्मकामा न संशयः ।। ७२ ।।
पतन्ति सर्ववृक्षाणां पत्राणि सुबहून्यपि ।।
एकं चापि न दृश्येत प्रसन्नं याति तज्जलम् ।।७३ ।।
स च पूर्वेण पार्श्वेन शोभते वै महाद्रुमः ।।
अपरो मम पार्श्वेन देवानामपि दुर्ल्लभः ।। ७४ ।।
पंचक्रोशसुविस्तारः शोभते वै महाद्रुमः ।।
पद्मैश्चैवोत्पलैश्छन्नं सुगन्धिकुसुमैः सह ।।७५।।
बहुमत्स्यजलाकीर्णं सर्वतस्तु फलान्वितम्।।
शिलातलागुहाच्छन्नं सुगन्धिकुसुमैः सह।। ७६ ।।
तत्राभिषेकं कुर्वीत अष्टभक्तोषितो नरः ।।
मोदते नन्दने दिव्ये अप्सरोभिः समन्विते ।। ७७ ।।
अत्राश्चर्यं महाभागे कथ्यमानं मया शृणु ।।
पश्यन्ति मनुजाः सर्वे धर्मकामा न संशयः ।। ७८।।
मध्याह्ने च पुनः पूर्णश्चार्द्धरात्रे समो वहेत्।।
वर्द्धते क्षीयते चैव यथैव च महोदधिः ।।७९ ।।
तस्य पश्चिमपार्श्वे तु बिल्वश्चैव महाद्रुमः ।।

चतुर्विंशतिद्वादश्यां स पुष्यति च निष्कलम् ।। 149.८० ।।
पश्येत्तु शुभकर्मा च पापकर्मा न पश्यति ।।
दृश्यते च महाभागे अस्तमेते दिवाकरे ।। ८१ ।।
यस्तत्र लभते पुष्पं मम मार्गानुसारकः ।।
स लभेत परां सिद्धिमेवं भूमे न संशयः ।। ८२ ।।
विष्णुसंक्रमणं नाम तस्मिन्क्षेत्रे परे मम ।।
विद्धोऽस्मि यत्र व्याधेन स्वमूर्त्तिं चास्थितः पुनः ।। ८३ ।।
तत्र कुंडं महाभागे मणिपूरगिरा श्रुतम् ।।
धारा चैका पतत्यत्र लाभालाभविवर्जितः ।। ८४ ।।
सूर्यलोकं समुत्सृज्य मम लोके महीयते ।।
तत्राश्चर्यं प्रवक्ष्यामि विष्णुं शत्रुगणेश्वरम् ।। ८५ ।।
पापिनां यस्तु दुर्दर्शः सुदृश्यः पुण्यचारिणाम् ।।
तस्य दक्षिणपार्श्वेन अश्वत्थो वै महाद्रुमः ।। ८६ ।।
चतुर्विंशतिद्वादश्यां मध्याह्ने तु दिवाकरे ।।
फलते स यथान्यायं सर्वभागवतप्रियम् ।। ८७ ।।
उच्चश्चैव विशालश्च मनोज्ञश्चैव शीतलः ।।
ये लभंते फलं तत्र मम मार्गानुसारिणः ।। ८८ ।।
ते लभन्ते परां सिद्धिमेवमेतन्न संशयः ।।
तस्मिन् क्षेत्रे महाभागे तिष्ठामि चोत्तरामुखः ।। ८९ ।।
सर्वभागवतप्रीतिं समुद्रतटमाश्रितः ।।
अहं रामेण सहितः सा चाप्येकादशी शुभा ।। 149.९० ।।
त्रयस्तत्रैव तिष्ठामो द्वारकायां यशस्विनि ।।
तस्मिन् क्षेत्रे महाभागे त्रयो मोदामहे वयम् ।। ९१ ।।
त्रिंशद्योजनविस्तारः सर्वतस्तु दिशो दश ।।
तत्र गत्वा वरारोहे ये मां द्रक्ष्यन्ति भक्तितः ।। ९२ ।।
अदीर्घेणैव कालेन प्राप्नुवंति परां गतिम् ।।
आख्यानानां महाख्यानं शान्तीनां शान्तिरुत्तमा ।। ९३ ।।
धर्माणां परमो धर्मो द्युतीनां परमा द्युतिः ।।
लाभानां परमो लाभः क्रियाणां परमा क्रिया ।। ९४ ।।
श्रुतीनां परमं श्रेष्ठं तपसा च परं तपः ।।
एतन्मरणकालेऽपि मा कदाचित्तु विस्मरेत् ।। ९९ ।।
यदीच्छेत्परमां सिद्धिं मम लोकं स गच्छति ।।
य एतत्पठते भद्रे कल्यमुत्थाय मानवः ।। ९६ ।।

सकुल्यास्तारितास्तेन सप्त सप्त च सप्त च।।
एतत्ते कथितं भद्रे द्वारकायाः सुनिश्चयम् ।। ९७ ।।
उचितेनोपचारेण किमन्यत्परिपृच्छति ।। ९८ ।।
इति श्रीवराहपुराणे भगवच्छास्त्रे द्वारकामाहात्म्यं नामैकोनपंचाशदधिकशततमोऽध्यायः ।।१४९।।

अथ सानन्दूरमाहात्म्यम् ।।
सूत उवाच ।।
द्वारकायास्तु माहात्म्यं श्रुत्वा ह्येतत्सुभाषितम् ।।
हृष्टावोचत्तदा देवं धर्मकामा वसुन्धरा ।। १ ।।
धरण्युवाच ।।
अहो देव प्रसादश्च यत्त्वया परिकीर्त्तितम् ।।
श्रुत्वैतत्परमं पुण्यं प्राप्तास्मि परमां श्रियम् ।। २ ।।
एतस्मादपि चेद्गुह्यं लोकनाथ जनार्दन ।।
यद्यस्ति प्रोच्यतां मह्यं कृपा चेत्परमा मयि ।। ३ ।।
ततो महीवचः श्रुत्वा विष्णुः कमललोचनः ।।
वराहरूपी भगवान्प्रत्युवाच वसुन्धराम् ।।४।।
श्रीवराह उवाच ।।
सानन्दूरेति विख्यातं भूमे गुह्यं परं मम।।
उत्तरे तु समुद्रस्य मलयस्य तु दक्षिणे ।।५।।
तत्र तिष्ठामि वसुधे उदीचीं दिशमाश्रितः ।।
प्रतिमा वै मदीयास्ति नात्युच्चा नातिनीचका ।। ६ ।।
आयसीं तां वदन्त्येके अन्ये ताम्रमयीं तया ।।
कांस्यां रीतिमयीमन्ये केचित्सीसकनिर्मिताम् ।। ७ ।।
शिलामयीमित्यपरे महदाश्चर्यरूपिणीम् ।।
तत्र स्थानानि वै भूमे कथ्यमानानि वै शृणु ।। ८ ।।
मनुजा यत्र मुच्यन्ते गताः संसारसागरम् ।।
तत्राश्चर्यं प्रवक्ष्यामि सानन्दूरे यशस्विनि ।। ९ ।।
सौवर्णं दृश्यते पद्मं मध्याह्ने तु दिवाकरे ।।
यत्र रामगृहं नाम मम गुह्यं यशस्विनि ।। 150.१०।।
तत्रापि शृणु चाश्चर्यं यश्चापि परिवर्त्तते ।।
एका तत्र लता वृक्षे उच्चैः स्थूलो महाद्रुमः ।। ११ ।।
समुद्रमध्ये तिष्ठन्तं कोऽपि तत्र न पश्यति ।।
अन्यच्च ते प्रवक्ष्यामि महाश्चर्यं वसुन्धरे ।। १२ ।।
मम भक्ता हि पश्यंति विद्यमाना स्वकर्मणा।।
बहुमत्स्यसहस्राणि कोट्यो ह्यर्बुदमेव च ।। १३ ।।
क्षिप्तः पिण्डश्च तन्मध्ये येन केन विकर्मिणा ।।
एकस्तत्र स्थूलमत्स्यो भूमे चक्रेण चाङ्कितः ।। १४ ।।
तावत्कश्चिन्न गृह्णाति यावत्तेन न भक्षितः ।।

तत्र रामसरो नाम गुह्यं क्षेत्रं परं मम ।। १५ ।।
अगाधं चाप्यपारं च रक्तपद्मविभूषितम् ।।
तत्र स्नानं तु कुर्वीत एकरात्रोषितो नरः ।। १६ ।।
बुधस्य भवनं गत्वा मोदते नात्र संशयः ।।
अथ प्राणान्प्रमुच्येत तस्मिन्सरसि सुन्दरि ।।१७।।
बुधस्य भवनं त्यक्त्वा मम लोकं प्रपद्यते ।।
तस्मिन्नामसरस्युच्चैराश्चर्यं शृणु सुन्दरि ।।१८ ।।
मनुजास्तन्न पश्यन्ति मम कर्मरता न ये ।।
तत्सरः क्रोशविस्तारं बहुगुल्मलतावृतम् ।। १९ ।।
मनोज्ञं रमणीयं च जलजैश्चापि संवृतम् ।।
तत्र रूढानि पद्मानि द्योतयन्ति दिशो दश ।।150.२०।।
एकं तु दृश्यते श्वेतमब्जं रुक्ममयं तथा ।।
तत्र ब्रह्मसरस्युच्चैरुत्तरं पार्श्वमाश्रिता ।।२१ ।।
धारा चैका प्रपतति स्थूला मुसलसन्निभा ।।
तत्र स्नानं प्रकुर्वीत षष्ठकालोषितो नरः ।। २२ ।।
ब्रह्मलोकं समासाद्य मोदते नात्र संशयः ।।
अथात्र मुंचते प्राणैर्भूमे ब्रह्मसरस्यपि ।। २३ ।।
ब्रह्मणा समनुज्ञातो मम लोकं च गच्छति ।।
तत्राश्चर्यं महाभागे रम्ये ब्रह्मसरे शृणु ।। २४ ।।
मद्भक्ता यच्च पश्यन्ति घोरसंसारमोक्षणम् ।।
चतुर्विंशतिद्वादश्यां सा धारा पृथुलेक्षणे ।। २५ ।।
भूमे पतति मध्याह्ने यावत्सूर्यस्तु तिष्ठति ।।
परिवृत्ते तु मध्याह्ने सा धारा न पतेद्भुवि ।। २६ ।।
एवं तत्र महाश्चर्यं पुण्यब्रह्मसरोवरे ।।
अस्ति सङ्गमनं नाम गुह्यं क्षेत्रं परं मम ।। २७ ।।
समुद्रश्चैव रामश्च समेष्येते वराङ्गने ।।
तत्र कुण्डं महाभागे प्रसन्नविमलोदकम् ।। २८ ।।
बहुगुल्मलताकीर्णं शोभितं च विहङ्गमैः ।।
समुद्रस्य तु पार्श्वेन ह्यदूरात्तत्र योजनात् ।। २९ ।।
मण्डितं कुमुदैः पद्मैः सुगन्धैश्चोत्तमैस्तया ।।
तत्र स्नानं तु कुर्वीत षष्ठकालोषितो नरः ।। 150.३० ।।
समुद्रभवनं गत्वा मम लोकं प्रपद्यते ।।
तत्राश्चर्यं प्रवक्ष्यामि कुण्डं रामस्य सङ्गमे ।। ३१ ।।

यद्दृष्ट्वा मनुजास्तत्र भ्रमन्ति विगतज्वराः ।।
यानि कानि च पर्णानि पतन्ति जलसंसदि।।३२।।
एकमप्यत्र पश्यन्ति न केपि वसुधे नराः ।।
अच्छिद्राणि च पत्राणि तस्मिन् रामस्य सङ्गमे।।३३।।
प्रपन्नेनापि मार्गं तच्छिद्रं तत्र न पश्यति।।
अस्ति शक्रसरो नाम गुह्यं क्षेत्रं परं मम।।३४।।
तत्र पूर्वेण पार्श्वेण ह्यदूरादर्द्धयोजनात् ।।
तस्य कुण्डस्य सुश्रोणि चतस्रो विषमाश्रिताः ।। ३५ ।।
धाराः पतन्ति कल्याणि प्रसन्नसलिलास्तथा ।।
तत्र स्नानं प्रकुर्वीत चतुष्कालोषितो नरः ।। ३६ ।।
चतुर्णां लोकपालानां लोकानाप्नोति चोत्तमान् ।।
अस्मिंश्च शक्रसरसि यदि प्राणान्प्रमुंचति ।। ३७ ।।
लोकपालान्समुत्सृज्य मम लोकेषु मोदते ।।
तत्राश्चर्यं महाभागे दृश्यते तच्छृणुष्व मे ।। ३८ ।।
शुद्धैर्भागवतैर्भूमे सर्वसंसार मोक्षणम् ।।
चतुर्धारास्ततो भद्रे पतन्ति चतुरो दिशः ।। ३९ ।।
न च तद्वर्द्धते चाम्भो न चैव परिहीयते ।।
मासे भाद्रपदे चैव शुक्लपक्षे तु द्वादशी ।। 150.४० ।।
श्रूयते गीतनिर्घोषः श्रुतिकर्ममनोहरः ।।
अस्ति सूर्पारकं नाम गुह्यं क्षेत्रं परं मम ।। ४१ ।।
जामदग्न्यस्य रामस्य स्वाश्रमोऽथ भविष्यति ।।
तत्र तिष्ठाम्यहं देवि समुद्रतटमाश्रितः ।। ४२ ।।
शाल्मलीं चाग्रतः कृत्वाधिष्ठितश्चोत्तरामुखः ।।
तत्र स्नानं प्रकुर्वीत पंचकालोषितो नरः ।। ४३ ।।
ऋषिलोकं ततो गत्वा पश्येत्तत्राप्यरुन्धतीम् ।।
अथ प्राणान्विमुंचेत कृत्वा कर्म सुदुष्करम् ।। ४४ ।।
ऋषिलोकं परित्यज्य मम लोकं प्रपद्यते ।।
तत्राश्चर्यं महाभागे नमस्कारं च कुर्वते ।। ४५।।
वर्षाणि द्वादशैतेन नमस्कारः कृतो भवेत् ।।
तस्मिन्क्षेत्रे महाभागे पश्यंति परिनिष्ठिताः ।। ४६ ।।
पापात्मानो न पश्यन्ति मम मायाविमोहिताः ।।
चतुर्विंशतिद्वादश्यां समुपायान्ति शाल्मलीम् ।।४७।।
तत्र पश्यन्ति सुश्रोणि शुद्धा भागवता नराः ।।

तस्मिन्क्षेत्रे महाभागे अस्ति गुह्यं परं मम ।। ४८ ।।
जटाकुण्डमिति ख्यातं वायव्यां दिशि संस्थितम् ।।
तत्कुण्डस्य महाभागे समन्ताद्दशयोजनम् ।। ४९ ।।
मलयस्य दक्षिणेन समुद्रस्योत्तरे तथा ।।
तत्र स्नानं तु कुर्वीत पंचकालोषितो नरः ।। 150.५० ।।
अगस्तिभक्नं गत्वा मोदते नात्र संशयः ।।
अथ प्राणान्प्रमुंचेत मम चिन्तापरायणः ।। ५१ ।। ।
अगस्तिभवनं त्यक्त्वा मम लोकं तु गच्छति ।।
तस्य कुण्डस्य सुश्रोणि नव धारा न किंचन ।। ५२ ।।
विस्तारश्च महाभागे अगाधश्च महार्णवः ।।
आश्चर्यं सुमहत्तत्र कथ्यमानं मया शृणु ।। ५३ ।।
यच्च पश्यति सुश्रोणि समन्तादितरो जनः ।।
चतुर्विंशतिद्वादश्यां रवावभ्युदिते सति ।। ५४ ।।
न वर्द्धते ततश्चाम्भो यावत्तिष्ठति तत्पुनः ।।
एतत्ते कथितं भद्रे सानन्दूरेति तन्मया ।। ५५ ।।
आश्चर्यं च प्रमाणं च भक्तिकीर्त्तिविवर्द्धनम् ।।
गुह्यानां परमं गुह्यं स्थानानां परमं महत् ।। ५६ ।।
यस्तु गच्छति सुश्रोणि अष्टभक्तपथे स्थितः ।।
प्राप्नोति परमां सिद्धिं ममैव वचनं यथा ।।५७।।
य एतत्पठते नित्यं यश्चैवं शृणुयान्मुदा ।।
कुलानि तेन तीर्णानि षट् च षट् च पुनश्च षट् ।। ५८ ।।
एतन्मरणकाले न विस्मर्त्तव्यं कदाचन ।।
यदीच्छेद्विष्णुलोके हि निष्कलं गमनं नरः ।। ५९ ।।
एतत्ते कथितं भद्रे त्वया पृष्टं च मां प्रति ।।
उक्तं भागवतार्थाय किमन्यत्परिपृच्छसि ।।150.६० ।।
इति श्रीवराहपुराणे भगवच्छास्त्रे सानंदूरमाहात्म्यं नाम पंचाशदधिकशततमोऽध्यायः ।।१५०।।

अथ लोहार्गलमाहात्म्यम् ।।
सूत उवाच ।।
सानन्दूरस्य माहात्म्यमेतच्छ्रुत्वा वसुन्धरा ।।
कृताञ्जलिपुटा भूत्वा वराहं पुनरब्रवीत् ।। १ ।।
धरण्युवाच ।।
श्रुतमेतज्जगन्नाथ विष्णो गुह्यमनुत्तमम् ।।
यच्छ्रुत्वा सुमहाभाग जाताऽस्मि विगतज्वरा ।। २ ।।
अपरं वाऽस्ति चेत्किंचिद्गुह्यं क्षेत्रं शुभावहम् ।।
सानन्दूरात्परं गुह्यं क्षेत्रमस्ति न वा परम् ।। ३ ।।
सुरकरण नृसिंह लोकनाथ युतससुरसुरधीर देववीर ।।
कमलदलसहस्रनेत्र रूपो जयति कृतान्तसमानकालरूपः ।। ४ ।।
गद्गदं वचनं श्रुत्वा पृथिव्याः स जनार्दनः ।।
उवाच मधुरं वाक्यं सर्वलोकार्त्तिहा हरिः ।। ५ ।।
श्रीवराह उवाच ।।
शृणु देवि च तत्त्वेन यन्मां त्वं परिपृच्छसि ।।
गुह्यमन्यत्प्रवक्ष्यामि मद्व्रतः कर्मणो जनिः ।। ६ ।।
ततः सिद्धवटे गत्वा त्रिंशद्योजनदूरतः ।।
म्लेच्छमध्ये वरारोहे हिमवन्तं समाश्रितम् ।। ७ ।।
तत्र लोहार्गले क्षेत्रे निवासो विहितः शुभः ।।
गुह्यं पंचदशायामं समन्तात्पञ्चयोजनम् ।। ८ ।।
दुर्गमं दुःसहं चैव पापैः सर्वत्र वेष्टितम् ।।
सुलभं पुण्ययुक्तानां मम चिन्तानुसारिणाम् ।। ९ ।।
तत्र तिष्ठाम्यहं भद्रे उदीचीं दिशमाश्रितः ।।
हिरण्यप्रतिमां कृत्वा जातरूपां न संशयः ।। 151.१० ।।
ततो मे दानवाः सर्वे क्रमन्तो लोकमुत्तमम् ।।
मया चैवान्तरं कृत्वा कृत्वा मायां च वैष्णवीम् ।। ११ ।।
तत्र ब्रह्मा च रुद्राश्च स्कन्देन्द्रो समुरुद्गणाः ।।
आदित्या वसवो वायुरश्विनौ च महौजसम् ।। १२ ।।
सोमो बृहस्पतिश्चैव ये चान्ये वै दिवौकसः ।।
तेषां चैवार्गलं दत्त्वा चक्रं गृह्य महौजसम् ।। १३।।
शतकोटिसहस्राणि शीघ्रमेव निपातितम् ।।
ततश्च देवताः सर्वास्तुष्यमाणा इतस्ततः ।। १४ ।।
एवं लोहार्गलं नाम क्षेत्रं चैव मया कृतम् ।।

ततो देवासुरे युद्धे हत्वा त्रिदशकण्टकान् ।। १५।।
तेषां संस्थापनं तत्र कृतं चैव महौजसाम् ।।
यो मां पश्यति तत्रस्थं प्रयत्नेन कदाचन ।। १६ ।।
सोपि भागवतो भूमे भवत्येव सुनिष्ठितः ।।
तस्मिन्कुण्डे तु सुश्रोणि यः स्नाति नियतो नरः ।। १७ ।।
उपोष्य च त्रिरात्रं तु विधिदृष्टेन कर्मणा ।।
ततः स्वर्गसहस्रेषु मोदते नात्र संशयः ।। १८ ।।
अथात्र मुंचते प्राणान्स्वकर्मपरिनिष्ठितः ।।
सर्वान्स्वर्गान्परित्यज्य मम लोकं प्रपद्यते ।। १९ ।।
अन्यच्च ते प्रवक्ष्यामि यत्र तत्परमाद्भुतम् ।।
लोकविस्मापनार्थाय मया तत्र च यत्कृतम् ।। 151.२० ।।
चतुर्विंशतिद्वादश्यां मासेन विधिना मम ।।
बलिः प्रदीयते तत्र सर्वकामविशोधनः ।। २१ ।।
अश्वो मे कल्पितस्तत्र सर्वरत्नविभूषितः ।।
श्वेतः कुमुदवर्णाभः शङ्खकुन्दसमप्रभः।।२२ ।।
मार्गणा मे धनुस्तत्र अक्षसूत्रं कमण्डलुः ।।
आसनं विततं दिव्यं दीयतेऽश्वोपरि स्थिरम् ।। २३ ।।
श्वेतपर्वतमारुह्य पतमानः कुरून्बहून् ।।
पतितस्तत्र दृश्येत क्षतं तत्र न दृश्यते ।।२४।।
अनेकान्येव रूपाणि पातयित्वा नभस्तलात् ।।
शान्तो दान्तः परिक्लिष्टः स चाश्वो दिवि वर्त्तते।।२५।।
सूत उवाच ।।
ततो भूम्या वचः श्रुत्वा ब्रह्मपुत्रो महामुनिः ।।
विस्मयं परमं प्राप्तो विष्णुमायोपबृंहितः ।। २६ ।।
ततः स विस्मयाविष्टो ब्रह्मपुत्रो महामतिः ।।
सनत्कुमारो भगवान्पुनरेवमभाषत ।।२७ ।।
सनत्कुमार उवाच ।।
धन्यासि देवि सुश्रोणि सुपुण्यासि वरानने ।।
देवि यल्लोकनाथस्य साक्षाद्दर्शनमागता ।। २८ ।।
पद्मपत्रविशालाक्षो यत्त्वया परिभाषितः ।।
तेनोक्तं शंस सकलं सर्वेषां सुखवर्द्धनम् ।। २९ ।।
यथा यथा वदसि च धर्मसंहितं गुह्यं परं देववरप्रणीतम् ।।
गुणोत्तमं कारणसम्प्रयुक्तं तथा तथा भावयसे मनो मम।।151.३०।।

ततः स पुण्डरीकाक्षः किमाचष्ट ततः परम् ।।
कर्मणा विधिदृष्टेन सर्वभागवतप्रियः ।।३१ ।।
( सूतउवाच) ।।
तस्य तद्वचनं श्रुत्वा कुमारस्य महौजसः ।।
उवाच मधुरं वाक्यमाभाष्य ब्रह्मणः सुतम् ।। ३२ ।।
शृणु वत्स जगन्नाथो यथा मामाह चोदितः ।।
श्रीवराह उवाच ।।
एवं तत्रैव कर्माणि क्रियन्ते विधिपूर्वकम् ।। ३३।।
शोधकानि च पापानां मृदूनि च शुभानि च ।।
अश्वानां तत्कुलीनानामावहन्ति सुमध्यमे ।।३४ ।।
नान्यं वहन्ति ते चाश्वा मम वाहा दुरत्ययाः।।
कुण्डं पंचसरो नाम गुह्यं क्षेत्रं परं मम ।।३५।।
चतुर्धाराः पतन्त्यत्र शङ्खवर्णा मनोजवाः ।।
तत्र स्नानं तु कुर्वीत चतुर्भक्तोषितो नरः ।। ३६ ।।
लोकं चैत्राङ्गदं गत्वा गन्धर्वैः सह मोदते ।।
अथ चेन्मुञ्चते प्राणांस्तस्मिन्क्षेत्रे परे मम ।।३७।।
गन्धर्वलोकमुत्सृज्य मम लोकं स गच्छति ।।
ततो नारदकुण्डे तु मम क्षेत्रे परे महत् ।। ३८ ।।
पंच धाराः पतन्त्यत्र तालवृक्षसमोपमाः ।।
तत्र स्नानं तु कुर्वीत एकभक्तोषितो नरः ।। ३९ ।।
देवर्षिनारदं पश्येन्मोदते तेन वै समम् ।।
अथात्र मुंचते प्राणान्मम गुह्यविनिश्चितः ।।151.४० ।।
प्रमुच्य नारदं द्विव्यं ममलोकं च गच्छति ।।
ततो वसिष्ठकुण्डं तु तस्मिन्क्षेत्रं परं मम ।। ४१ ।।
धाराः पतन्ति तिस्रस्तु न स्थूला नाति वै कृशाः ।।
तत्राभिषेकं कुर्वीत पंच कालोषितो नरः ।। ४२ ।।
वासिष्ठं लोकमासाद्य मोदते नात्र संशयः ।।
अथात्र मुंचते प्राणान्मम कर्मसु निष्ठितः।।।४३
वासिष्ठं लोकमुत्सृज्य मम लोकं प्रपद्यते ।।
पंचकुण्डेति विख्यातं तस्मिन्क्षेत्रे परं मम ।। ४४ ।।
पंच धाराः पतन्त्यत्र हिमकूटविनिःसृताः ।।
तत्राभिषेकं कुर्वीत पंचकालोषितो नरः ।। ४५ ।।
स तत्र गच्छेद्वै भूमे यत्र पंचशिखो मुनिः ।।

अथात्र मुंचते प्राणान्मम भक्तो जितेन्द्रियः ।। ४६ ।।
पंचचूडं समुत्सृज्य स याति परमां गतिम् ।।
सप्तर्षिकुण्डं विख्यातमस्मिन्क्षेत्रे परं मम ।।४७ ।।
सप्त धाराः पतन्त्यत्र हिमवत्पर्वतस्थिताः ।।
तत्राभिषेकं कुर्वीत सप्तभक्तोषितो नरः ।। ४८ ।।
मोदते ऋषिलोकेषु ऋषिकन्याभिसंवृतः ।।
अथात्र मुंचते प्राणान्रागलोभविवर्जितः ।। ४९ ।।
सप्तर्षीन्स समुत्सृज्य मोदते मम संस्थितः ।।
शरभङ्गस्य कुण्डं वै क्षेत्रे गुह्यं परे मम ।। 151.५० ।।
तत्र धारा पतत्येका शरभङ्गश्रिता नदी ।।
स्नानं यस्तत्र कुर्वीत षष्ठभक्तोषितो नरः ।। ५१ ।।
मोदते तस्य लोकेषु ऋषिकन्याप्रमोदितः ।।
अथात्र मुंचते प्राणान्सर्वसङ्गविवज्जितः ।। ५२ ।।
शरभङ्गं समुत्सृज्य मम लोके महीयते ।।
कुण्डमग्निसरो नाम सर्वमायाभिसंवृतम् ।। ५३ ।।
भूमिं नीत्वा जलं तत्र तिष्ठत्येव वरानने ।।
तत्र स्नानं प्रकुर्वीत चाष्टकालोषितो नरः ।। ५४ ।।
गच्छत्यङ्गिरसो लोकं सुखभागी न संशयः ।।
अथात्र मुंचते प्राणान्मम कर्मपरायणः ।। ५५ ।।
अग्निलोकं समुत्सृज्य मम लोकं स गच्छति ।।
कुण्डं बृहस्पतेर्भूमे सर्ववेदोदकाश्रितम् ।। ५६ ।।
धारा चैका पतत्यत्र हिमकूटसमाश्रिता ।।
तत्र स्नानं प्रकुर्वीत षष्ठकालोषितो नरः ।।५७।।
गत्वा बृहस्पतेर्लोकं मुनिकन्याभिमोदितः ।।
अथात्र मुंचते प्राणान्मम लोकं समाश्रितः ।।५८।।
सोऽपि याति परां सिद्धिं समुत्सृज्य बृहस्पतिम् ।।
वैश्वानरस्य कुण्डं तु गुह्यं क्षेत्रं परं मम् ।।५९।।
धारा चैका पतत्यत्र दृश्यते हिमसंश्रयात् ।।
तत्राभिषेकं कुर्वीत षष्ठभक्तोषितो नरः ।।151.६० ।।
गत्वा बृहस्पतेर्लोकं मुनिकन्याभिमोहितः ।।
वैश्वानरेषु लोकेषु मोदते नाऽत्र संशयः ।।६१।।
अथात्र मुंचते प्राणान्मम कर्मपरायणः ।।
वैश्वानरं समुत्सृज्य मम लोकं स गच्छति ।। ६२ ।।

कार्त्तिकेयस्य कुण्डं तु गुह्यं क्षेत्रं परं मम ।।
यत्र पंचदशा धाराः पतन्ति हिमपर्वतात् ।। ६३।।
तत्र स्नानं प्रकुर्वीत षष्ठकालोषितो नरः ।।
कुमारं पश्यति व्यक्तं षण्मुखं शुभदर्शनम् ।। ६४ ।।
अथात्र मुंचते प्राणान्कृत्वा चान्द्रायणं शुचिः ।।
कार्त्तिकेयं समुत्सृज्य मोदते मम मण्डले ।। ६५ ।।
उमाकुण्डमिति ख्यातं तस्मिन्क्षेत्रे परं मम ।।
सा गौरी यत्र चोत्पन्ना महादेववराङ्गना ।। ६६ ।।
तत्र स्नानं तु कुर्वीत दशरात्रोषितो नरः ।।
गौरीं देवीं स पश्येत्तु तस्या लोके च मोदते ।। ६७ ।।
अथ प्राणान्प्रमुंचेत दशरात्रोषितो नरः ।।
उमालोकं समुत्सृज्य मम लोकं प्रपद्यते ।। ६८ ।।
महेश्वरस्य वै कुण्डं यत्र चोद्वाहिता उमा ।।
कादम्बैश्चक्रवाकैश्च हंससारससेवितम् ।। ६९ ।।
तिस्रो धाराः पतन्त्यत्र हिमवत्पर्वताश्रिताः ।।
स्थूलाश्च रमणीयाश्च न ह्रस्वाश्चातिनिर्मलाः ।। 151.७० ।।
तत्र स्नानं तु कुर्वीत द्वादशाहोषितो नरः ।।
मोदते रुद्रलोकेषु रुद्रकन्याभिरावृतः ।। ७१ ।।
अथात्र मुञ्चते प्राणान्कृत्वा कर्म सुदुष्करम् ।।
रुद्रलोकं समुत्सृज्य मम लोकं च गच्छति ।।७२ ।।
प्रख्यातं ब्रह्मकुण्डं तु वेदा यत्र समुत्थिताः ।।
चतस्रो वेद धारास्तु पतन्ति च हिमालयात् ।। ७३ ।।
ततः पूर्वेण पार्श्वेन समा धारा पतेच्छुभा ।।
उच्चा च रमणीया च पाण्डरोदकशोभिता ।। ७४।।
पुनरस्योत्तरे पार्श्वे सुवर्णसदृशोपमा ।।
ऋग्वेदः पतते धारा प्रसन्ना विमलोदका ।। ७९।।
अथ पश्चिमपार्श्वेन यजुर्वेदेन संयुता ।।
अथ दक्षिणपार्श्वेन चाथर्वणसमन्विता ।। ७६ ।।
एका धारा पतत्यत्र इन्द्रगोपकसन्निभा ।।
यस्तत्र कुरुते स्नानं सप्तरात्रोषितो नरः ।। ७७ ।।
ब्रह्मलोकं समासाद्य ब्रह्मणा सह मोदते ।।
अथात्र मुञ्चते प्राणानहङ्कारविवर्जितः ।।७८।।
ब्रह्मलोकं परित्यज्य मम लोकं प्रपद्यते ।।

गुह्याख्याने महाभागे क्षेत्रे लोहार्गले मम ।। ७९ ।।
सिद्धिकामेन मर्त्येन गन्तव्यं नात्र संशयः ।।
समन्तात्पञ्चविंशति योजनानि वरानने ।। 151.८० ।।
न तस्य कर्म विद्येत स एवमपि संस्थितः ।।
आख्यानानां महाख्यानं धर्माणां धर्म उत्तमः ।।८१।।
पवित्राणां पवित्रं तु न देयं यस्य कस्यचित् ।।
ये पठंति महाभागे स्थिताः शृण्वन्ति मत्पथे ।।८२।।
तारितानि कुलानि स्युरुभयत्र दशापि च ।।
एतन्मरणकाले तु न कदाचित्तु विस्मरेत् ।।८३।।
यदीच्छेत्परमां सिद्धिं सर्वसंसारमोक्षणीम् ।।
एतत्ते कथितं भद्रे लोहार्गलमनुत्तमम् ।।८४ ।।
माहात्म्यं पद्मपत्राक्षि गुह्यं यच्च महौजसम् ।।
मङ्गल्यं च पवित्रं च मम भक्त सुखावहम् ।। ८५ ।।
इति श्रीवराहपुराणे भगवच्छास्त्रे लोहार्गलमाहात्म्यं नामैकपंचाशदधिकशततमोऽध्यायः ।। १५१ ।।

अथ मथुरातीर्थ प्रशंसा ।।
सूत उवाच ।।
श्रुत्वा देवस्य माहात्म्यं लोहार्गलनिवासिनः ।।
त्रैलोक्यनाथाधिपतेर्विस्मयं परमं गता ।। १ ।।
धरण्युवाच ।।
पद्मपत्र विशालाक्ष लोकनाथ जगत्पते ।।
त्वत्प्रसादाच्च देवेश श्रुतं शास्त्रं महौजसम् ।। २ ।।
तव शिष्या च दासी च त्वामहं शरणङ्गता ।।
जगद्धाता जगज्ज्योतिर्जगत्प्रभुरतन्द्रितः ।। ३ ।।
तव सम्भावनाद्देव जातास्मि कनकोज्ज्वला ।।
अलंकृता च शस्ता च सर्वशास्त्रेण मानद ।।४ ।।
जगद्धातुर्जगच्छास्त्रकृते न हि परिश्रमः ।।
त्वय्यायत्तं जगत्सर्वं यच्च किंचित्प्रवर्त्तते ।। ५ ।।
इति कृत्वा च मे देव त्वाह्लादो हृदि वर्त्तते ।।
लोहार्गलात् परं श्रेष्ठं गुह्यं परमदुर्लभम् ।। ६ ।।
तीर्थं तद्वद कल्याणं तीर्थानामुत्तमोत्तमम् ।।
यदस्ति दुर्लभं तीर्थं तत्त्वं कथय मे प्रभो ।। ७ ।।
श्रीवराह उवाच ।।
न विद्यते च पाताले नान्तरिक्षे न मानुषे ।।
समानं मथुराया हि प्रियं मम वसुन्धरे ।। ८ ।।
सूत उवाच ।।
तच्छ्रुत्वा वचनं तस्य प्रियं च वसुधा तदा ।।
प्रणम्य शिरसा देवी वराहं पुनरब्रवीत् ।।९ ।।
पृथिव्युवाच।।
पुष्करं नैमिषं चैव पुरीं वाराणसीं तथा ।।
एतान्हित्वा महाभाग मथुरां किं प्रशंससि ।। 152.१० ।।
श्रीवराह उवाच ।।
शृणु कात्स्न्र्येन वसुधे कथ्यमानं मयानघे ।।
मथुरेति च विख्यातं तस्मान्नास्ति परं मम ।। ११ ।।
सा रम्या च सुशस्ता च जन्मभूमिस्तथा मम ।।
शृणु देवि यथा स्तौमि मथुरां पापहारिणीम् ।। १२ ।।
तत्र वासी नरो याति मोक्षं नास्त्यत्र संशयः ।।
महामाघ्यां प्रयागे तु यत्फलं लभते नरः ।। १३ ।।

तत्फलं लभते देवि मथुरायां दिने दिने ।।
पूर्णे वर्ष सहस्रं तु वाराणस्यां तु यत्फलम् ।। १४ ।।
तत्फलं लभते देवि मथुरायां क्षणेन हि ।।
कार्त्तिक्यां चैव यत्पुण्यं पुष्करे तु वसुन्धरे ।।१५ ।।
तत्फलं लभते देवि मथुरायां जितेन्द्रियः ।।
मथुरां तु परित्यज्य योऽन्यत्र कुरुते रतिम् ।। १६ ।।
मूढो भ्रमति संसारे मोहितो मम मायया ।।
यः शृणोति वरारोहे माथुरं मम मण्डलम् ।। १७ ।।
अन्येनोच्चारितं शश्वत्सोऽपि पापैः प्रमुच्यते ।।
पृथिव्यां यानि तीर्थानि आसमुद्रं सरांसि च ।। १८ ।।
मथुरायां प्रयान्त्यत्र सुप्ते चैव जनार्दने ।।
मथुरामण्डलं प्राप्य श्राद्धं कृत्वा यथाविधि ।। १९ ।।
तृप्तिं प्रयान्ति पितरो यावत्स्थित्यग्रजन्मनः ।।
ये वसंति महाभागे मथुरामितरे जनाः ।। 152.२० ।।
तेऽपि यान्ति परां सिद्धिं मत्प्रसादान्न संशयः ।।
कुब्जाम्रके सौकरवे मथुरायां विशेषतः ।। २१ ।।
विना सांख्येन योगेन मत्प्रसादान्न संशयः ।।
मथुरायां महापुर्यां ये वसंति शुचिव्रताः ।।२२ ।।
बलिभिक्षाप्रदातारो देवास्ते नरविग्रहाः ।।
भविष्यामि वरारोहे द्वापरे युगसंस्थिते ।। २३ ।।
ययातिभूपवंशाच्च क्षत्रियः कुलवर्द्धनः ।।
भविष्यामि वरारोहे मथुरायां न संशयः ।। २४ ।।
मूर्तिं चतुर्विधां कृत्वा स्थास्यामि ऋषिभिः स्तुतः ।।
वत्सराणां शतं तत्र युद्धेषु कृतनिश्चयः ।। २५ ।।
एका चन्दनसङ्काशा द्वितीया कनकप्रभा ।।
अशोकसदृशा चान्या अन्या चोत्पलसन्निभा ।। २६ ।।
तत्र गुह्यानि नामानि भविष्यन्ति मम प्रिये ।।
पुण्यानि च पवित्राणि संसारच्छेदनानि च ।। २७ ।।
यत्राहं पातयिष्यामि द्वात्रिंशत्तु वसुन्धरे ।।
दैत्यान्घोरान्महाभागे कंसादीन्धर्मदूषकान् ।। २८ ।।
यमुना यत्र सुवहा नित्यं सन्निहिता ध्रुवम् ।।
वैवस्वतसुता रम्या यमुना यत्र विश्रुता ।। २९।।
गङ्गां प्राप्य प्रयागे या वेणीति प्रथिता भुवि ।।

गङ्गाशतगुणा पुण्या माथुरे मम मण्डले ।। 152.३० ।।
यमुना विश्रुता देवि नात्र कार्या विचारणा ।।
तत्र तीर्थानि गुह्यानि भविष्यन्ति ममानघे ।। ३१ ।।
येषु स्नाने नरो देवि मम लोके महीयते ।।
अथात्र मुञ्चते प्राणान्मम कर्मपरायणः ।। ३२ ।।
न जायत स मर्त्त्येषु जायते च चतुर्भुजः ।।
अविमुक्ते नरः स्नातो मुक्तिं प्राप्नोत्यसंशयम् ।। ३३ ।।
तथात्र मुञ्चते प्राणान्मम लोकं स गच्छति ।।
विश्रान्तिसंज्ञकं नाम तीर्थं त्रैलोक्यविश्रुतम् ।। ३४ ।।
यस्मिन्स्नातो नरो देवि मम लोकं प्रपद्यते ।।
सर्वतीर्थेषु यत्स्नानं सर्वतीर्थेषु यत्फलम् ।। ३५ ।।
तत्फलं लभते देवि दृष्ट्वा देवं गतश्रमः ।।
न च यज्ञैर्न तपसा न ध्यानैर्न च संयमैः ।। ३६ ।।
तत्फलं लभते स्नातो यथा विश्रान्तिसंज्ञके ।।
कालत्रयं तु वसुधे यः पश्यति गतश्रमः ।। ३७ ।।
कृत्वा प्रदक्षिणे द्वे तु विष्णुलोकं स गच्छति ।।
अस्ति चान्यत्परं गुह्यं सर्वसंसारमोक्षणम् ।।३८।।
यस्मिन्स्नातो नरो देवि मम लोकं प्रपद्यते ।।
प्रयागं नाम तीर्थं तु देवानामपि दुर्ल्लभम्।।३९।।
यस्मिन्स्नातो नरो देवि अग्निष्टोमफलं लभेत् ।।
इन्द्रलोकं समासाद्य नरोऽसौ देवि मोदते।।152.४०।।
अथात्र मुंचते प्राणान्मम लोके स गच्छति ।।
तथा कनखलं नाम तीर्थं गुह्यं परं मम ।। ४१ ।।
स्नानमात्रेण तत्रापि नाकपृष्ठे स मोदते ।।
अस्ति क्षेत्रं परं गुह्यं तिंदुकं नाम नामतः।।४२।।
तस्मिन्स्नातो नरो देवि मम लोके महीयते ।।
अस्मिंस्तीर्थे पुरा वृत्तं तच्छृणुष्व वसुन्धरे ।।४३।।
पांचालविषये देवि काम्पिल्यं च पुरोत्तमम्।।
धनधान्यसमायुक्तं ब्रह्मदत्तेन पालितम् ।। ४४ ।।
तस्मिंस्तु वसते देवि तिंदुको नाम नापितः।।
तस्मिंस्तु वसतस्तस्य नापितस्य पुरोत्तमे।।४५।।
कालेन महता तस्य कुटुम्बं च क्षयं गतम् ।।
क्षीणे कुटुम्बे तु तदा सुभृशं दुःखपीडितः ।। ४६ ।।

सर्वसंगं परित्यज्य सोऽगच्छन्मथुरां तदा ।।
ब्राह्मणावसथे सोऽपि वसमानो वसुन्धरे ।।४७।।
तस्य कर्मशतं कृत्वा स्नात्वैव यमुनां नदीम् ।।
नित्यं स यमुनां स्नाति चिरकालं दृढव्रतः।।४८।।
ततः कालेन महता पंचत्वं समुपागतः ।।
स च तीर्थप्रभावेण जातोऽसौ ब्राह्मणोत्तमः ।।४९।।
तस्मिन् वरगृहे देवि ब्राह्मणो योगिनां वरः।।
जातिस्मरो महाप्राज्ञो विष्णुभक्तो वसुन्धरे ।। 152.५० ।।
तत्तीर्थस्य प्रभावेण जाता मुक्तिः सुदुर्ल्लभा ।।
ततः परं सूर्यतीर्थं सर्वपापप्रमोचनम् ।। ५१ ।।
वैरोचनेन बलिना सूर्यस्त्वाराधितः पुरा ।।
भ्रष्टराज्येन हि तथा धनकामेन सुन्दरि ।।५२ ।।
ऊर्द्ध्वबाहुर्निराहारस्तताप परमं तपः ।।
साग्रं संवत्सरं देवि ततः काममवाप्तवान् ।।५३।।
तस्य प्रसन्नो भगवान् द्युमणिः प्रत्यभाषत।।
किं कारणं बले ब्रूहि तपस्यसि महत्तपः।।५४।।
बलिरुवाच।।
भ्रष्टराज्योऽस्मि देवेश पाताले निवसाम्यहम् ।।
वित्तेनापि विहीनस्य कुटुम्बभरणं कृतः ।।५५।।
मुकुटात्तस्य वै सूर्यो ददौ चिन्तामणिं ततः ।।
चिन्तामणिं समासाद्य पातालमगमद्बलिः ।। ५६ ।।
तस्मिंस्तीर्थे नरः स्नातः सर्वपापैः प्रमुच्यते ।।
तत्राथ मुञ्चते प्राणान्मम लोकं स गच्छति ।। ५७ ।।
आदित्याहनि संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः ।।
तस्मिन्स्नातो नरो देवि राजसूयफलं लभेत् ।।५८ ।।
ध्रुवेण यत्र सन्तप्तं स्वेच्छया परमं तपः ।।
तत्र वै स्नानमात्रेण ध्रुवलोके महीयते ।। ५९ ।।
तत्राथ मुञ्चते प्राणान्मम लोके महीयते ।।
ध्रुवतीर्थे तु वसुधे यः श्राद्धं कुरुते नरः ।।152.६० ।।
पितॄंस्तारयते सर्वं पितृपक्षे विशेषतः ।।
दक्षिणे ध्रुवतीर्थस्य तीर्थराजं प्रकीर्तितम् ।। ६१ ।।
तस्मिन् स्नाते नरो देवि मम लोकं प्रपद्यते ।।
तद्दक्षिणे महादेवि ऋषितीर्थं परं मम ।। ६२ ।।

तत्र स्नातो नरो देवि ऋषिलोकं प्रपद्यते ।।
अथात्र मुञ्चते प्राणान्मम लोके महीयते ।।६३।।
दक्षिणे ऋषितीर्थस्य मोक्षतीर्थं परं मम ।।
तत्र वै स्नानमात्रेण मोक्षमेव प्रपद्यते ।।६४ ।।
तत्र वै कोटितीर्थं हि देवानामपि दुर्ल्लभम्।।
तत्र स्नानेन दानेन मम लोके महीयते ।।६५ ।।
कोटितीर्थे नरः स्नात्वा सन्तर्प्य पितृदेवताः ।।
तारिताः पितरस्तेन तथैव प्रपितामहाः ।।६६।।
कोटितीर्थे नरः स्नात्वा ब्रह्मलोके महीयते ।।
तत्रैव वायुतीर्थं तु पितृणामपि दुर्ल्लभम् ।। ६७ ।।
पिण्डदानात्तु तत्रैव पितृलोके स गच्छति ।।
गया पिण्डप्रदानेन यत्फलं लभते नरः ।।
तत्फलं लभते देवि ज्येष्ठे दानान्न संशयः ।। ६८ ।।
द्वादशैतानि तीर्थानि देवानां दुर्ल्लभानि च ।।
स्नानं दानं जपं होमं सहस्रगुणितं भवेत् ।।६९।।
येषां स्मरणमात्रेण सर्वपापैः प्रमुच्यते।।
तीर्थानां चैव माहात्म्यं श्रुत्वा कामानवाप्नुयात् ।।152.७० ।।
इति श्रीवराहपुराणे मथुरामाहात्म्ये मथुरातीर्थप्रशंसा नाम द्वापंचाशदधिकशततमोऽध्यायः ।। १५२।।

अथ मथुरातीर्थमाहात्म्यम् ।।
श्रीवराह उवाच ।।
उत्तरे शिवकुण्डाच्च तीर्थानां नवकं स्मृतम् ।।
नवतीर्थात्परं तीर्थं न भूतं न भविष्यति।।१ ।।
तत्रैव स्नानमात्रेण सौभाग्यं जायते परम् ।।
रूपवन्तः प्रजायंते स्वर्गलोके न सशंयः ।। २ ।।
तस्मिन् स्नातो नरो देवि मम लोके प्रपद्यते ।।
तत्र संयमनं नाम तीर्थं त्रैलोक्यविश्रुतम् ।। ३ ।।
तत्र स्नातो मृतो वापि मम लोकं स गच्छति।।
पुनरन्यत्प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।।४।।
तस्मिन् संयमने तीर्थे यद्यद्वृत्तं पुरातनम् ।।
कश्चित्पापसमाचारो निषादो दुष्टमानसः ।। ५।।
वसते नैमिषारण्ये सुप्रतीतेऽतिपापकृत्।।
केनचित्त्वथ कालेन सोऽगच्छन्मथुरां प्रति ।।६ ।।
तत्र प्राप्य च कालिन्दीं कृष्णपक्षे चतुर्दशीम् ।।
स निषादस्तत्र्तुकामस्तस्यां चैव तिथौ ततः।।७।।
ततार यमुनां सोऽथ प्राप्य संयमनं शुभे ।।
ममज्जासौ ततः पापस्तस्मिंस्तीर्थे वरे शुभे।।८।।
मग्नमात्रस्ततः पापः सद्यः प्राणैर्व्ययुज्यत ।।
तत्तीर्थस्य प्रभावेण जातोऽसौ पृथवीपतिः।।९।।
सौराष्ट्रविषये देवि क्षत्रियोऽभूद्धनुर्द्धरः ।।
नाम्ना यक्ष्मधनुर्नाम सोऽभवत्प्रियदर्शनः ।।153.१० ।।
पालयामास वसुधां क्षत्रधर्मं समाश्रितः ।।
तेनोढा काशिराजस्य पीवरी नामतः शुभा।।११।
पत्नी शतानां मुख्यानां प्रवरा सा वसुन्घरे।।
तां चैव रमयामास उद्यानेषु वनेषु च।।१२।।
प्रासादेषु च रम्येषु नदीनां पुलिनेषु च।।
प्रजाः पालयतस्तस्य दानानि ददतस्तथा ।।१३।।
कालो गच्छति राजा तु भोगासक्तिं च विंदति।।
भोगासक्तस्य वसुधे वर्षाणि सप्तसप्ततिः।।१४।।
पुत्राः सप्त तथा जाताः कन्याः पंच सुशोभनाः ।।
राज्ञां पंचसुता दत्ताः कन्याः कमललोचनाः ।।१५।।
पुत्रान्संस्थापयामास स्थानेषु वसुधाधिपान् ।।

पीवर्या सह सुप्तः स रात्रौ च वसुधाधिपः ।। १६ ।।
तत्र प्रबुद्धो नृपतिर्हाहेति वदते मुहुः ।।
स्मृत्वा तु मथुरां देवि स्मृत्वा संयमनं परम् ।।१७।।
तत सा पीवरी प्राह किमेवं भाषसे नृप ।।
प्रियाया वचनं श्रुत्वा राजा वचनमब्रवीत् ।।१८।।
मत्तः सुप्तः प्रमत्तश्च असम्बद्धं प्रभाषते ।।
निद्रावशस्य वचनं न सम्प्रष्टुं त्वमर्हसि ।। १९ ।।
पीवर्युवाच ।।
कथयस्व ममाद्य त्वं यद्यहं वल्लभा तव ।।
प्राणांस्त्यक्ष्याम्यहं देव गोपयिष्यसि मे यदि ।। 153.२० ।।
प्रियाया वचनं श्रुत्वा प्रत्युवाच नराधिपः ।।
अवश्यं यदि वक्तव्यं गच्छावो मथुरां पुरीम् ।। २१ ।।
तत्र गत्वा यथातत्त्वं वदिष्यामि शुभानने ।।
ददस्व विपुलं दानं ब्राह्मणेभ्यः सुलोचने ।। २२।।
पुत्रान्संस्थाप्य दौहित्रान्स्वे स्थाने शुभान्प्रिये ।।
ग्रामांश्च कोशं रत्नानि पुत्रान्वीक्ष्य पुनः पुनः ।। २३ ।।
ततः सम्मानयामास जनं पुरनिवासिनम् ।।
पितृपैतामहं राज्यं पालनीयं यथाक्रमम् ।। २४ ।।
राज्ये पुत्रान्नियोक्ष्यामि यदि वो रोचतेऽनघाः ।।
राज्यपुत्रकलत्राणि बन्धुवर्गं तथैव च ।। २५ ।।
नित्यमिच्छन्ति वै लोको यमस्येच्छन्ति नान्यथा ।।
एवं ज्ञात्वा प्रसन्नेन कर्त्तव्यं चात्मनो हितम् ।।२६।।
तस्मात्सर्वप्रयत्नेन गच्छावो मथुरां पुरीम् ।।
अहो कष्टं यदस्माभिः पुरा राज्यमनुष्ठितम् ।।२७।।
इदानीं तु मया ज्ञातं त्यागान्नास्ति परं सुखम् ।।
नास्ति विद्यासमं चक्षुर्नास्ति चक्षुस्समं बलम् ।। २८ ।।
नास्ति रागसमं दुःखं नास्ति त्यागात्परं सुखम् ।।
यः कामान्कुरुते सर्वान्यश्चैतान्केवलांस्त्यजेत् ।।२९।।
प्रायेण सर्वकामानां परित्यागो विशिष्यते ।।
अभिषिच्य सुतं ज्येष्ठमनुयोज्य परान्बहून् ।। 153.३० ।।
ततः पौरजनं दृष्ट्वा चतुरङ्गबलान्वितः ।।
ततः कालेन महता सम्प्राप्तो मथुरां पुरीम् ।। ३१ ।।
तेन दृष्टा पुरी रम्या वासवस्य पुरी यथा ।।

तीर्थैर्द्वादशभिर्युक्ता पुण्या पापहरा शुभा ।।३२।।
रम्यं मधुवनं नाम विष्णुस्थानमनुत्तमम् ।।
तं दृष्ट्वा मनुजो देवि कृतकृत्यो हि जायते ।। ३३ ।।
एकादशी शुक्लपक्षे मासि भाद्रपदे तथा ।।
तस्यां स्नातो नरो देवि कृतकृत्यो हि जायते ।। ३४ ।।
वनं कुन्दवनं नाम तृतीयं चैवमुत्तमम् ।।
तत्र गत्वा नरो देवि कृतकृत्यो हि जायते ।। ३५ ।।
एकादशी कृष्णपक्षे मासि भाद्रपदे हि वा ।।
तत्र स्नातो नरो देवि रुद्रलोके महीयते ।।३६।।
चतुर्थं काम्यकवनं वनानां वनमुत्तमम्।।
तत्र गत्वा नरो देवि मम लोके महीयते ।। ३७ ।।
विमलस्य च कुण्डे तु सर्वपापैः प्रमुच्यते ।।
यस्तत्र मुंचते प्राणान्मम लोकं स गच्छति ।।३८ ।।
पंचमं बकुलं नाम वनानामुत्तमं वनम् ।।
तत्र गत्वा नरो देवि अग्निस्थानं स गच्छति ।। ३९ ।।
यमुनायाः परे पारे देवानामपि दुर्ल्लभम् ।।
अस्ति भद्रवनं नाम षष्ठं वनमनुत्तमम् ।। 153.४० ।।
तत्र गत्वा तु वसुधे मद्भक्तो मत्परायणः ।।
तद्वनस्य प्रभावेण नागलोकं स गच्छति ।। ४१ ।।
सप्तमं तु वनं भूमे खादिरं लोकविश्रुतम् ।।
तत्र गत्वा नरो भद्रे मम लोकं स गच्छति ।। ४२ ।।
महावनं चाष्टमं तु सदैव तु मम प्रियम् ।।
यत्र गत्वा तु मनुज इन्द्रलोके महीयते ।। ४३ ।।
लोहजङ्घवनं नाम लोहजङ्घेन रक्षितम् ।।
नवमं तु वनं नाम सर्वपातकनाशनम् ।। ४४ ।।
वनं बिल्ववनं नाम दशमं देवपूजितम् ।।
तत्र गत्वा तु मनुजो ब्रह्मलोके महीयते ।। ४५ ।।
एकादशं तु भाण्डीरं योगिनः प्रियमुत्तमम् ।।
तस्य दर्शनमात्रेण नरो गर्भं न गच्छति ।।४६।।
भाण्डीरं तमनुप्राप्य वनानां वनमुत्तमम् ।।
वासुदेवं ततो दृष्ट्वा पुनर्जन्म न विद्यते ।। ४७ ।।
वृन्दावनं द्वादशकं वृन्दया परिरक्षितम् ।।
मम चैव प्रियं भूमे महापातकनाशनम् ।। ४८।।

वृन्दावनं च गोविन्दं ये पश्यन्ति वसुन्धरे ।।
न ते यमपुरं यान्ति यान्ति पुण्यकृतां गतिम् ।। ४९ ।।
इति श्रीवराहपुराणे भगवच्छास्त्रे मथुरामाहात्म्ये मथुरातीर्थमाहात्म्यं नाम
त्रिपंचाशदधिकशततमोऽध्यायः ।। १५३ ।।

अथ यमुनातीर्थप्रभावः ।।

वराह उवाच ।।

एवंविधां च मथुरां दृष्ट्वा तौ मुदमापतुः ।।
एवं तु वसतस्तस्य राज्ञस्तत्र वसुन्धरे ।। १ ।।
पप्रच्छ च तदा भार्या यद्गुह्यं पूर्वभाषितम् ।।
पुरस्थेन तदा राज्ञा वक्ष्यामि मथुरां प्रति।।२।। ।।
तन्मे वद महाराज यद्गोप्यं पूर्वभाषितम् ।।
राजाप्युवाच तां राज्ञीं त्वयाप्युक्तं पुरा मम ।। ३ ।।
तद्वदस्व स्वकं गुह्यं पश्चाद्वक्ष्याम्यहं तव ।।
इत्युक्त्वा पीवरी ज्ञात्वा प्रहस्य तु गुणालया ।। ४ ।।
प्रोवाच चैव राजानं मनसः प्रीतिकारणम् ।।
अहं तु पीवरी नाम गंगातीरनिवासिनी ।। ५ ।।
आगतेमां पुरीं द्रष्टुं कुमुदस्य तु द्वादशीम् ।।
नावमारुह्य यान्तीह पतिता यमुनाजले ।। ६ ।।
सद्यः प्राणैर्वियुक्ता च तत्तीर्थस्य प्रभावतः ।।
काशीराजपतेः कन्या यातास्मि वसुधाधिप ।। ७ ।।
त्वया विवाहिता राजन्न च मां विजहात्स्मृतिः ।।
एतत्तीर्थप्रभावेण धर्मयुक्ता तथाऽनघ।।८।।
धारापतनके तीर्थे त्यक्त्वा जीवितमात्मनः।।
एतच्छ्रुत्वा ततो राजा कथां प्राग्जन्मसम्भवाम् ।। ९ ।।
स्वां चाप्यकथयत्तस्यै यथा संयमने मृतः ।।
एवं तौ मथुरां प्राप्य स्नात्वा यामुनतीर्थके ।। 154.१० ।।
मां पश्यन्तौ नियमतस्तत्रैव निधनं गतौ ।।
मृतौ सर्वपरित्यक्तौ गतौ मम सलोकताम् ।। ११ ।।
एतत्ते कथितं देवि आश्चर्यं यदभून्महत् ।।
त्यक्त्वा चात्मतनुं तीर्थे धारापतनसंज्ञके ।। १२ ।।
नाकलोकमवाप्नोति त्यक्तपापो न संशयः ।।
यमुनेश्वरमासाद्य त्यक्त्वा जीवितमात्मनः ।।१३।।
विष्णुलोकमवाप्नोति दिव्यमूर्तिश्चतुर्भुजः ।।
धारापतनके स्नात्वा नाकलोके स मोदते ।।१४।।
अथात्र मुंचते प्राणान्मम लोकं स गच्छति ।।
अतः परं नागतीर्थं तीर्थानामुत्तमोत्तमम्।।१५।।
यत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ।।

घण्टाभरणकं तीर्थं सर्वपापप्रमोचनम् ।। १६।।
यस्मिन्स्नातो नरो याति सूर्यलोकं न संशयः ।।
अथाऽत्र मुंचते प्राणान्मम लोकं स गच्छति ।। १७ ।।
पुनरन्यत् प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।।
तीर्थानामुत्तमं तीर्थं ब्रह्मलोकेषु विश्रुतम् ।। १८ ।।
तत्र स्नात्वा च पीत्वा च नियतो नियताशनः ।।
ब्रह्मणा समनुज्ञातो मम लोकं स गच्छति ।। १९ ।।
सोमतीर्थे तु वसुधे पवित्रे यमुनाम्भसि ।।
यत्र पश्यति मां सोमो द्वापरे युगसंस्थिते ।। 154.२० ।।
तत्राभिषेकं कुर्वीत स्वकर्मपरिनिष्ठितः ।।
मोदते सोमलोके तु एवमेव न संशयः ।। २१ ।।
अथात्र मुंचते प्राणान्मम लोकं स गच्छति ।।
सरस्वत्याश्च पतनं सर्वपापहरं शुभम् ।। २२ ।।
तत्र स्नातो नरो देवि अवर्णोऽपि यतिर्भवेत् ।।
पुनरन्यत्प्रवक्ष्यामि माथुरे मम मण्डले ।। २३ ।।
यस्तत्र कुरुते स्नानं त्रिरात्रोपोषितो नरः।।
स्नानमात्रेण मनुजो मुच्यते ब्रह्महत्यया ।। २४ ।।
अथात्र मुंचते प्राणान्मम लोकं स गच्छति ।।
दशाश्वमेधमृषिभिः पूजितं सर्वदा मुदा ।। २५ ।।
तत्र ये स्नान्ति नियतास्तेषां स्वर्गो न दुर्लभः ।।
मथुरापश्चिमे पार्श्वे सततं त्वृषिपूजितम् ।। २६ ।।
ब्रह्मणा सृष्टिकाले तु मनसा निर्मितं पुरा ।।
मानसं नाम तीर्थं तु ऋषिभिः पूजितं पुरा ।। २७ ।।
तत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ।।
तीर्थं तु विघ्नराजस्य पुण्यं पापहरं शुभम् ।। २८ ।।
यत्र स्नातान्मनुष्यांश्च विघ्नराजो न पीडयेत् ।।
अष्टम्यां च चतुर्दश्यां चतुर्थ्यां तु विशेषतः ।। २९ ।।
तस्मिंस्तीर्थवरे स्नातं न पीडयति विघ्नराट् ।।
विद्यारम्भेषु सर्वेषु यज्ञदानक्रियासु च ।। 154.३० ।।
अविघ्नं कुरुते तस्य सततं पार्वतीसुतः ।।
तत्राथ मुञ्चते प्राणान्मम लोकं स गच्छति ।। ३१ ।।
ततः परे कोटितीर्थे पवित्रं परमं स्मृतम् ।।
तत्र वै स्नानमात्रेण गवां कोटिफलं लभेत् ।। ३२ ।।

तथात्र मुञ्चते प्राणाँल्लोभमोहविवर्जितः ।।
सोमलोकमतिक्रम्य मम लोकं च गच्छति ।। ३३ ।।
अतः परं शिवक्षेत्रमर्द्धक्रोशं तु दुष्करम् ।।
तत्र स्थितो हरो देवो मथुरां रक्षते सदा ।।३४।।
तत्र स्नात्वा च पीत्वा च माथुरं लभते फलम् ।।
अथाऽत्र मुञ्चते प्राणान्मम लोकं स गच्छति ।। ३५ ।।
इति श्रीवराहपुराणे मथुरामाहात्म्ये यमुनातीर्थप्रभावो नाम चतुष्पञ्चाशदधिकशततमोऽध्यायः ।। १५४ ।।

अथाऽक्रूरतीर्थप्रभावः ।।
श्रीवराह उवाच ।।
पुनरन्यत्प्रवक्ष्यामि मर्त्यलोके सुदुर्लभम् ।।
अनन्तं विदितं तीर्थमचलं ध्रुवमव्ययम् ।। १ ।।
तत्र .नित्यं स्थितो देवि लोकानां हितकाम्यया ।।
मां दृष्ट्वा मनुजा देवि मुक्तिभाजो भवन्ति ते ।। २ ।।
अयने विषुवे चैव तथा विष्णुपदीषु च ।।
अनन्तं तं समासाद्य मुच्यते सर्वपातकैः ।। ३ ।।
अक्रूरेति च विख्यातं मम क्षेत्रं वसुन्धरे ।।
तत्र स्नात्वा महाभागे राहुग्रस्ते दिवाकरे ।। ४ ।।
राजसूयाश्वमेधाभ्यां फलं प्राप्नोति मानवः ।।
तीर्थराजं हि चाक्रूरं गुह्यानां गुह्यमुत्तमम् ।। ५ ।।
तत्स्नानात्फलमाप्नोति प्रयागस्नानजं फलम् ।।
अस्मिंस्तीर्थे पुरावृत्तं तच्छृणुष्व वसुन्धरे ।। ६ ।।
नाम्ना तु सुधनो नाम मम भक्तः सदैव हि ।।
धनधान्यसमायुक्तः सुतयुक्तः सदैव हि ।। ७ ।।
बन्धुपुत्रकलत्रैश्च गृहे प्रीतिरनुत्तमा ।।
पुत्रदारसमेतस्य मयि भक्तिर्वसुन्धरे ।। ८।।
गच्छन्ति दिवसास्तस्य मासाः संवत्सरास्तथा ।।
करोति गृहकृत्यानि धनोपायेन नित्यशः ।। ९ ।।
मानकूटं तुलाकूटं न करोति स कर्हिचित् ।।
एवं च वसतस्तस्य बहवो वत्सरा गताः ।। 155.१० ।।
नित्यं कालं च कुरुते हरिपूजनमुत्तमम् ।।
पुष्पदीपप्रदानेन चन्दनेन सुगन्धिना ।। ११ ।।
उपहारेण दिव्येन धूपेन च सुगन्धिना ।।
एकादश्यां तु कुरुते पक्षयोरुभयोरपि ।। १२ ।।
उपवासं तु कुरुते रात्रौ जागरणं तथा ।।
स गच्छति यथाकालमक्रूरं तीर्थमुत्तमम् ।। १३ ।।
तत्रागत्य ममाग्रेऽसौ नृत्यते शुभदर्शनः ।।
सुधनस्तु वणिक्श्रेष्ठः कदाचिद्रात्रिजागरे ।। १४ ।।
चलमानो गृहीतस्तु चरणे ब्रह्मरक्षसा ।।
कृष्णवर्णो महाकाय ऊर्ध्वकेशो भयंकरः ।। १५ ।।
पादे गृहीत्वा वसुधे इदं वचनमब्रवीत् ।। १६ ।।

राक्षसोऽहं वणिक्श्रेष्ठ वसामि वनमाश्रितः ।।
त्वामद्य भक्षयिष्यामि तृप्तिं यास्यामि शाश्वतीम् ।। १७ ।।
सुधन उवाच ।।
प्रतीक्षस्व क्षणं मेऽद्य दास्यामि तव पुष्कलम् ।।
भक्षयिष्यसि मे गात्रं मिष्टान्नपरिपोषितम् ।। १८ ।।
जागरं देवदेवस्य कर्तुमिच्छामि राक्षस ।।
मम व्रतं सार्वकालं यज्जागर्मि हरेः पुरः ।। १९ ।।
तत्र जागरणं कृत्वा प्रभाते तव सन्निधौ ।।
आगमिष्याम्यहं शीघ्रमादित्योदयनं प्रति ।।155.२० ।।
ततः खादिष्यसे गात्रं विनिवृत्तस्य जागरात् ।।
विष्णुतुष्ट्यै व्रतमिदमारब्धं सर्वकामदम् ।। २१ ।।
मा कुरु व्रतभङ्गं मे रक्षो नारायणस्य हि ।।
जागरे विनिवृत्ते तु मां भक्षय यथेप्सितम् ।। २२ ।।
सुधनस्य वचः श्रुत्वा ब्रह्मरक्षः क्षुधार्दितः ।।
उवाच मधुरं वाक्यं वणिजं प्रति सादरम् ।। २३ ।।
मिथ्या प्रभाषसे साधो त्वं पुनः कथमेष्यसि ।।
को हि रक्षोमुखाद्भ्रष्टो मानुषो यो निवर्त्तते।।२४।।
राक्षसस्य वचः श्रुत्वा स वणिग्वाक्यमब्रवीत्।।
सत्यमूलं जगत्सर्वं सर्वं सत्ये प्रतिष्ठितम् ।।२५।।
सिद्धिं लभन्ते सत्येन ऋषयो वेदपारगाः ।।
यद्यहं च वणिक् पूर्वं कर्मणा न हि दूषितः ।।२६।।
प्राप्तश्च मानुषो भावो विहितेनान्तरात्मना ।।
शृणु मत्समयं रक्षो येनाहं पुनरागमम्।।२७।।
कृत्वा जागरणं तत्र नृत्यं कृत्वा यथासुखम् ।।
पुनरेष्याम्यहं रक्षो नासत्यं विद्यते मयि ।।२८।।
सत्येन दीयते कन्या सत्यं जल्पन्ति ब्राह्मणाः ।।
सत्योत्तीर्णा हि राजानः सत्येन वसुधा धृता ।। २९।।
स्वर्गमिच्छन्ति सत्येन मोक्षः सत्येन लभ्यते।।
सत्येन सूर्यस्तपति सोमः सत्येन राजते ।।155.३०।।
यमः सत्येन हरति सत्यादिन्द्रो विराजते।।
तत्सत्यं मम नश्येत यद्यहं नागमे पुनः ।। ३१ ।।
परदारांस्तु यो गच्छेत्काममोहप्रपीडितः ।। ३२ ।।
तस्य पापेन लिप्येऽहं यदि नायामि ते पुरः ।। ३३ ।।

दत्त्वा च भूमिदानं यो ह्यपकारं करोति च ।।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ।। ३४ ।।
पूर्वं भुक्त्वा स्त्रियं यस्तु सुखमाप्य विहृत्य च ।।
द्वेषात्तां यदि चेज्जह्यात्तस्यायं मे भवत्वलम् ।। ३५ ।।
पङ्क्तिभेदं तु यः कुर्यादेकपंक्त्याशिनां धुवम् ।।
तस्य पापेन लिप्येऽहं नागन्ता यदि ते पुरः ।। ३६ ।।
अमावस्यां महारक्षः श्राद्धं कृत्वा स्त्रियं व्रजेत् ।।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ।। ३७ ।।
अष्टाष्टमी त्वमावास्या उभे पक्षे चतुर्दशी ।।
अस्नातानां गतिं यास्याम्यहं वै नागमे पुनः ।। ३८ ।।
गुरोर्भ्रातुः सुतस्यापि सख्युर्वै मातुलस्य च ।।
व्यवस्यति च यन्नारी यो मोहेन विमोहितः ।। ३९ ।।
अभिगच्छति मन्दात्मा तत्पापं मे भवेत्तदा ।।
राजपत्नीं ब्रह्मपत्नीं विधवां योऽभिगच्छति ।। 155.४० ।।
तस्य पापेन लिप्येऽहं यद्यहं नागमे पुनः ।।
यस्तु कन्यां सकृद्दत्त्वा अन्यस्मै चेत्पुनर्ददेत् ।। ४१ ।।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ।।
राजयाजकयाज्याश्च ये च वै ग्रामयाजकाः ।।४२ ।।
तेषां पापेन लिप्येऽहं यद्यहं नागमे पुनः ।।
ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते शठे ।।४३।।
या गतिस्तां प्रपद्येऽहं यद्यहं नागमे पुनः ।।
श्रीवराह उवाच।।
सुधनस्य वचः श्रुत्वा सन्तुष्टो ब्रह्मराक्षसः ।।४४।।
उवाच मधुरं वाक्यं गच्छ शीघ्रं नमोऽस्तु ते।।
ब्रह्मराक्षसमुक्तोऽसौ वणिक् तु दृढनिश्चयः।।४५।।
पुनर्नृत्यति चैवाग्रे मम भक्तो व्यवस्थितः ।।
अथ प्रभातसमये नृत्यचित्तोऽति कोविदः।।४६।।
पुनः पुनर्वै उच्चार्य नमो नारायणाय च।।
निवृत्ते जागरे सोऽथ कालिन्दीसलिलाप्लुतः ।।४७।।
दृष्ट्वा मां दिव्यरूपं तु गतोऽसौ मथुरां पुरीम्।।
दृष्टश्चाग्रे त्वहं तेन पुरुषो दिव्यरूपवान् ।।४८।।
स च पृष्टो मया देवि क्व भवान्प्रस्थितो द्रुतम् ।।
पुरुषस्य वचः श्रुत्वा सुधनो वाक्यमब्रवीत् ।।४९।।

अहं गच्छामि त्वरितो ब्रह्मराक्षससन्निधौ ।।
निवारयामास तदा न गंतव्यं त्वयानघ।।155.५०।।
जीवतो धर्ममाहात्म्यं मृते धर्मः कुतो यशः ।।
पुरुषस्य वचः श्रुत्वा स वणिग्वाक्यमब्रवीत् ।। ५१- ।।
तत्र सत्यं वदिष्यामि यास्ये राक्षससन्निधौ ।।
आगतोऽहं महाभाग नर्त्तयित्वा यथासुखम् ।। ५२ ।।
विष्णवे लोकनाथाय चागतो हरिजागरात् ।।
इदं शरीरं मे रक्षो भक्षयस्व यथेप्सितम् ।। ५३ ।।
यथान्यायं विधानेन यथा वा तव रोचते ।।
नोक्तपूर्वं मयाऽसत्यं कदाचिदपि राक्षस ।। ५४ ।।
तेन सत्येन मां भुङ्क्ष्व ब्रह्मराक्षस दारुण ।।
वणिजस्तु वचः श्रुत्वा ततोऽसौ ब्रह्मराक्षसः ।। ५५ ।।
उवाच मधुरं वाक्यं सुधनं तदनन्तरम् ।।
साधु तुष्टोऽस्मि भद्रं ते सत्यं धर्मश्च पालितः ।।५६।।
वणिक् त्वं चातिविज्ञस्तु यस्य ते गतिरीदृशी ।।
जागरस्य समस्तस्य मम पुण्यं प्रयच्छ वै ।। ५७ ।।
सत्यपुण्यप्रभावेण यथाहं मुक्तिमाप्नुयाम् ।।
सुधन उवाच।।
नाहं दास्यामि ते पुण्यं नृत्यस्य नरभोजन ।। ५८ ।।
अर्द्धं वाथ समस्तं वा प्रहरं चार्द्धमेव वा ।।
सुधनस्य वचः श्रुत्वा अब्रवीद्ब्रह्मराक्षसः ।। ५९ ।।
एकनृत्यस्य मे पुण्यं दद त्वं वणिगुत्तम ।।
सुधन उवाच ।।
नाऽहं दास्यामि ते पुण्यं यथोक्तं च समाचर ।। 155.६० ।।
केन त्वं कर्मदोषेण राक्षसत्वमुपागतः ।।
यत्ते गुह्यं महाभाग सर्वं तत्कथयस्व मे ।। ६१ ।।
सुधनस्य वचः श्रुत्वा विहसित्वाह राक्षसः ।।
किं त्वं मां च विजानासि प्रतिवासि ह्यहं तव ।। ६२ ।।
अग्निदत्तस्तु वै नाम छान्दसो ब्राह्मणोत्तमः ।।
इष्टकांस्तु हरन्नित्यं परकीयांश्च सर्वदा ।। ६३ ।।
मृतस्सुगृहकामेन राक्षसत्वमुपागतः ।।
मया त्वं हि यथा प्राप्त उपकारं कुरुष्व मे ।। ६४ ।।
एकविश्रामपुण्यं मे देहि त्वं वणिगुत्तम ।।

कृपया तु समायुक्तो वणिग्वचनमब्रवीत् ।। ६५ ।।
साधु राक्षस दत्तं ते एकनृत्यं मया तव ।।
एकनृत्यप्रभावेण राक्षसो मुक्तिमागतः ।। ६६ ।।
श्रीवराह उवाच ।।
सुधनस्तु ततो देवि विश्वरूपं जनार्दनम् ।।
अग्रतस्तु स्थितं देवं दृष्ट्वाऽसौ धरणीं गतः ।।६७।।
उवाच मधुरं वाक्यं देवदेवो जनार्दनः।।
चतुर्भुजो दिव्यतनुः शंखचक्रगदाधरः ।। ६८ ।।
विमानवरमारुह्य मम लोकं व्रजस्व च ।।
इत्युक्त्वा माधवो देवस्तत्रैवान्तरधीयत ।। ६९ ।।
सुधनः सशरीरोऽपि सकुटुंबो दिवं ययौ ।।
विमानवरमारुह्य विष्णोर्लोकं जगाम ह ।। 155.७० ।।
एष तीर्थप्रभावो वै कथितस्ते वसुन्धरे ।।
अक्रूराच्च परं तीर्थं न भूतं न भविष्यति ।। ७१ ।।
तस्य तीर्थप्रभावेण सुधनो मुक्तिमाप्तवान् ।।
द्वादशी शुक्लपक्षे तु कुमुदस्य च वा भवेत्।।७२।।
तस्मिन्स्नातस्य वसुधे राजसूयफलं भवेत् ।।
कार्त्तिकीं समनुप्राप्य तत्तीर्थे तु वसुन्धरे ।।७३।।
वृषोत्सर्गं नरः कुर्वंस्तारयेत्सकुलोद्भवान् ।।
श्राद्धं यः कुरुते सुभ्रु कार्तिक्यां प्रयतो नरः ।। ७४ ।।
पितरस्तारितास्तेन सदैव प्रपितामहाः ।। ७५ ।।
इति श्रीवराहपुरणे मथुरामाहात्म्ये अकूर तीर्थप्रभावो नाम पंचपंचाशदधिकशततमोऽध्यायः ।। १५५ ।।

अथ मथुराप्रादुर्भावः ।।
श्रीवराह उवाच ।।
वत्सक्रीडनकं नाम तीर्थं वक्ष्ये परं मम ।।
तत्र रक्तशिलाबद्धं रक्तचन्दनभूषितम् ।। १ ।।
स्नानमात्रेण तत्रैव वायुलोकं व्रजेन्नरः ।।
तत्राऽथ मुञ्चते प्राणान्मम लोके महीयते ।। २ ।।
पुनरन्यत्प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।।
अस्ति भाण्डीरकं नाम यत्तीर्थं परमुत्तमम् ।। ३ ।।
सालैस्तालैश्च तरुभिस्तमालैरर्ज्जुनैस्तथा ।।
इङ्गुदैः पीलुकैश्चैव करीरैरक्तपुष्पकैः ।। ४ ।।
तस्मिन्भाण्डीरके स्नातो नियतो नियताशनः ।।
सर्वपापविनिर्मुक्तश्चेन्द्रलोकं स गच्छति ।। ५ ।।
तत्राऽथ मुञ्चते प्राणान्मम लोकं च गच्छति ।।
पुनरन्यत्प्रवक्ष्यामि क्षेत्रं वृन्दावनं मम ।। ६ ।।
तत्राहं क्रीडयिष्यामि गोभिर् गोपालकैः सह ।।
रम्यं च सुप्रतीतं च देवदानवदुर्लभम् ।।७।।
तत्र कुण्डे महाभागे बहुगुल्मलतावृते ।।
तत्र स्नानं प्रकुर्वीत चैकरात्रोषितो नरः।।८।।
गन्धर्वैरप्सरोभिश्च क्रीडमानः स मोदते ।।
तत्राथ मुञ्चते प्राणान्मम लोकं च गच्छति ।। ९ ।।
पुनरन्यत्प्रवक्ष्यामि महापातकनाशनम् ।।
तत्र वृन्दावने तीर्थे यत्र केशी निपातितः ।। 156.१० ।।
तीर्थं शतगुणं पुण्यं यत्र केशी निपातितः ।।
केश्यः शतगुणं पुण्यं यत्र विश्रमते हरिः ।। ११ ।।
तस्माच्छतगुणं पुण्यं नात्र कार्या विचारणा ।।
तत्रापि च विशेषोऽस्ति केशीतीर्थे वसुन्धरे ।।१२।।
तस्मिन्पिण्डप्रदानेन गयातुल्य फलं भवेत्।।
स्नाने दाने तथा होमे अग्निष्टोमफलं भवेत् ।। १३ ।।
सूर्यतीर्थेषु वसुधे द्वादशादित्यसंज्ञिके ।।
कालियो रमते तत्र कालिंद्याः सलिले शुभे।।१४।।
कालियो दमितस्तत्र आदित्याः स्थापिता मया ।।
वरं वृणुध्वं भद्रं वो यद्वो मनसि वर्त्तते।।१९।।
आदित्या ऊचुः ।।

वरं ददासि नो देव वरार्हा यदि वा वयम् ।।
अस्मिंस्तीर्थवरे स्नानमस्माकं संप्रदीयताम् ।। १६ ।।
आदित्यानां वचः श्रुत्वा क्रीडां कृत्वा वसुन्धरे ।।
स्नानमात्रेण तत्रैव मुच्यते सर्वकिल्बिषैः ।। १७ ।।
अथात्र मुंचते प्राणान्मम लोकं स गच्छति ।।
उत्तरे हरिदेवस्य दक्षिणे कालियस्य तु ।। १८ ।।
अनयोर्देवयोर्मध्ये ये मृतास्तेऽपुनर्भवाः ।।१९।।
इति श्रीवराहपुराणे मथुरामाहात्म्ये मथुराप्रादुर्भावो नाम षट्पंचाशदधिकशततमोऽध्यायः।।१५६।।

अथ मलयार्जुनतीर्थादिस्नानादिप्रशंसा ।।
श्रीवराह उवाच ।।
यमुनापारमुल्लङ्घ्य तत्रैव च महामुने ।।
मलयार्जुनकं तीर्थं कुण्डं तत्र च विद्यते ।। १ ।।
पर्यस्तं तत्र शकटं भिन्नभाण्डकुटीघटम् ।।
तत्र स्नानोपवासाभ्यामनन्तं फलमश्नुते ।। २ ।।
द्वादश्यां शुक्लपक्षस्य ज्येष्ठमासे वसुन्धरे ।।
तत्र स्नानेन दानेन महापातकनाशनम् ।। ३ ।।
ज्येष्ठस्य शुक्लद्वादश्यां स्नात्वा सुनियतेन्द्रियः ।।
मथुरायां हरिं दृष्ट्वा प्राप्नोति परमां गतिम् ।। ४ ।।
यमुनासलिले स्नातः शुचिर्भूत्वा जितेन्द्रियः ।।
समभ्यर्च्याच्युतं सम्यक्प्राप्नोति परमां गतिम् ।। ५ ।।
अपि चास्मत्कुले जातः कालिन्दीसलिले प्लुतः ।।
अर्चयिष्यति गोविन्दं मथुरायामुपोषितः ।। ६ ।।
इति गायन्ति पितरः परलोकगताः सदा ।।
द्वादश्यां ज्येष्ठमासे तु समभ्यर्च्य जनार्दनम् ।। ७ ।।
धन्योऽसौ पिण्डनिर्वापं यमुनायां करिष्यति ।।
तत्रैव तु महातीर्थे वने बहुलसंज्ञके ।। ८ ।।
तत्र स्नातो नरो देवि रुद्रलोके महीयते ।।
द्वादश्यां चैत्रमासे तु शुक्लपक्षे वसुन्धरे ।। ९ ।।
तत्र स्नातो नरो याति मम लोकं न संशयः ।।
अस्ति भाण्डह्रदं नाम परपारेषु दुर्ल्लभम् ।। 157.१० ।।
दृश्यन्तेऽहरहस्तत्र आदित्याः शुभकारिणः ।।
तत्र चार्कस्थले कुण्डे स्नानं यः कुरुते नरः ।। ११ ।।
सर्वपापविनिर्मुक्तः सूर्यलोकं व्रजेन्नरः ।।
तत्राथ मुञ्चते प्राणान्मम लोकं स गच्छति ।। १२ ।।
अर्कस्थलसमीपे तु कूपं तु विमलोदकम् ।।
सप्तसामुद्रिकं नाम देवानामपि दुर्ल्लभम् ।। १३ ।।
तत्र स्नानेन वसुधे स्वच्छन्दगमनालयः ।।
अथात्र मुंचते प्राणान्मम लोकं स गच्छति ।। १४ ।।
तत्र वीरस्थलं नाम क्षेत्रं गुह्यं परं मम ।।
आसन्नसलिलं चैव पद्मोत्पलविभूषितम् ।। १९ ।।
यस्तत्र कुरुते स्नानमेकरात्रोषितो नरः ।।

स मत्प्रसादात्सुश्रोणि वीरलोके महीयते ।। १६ ।।
अथाऽत्र मुञ्चते प्राणान्ममलोकं स गच्छति ।।
कुशस्थलं च तत्रैव पुण्यं पापहरं शुभम् ।। १७ ।।
तत्र स्नातो नरो देवि ब्रह्मलोके महीयते।।
अथात्र मुंचते प्राणान्मम लोकं स गच्छति ।।१८।।
तत्र पुष्पस्थलं नाम शिवक्षेत्रमनुत्तमम् ।।
तत्र स्नानेन मनुजः शिवलोके महीयते ।। १९ ।।
ख्याता एते पञ्च देशा महापापविनाशनाः ।।
तेषु स्नानेषु वसुधे ब्रह्मणा सह मोदते ।।157.२०।।
तत्र गोपीश्वरो नाम महापातकनाशनः ।।
कृष्णस्य रमणार्थं हि सहस्राणि च षोडश ।। २१ ।।
गोप्यो रूपाणि चक्रे च तत्र क्रीडनके हरिः ।।
यदा बालेन कृष्णेन भग्नार्जुनयुगं तथा ।।२२।।
शकटं च तदा भिन्नं घटभाण्डकुटीरकम् ।।
ताभिस्तत्रैव गोविन्दं क्रीडन्तं च यदृच्छया ।। २३ ।।
परिष्वज्य हि धर्मेण व्याजेन च सुगोपितम् ।।
मातलिस्तत्र चागत्य देवैरुक्तं यथोदितम् ।। २४ ।।
गोपवेषधरं देवमभिषेकं चकार ह ।।
आनीय सप्त कलशान्रत्नौषधिपरिप्लुतान् ।। २९ ।।
गोपीमण्डलपातेन स्नापितो हेमकुण्डलः ।।
गोप्यो गायन्ति नृत्यन्ति कृष्ण कृष्ण इति ब्रुवन् ।। २६ ।।
तत्र गोपीश्वरं देवं मातलिः स्थाप्य पूजितम् ।।
कूपं च स्थापयामास मांगल्यैः कलशैः शुभैः ।। २७ ।।
सप्तसामुद्रिकं नाम कूपं तु विमलोदकम् ।।
देवस्याग्रे तु वसुधे गोपा यस्य महात्मनः ।। २८ ।।
पितरश्चापि नन्दन्ति पानीयं पिण्डमेव च ।।
सप्तसामुद्रिके कूपे यः श्राद्धं संप्रदास्यति ।।२९।।
पितरस्तारितास्तेन कुलानां सप्तसप्ततिः ।।
सोमवारे त्वमायां वै पिण्डदानं करोति यः ।। 157.३० ।।
पितरस्तस्य तृप्यन्ति कोटिवर्षशतान्यलम् ।।
गोविन्दस्य च देवस्य तथा गोपीश्वरस्य च ।। ३१ ।।
मध्ये तु मरणं यस्य शक्रस्यैति सलोकताम् ।।
तथा बहुलरुद्रस्य गोविन्दस्यैव मध्यतः ।।३२।।

तद्वद्ब्रह्माणमाशास्य गोपीशस्यैव मध्यतः ।।
एतेषु स्नानदानेन पिण्डपातेन भामिनि ।। ३३ ।।
नरस्तारयते पुंसां दश पूर्वान्दशापरान् ।।
एषु स्नातो नरो देवि देवैश्च सह मोदते ।। ३४ ।।
तत्राथ मुञ्चते प्राणान्मम लोकं स गच्छति।।
वसुपत्रं महातीर्थं पुण्यं परममुत्तमम् ।। ३५ ।।
मथुरादक्षिणे पार्श्वे क्षेत्रं फाल्गुनकं तथा ।।
तत्र स्नात्वा च पीत्वा च परलोके महीयते ।। ३६ ।।
तत्र फाल्गुनके चैव तीर्थे परमदुर्ल्लभे ।।
वृषभाञ्जनकं नाम क्षेत्रं मे दुर्ल्लभं महत् ।। ३७ ।।
तत्राभिषेकं यः कुर्यात्स देवैः सह मोदते ।।
तत्र यो मुञ्चते प्राणान्मम लोकं स गच्छति ।। ३८ ।।
अस्ति तालवनं नाम धेनुकासुररक्षितम् ।।
मथुरापश्चिमे भागे अदूरादर्द्धयोजनम् ।। ३९ ।।
तत्र कुण्डं स्वच्छजलं नीलोत्पलविभूषितम् ।।
तत्र स्नानेन दानेन वाञ्छितं फलमाप्नुयात् ।। 157.४० ।।
अस्ति संपीठकं नाम अस्मिन् क्षेत्रे परं मम ।।
तत्र कुण्डं विशालाक्षि प्रसन्नसलिलं शुभम् ।।४१।।
तत्र स्नानं च ये कुर्युरेकरात्रोषिता नराः।।
अग्निष्टोम फलं चैव लभन्ते नात्र संशयः ।। ४२ ।।
अथात्र मुञ्चते प्राणान्मम लोकं स गच्छति ।।
देवकीगर्भसंभूतो वसुदेवगृहे शुभे ।। ४३ ।।
तत्र पुण्येन हि मया रविराराधितः शुभः ।।
लब्धः प्राज्ञो मया पुत्रो रूपवांश्च गुणान्वितः ।।४४।।
तत्रैवं तु ततो दृष्टः पद्महस्तो दिवाकरः ।।
मासि भाद्रपदे देवी तिग्मतेजा विभावसुः ।।४५।।
सप्तम्यां कृष्णपक्षस्य रविस्तिष्ठति सर्वदा ।।
तस्मिन्नहनि यः स्नानं कुर्यात्कुण्डे समाहितः ।।४६।।
न तस्य दुर्ल्लभं लोके सर्वदाता दिवाकरः ।।
आदित्येऽहनि सम्प्राप्ते सप्तम्यां तु वसुन्धरे ।। ४७ ।।
नरो वाप्यथवा नारी प्राप्नोत्यविकलं फलम् ।।
तत्रैव तु तपस्तप्तं राज्ञा शन्तनुना पुरा ।। ४८ ।।
आदित्यं तु पुरः स्थाप्य प्राप्तो भीष्मो महाबलः ।।

शन्तनुः प्राप्य तं पुत्रं गतो ऽसौ हस्तिनापुरम् ।।४९।।
तत्र स्नानेन दानेन वाञ्छितं फलमाप्नुयात् ।। 157.५० ।।
इति श्रीवराहपुराणे मथुरामाहात्म्ये मलयार्जुनतीर्थादिस्नानादि प्रशंसा नाम सप्तपञ्चाशदधिकशततमोध्यायः ।। १५७ ।।

अथ मथुरातीर्थप्रादुर्भावः ।।
श्रीवराह उवाच ।।
विंशतिर्योजनानां तु माथुरं मम मण्डलम् ।।
यत्रतत्र नरः स्नातो मुच्यते सर्वकिल्बिषैः ।।१।।
वर्षाकाले तु स्थातव्यं यच्च स्थानं तु हर्षदम् ।।
पुण्यात्पुण्यतरं चैव माथुरे मम मण्डले ।।२।।
सप्तद्वीपेषु तीर्थानि पुण्यान्यायतनानि च ।।
मथुरायां गमिष्यन्ति प्रसुप्ते तु सदा मयि ।। ३ ।।
सुप्तोत्थितं तु दृष्ट्वा मां मथुरायां वसुन्धरे ।।
ते नरा मां प्रपश्यन्ति सर्वकालं न संशयः ।। ४ ।।
सुप्तोत्थितं तु वसुधे दृष्ट्वा मे मुखपङ्कजम् ।।
सप्तजन्मकृतं पापं तत्क्षणादेव मुञ्चति ।।५।।
मथुरावासिनो लोकाः सर्वे ते मुक्तिभाजनाः ।।
मथुरां समनुप्राप्य दृष्ट्वा देवं तु केशवम् ।। ६ ।।
स्नात्वा पुनस्तु कालिन्द्यां मम लोके महीयते ।।
स तत्फलमवाप्नोति राजसूयाश्वमेधयोः ।। ७ ।।
प्रदक्षिणीकृतो येन मथुरायां तु केशवः ।।
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा ।।८।।
घृतपूर्णेन पात्रेण समग्रेण च वाससा ।।
केशवस्याग्रतो दत्त्वा दीपकं तु वसुन्धरे ।। ९ ।।
पंचयोजनविस्तारमायामं पंच विस्तरम् ।।
दीपमालासमाकीर्णं विमानं लभते नरः ।। 158.१० ।।
सर्वकामसमृद्धं तदप्सरोगणसेवितम् ।।
रम्यमालासमाकीर्णं भोगाढ्यं सर्वकामिकम् ।।११।।
समारोहति वै नित्यं प्रभामण्डलमण्डितम् ।।
ये देवा ये च गन्धर्वाः सिद्धाश्चारणपन्नगाः ।। १२ ।।
तं स्पृहन्ति सदा देवि पुण्यमस्ति कृतं भुवि ।।
यदि कालान्तरे पुण्यं हीयतेऽस्य पुरा कृतम् ।। १३ ।।
सतां पुण्यगृहे देवि जायते मानवो हि सः ।।
धरण्युवाच ।।
क्षेत्रं हि रक्षते देव कस्त्विदं पापनाशनम्।।१४।।
पशुभूतपिशाचैश्च रक्षोभूतविनायकैः ।।
एवमादिभिराकृष्टं तत्क्षेत्रं फलदं भवेत् ।। १५ ।।

श्रीवराह उवाच ।।
मत्क्षेत्रं ते न पश्यन्ति मत्प्रभावात्कदाचन ।।
न विकुर्वन्ति ते दृष्ट्वा मत्पराणां हि देहिनाम् ।। १६ ।।
रक्षार्थं हि मया दत्ता दिक्पालास्तु वरानने ।।
लोकपालास्तु चत्वारस्तीर्थं रक्षन्ति ये सदा ।। १७ ।।
पूर्वां रक्षति इन्द्रस्तु यमो रक्षति दक्षिणाम् ।।
पश्चिमां रक्षते नित्यं वरुणः पाशभृत्स्वयम् ।।१८।।
उत्तरां वै कुबेरस्तु महाबलपराक्रमः ।।
मध्यं तु रक्षते नित्यं शिवो देव उमापतिः ।।१९ ।।
मथुरायां गृहं यस्तु प्रासादं कुरुते नरः ।।
चतुर्भुजस्तु विज्ञेयो जीवन्मुक्तो न संशयः ।।158.२०।।
मथुराया महाभागे कुण्डे च विमलोदके ।।
गम्भीरे सर्वदा देवि तिष्ठते च चतुर्भुजः ।।२१।।
तत्र मुञ्चेत यः प्राणान् स्नानं कृत्वा वसुन्धरे ।।
वैष्णवं लोकमासाद्य क्रीडते स सुखादिव ।।२२।।
तत्रैव तु सदाश्चर्यं कथ्यमानं मया शृणु ।।
यदुच्यते वै सुश्रोणि कुण्डे तु विमलोदके ।। २३ ।।
हेमन्ते तु भवेच्चोष्णं शीतलं ग्रीष्मके भवेत् ।।
तेजसा मम सुश्रोणि तुषारतद्दशोपमम् ।। २४ ।।
न वर्द्धते च वर्षासु ग्रीष्मे चापि न हीयते ।।
एतच्च महदाश्चर्यं तस्मिन्कुण्डे परं मम ।।२५।।
पदे पदे तीर्थफलं मथुरायां वसुंधरे।।
तत्र तत्र नरः स्नातो मुच्यते सर्वपातकैः ।। २६ ।।
वर्षासु स्थूलतीर्थेषु स्नातव्यं तु प्रयत्नतः ।।
कूपे ह्रदे देवखाते गर्तेषु च नदीषु च ।।२७।।
प्रवाहेषु च दिव्येषु नदीनां सङ्मेषु च ।।
वर्षासु सर्वतः स्नायाद्यदीच्छेत्परमां गतिम् ।। २८।।
अस्ति क्षेत्रं परं दिव्यं मुचुकुन्दं तु नामतः ।।
मुचुकुंदः स्वपित्यत्र दानवासुरपातनः ।। २९ ।।
तत्र कुण्डे नरः स्नात्वा प्राप्नोत्यभिमतं जलम् ।।
अथात्र मुञ्चते प्राणान्मम लोकं स गच्छति ।। 158.३० ।।
27
इहजन्मकृतं पापमन्यजन्मकृतं च यत् ।।
शीघ्रं नश्यति तत्सर्वं कीर्त्तनात्केशवस्य तु ।।३१।।

किं तस्य बहुभिर्मंत्रैर्भक्तिर्यस्य जनार्दने।।
नरके पच्यमानस्य गतिर्देवि जनार्दनः ।। ३२ ।।
कृत्वा प्रदक्षिणं देवि विश्रामं कुरुते तु यः ।।
नारायणसमीपे तु सोऽनन्तफलमश्नुते ।।३३।।
सुप्तोत्थितं हरिं दृष्ट्वा मथुरायां वसुन्धरे ।।
न तस्य पुनरावृत्तिर्जायते स चतुर्भुजः ।। ३४।।
कुमुदस्य तु मासस्य नवम्यां तु वसुन्धरे ।।
प्रदक्षिणीकृत्य भुवं सर्वपापैः प्रमुच्यते ।। ३५ ।।
ब्रह्मघ्नश्च सुरापश्च गोघ्नो भग्नव्रतस्तथा ।।
मथुरां तु परिक्रम्य पूतो भवति मानवः ।। ३६ ।।
अष्टम्यां प्राप्य मथुरां दन्तधावनपूर्वकम् ।।
ब्रह्मचर्येण तां रात्रिं कृतसंकल्पमानसः ।। ३७ ।।
धौतवस्त्रस्तु सुस्नातो मौनव्रतपरायणः ।।
प्रदक्षिणं तु कुर्वीत सर्वपातक नाशनम् ।।३८।।
प्रदक्षिणां प्रकुर्वाणमन्यो यः स्पृशते नरः ।।
सर्वान् कामानवाप्नोति नात्र कार्या विचारणा ।।३९।।
मथुरायां नरो गत्वा दृष्ट्वा देवं स्वयम्भुवम् ।।
प्रदक्षिणायां यत्पुण्यं तत्पुण्यं लभते नरः ।। 158.४० ।।
देवस्याग्रे तु वसुधे कूपं तु विमलोदकम्।।
पितरश्चाभिनन्दन्ति पानीयं पिण्डमेव च ।।४१।।
चतुःसामुद्रिकं नाम त्रिषु लोकेषु विश्रुतम् ।।
तत्र स्नातो नरो भद्रे देवैश्च सह मोदते ।। ४२ ।।
तत्राथ मुञ्चते प्राणान्मम लोकं स गच्छति ।।४३ ।।
इति श्रीवराहपुराणे मथुरामाहात्म्ये मथुरातीर्थप्रभावो नामाष्टपंचाशदधिकशततमोऽध्यायः ।। १५८ ।।

अथ मथुराप्रदक्षिणा विध्यादिकम् ।।
धरण्युवाच ।।
श्रुतं सुबहुशो देव तीर्थानां गुणविस्तरम् ।।
प्रोच्यमानं तु पुण्याख्यं त्वत्प्रसादाज्जनार्दन ।। १ ।।
न दानैर्न तपोभिश्च न यज्ञैस्तादृशं फलम्।।
भूमेः प्रदक्षिणायाश्च यादृशं तीर्थसेवया ।। २ ।।
भुवश्च चतुरन्तायास्तीर्थप्रक्रमणं हरे ।।
सर्वतीर्थाभिगमनमस्ति दुर्गतरं नृणाम् ।। ३।।
अस्ति कश्चिदुपायोऽत्र येन सम्यगवाप्यते ।।
प्रसादसुमुखो भूत्वा तत्सर्वं कथयस्व मे ।। ४ ।।
श्रीवराह उवाच ।।
भद्रे शृणु महत्पुण्यं पृथिव्यां सर्वतोदिशम् ।।
परिक्रम्य यथाध्वानं प्रमाणगणितं शुभम् ।।५।।
भूम्याः परिक्रमे सम्यक्योजनानां प्रमाणकम् ।।
षष्टिकोटिसहस्राणि षष्टिकोटिशतानि च ।। ६ ।।
तीर्थान्येतानि देवाश्च तारकाश्च नभस्थले ।।
गणितानि समस्तानि वायुना जगदायुषा ।। ७ ।।
ब्रह्मणा लोमशेनैव नारदेन ध्रुवेण च ।।
जाम्बवत्याश्च पुत्रेण रावणेन हनूमता ।।८।।
एतैरनेकधा देवैः ससागरवना मही ।।
क्रमिता बलिना चैव बाह्यमण्डलरेखया ।। ९ ।।
अन्तरा भ्रमणेनैव सुग्रीवेण महात्मना ।।
तथा च पूर्वं देवेन्द्रैः पंचभिः पाण्डुनन्दनैः ।।159.१०।।
योगसिद्धैस्तथा कैश्चिन्मार्कण्डेयमुखैरपि ।।
क्रमिता न क्रमिष्यन्ति न पूर्वे नापरे जनाः ।।११।।
अल्पसत्त्वबलोपेतैः प्राणिभिश्चाल्पबुद्धिभिः ।।
मनसापि न शक्यंते गमनस्य च का कथा ।। १२ ।।
सप्तद्वीपे च तीर्थानां भ्रमणाद्यत्फलं भवेत् ।।
प्राप्यते चाधिकं तस्मान्मथुरायाः परिक्रमे।। १३ ।।
मथुरां समनुप्राप्य यस्तु कुर्यात्प्रदक्षिणम् ।।
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा ।।१४।।
तस्मात्सर्वप्रयत्नेन सर्वकामानभीप्सुभिः।।
कर्त्तव्या मथुरां प्राप्य नरैः सम्यक्प्रदक्षिणा ।।१५।।

धरण्युवाच ।।
यथाविधानक्रमणं मथुरायामवाप्यते ।।
प्रदक्षिणाफलं सम्यगनुक्रमविधिं वद।।१६।।
श्रीवराह उवाच ।।
पुरा सप्तर्षिभिः पृष्टो ब्रह्मा लोकपितामहः ।।
इदमेव पुरा प्रोक्तं यथा पृष्टा त्वया ह्यहम् ।।१७।।
श्रुत्वा सर्वपुराणोक्तं तीर्थानुक्रमणं परम् ।।
पृथिव्याश्चतुरन्तायास्तथा तद्वक्तुमुद्यतः ।।१८।।
सर्वदेवेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम् ।।
सर्वदानेषु यत्प्रोक्तमिष्टापूर्त्तेषु चैव हि ।। १९ ।।
यत्फलं लभ्यते विप्रास्तस्माच्छतगुणोत्तरम् ।।
प्रक्रमान्मथुरायास्तु सत्यमेतद्वदामि वः ।। 159.२० ।।
इत्युक्त्वा ऋषयो जग्मुरभिवाद्य स्वयम्भुवम् ।।
आगत्य मथुरां देवीमाश्रमांश्चक्रिरे द्विजाः ।। २१ ।।
ध्रुवेण सहिताश्चासन्कामयानास्तु तद्दिनम् ।।
कुमुदस्य तु मासस्य नवम्यां शुक्लपक्षके ।। २२ ।।
मथुरोपक्रमं कृत्वा सर्वपापैः प्रमुच्यते ।। २३ ।।
इति श्रीवराहपुराणे मथुरामाहात्म्ये मथुराप्रदक्षिणादिकं नामैकोनषष्ट्यधिकशततमोऽध्यायः ।। १५९ ।।

अथ मथुरापरिक्रमप्रादुर्भावः ।।
श्रीवराह उवाच ।।
अष्टम्यां मथुरां प्राप्य कार्त्तिकस्यासिते नरः ।।
स्नात्वा विश्रांतितीर्थे तु पितृदेवार्च्चने रतः ।। १ ।।
विश्रांतिदर्शनं कृत्वा दीर्घविष्णुं च केशवम् ।।
प्रदक्षिणायाः सम्यग्वै फलमाप्नोति मानवः ।। २ ।।
उपवासरतः सम्यगल्पमेध्याशनोऽथवा ।।
दन्तकाष्ठं च सायाह्ने कृत्वा शुद्ध्यर्थमात्मनः ।। ३ ।।
ब्रह्मचर्येण तां रात्रिं कृत्वा सङ्कल्प्य मानसे ।।
धौतवस्त्रेण सुस्नातो मौनव्रतपरायणः ।। ४ ।।
तिलाक्षतकुशान् गृह्य पितृदेवार्थमुद्यतः ।।
दीपहस्तो वनं गत्वा श्रान्तो विश्रान्तिजागरे ।। ५ ।।
यथानुक्रमणं तैश्च ध्रुवाद्यैर्ऋषिभिः कृतम् ।।
एवं परंपरायातं क्रमणीयं नरोत्तमैः ।। ६ ।।
प्रदक्षिणा वर्त्तमाना भक्तिश्रद्धासमन्वितः ।।
सर्वान्कामानवाप्नोति हयमेधफलं लभेत् ।। ७ ।।
एवं जागरणं कृत्वा नवम्यां नियतः शुचिः ।।
ब्राह्मे मुहुर्त्ते संप्राप्ते ततो यात्रामुपक्रमेत् ।। ८ ।।
तथा प्रारभयेद्यात्रां यावन्नोदयते रविः ।।
प्रातः स्नानं तथा कुर्यात्तीर्थे दक्षिणकोटिके ।। ९ ।।
प्रक्षाल्य पादावाचम्य हनुमन्तं प्रसादयेत् ।।
सर्वमङ्गलमाङ्गल्यं कुमारं ब्रह्मचारिणम् ।। 160.१० ।।
विज्ञाप्य सिद्धिकर्त्तारं यात्रासिद्धिप्रदायकम् ।।
यस्य संस्मरणादेव सर्वे नश्यन्त्युपद्रवाः ।। ११ ।।
यथा रामस्य यात्रायां सिद्धिस्ते सुप्रतिष्ठिता ।।
तथा परिभ्रमन्तेऽद्य भवान्सिद्धिप्रदो भव ।। १२ ।।
इति विज्ञाप्य विधिवद्धनूमन्तं गणेश्वरम् ।।
दीपपुष्पोपहारैस्तु पूजयित्वा विसर्ज्जयेत् ।। १३ ।।
तथैव पद्मनाभं तु दीर्घविष्णुं भयापहम् ।।
विज्ञाप्य सिद्धिकर्त्तारं देव्यश्च तदनन्तरम् ।। १४ ।।
दृष्ट्वा वसुमतीं देवीं तथैव ह्यपराजिताम् ।।
आयुधागारसंस्थां च नृणां सर्वभयापहाम् ।। १५ ।।
कंसवासनिकां तद्वदौग्रसेनां च चर्च्चिकाम् ।।

वधूटीं च तथा देवि दानवक्षयकारिणीम् ।। १६ ।।
जयदां देवतानां च मातरो देवपूजिताः ।।
गृहदेव्यो वास्तुदेव्यो दृष्ट्वानुज्ञाप्य निर्गमेत् ।। १७ ।।
मौनव्रतधरो गच्छेद्यावद्दक्षिणकोटिके ।।
प्राप्य स्नात्वा पितॄँस्तर्प्य दृष्ट्वा देवं प्रणम्य च ।। १८ ।।
नत्वा गच्छेदिक्षुवासां देवि कृष्णसुपूजिताम् ।।
बालक्रीडनरूपाणि कृतानि सह गोपकैः ।।
यानि तीर्थानि तान्येव स्थापितानि महर्षिभिः ।।१९।।
ख्यातिं गतानि सर्वाणि सर्वपापहराणि च ।।
वत्सपुत्रं ततो गच्छेत्सर्वपापहरं परम् ।।
अर्कस्थलं वीरस्थलं कुशस्थलमनन्तरम् ।। 160.२० ।।
पुण्यस्थल महास्थल महापापविनाशनम् ।।
पंचस्थलानि तत्रैव सर्वपापहराणि च ।। २१ ।।
येषां तु दर्शनादेव ब्रह्मणा सह मोदते ।।
शिवं सिद्धमुखं दृष्ट्वा स्थलानां फलमाप्नुयात् ।। २२ ।।
हयमुक्तिं ततो गच्छेत्सिंदूरं ससहायकम् ।।
श्रूयते चात्र ऋषिभिर्गाथा गीता पुरातनी ।। २३ ।।
अश्वारूढेन तेनैव यत्रेयं समनुष्ठिता ।।
अश्वो मुक्तिं गतस्तत्र सहायसहितः सुखम् ।।२४।।
राजपुत्रः स्थितस्तत्र यानयात्रा न मुक्तिदा ।।
तस्माद्यानैश्च यात्रा तु न कर्त्तव्या फलेच्छया।।२५।।
तस्मिंस्तीर्थे तु तं दृष्ट्वा स्पृष्ट्वा पापैः प्रमुच्यते ।।
कुण्डं शिवस्य विख्यातं तत्र स्नानफलं महत् ।।२६।।
मल्लिकादर्शनं कृत्वा कृष्णस्य जयदं शुभम् ।।
ततः कदंबखण्डस्य गमनात्सिद्धिमाप्नुयात् ।। २७ ।।
चर्चिका योगिनी तत्र योगिनीपरिवारिता ।।
कृष्णस्य रक्षणार्थं हि स्थिता सा दक्षिणां दिशम् ।। २८ ।।
अस्पृश्या चास्पृशा चैव मातरौ लोकपूजितौ ।।
बालानां दर्शनं ताभ्यां महारक्षां करिष्यति ।। २९ ।।
वर्षखातं ततो गत्वा कुण्डं पापहरं परम् ।।
गत्वा स्नात्वा पितॄँस्तर्प्य सर्वपापैः प्रमुच्यते ।। 160.३० ।।
क्षेत्रपालं ततो गत्वा शिवं भूतेश्वरं हरम् ।।
मथुराक्रमणं तस्य जायते सफलं तथा ।। ३१ ।।

कृष्णक्रीडासेतुबन्धं महापातकनाशनम् ।।
बालानां क्रीडनार्थं च कृत्वा देवो गदाधरः ।। ३२।।
गोपकैः सहितस्तत्र क्षणमेकं दिनेदिने ।।
तत्रैव रमणार्थं हि नित्यकालं स गच्छति ।। ३३ ।।
बलिह्रदं च तत्रैव जलक्रीडाकृतं शुभम् ।।
यस्य सन्दर्शनादेव सर्वपापैः प्रमुच्यते ।। ३४ ।।
ततः परं च कृष्णेन कुक्कुटैः क्रीडनं कृतम् ।।
यस्य दर्शनमात्रेण चण्डोऽपि गतिमाप्नुयात् ।। ३५ ।।
स्तम्भोच्चयं सुशिखरं सौरभैः सुसुगन्धिभिः ।।
भूषितं पूजितं तत्र कृष्णेनाक्लिष्टकर्मणा ।। ३६ ।।
तस्य प्रदक्षिणं कृत्वा परिपूज्य प्रयत्नतः ।।
मुच्यते सर्वपापेभ्यो विष्णुलोकं व्रजेत्तु सः ।।३७।।
वसुदेवेन देवक्या गर्भस्य रक्षणाय च ।।
कृतमेकान्तशयनं महापातकनाशनम् ।। ३८ ।।
ततो नारायणस्थानं प्रविशेन्मुक्तिहेतवे ।।
परिक्रम्य ततो देवान्नारायणपुरोगमान् ।। ३९ ।।
दृष्ट्वा ततः सुविज्ञाप्य गणं विधिविनायकम् ।।
कुब्जिकां वामनां चैव ब्राह्मण्यौ कृष्णपालिते ।। 160.४० ।।
अनुज्ञाय ततः स्थानं द्रष्टुं गर्त्तेश्वरं शिवम् ।।
दृष्टमात्रेण तत्रैव यात्राफलमवाप्यते ।। ४१ ।।
महाविद्येश्वरी देवी आरक्षं पापकं हरेत् ।।
क्षेत्रस्य रक्षणार्थं हि यात्रायाः सिद्धिदां नृणाम् ।। ४२ ।।
प्रभा मल्ली च तत्रैव दृष्ट्वा कामानवाप्नुयात् ।।
महाविद्येश्वरी देवी कृष्णरक्षार्थमुद्यता ।। ४३ ।।
नित्यं सन्निहिता तत्र सिद्धिदा पापनाशिनी ।।
कृष्णेन बलभद्रेण गोपैः कंसं जिघांसुभिः ।। ४४ ।।
सङ्केतकं कृतं तत्र मन्त्रनिश्चयकारकम् ।।
तदा संकेतकैः सा च सिद्धा देवी प्रतिष्ठिता ।। ४५ ।।
सिद्धिप्रदा भोगदा च तेन सिद्धेश्वरी स्मृता ।।
संकेतकेश्वरीं चैव दृष्ट्वा सिद्धिमवाप्नुयात् ।। ४६ ।।
तत्र कुण्डं स्वच्छजलं महापातकनाशनम् ।।
ततो दृष्ट्वा महादेवं गोकर्णेश्वरनामतः ।। ४७ ।।
यस्य दर्शनमात्रेण सर्वपापैः प्रमुच्यते ।।

सरस्वतीं नदीं दृष्ट्वा ततो भद्राणि पश्यति ।। ४८ ।।
विघ्नराजं ततो गच्छेद्गणेशं विघ्ननायकम् ।।
सर्वसिद्धिप्रदं रम्यं दर्शनाच्च फलं लभेत् ।। ४९ ।।
गंगा साध्वी च तत्रैव महापातकनाशिनी ।।
दृष्ट्वा स्पृष्ट्वा तथा ध्यात्वा सर्वकामान्समश्नुते ।।160.५०।।
महादेवमुखाकारं नाम्ना रुद्रमहालयम् ।।
क्षेत्रपं तं परं दृष्ट्वा क्षेत्रवासफलं लभेत् ।। ५१।।
तस्मादुत्तरकोटिं च दृष्ट्वा देवं गणेश्वरम् ।।
द्यूतक्रीडा भगवता कृता गोपजनैः सह ।। ५२ ।।
नानापहासरूपेण जिता गोप्यो धनानि च ।।
गोपैरानीय ताश्चैव कृष्णाय च निवेदिताः ।।५३ ।।
गोपालकृष्णगमनं महापातकनाशनम् ।।
समस्तं बालचरितं भ्रमणं च यथासुखम् ।।५४।।
कृतं तत्र यथारूपं यद्रूपं च यथा तथा ।।
ऋषिभिः सेवितं ध्यातं विष्णोर्माहात्म्यमुत्तमम् ।।५५।।
ततो गच्छेन्महातीर्थं विमलं यमुनाम्भसि ।।
स्नात्वा पीत्वा पितॄंस्तर्प्य नाम्ना रुद्रमहालयम् ।। ५६ ।।
गार्ग्यतीर्थे महापुण्ये नरस्तत्र तथा क्रमेत् ।।
भद्रेश्वरे महातीर्थे सोमतीर्थे तथैव च ।। ५७ ।।
स्नात्वा सोमेश्वरं देवं दृष्ट्वा यात्राफलं लभेत् ।।
सरस्वत्याः सङ्गमे च देवर्षिपितृमानवान् ।। ५८ ।।
सन्तर्प्य विधिवद्दत्त्वा विष्णुसायुज्यमाप्नुयात् ।।
घण्टाभरणके तद्वत्तथा गरुडकेशवे ।। ५९ ।।
धारालोपनके तद्वद्वैकुण्ठे खण्डवेलके ।।
मन्दाकिन्याः संयमने असिकुण्डे तथैव च ।। 160.६० ।।
गोपानां तीर्थके चैव तथा वै मुक्तिकेश्वरे ।।
वैलक्षगरुडे चैव महापातकनाशने ।। ६१ ।।
तीर्थान्येतानि पुण्यानि यथा विश्रान्तिसंज्ञकम् ।।
एषु तीर्थेषु क्रमितो भक्तिमांश्च जितेन्द्रियः ।। ६२ ।।
देवान्पितॄन् समभ्यर्च्य ततो देवं प्रसादयेत् ।।
अविमुक्तेश देवेश सप्तर्षिभिरभिष्टुत ।। ६३ ।।
मथुराक्रमणीयं मे सफलं स्यात्तवाज्ञया ।।
इत्येवं देवदेवेशं विज्ञाप्य क्षेत्रपं शिवम् ।। ६४ ।।

विश्रान्तिसंज्ञके स्नानं कृत्वा च पितृतर्पणम् ।।
गतश्रमं परिक्रम्य स्तुत्वा दृष्ट्वा प्रणम्य च ।। ६५ ।।
सुमङ्गलां ततो गच्छेद्यात्रासिद्धिं प्रसादयेत् ।।
सर्वमङ्गलमांगल्ये शिवे सर्वार्थसाधिके ।। ६६ ।।
यात्रेयं त्वत्प्रसादेन सफला मे भवत्विति ।।
पिप्पलादेश्वरं देवं पिप्पलादेन पूजितम् ।। ६७ ।।
विश्रान्तस्तु परिक्रम्य त्रातस्तत्र महातपाः ।।
उपलिप्य ततस्तस्य शीर्षोपरि महच्छिवम्।। ६८ ।।
स्वनाम्ना चिह्नितं स्थाप्य तदा यात्राफलं लभेत् ।।
कर्कोटकं तथा नागं महादुष्टनिवारणम् ।। ६९ ।।
दृष्ट्वा गच्छेत्ततो देवीं या कृष्णेन विनिर्मिता ।।
कंसभेदं प्रथमतः श्रुतं यत्र कुमन्त्रितम् ।। 160.७० ।।
सुखवासं च वरदं कृष्णस्याक्लिष्टकर्मणः ।।
सुखासीनं च तत्रैव स्थापितं शकुनाय वै ।। ७१ ।।
स्वानुकूलः स्वरो यत्र प्रवेशे दक्षिणः स्वनः ।।
ध्याता स्वभावे कृष्णेन स्वसा सातिसुखप्रदा ।। ७२ ।।
भयार्तेन च कृष्णेन ध्याता देवी च चण्डिका ।।
स्थापिता सिद्धिदा तत्र नाम्ना चार्त्तिहरा ततः ।।७३।।
दृष्ट्वा सर्वार्त्तिहरणं यस्या देव्याः सुखी नरः ।।
अग्रोत्तरं शुभवरं शकुनार्थं च याचतः ।। ७४ ।।
कृष्णस्य कंसघातार्थं संभूता सा तथोत्तरे ।।
तां दृष्ट्वा मनुजः कामान्सर्वानिष्टानवाप्नुयात् ।। ७५ ।।
वज्रानन ततो ध्यात्वा कृष्णो मल्लजिघांसया।।
निहत्य मल्लान्पश्चाद्धि वज्राननमकल्पयत्।। ७६ ।।
वाञ्छितार्थफलं चक्रे कृष्णेनास्य मनोरथान्।।
यस्यै यस्यै देवतायै तस्यै तस्यै ददौ मखम्।।७७।।
उपयाचितं तु माङ्गल्यं सर्वपापहरं शुभम्।।
कृष्णस्य बालचरितं महापातकनाशनम् ।। ७८ ।।
सूर्यं तं वरदं देवं माथुराणां कुलेश्वरम् ।।
दृष्ट्वा तत्रैव दानं च दत्त्वा यात्रां समापयेत् ।। ७९ ।।
एवं प्रदक्षिणं कृत्वा नवम्यां शुक्लकौमुदे ।।
सर्वं कुलं समादाय विष्णुलोके महीयते ।। 160.८० ।।
क्रमतः पदविन्यासाद्यावन्तः सर्वतो दिशः ।।

तावन्तः कुलसंभूताः सूर्ये तिष्ठन्ति शाश्वते ।। ८१ ।।
ब्रह्मघ्नश्च सुरापश्च चौरा भग्नव्रताश्च ये ।।
अगम्यागमने शीलाः क्षेत्रदारापहारकाः ।। ८२ ।।
मथुराक्रमणं कृत्वा विपाप्मानो भवन्ति ते ।।
अन्यदेशागतो दूरात्परिभ्रमति यो नरः ।। ८३ ।।
तस्य सन्दर्शनादन्ये पूताः स्युर्विगतामयाः ।।
श्रुतं यैश्च विदूरस्थैः कृतयात्रं नरं नरैः ।।८४।।
सर्वपापविनिर्मुक्तास्ते यान्ति परमं पदम् ।।८५।।
इति श्रीवराहपुराणे मथुरा परिक्रमप्रादुर्भावो नाम षष्ट्यधिकशततमोऽध्यायः ।। १६० ।।

अथ देववनप्रभावः ।।

धरण्युवाच ।।

ये धर्मविमुखा मूढाः सर्वज्ञानविवर्जिताः ।।
का गतिः कृष्ण तेषां हि विहिता नरके सुरैः ।।१ ।।
अभुक्त्वा नारकं दुःखं सुकृतैः पुण्यदैर्नृणाम् ।।
प्रयान्ति कर्मणा येन तमुपायं ब्रवीहि मे ।। २ ।।

श्रीवराह उवाच ।।

सर्वधर्मविहीनानां पुरुषाणां दुरात्मनाम् ।।
नरकार्त्तिहरा देवी मथुरा पापघातिनी ।। ३ ।।
मथुरावासिनो ये च तीर्थानां चोपसेवकाः ।।
वनानां दर्शको वाथ मथुराक्रमकोऽपि वा ।।४ ।।
एषां मध्ये कृतं यैश्च एकं च शतमोजसा ।।
न ते नरक भोक्तारः स्वर्गभाजो भवन्ति ते ।।५।।
आदौ मधुवनं नाम द्वितीयं तालमेव च ।।
वनं कुन्दवनं चैव तृतीयं वनमुत्तमम् ।।६।।
चतुर्थं काम्यकवनं वनानां वनमुत्तमम् ।।
पंचमं वै बहुवनं षष्ठं भद्रवनं स्मृतम् ।। ७ ।।
सप्तमं तु वनं भूमे खादिरं लोकविश्रुतम् ।।
महावनं चाष्टमं तु सदैव च मम प्रियम् ।। ८ ।।
लोहार्गलवनं नाम नवमं पातकापहम् ।।
वनं बिल्ववनं नाम दशमं देवपूजितम् ।। ९ ।।
एकादशं तु भाण्डीरं द्वादशं वृन्दका वनम् ।।
एतानि ये प्रपश्यन्ति न ते नरकभोगिनः ।।161.१०।।
यथाक्रमेण ये यात्रां वनानां च जितेन्द्रियाः ।।
करिष्यन्ति वरारोहे इन्द्रलोकं व्रजन्ति ते ।। ११ ।।

इति श्रीवराहपुराणे मथुरामाहात्म्ये देववनप्रभावो नामैकषष्ट्यधिकशततमोऽध्यायः ।। १६१ ।।

अथ चक्रतीर्थप्रभावः ।।

श्रीवराह उवाच ।।

पुनरन्यत्प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।।
चक्रतीर्थे पुरावृत्तं मथुरायास्तथोत्तरे ।।१।।
महागृहोदयं नाम जम्बूद्वीपस्य भूषणम् ।।
तस्मिन् पुरवरे दिव्ये ब्राह्मणो वसते शुभे ।।२।।
स कन्यां पुत्रमादाय ब्राह्मणो वेदपारगः ।।
शालिग्रामं महापुण्यमगच्छद्ब्राह्मणोत्तमः ।। ३ ।।
तत्रासौ वासमकरोत्पुण्यसेवी जितेन्द्रियः ।।
तीर्थसेवी तथा स्नायी देवतादर्शने रतः ।। ४ ।।
तत्र सिद्धेन संवासो ब्राह्मणस्याभवत्तदा।।
स सिद्धो वसते नित्यं कल्पग्रामे च सर्वदा ।।५।।
गच्छेत्स सर्वकालं तु शालिग्रामे वसुन्धरे ।।
स तेन सह सङ्गत्य कान्यकुब्जनिवासिना ।।६।।
कल्पग्राम विभूतिं च नित्यकालमवर्णयत् ।।
कल्पग्रामविभूतिं च श्रुत्वा स मुनिसत्तमः ।। ७ ।।
गमने बुद्धिरुत्पन्ना ततः सिद्धमयाचत ।।
मित्रत्वं वर्त्तते सिद्ध नयस्वात्मनिवेशने ।। ८ ।।
ब्राह्मणस्य वचः श्रुत्वा सिद्धो वचनमब्रवीत् ।।
तत्र सिद्धा हि गच्छन्ति तेन तत्र गतिर्भवेत् ।। ९ ।।
प्रार्थना दुःखलाभं तु शृणु वै ब्राह्मणोत्तम ।।
आत्मयोगबलेनैव चलिष्यामि सपुत्रकः ।। 162.१० ।।
दक्षिणे तु करे गृह्य ब्राह्मणं वेदपारगम् ।।
वामे चैव करे गृह्य तस्य पुत्रं महामतिम् ।। ११ ।।
उत्पपात तदा सिद्धो गृहीत्वा ब्राह्मणोत्तमौ ।।
कल्पग्रामे तु तौ मुक्तौ पितापुत्रौ वसुन्धरे ।। १२ ।।
तत्र तौ वसतो नित्यं कल्पग्रामे द्विजोत्तमौ ।।
तत्र कालेन महता रुग्देहे चाभवत्तदा ।। १३ ।।
रुजा तु पीड्यमानः स दशमीं च दशां गतः ।।
मर्तुकामो द्विजवरो निरीक्ष्य सुतमुत्तमम् ।। १४ ।।
उवाच पुत्रं धर्मात्मा मरणे समुपस्थिते ।।
गंगातीरे च मां पुत्र नय त्वं मा विलम्बय ।। १५ ।।
तेन पुत्रेण नीतोऽसौ गंगातीरे महामुनिः ।।

रुरोद पुत्रस्तु तदा पितृस्नेहसमन्वितः ।। १६ ।।
वेदाध्ययनशीलः स पितृभक्त्या नियन्त्रितः ।।
वसतस्तस्य वै तत्र कालो जातो महामतेः ।।१७।।
कल्पग्रामे तदा सिद्धस्तस्य कन्या सुमध्यमा ।।
वरमन्वेषयन्ती सा न प्राप्तस्तु तया मतः ।। १८ ।।
कदाचिद्देवयोगेन कान्यकुब्जनिवासिनः ।।
गृहे प्रविष्टो विप्रः स भोजनार्थं महामतिः ।। १९ ।।
पृष्टोऽसौ ब्राह्मणो भद्रे क्व भवांस्त्वमिहागतः।।
स सर्वं कथयामास यथावृत्तं दृढव्रतः।।162.२०।।
दिव्यज्ञानेन तं ज्ञात्वा पूजयामास तं द्विजः।।
पूजयित्वा यथान्यायं कन्यां तस्मै ददौ तदा।।२१।।
श्वशुरस्य गृहे नित्यं भोजनं कुरुते द्विजः ।।
वसते पितृसान्निध्ये प्रतिचारी स पुत्रकः ।।२२।।
काले भगवतस्तस्य अतिक्षीणः पिता तदा ।।
तं दृष्ट्वा क्षीणतां प्राप्तं श्वशुरं पर्यपृच्छत ।।२३।।
स्वामिन्पितुर्मे मरणं भविष्यति वदस्व माम् ।।
जामातृवचनं श्रुत्वा प्रहस्य श्वशुरोऽब्रवीत् ।।२४।।
शूद्रान्नं भक्षितं तेन नित्यकालं द्विजोत्तम ।।
तस्य चाहारदोषेण मृत्युर्दूरं गतः पितुः ।।२५ ।।
पादयोर्विद्यते तच्च शूद्रान्नं च पितुस्तव ।।
जान्वोरूर्द्ध्वे न विद्येत शूद्रान्नं च द्विजोत्तम।।२६।।
शूद्रान्नेन विहीनस्य तस्य मृत्युर्भविष्यति ।।
श्वशुरस्य वचस्तस्य पितुरग्रे न्यवेदयत् ।। २७ ।।
तस्य पुत्रस्य वचनं श्रुत्वात्मानं विगर्हयत् ।।
ततः प्रभाते विमले उदिते च दिवाकरे ।।२८।।
पितुः समीपात्स गतः श्वशुरस्य निवेशनम् ।।
गते पुत्रे पिता तस्य रुजा त्वत्यन्तपीडितः ।। २९ ।।
दुःखेन पीडितः क्षीणो मर्त्तुकामो द्विजोत्तमः ।।
गंगातीरात्समुत्तिष्ठन्दिशः सर्वा विलोकयन् ।। 162.३०।।
सन्निधावुपलं दृष्ट्वा गृहीतं तेन तत्पदा ।।
चूर्णयामास तौ पादौ पीडया मोहितो द्विजः ।।३१।।
ततः प्राणान्परित्यज्य गतोऽसौ कालवर्त्तनम् ।।
स्नात्वा भुक्त्वा ततो गत्वा प्रेक्ष्य तं पितरं मृतम् ।।३२।।

गतसंज्ञं च पितरं दृष्ट्वा स रुरुदे भृशम् ।।
रुदित्वा सुचिरं कालं शास्त्रं दृष्ट्वा व्यचिन्तयत् ।। ३३ ।।
संस्कारयोग्यता नास्ति इत्येवं पुनरब्रवीत् ।।
सर्पशृङ्गिहतानां च दंष्ट्रिविग्रहतस्य च ।।३४।।
आत्मनस्त्यागिनश्चैव आपस्तम्बोऽब्रवीदिदम् ।।
आत्मघाती नरः पापो नरके पच्यते चिरम् ।। ३५ ।।
प्रायश्चितं विधीयीत न दद्याच्चोदकक्रियाम्।।
अहो दैवं सुबलवत्पौरुषं तु निरर्थकम् ।। ३६ ।।
तस्य पुत्रो महाभागे गतः श्वशुरमन्दिरम् ।।
तं दृष्ट्वा श्वशुरो दीनमिदं वचनमब्रवीत् ।।३७ ।।
ब्रह्महत्या तु ते जाता गच्छ त्वं च यथेप्सितम् ।।
श्वशुरस्य वचः श्रुत्वा जामाता वाक्यमब्रवीत् ।। ३८ ।।
न मया ब्राह्मणवधः कदाचिदपि कारितः ।।
केन दोषेण मे सिद्धं ब्रह्महत्याफलं महत् ।। ३९ ।।
जामातुर्वचनं श्रुत्वा श्वशुरो वाक्यमब्रवीत् ।।
पितुस्त्वया वधोपायो विनिर्दिष्टश्च पुत्रक ।। 162.४० ।।
तेन दोषेण विप्रर्षे ब्रह्महत्याफलं तव ।।
आसन्नशयनाच्चैनं भोजनात्कथनादिषु ।। ४१ ।।
संवत्सरेण पतति पतितेन सहाचरन् ।।
तस्मान्मम गृहे नास्ति वासस्ते हि द्विजोत्तम ।। ४२ ।।
श्वशुरस्य वचः श्रुत्वा जामाता वाक्यमब्रवीत् ।।
किं मया वद कर्त्तव्यं त्वया त्यक्तेन सुव्रत ।। ४३ ।।
तस्य तद्वचनं श्रुत्वा ब्राह्मणः संशितव्रतः ।।
कल्पग्रामं परित्यज्य मथुरां याहि सुव्रत ।। ४४ ।।
नान्यत्र तव संशुद्धिः कदाचित्पितृघातिनः ।।
कल्पग्रामं परित्यज्य तत्क्षणादेव निःसृतः ।।४९।।
ततः कालेन महता सम्प्राप्तो मथुरां पुरीम् ।।
ब्राह्मणेभ्यो बहिःस्थाने नित्यं तु वसते द्विजः ।। ४६ ।।
कन्यापुरनिवासी तु कुशिकोऽयं नराधिपः ।।
तस्य सत्रं नित्यकालं मथुरायां प्रवर्त्तते ।। ४७ ।।
द्वेसहस्रे तु विप्राणां तस्य सत्रे च भुञ्जते ।।
ब्राह्मणानां सदोच्छिष्टं ततश्चोद्धरते तु सः ।। ४८ ।।
चक्रतीर्थं समासाद्य स्नानं स कुरुते सदा ।।

न भिक्षां कुरुते तत्र भोजनार्थं न गच्छति ।। ४९ ।।
ततः कालेन महता चिन्ताभूच्छ्वशुरस्य च ।।
दिव्यज्ञानेन तत्सर्वं ज्ञात्वा जामातृचेष्टितम् ।। 162.५० ।।
स्वां सुतां चोदयामास गच्छ तां मथुरां पुरीम् ।।
भोजनं गृह्य तत्रैव गच्छ त्वं भर्तृसन्निधौ ।।५१।।
दिव्यज्ञानेन च तदा नित्यं सा भर्तृसन्निधौ ।।
दिनेदिने गच्छति सा भर्तृभोजनकारणात् ।। ५२ ।।
दिवसस्यावसाने तु भोजनं गृह्य गच्छति ।।
भोजनं कुरुते नित्यं प्रियादत्तं वसुन्धरे ।। ५३ ।।
पात्रं निःक्षिप्य कुण्डे तु सत्रे वसति सर्वदा ।।
एवं निवसतस्तस्य वर्षार्द्धं तु गतं तदा ।। ५४ ।।
ततः कालेन महता तैः पृष्टः स द्विजोत्तमः ।।
कुत्र सन्तिष्ठते नित्यं भोजनं कुरुषे कुतः ।।५५।।
कथयामास वृत्तान्तं तं सर्वं चात्मनो हि सः ।।
ते श्रुत्वा ब्राह्मणाः सर्वे एकीभूता वसुन्धरे ।। ५६ ।।
इदमूचुस्ततो विप्राः शुद्धोऽसीति द्विजं प्रति ।।
चक्रतीर्थप्रभावेण पापान्मुक्तः सनातनः ।। ५७ ।।
अस्माकं वदनाच्चैव पुनः सिद्धोऽसि वै द्विज ।।
ब्राह्मणानां वचः श्रुत्वा स द्विजो हृष्टमानसः ।। ५८ ।।
स्नानार्थं तु ततः स्थानाच्चक्रतीर्थं समागतः ।।
गते तस्मिंस्तस्य भार्या भिक्षामादाय चागता ।।५९।।
सा तु हृष्टेन मनसा भर्तारं वाक्यमब्रवीत् ।।
भोजनं कुरु मे दत्तं हत्यां लक्ष्यामि ते गताम्।।162.६० ।।
प्रियावचनमाकर्ण्य भर्ता वचनमब्रवीत् ।।
पुनराभाषितं ब्रूहि यदिदं भाषितं त्वया ।।६१।।
भर्त्तुर्वचनमाकर्ण्य पत्नी वचनमब्रवीत् ।।
न त्वं सम्भाषितः पूर्वं ब्रह्महत्यासमन्वितः ।।६२।।
चक्रतीर्थप्रभावेण मुक्तोऽसि द्विजसत्तम।।
उत्तिष्ठ कान्त गच्छाव कल्पग्रामं सुशोभितम् ।।६३।।
तया सार्द्धं जगामाथ कल्पग्रामं द्विजोत्तमः ।।
भद्रेश्वरनिमित्तं हि द्रव्यं च कथितं शुभम् ।। ६४ ।।
नित्यं च भुञ्जते यत्र पात्रं द्रव्यसमर्पितम् ।।
दृष्ट्वा भद्रेश्वरं देवं चक्रतीर्थे फलं लभेत् ।।६९।।

कल्पग्रामाच्छतगुणं चक्रतीर्थं वसुन्धरे ।।
अहोरात्रोपवासेन मुच्यते ब्रह्महत्यया ।।६६।।
कल्पग्रामेण किं तस्य वाराणस्यां च वा शुभे ।।
मथुरां तु समासाद्य यः कश्चिन्म्रियते भुवि ।। ६७ ।।
अपि कीटः पतङ्गो वा जायते स चतुर्भुजः ।।६८।।
इति श्रीवराहपुराणे मथुरामाहात्म्ये चक्रतीर्थप्रभावो नाम द्विषष्टयधिकशततमोऽध्यायः ।। १६२ ।।

अथ कपिलवराहमाहात्म्यम् ।।
श्रीवराह उवाच।।
पुनरन्यत्प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।।
वैकुण्ठतीर्थमासाद्य यद्वृत्तं हि पुरातनम् ।।१।।
मिथिलायां पुरी रम्या जनकेन च पालिता ।।
मिथिलावासिनो लोकास्तीर्थयात्रां समागताः ।। २ ।।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चापि वसुन्धरे ।।
स्नात्वा सौकरवे तीर्थे आयाता मधुरां पुरीम् ।। ३ ।।
तेषां च भक्तिरुत्पन्ना मथुरां प्रति सुन्दरि ।।
वैकुण्ठतीर्थमासाद्य सर्वे ते मनुजाः स्थिताः ।। ४ ।।
तेषां तु ब्राह्मणः कश्चिद्ब्रह्महत्यासु चिह्नितः ।।
रुधिरस्य हि धारा च स्रवन्ती तस्य हस्ततः ।। ५ ।।
प्रत्यक्षा दृश्यते सर्वैर्ब्रह्महत्यास्वरूपिणी ।।
सर्वतीर्थप्लुतस्यापि ब्राह्मणस्य हि सा तदा ।। ६ ।।
न गता पूर्वमेवासीद्वैकुण्ठे स्नानमाचरत् ।।
न सा वै दृश्यते धारा ततस्ते विस्मयङ्गताः।। ७ ।।
किमेतत्किमिति प्राहुर्धारा प्रति वसुन्धरे ।।
देवो ब्राह्मणरूपेण लोकान्सर्वान् हि पृच्छति ।। ८ ।।
केन कारणदोषेण धारा त्यक्त्वा गता द्विजम् ।।
तत्सर्वं कथयामासुर्ब्राह्मणस्य विचेष्टितम् ।। ९ ।।
वैकुण्ठे तु निमग्नोऽयं ब्रह्महत्या गता ततः ।।
विस्मयो नात्र कर्त्तव्यस्तीर्थस्येदं महत्फलम् ।। १६३.१० ।।
इत्युक्तस्तैर्देवदेवस्तत्रैवान्तरधीयत ।।
एष प्रभावस्तीर्थस्य वैकुण्ठस्य वसुन्धरे ।। ११ ।।
वैकुण्ठतीर्थे यः स्नाति मुच्यते सर्वपातकैः ।।
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ।। १२ ।।
सूत उवाच ।।
पुनरन्यत् प्रवक्ष्यामि असिकुण्डेऽतिपुण्यदे ।।
नाम्ना गन्धर्वकुण्डं तु तीर्थानां तीर्थमुत्तमम् ।। १३ ।।
तत्र स्नातो नरो देवि गन्धर्वैः सह मोदते ।।
तत्र यो मुंचते प्राणान्मम लोकं स गच्छति ।। १४ ।।
विंशतिर्योजनानां तु माथुरं मम मण्डलम् ।।
इदं पद्मं महाभागे सर्वेषां मुक्तिदायि च ।। १५ ।।

कर्णिकायां स्थितो देवि केशवः क्लेशनाशनः ।।
कर्णिकायां मृता ये तु तेऽमरा मुक्तिभागिनः।।१६।।
तत्र मध्ये मृता ये तु तेषां मुक्तिर्वसुन्धरे ।।
पश्चिमेन हरिं देवं गोवर्द्धननिवासिनम् ।। १७ ।।
दृष्ट्वा तं देवदेवेशं किं मनः परितप्यते ।।
उत्तरेण तु गोविन्दं दृष्ट्वा देवं परं शुभम् ।। १८ ।।
नासौ पतति संसारे यावदाभूतसंप्लवम् ।।
विश्रान्तिसंज्ञके देवं पूर्वपत्रे व्यवस्थितम् ।। १९ ।।
यं दृष्ट्वा तु नरो याति मुक्तिं नास्त्यत्र संशयः ।।
दक्षिणेन तु मां विद्धि प्रतिमां दिव्यरूपिणीम् ।। १६३.२० ।।
महाकायां सुरूपां च केशवाकारसन्निभाम् ।।
तां दृष्ट्वा मनुजो देवि ब्रह्मणा सह मोदते ।। २१ ।।
कृते युगे तु राजासीन्मान्धाता नाम नामतः ।।
तेनाहं तोषितो देवि भक्तियुक्तेन चेतसा ।।२२।।
तस्य तुष्टेन हि मया प्रतिमेयं समर्पिता ।।
तेनेयं पूजिता नित्यमात्ममुक्तिमभीप्सता ।। २३ ।।
यदा तु मथुरां प्राप्य लवणोऽयं निपातितः ।।
तदैव प्रतिमा दिव्या मथुरायां व्यवस्थिता ।। २४ ।।
पुण्येयं प्रतिमा दिव्या तैजसी दिव्यरूपिणी ।।
कपिलो नाम विप्रर्षिर्मम भक्तिपरायणः ।। २५ ।।
मनसा निर्मिता तेन वाराही प्रतिमा शुभा ।।
कपिलो ध्यायते नित्यमर्चति स्म दिने दिने ।।२६।।
इन्द्रेणाराधितो देवि कपिलो मुनिसत्तमः ।।
तस्य प्रीतो ददौ देवं वराहं दिव्यरूपिणम् ।। २७ ।।
देवे लब्धे वरारोहे शक्रो हर्षसमन्वितः ।।
ध्यायति स्म सदा देवं पूजां कृत्वा हि भक्तितः ।। २८ ।।
इन्द्रेण तु तदा प्राप्तं दिव्यं ज्ञानमनुत्तमम् ।।
ततः कालेन महता रावणो नाम राक्षसः ।। २९ ।।
इन्द्रलोकं गतः सोऽथ स्वर्गं जेतुं महाबलः ।।
शक्रेण सह सङ्गम्य ततो युद्धं प्रवर्तितम् ।। १६३.३० ।।
रावणेन जिता देवाः शक्रश्चैव महाबलः ।।
बद्ध्वा चेन्द्रं महाबाहुं शक्रस्य भवनं गतः ।। ३१ ।।
प्रविश्य रावणस्तत्र गृहे रत्नविभूषिते ।।

दृष्ट्वा कपिलवाराहं शिरसा धरणीं गतः ।। ३२ ।।
तेन संमोहितो देवि रावणो नाम राक्षसः ।।
त्रातुमर्हसि मे देव धरणीधर माधव ।। ३३ ।।
दामोदर हृषीकेश हिरण्याक्षविदारण ।।
वेदगर्भ नमस्तेऽस्तु वासुदेव नमोऽस्तु ते ।। ३४ ।।
कूर्मरूप नमस्तेऽस्तु नारायण नमोस्तु ते ।।
मस्त्यरूपधरं देवं मधुकैटभनाशिनम् ।। ३९ ।।
निरीक्षितुं न शक्नोमि प्रष्टुं चैव गुणव्रत ।।
देवदेव नमस्तुभ्यं भक्तानामभयप्रद ।।३६।।
मम त्वं भक्तिनम्रस्य प्रसादं कुरु सर्वदा ।।
इति स्तुतो रावणेन देवदेवो जगत्पतिः ।।३७।।
सौम्यरूपोऽभवद्देवो लोक नाथो जनार्दनः ।।
सन्निधानमनुप्राप्य पुष्पकारोहणोत्सुकः ।। ३८ ।।
तदुद्धर्त्तुं न शक्नोति रावणो विस्मयङ्गतः ।।
शङ्करेण पुरा सार्द्धं कैलास स्तु मयोद्धृतः ।। ३९ ।।
देव त्वं स्वल्पकायोऽसि नाहमुद्धरणक्षमः ।।
प्रसीद देवदेवेश सुरनाथ नमोऽस्तु ते ।। १६३.४० ।।
अहं त्वां नेतुमिच्छामि पुरीं लङ्कामनुत्तमाम् ।। ४१ ।।
श्रीवराह उवाच ।।
अवैष्णवोऽसि रक्षस्त्वं कुतो भक्तिस्तवेदृशी ।।
कपिलस्य वचः श्रुत्वा रावणो वाक्य मब्रवीत् ।। ४२ ।।
त्वद्दर्शनात्समुत्पन्ना भक्तिरव्यभिचारिणी ।।
महात्मस्त्वां नयिष्यामि देवदेव नमोऽस्तु ते ।। ४३ ।।
भक्तिमुद्वहतस्तस्य लघु वेषोऽभवत्तदा ।।
पुष्पके तु समारोप्य देवं त्रैलोक्यविश्रुतम् ।। ४४ ।।
आनयामास लङ्कायां स्थापयित्वा स्वके गृहे ।।
तदा स्थितोऽहं लङ्कायां रावणेन प्रपूजितः ।। ४५ ।।
अयोध्याधिपती रामो हन्तुं राक्षसपुङ्गवम् ।।
गतोऽसौ विक्रमेणैव हत्त्वा राक्षसपुङ्गवम् ।। ४६ ।।
विभीषणश्च लङ्काया आधिपत्येऽभिषेचितः ।।
विभीषणेन रामस्य सर्वस्वं च निवेदितम् ।।४७।।
श्रीराम उवाच ।।
अनेन नस्ति मे कार्यं तव रक्षा विभीषण ।।

देवो मे दीयतां रक्षः शक्रलोकाद्य आगतः ।। ४८ ।।
अहन्यहनि पूजामि देवं वाराहरूपिणम् ।।
अयोध्यां चैव नेष्यामि त्वया दत्तं हि राक्षस ।। ४९ ।।
ततः समर्पयामास कपिलं दिव्यरूपिणम् ।।
पुष्पके तु समारोप्य नीतवान्नगरीं प्रति ।। १६३.५० ।।
अयोध्यायां स्थापयित्वा पूजयामास तं तदा ।।
गतं वर्षसहस्रं तु दशोत्तरमतः परम् ।। ५१ ।।
लवणस्य वधार्थं हि शत्रुघ्नं प्रेषयत्तदा ।।
कृतप्रणामः शत्रुघ्नो राघवाय महात्मने ।। ५२ ।।
चतुरङ्गबलोपेतो जगाम मथुरां प्रति ।।
गत्वा तु राक्षसश्रेष्ठं लवणं रौद्ररूपिणम् ।। ५३ ।।
घातयित्वा तु शत्रुघ्नः प्रविश्य मथुरां पुरीम् ।।
ब्राह्मणान्स्थापयित्वा तु मया तुल्यान्महौजसः ।। ५४ ।।
षड्विंशतिसहस्राणि वेदवेदाङ्गपारगान् ।।
अनृचो माथुरो यत्र चतुर्वेदस्तथापरः ।। ५५ ।।
एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजितः ।।
लवणस्य यथावृत्तं कथितं ते वसुन्धरे ।। ५६ ।।
लवणस्य वधं श्रुत्वा राघवो वाक्यमब्रवीत् ।।
वरं वरय शत्रुघ्न यत्ते मनसि रोचते ।। ९७ ।।
राघवस्य वचः श्रुत्वा शत्रुघ्नो वाक्यमब्रवीत् ।।
यदि तुष्टोऽसि मे देव वरार्हो यदि वाप्यहम् ।। ५८ ।।
दीयतां मम देवोऽयं यदि मे वरदो भवान् ।।
शत्रुघ्नस्य वचः श्रुत्वा राघवो वाक्यमब्रवीत् ।। ५९ ।।
नय शत्रुघ्न देवं त्वं दिव्यं वाराहरूपिणम् ।।
धन्याऽसौ मण्डली लोके धन्या सा मथुरा पुरी ।। १६३.६० ।।
धन्यास्ते माथुरा लोकाः पश्यन्ति कपिलं सदा ।।
दृष्टः स्पृष्टः तदा ध्यातः स्नापितश्च दिने दिने ।। ६१ ।।
अनुलिप्तश्च शत्रुघ्न सर्वपापं व्यपोहति ।।
पूजितः स्नापितो देवो दृष्टो यैस्तु दिने दिने ।। ६२ ।।
सर्वं हरति वै पापं मोक्षं चैव प्रयच्छति ।।
इत्युक्त्वा राघवस्तस्मै देवं प्रादाद्वसुन्धरे ।। ६३ ।।
देवमादाय शत्रुघ्नो जगाम मथुरां पुरीम् ।।
ब्राह्मणं स्थापयित्वा तु आगच्छन्मम सन्निधौ ।। ६४ ।।

तत्र मध्ये तु संस्थाप्य पूजयामास राघवः ।।
अनेन क्रमयोगेण मथुरायां स्थितः प्रभुः ।।६५।।
गयायां पिण्डदानेन यत्फलं ज्यष्ठेपुष्करे ।।
तत्फलं समवाप्नोति श्वेतं दृष्ट्वा सदा नरः ।।६६।।
विश्रान्तिसंज्ञके तद्वद्गोविन्दे च तथा हरौ ।।
केशवे दीर्घविष्णौ च तदेव फलमश्नुते ।।६७।।
उदये मामकं तेजः सदा विश्रांतिसंज्ञके ।।
मध्याह्ने मामकं तेजो दीर्घविष्णौ व्यवस्थितम् ।।
केशवे मामकं तेजो दिनभागे चतुर्थके ।। ६८ ।।
एषा विद्या पुरा देवि नित्यकालं सुगो पिता ।।
भक्ता त्वं मम शिष्या च कथिता ते वसुन्धरे ।। ६९ ।।
इति श्रीवराहपुराणे मथुरामाहात्म्ये कपिलवराहमाहात्म्यं नाम त्रिषष्ट्यधिकशत तमोऽध्यायः ।।१६३।।

अथाऽन्नकूटपरिक्रमप्रभावः ।।
श्रीवराह उवाच ।।
अस्ति गोवर्द्धनं नाम क्षेत्रं परमदुर्लभम् ।।
मथुरापश्चिमे भागे अदूराद्योजनद्वयम् ।।१।।
ह्रदं तत्र महाभागे द्रुमगुल्मलतायुतम् ।।
चत्वारि तत्र तीर्थानि पुण्यानि च शुभानि च ।।२।।
ऐन्द्रं पूर्वेण पार्श्वेन यमतीर्थं तु दक्षिणे।।
पश्चिमे वारुणं तीर्थं कौबेरं चोत्तरेण तु ।।३।।
तेषां मध्ये स्थितो भद्रे क्रीडयिष्ये यदृच्छया ।।
तत्र वै शक्रतीर्थे तु स्नानं कुर्याद्दृढ व्रतः।।४।।
मोदते शक्रलोके तु सर्वद्वन्द्वविवर्जितः।।
दक्षिणे यमतीर्थे तु स्नानं कुर्याद्यथाविधि।। ५।।
यमस्य भवनं गत्वा मोदते कृतनिश्चयः।।
तत्राथ मुञ्चते प्राणान् लोभमोहविवर्जितः।।।।
यमलोकं परित्यज्य मम लोकं स गच्छति ।।
तत्रैव वारुणं तीर्थमासाद्य स्नानमाचरेत्।।७।।
वारुणं भवनं गत्वा मुच्यते सर्वकिल्बिषात् ।।
तथात्र मुञ्चते प्राणान्कामक्रोधविवर्जितः ।। ८ ।।
वारुणं लोकमुत्सृज्य मम लोकं स गच्छति ।।
तत्र मध्ये च यः स्नाति क्रीडते स मया सह ।।९।।
अथाऽत्र मुञ्चते प्राणान्मम लोके स गच्छति ।।
अन्नकूटं ततः प्राप्य तस्य कुर्यात्प्रदक्षिणम् ।।164.१०।।
न तस्य पुनरावृत्तिर्देवि सत्यं ब्रवीमि ते ।।
स्नात्वा मानसगङ्गायां दृष्ट्वा गोवर्द्धने हरिम् ।। ११ ।।
अन्नकूटं परिक्रम्य किं पुनः परिशोचति ।।
सोमवारे त्वमायां वै प्राप्य गोवर्द्धनं गिरिम् ।।१२।।
दत्त्वा पिण्डं पितृभ्यश्च राजसूयफलं भवेत् ।।
गयायां पिण्डदानेन यत्फलं प्राप्यते नरैः ।।१३।।
तत्फलं प्राप्यते तत्र नात्र कार्या विचारणा ।।
गोवर्द्धनं परिक्रम्य दृष्ट्वा देवं परं हरिम् ।। १४ ।।
राजसूयाश्वमेधानां फलं प्राप्नोत्यसंशयम् ।। १५ ।।
पृथिव्युवाच ।।
परिक्रमोऽन्नकूटस्य विधिना क्रियते कथम् ।।

प्रभावगुणमाहात्म्यं तद्भवान्वक्तुमर्हति ।। १६ ।।
श्रीवराह उवाच ।।
मासि भाद्रपदे या तु शुक्ला चैकादशी शुभा ।।
गोवर्द्धने सोपवासः कुर्यात्तत्र प्रदक्षिणाम् ।।१७।।
स्नात्वा मानसगङ्गायां प्रभाते उदिते रवौ ।।
गोवर्द्धनं प्रसाद्यैवं हरिं चाचलमूर्द्धनि ।। १८ ।।
पुण्डरीकं ततो गच्छेत्कुण्डे स्नात्वा विधानतः ।।
देवान्पितॄन्समभ्यर्च्य पुण्डरीकमथार्च्य च ।। १९ ।।
सर्वपापविनिर्मुक्तः प्रयाति भवनं हरेः ।।
कुण्डं चाप्सरसं नाम प्रसन्नसलिलाशयम् ।। 164.२० ।।
तत्र स्नानं तर्पणं च कृत्वा फलमवाप्नुयात् ।।
राजसूयाश्वमेधानां धूतपाप्मा न संशयः ।।२१।।
तीर्थं संकर्षणं नाम्ना बलभद्रेण रक्षितम् ।।
गोहत्या पूर्वसंलग्ना उत्तीर्णा तत्र दूरतः ।।२२।।
स्नानादग्गच्छति सा क्षिप्रं नाऽत्र कार्या विचारणा ।।
अन्नकूटस्य सान्निध्ये तीर्थं शक्रविनिर्मितम् ।। २३ ।।
तत्र कृष्णेन पूजार्थमिन्द्रस्य विहतो मखः ।।
महदिन्द्रस्य चोत्थानं भक्ष्यभोज्यसमन्वितम् ।।२४।।
कृत्वा तुष्टिकरान्साक्षादिन्द्रेण सह संकथा ।।
इन्द्रस्य वर्षतोऽत्यन्तं तासां पीडाकरं जलम् ।।२५।।
तासां गवां रक्षणाय धृतो गिरिवरस्तदा ।।
सोऽन्नकूट इति ख्यातः सर्वतः शक्रपूजितः ।। २६ ।।
देवा देव्यस्तथा गावो ऋषिभिश्च समन्विताः ।।
पूजितास्तर्पिताः श्रेष्ठाः श्रमतो विष्णुना पुरा ।। २७ ।।
तस्मिन्स्थाने तर्पणेन शतक्रतुफलं लभेत् ।।
ततः कदम्बखण्डाख्यं कुण्डं तु विमलोदकम् ।।२८।।
स्नात्वा पितॄन्समभ्यर्च्य ब्रह्मलोकमवाप्नुयात् ।।
ततो गच्छेद्देवगिरिं शतबाहुसमुच्छ्रितम् ।।२९।।
यत्र स्नानाद्दर्शनाच्च वाजपेयफलं लभेत् ।।
महादेवं ततो दृष्ट्वा गत्वा ध्यात्वा फलं लभेत् ।।164.३०।।
कुण्डे स्नात्वा पितॄँस्तर्प्य कृतकृत्यो दिवं व्रजेत् ।।
गङ्गायाश्चोत्तरं यावद्देवदेवस्य चक्रिणः ।। ३१ ।।
अरिष्टेन समं यत्र महद्युद्धं प्रवर्त्तितम् ।।

घातयित्वा ततश्चेममरिष्टं वृषरूपिणम् ।। ३२ ।।
कोपेन पार्ष्णिघातेन महयां तीर्थं प्रवर्तितम् ।।
वृषभस्य वधाज्ज्ञेयं तीर्थं सुमहदद्भुतम् ।।३३।।
स्नातस्तत्र तदा कृष्णो वृषं हत्वा महासुरम् ।।
वृषहत्यासमायुक्तः कृष्णश्चिन्तान्वितोऽभवत् ।।।८४।
वृषो हतो मया चायमरिष्टः पापपूरुषः ।।
तत्र राधा समाश्लिष्य कृष्णमक्लिष्टकारिणम् ।।३५।।
स्वनाम्ना विदितं कुण्डं कृतं तीर्थमदूरतः ।।
राधाकुण्डमिति ख्यातं सर्वपापहरं शुभम् ।। ३६ ।।
अरिष्टराधाकुण्डाभ्यां स्नानात्फलमवाप्नुयात् ।।
राजसूयाश्वमेधानां नात्र कार्या विचरणा ।।३७।।
गोनरब्रह्महत्यायाः पापं क्षिप्रं विनश्यति ।।
तीर्थं हि मोक्षराजाख्यं नृणां मुक्तिप्रदायकम् ।। ३८ ।।
यस्य दर्शनमात्रेण सर्वपापैः प्रमुच्यते ।।
इन्द्रध्वजोच्छ्रयं यत्र पूर्वस्यां दिशि वै कृतम् ।। ३९ ।।
इन्द्रध्वजमिति ख्यातं तीर्थ चैवातिमुक्तिदम् ।।
तत्र स्नाता दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ।। 164.४० ।।
ततो हरो निवेद्याशु यात्राफलमनुत्तमम् ।।
चक्रतीर्थे नरः स्नात्वा पञ्चतीर्थाख्यकुण्डके ।। ४१ ।।
समाप्य तीर्थयात्रां च रात्रौ जागरणं तथा ।।
गोवर्द्धने च कर्त्तव्यं महापातकनाशनम् ।। ४२ ।।
एकादश्यां तदा रात्रौ कृत्वा जागरणं शुभम् ।।
द्वादश्यामुषसि स्नात्वा पिण्डं निर्वाप्य शक्तितः ।।४३।।
पितृणां मुक्तिदं तेषां य एवं कुरुते नरः ।।
सर्वपापविनिर्मुक्तः परं ब्रह्माधिगच्छति।।४४।।
एतत्ते कथितं भद्रे अन्नकूटपरिक्रमम् ।।
यथानुक्रमयोगेन तथाषाढेपि चोच्यते ।। ४९ ।।
य एतच्छृणुयाद्भक्त्या तीर्थानुकमणं हरेः ।।
गोवर्द्धनस्य माहात्म्यं गङ्गास्नानफलं भवेत् ।। ४६ ।।
इति श्रीवराहपुराणे मथुरामाहात्म्यान्तर्गते गोवर्द्धनमाहात्म्येऽन्नकूटपरिक्रमप्रभावो नाम चतुःषष्ट्यषिकशततमोऽध्यायः ।। १६४ ।।

श्रीवराह उवाच ।।
अतः परं प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।।
यथावृत्तं प्रतिष्ठाने दक्षिणापथमण्डले ।। १ ।।
सुशीलो नाम वैश्यस्तु तस्मिन्वसति पत्तने ।।
धनधान्यसमृद्धस्तु बहुपुत्रः कुटुम्बवान् ।। २ ।।
कुटुम्बभरणासक्तो नित्यकालं हि तिष्ठति ।।
स्नानं दानं जपं होमं देवार्चां न करोति सः ।।३।।
क्रयविक्रयसक्तस्य कालो दीर्घो गतस्तदा ।।
कदाचिदपि पापोऽसौ न साधु गमनं गतः ।। ४ ।।
न तेन धर्मश्रवणं कदाचिदपि संश्रुतम् ।।
देवानां ब्राह्मणानां च भक्तिस्तस्य न विद्यते ।। ५ ।।
आत्मोदरनिमित्तं हि पापं च कुरुते सदा ।।
गच्छन्तं बहुकालं च न तं बुध्यति पापकृत् ।। ६ ।।
न तस्य जायते बुद्धिर्दानं दातुं कदाचन ।।
तस्यैवं वसतस्तत्र प्रतिष्ठाने पुरोत्तमे ।। ७ ।।
धनयुक्तोऽपि पापोऽसौ न ददाति कदाचन ।।
नैवान्यमतिदातारं शक्नोति च निरीक्षितुम् ।। ८ ।।
स तु कालेन महता कुटुम्बासक्तमानसः ।।
कदाचिद्दैवयोगेन साध्वीं भार्यां प्रियान्सुतान् ।। ९ ।।
त्यक्त्वा जगाम निधनं प्रेतत्वं समुपागतः ।।
निरुदकेषु देशेषु विच्छायेषु वनेषु च ।। 165.१० ।।
परिभ्रमन्क्षुधाविष्टो मरुदेशं गतोऽपि सः ।।
तत्रैव च कृतावासो बहुकालं स वै वणिक् ।। ११ ।।
कदाचिद्दैवयोगेन तत्र सार्थ उपागतः ।।
तस्य मध्ये तु वणिजो मथुरायां विनिःसृताः ।। १२ ।।
गते सार्थे तु स वणिक् तं वृक्षं समुपाश्रितः ।।
तत्रैव वसति प्रेतो रौद्ररूपो भयानकः ।। १३ ।।
दीर्घदंष्ट्रः सुविकटो ह्रस्वबाहुर्विभीषणः ।।
महाहनुर्विशालाक्षो बिडालसदृशाननः ।। १४ ।।
अथ कालेन बहुना दैवयोगेन भामिनि ।।
तत्राजगाम कश्चित्तु क्रयविक्रयकारकः ।। १५ ।।
तं दृष्ट्वा दूरतः प्रेतश्चातिहर्षेण संयुतः ।।
तत्राजगाम नृत्यन् स इदं वचनमब्रवीत् ।।१६।।

भक्ष्यभूतो ममाद्यत्वं क्व भवान्यातुमिच्छति।।
प्रेतस्य वचनं श्रुत्वा सोऽतिभीतो द्रुतङ्गतः।।१७।।
गच्छन्तं तं गृहीत्वा स प्रेतो वचनमब्रवीत् ।।
मम त्वं विहितो भक्ष्यः स्वयं प्राप्तोऽसि मानव ।।१८।।
मांसं ते भक्षयिष्यामि पिबामि तव शोणितम् ।।
इत्याकर्ण्य वचस्तस्य स वणिग्वाक्यमब्रवीत् ।। १९ ।।
कुटुम्बभरणार्थाय सम्प्राप्तो दुर्गमाटवीम् ।।
वृद्धः पिता मम गृहे माता पत्नी पतिव्रता ।।165.२०।।
मयि सम्भक्षिते रक्षः कुटुम्बं हि मरिष्यति ।।
ततो वचनमाकर्ण्य प्रेतो वचनमब्रवीत् ।। २१ ।।
कस्मात्स्थानात्समायातः सत्यं ब्रूहि महामते ।। २२ ।।
विभुरुवाच ।।
गोवर्द्धनो गिरिवरो यमुना च महानदी ।।
तयोर्मध्ये पुरी रम्या मथुरा लोकविश्रुता ।। २३ ।।
तस्यां वसाम्यहं प्रेत पितृपैतामहे गृहे ।।
तत्र मे वसतो नित्यं यद्द्रव्यं पूर्वसञ्चितम् ।। २४ ।।
तत्सर्वं तस्करैर्नीतं क्षीणवित्तोऽभवं तदा ।।
स्वल्पं वित्तं गृहीत्वा ऽहं समायातो मरुस्थलम् ।। २५ ।।
तव दृष्टिपथं यातो यत्कार्यं तत्कुरुष्व मे ।। २६ ।।
प्रेत उवाच ।।
न त्वां खादितुमिच्छामि कृपा मे जायते त्वयि ।।
समयेन हि मोक्ष्यामि कुरुष्व वचनं मम ।। २७ ।।
निर्वृत्य गच्छ मथुरां मम कार्यार्थसाधकः ।।
तत्र गत्वा त्वया कार्यं यत्कर्तव्यं वदामि तत् ।।२८।।
स्नानं कृत्वा तु विधिवत्कूपे चातुःसामुद्रिके ।।
पिण्डदानं कुरुष्व त्वं मम नाम्ना प्रयत्नतः ।।२९।।
स्नानस्य च फलं देहि ततो गच्छ यथासुखम् ।।
प्रेतवाक्यं ततः श्रुत्वा विभुर्वचनमब्रवीत्।165.३०।।
नाहं यास्यामि मथुरां द्रव्याभावे कथंचन ।।
भक्षयस्व शरीरं मे ततस्तृप्तिमवाप्स्यसि ।।३१।।
प्रेत उवाच ।।
गृहे बहुधनं तेऽस्ति त्वं गच्छ मम सत्कुरु ।।
आस्ते धनमपर्याप्तं गच्छ त्वं मा विलम्बय ।।३२।।

विभुरुवाच ।।
गृहे मम धनं नास्ति यत्त्वया समुदीरितम् ।।
गृहशेषं मम धनं न चान्यत्तत्र विद्यते ।। ३३ ।।
पितृपैतामही कीर्त्तिरविक्रेया हि सा मया ।।
प्रेतः प्रहस्य सानन्दमिदं वचनमब्रवीत् ।। ३४ ।।
अस्ति चैव धनं प्रोक्तं यन्मया त्वद्गृहे विभो ।।
सुवर्णभारो गर्त्तस्थो गृहे तिष्ठति सञ्चितः ।। ३५ ।।
निवर्त्त गच्छ संतुष्टः सुहृदां प्रीतिवर्द्धनः ।।
एवं द्रक्ष्यामि ते मार्गं मथुरा येन गम्यते ।। ३६ ।।
सूत उवाच ।।
वणिग्घृष्टमना भूत्वा पुनर्वचनमब्रवीत् ।।
इमामवस्थां सम्प्राप्य कथं ज्ञानसमुद्भवः ।। ३७ ।।
ततः स कथयामास यद्वृत्तं हि पुरातनम् ।।
प्रतिष्ठाने पुरवरे विष्णोरायतनं महत् ।। ३८ ।।
प्रभातसमये तत्र विष्णोरायतने शुभे ।।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रास्तत्र समागताः ।। ३९ ।।
वाचकस्तत्र पठति कथां पौराणिकीं शुभाम् ।।
मम मित्रं च तत्रैव नित्यकालं च गच्छति।।165.४० ।।
तस्मिन्काले तु मित्रेण नीतोऽहं विष्णुमन्दिरम्।
अत्यादरेण महता सन्तोष्य च पुनः पुनः ।।४१।।
मित्रेण सह तत्रैव तस्य पार्श्वे व्यवस्थितः ।।
श्रुतो मया ततः कूपः पुण्योऽयं पापनाशनः ।।४२।।
समुद्राः किल तिष्ठन्ति चत्वारोऽत्र समागताः ।।
तस्य कूपस्य माहात्म्यं श्रुतं तत्र महत्फलम् ।। ४३ ।।
वाचकाय ततो दानं दत्तं सर्वैर्महाजनैः ।।
मित्रेण प्रेरितो दाने मया मौनं समाश्रितम् ।। ४४।।
मित्रेण च पुनः प्रोक्तं यथाशक्त्या प्रदीयताम् ।।
तदा मित्रमसङ्गेन दत्तो वै स्वर्णमाषकः ।।४५।।
ततः कालेन महता गतो वैवस्वतक्षयम् ।।
वैवस्वतनियोगेन ततोऽहं पूर्वकर्मभिः ।। ४६ ।।
प्रेतत्वं समनुप्राप्तो दुस्तरं दुर्गमं महत् ।।
न दत्तं न हुतं चापि तीर्थं नैवावगाहितम् ।।४७।।
न तर्पितास्तु पितरः प्राप्तोऽहं प्रेततां ततः ।।

इत्येत्कथितं सर्वं यन्मां त्वं परिपृच्छसि ।। ४८ ।।
गच्छ त्वं सम्मुखस्तत्र यत्र सा मथुरा पुरी ।।
प्रेतस्य वचनं श्रुत्वा विभुर्वचनमब्रवीत् ।। ४९ ।।
कथं धारयसे प्राणान्वृक्षमूलं समाश्रितः ।। 165.५० ।।
प्रेत उवाच ।।
कथितं हि मया पूर्वं यद्वृत्तं हि पुरातनम् ।।
वाचकाय तु यद्दत्तं सुवर्णस्य च माषकम् ।। ५१ ।।
तद्दानस्य प्रभावेण नित्यं तृप्तोऽस्मि वै विभो ।।
अकामेन मया दत्तं तस्येदं कर्मणः फलम् ।। ५२ ।।
प्रेतभावं गतस्यापि न मे ज्ञानस्य विभ्रमः ।।
ततश्च स वणिक्श्रेष्ठ आगत्य मथुरां पुरीम् ।। ५३ ।।
कृतं तेन च तत्सर्वं यथा प्रेतेन भाषितम् ।।
प्रेतोऽसौ तेन कृत्येन मुक्तिं प्राप्य दिवं गतः ।।५४।।
एतत्ते कथितं भूमे माहात्म्यं मथुराभवम् ।।
चतुःसामुद्रिके कूपे पिण्डदाने परां गतिम् ।।९५।।
तीर्थे चैव गृहे वापि देवस्थानेऽपि चत्वरे ।।
यत्र तत्र मृता देवि मुक्तिं यान्ति न चान्यथा ।। ५६ ।।
अन्यत्र हि कृतं पापं तीर्थमासाद्य गच्छति ।।
तीर्थे तु यत्कृतं पापं वज्रलेपो भविष्यति ।। ५७ ।।
मथुरायां कृतं पापं तत्रैव च विनश्यति ।।
एषा पुरी महापुण्या यस्यां पापं न विद्यते ।। ५८ ।।
कृतघ्नश्च सुरापश्च चौरो भग्नव्रतस्तथा ।।
मथुरां प्राप्य मनुजो मुच्यते सर्वकिल्बिषैः ।। ५९ ।।
तिष्ठेद्युगसहस्रं तु पादेनैकेन यः पुमान् ।।
तस्याधिकं भवेत्पुण्यं मथुरायां निवासिनः ।। 165.६० ।।
परदाररता ये च ये नरा अजितेंद्रियाः ।।
मथुरावासिनः सर्वे ते देवा नरविग्रहाः ।। ६१ ।
बलिभिक्षाप्रदातारस्ते मृताः क्रोधवर्जिताः ।।
तीर्थस्नानरता ये च देवास्ते नरमूर्तयः ।। ६२ ।।
यदन्येषां सहस्रेण ब्राह्मणानां महात्मनाम् ।।
एकेन पूजितेन स्यान्माथुरेणाखिलं हि तत् ।।६३।।
अनृग्वै माथुरो यत्र चतुर्वेदस्तथापरः ।।
न च वेदैश्चतुर्भिः स्यान्माथुरेण समः क्वचित् ।।६४।।

भवन्ति सर्वतीर्थानि पुण्यान्यायतनानि च ।।
मङ्गलानि च सर्वाणि यत्र तिष्ठन्ति माथुराः ।। ६५ ।।
चतुर्वेदं परित्यज्य माथुरं पूजयेत्सदा ।।
सिद्धा भूतगणाः सर्वे ये च देवगणा भुवि ।। ६६ ।।
मथुरावासिनो लोकान्पश्यन्ति च चतुर्भुजान् ।।
मथुरायां ये वसन्ति विष्णुरूपा हि ते नराः ।। ६७ ।।
ज्ञानिनस्तान्हि पश्यन्ति अज्ञाः पश्यन्ति तान्न च ।। ६८ ।।
इति श्रीवराहपुराणे मथुरामाहात्म्ये कूपप्रभावे ब्राह्मणमाहात्म्यं नाम पंचषष्ट्यधिकशततमोऽध्यायः ।। १६५ ।।

धरण्युवाच ।।
श्रुतानि तु महादेव तीर्थानि विविधानि तु ।।
असिकुण्डेति संज्ञेयं तन्मे त्वं कथय प्रभो ।। १ ।।
श्रीवराह उवाच ।।
सुमतिर्नाम राजासीद्धार्मिको लोकविश्रुतः ।।
तीर्थयात्रानिमित्तेन स्वर्गलोकं गतः पुरा ।। २ ।।
गते स्वर्गं तु नृपतौ पुत्रो राज्यं चकार ह ।।
विमतिर्नाम नाम्ना च राज्ये पैतामहे स्थितः ।। ३ ।।
राज्यं च कुर्वतस्तस्य आगतो नारदस्तदा ।।
विष्टरं पाद्यमर्घ्यं च तस्मै दत्तं यथोचितम् ।। ४ ।।
प्रतिगृह्य च तत्सर्वं तमुवाच स नारदः ।।
पितुर्ह्यनृणतां गत्वा स पुत्रो धर्मभाग्भवेत् ।। ५ ।।
इत्युक्त्वा नारदस्तत्र तत्रैवान्तरधीयत ।।
नारदे तु गते राजा पप्रच्छ स्वात्ममन्त्रिणः ।।६।।
तदा किमुक्तमृषिणा नारदेन पितुः कृते ।।
आनृण्यमिति यद्वाक्यं मया बुद्धं न किंचन ।। ७ ।।
मन्त्रिणश्च ततो ज्ञात्वा पितुर्मरणमेव च ।।
तीर्थयात्रानिमित्तं च तस्मै राज्ञे न्यवेदयन् ।। ८ ।।
अतएवोक्तमानृण्यं नारदेन पितुस्तव ।।
श्रुत्वा वाक्यं तदा राजा तीर्थयात्रां चकार ह ।। ९ ।।
विमतेर्बुद्धिरुत्पन्ना गच्छामो मथुरां पुरीम् ।।
चतुरो वार्षिकान्मासान्मथुरायां वसामहे ।।166.१०।।
सर्वाणि तत्र तीर्थानि तिष्ठन्ति विविधानि च ।।
आगते तु नृपे तत्र तीर्थान्यूचुः परस्परम् ।।११ ।।
युद्धं विमतिना सार्द्धं स्वयं कर्त्तुं न शक्नुमः ।।
कल्पग्रामं तु गच्छामो वराहो यत्र तिष्ठति ।। १२ ।।
गतानि तत्र तीर्थानि कल्पग्रामं वसुन्धरे ।।
तत्र वाराहरूपेण स्थितोऽहं च यदृच्छया ।। ३३ ।।
यावन्निरीक्षयाम्यग्रं तावत्तिष्ठन्ति सन्निधौ ।।
तीर्थान्यूचुः ।।
जय विष्णो जयाचिंत्य जय देव जयाच्युत ।।१४।।
जय विश्वेश कर्त्तेश जय देव नमोऽस्तु ते ।।
श्रीवराह उवाच ।।

तीर्थैः स्तुतोऽहं वसुधे वचनं चेदमब्रुवम् ।।१५।।
वरं वृणुत भद्रं वो यद्वो मनसि वर्त्तते ।।
तीर्थान्यूचुः ।।
वराह यदि देवेश अभयं दातुमर्हसि ।। १६ ।।
सुपापिना विमतिना कृतस्त्रासः सुदारुणः ।।
तं नियच्छस्व पापिष्ठं यदि पश्यसि नः सुखम् ।। १७ ।।
श्रीवराह उवाच ।।
हिताय सर्वतीर्थानां हनिष्यामि महारिपुम् ।।
तत्र तीर्थनियोगेन आगतो मथुरां पुरीम् ।।१८।।
तत्रागते तु वसुधे युद्धं कृत्वा तु तेन वै ।।
तदासिना तु दिव्येन स राजा बलदर्पितः ।।
सूदितो हि मया देवि अस्यग्रं निहितं भुवि ।। १९ ।।
असेरग्रेण तूद्धृत्य मृत्तिकां वरवर्णिनि ।।
तत्र कुण्डं महद्दिव्यं देवर्षिविधिनिर्मितम् ।।
असिकुण्डेति संज्ञा च प्राप्ता तेन वसुन्धरे ।।166.२०।।
तत्राश्चर्यं प्रवक्ष्यामि मनःकर्णसुखावहम् ।।
पश्यन्ति मनुजाः सिद्धाः सर्वपापविवर्जिताः ।। २१ ।।
द्वादश्यां च चतुर्दश्यां श्रद्दधाना जितेन्द्रियाः ।।
फलानि तस्य पश्यन्ति लभन्ते न सुनिश्चिताः ।। २२ ।।
तस्मिन्काले ह्यहं देवि मथुरायां समागतः ।।
तत्र तिष्ठाम्यहं भद्रे पश्चिमां दिशमाश्रितः ।। २३ ।।
तत्र कृत्वा च हैरण्या मूर्त्तयश्च चतुर्विधाः ।।
तीर्थे वराहसंज्ञे तु मथुरायां व्यवस्थिताः ।। २४ ।।
सुदृढाः सुदृशः सुभ्रू यः पश्यति स मुच्यते ।।
एका वराहसंज्ञा च तथा नारायणस्य च ।। २५ ।।
वामनस्य तृतीया वै चतुर्थी राघवस्य च ।।
एताश्चतस्रो यः पश्येत्स्नात्वा कुण्डेऽसिसंज्ञिते ।।२६ ।।
चतुःसागरपर्यन्ता क्रान्ता तेन धरा ध्रुवम् ।।
तीर्थानां माथुराणां च सर्वेषां फलमश्नुते ।। २७ ।।
तत्र सर्वेषु तीर्थेषु असिकुण्डं महत्तरम् ।।
या संख्या कथिता पूर्वं तीर्थानां दक्षिणोत्तरे ।। २८ ।।
असिकुण्डं समारभ्य तीर्थानुक्रमणिका वरा ।।
सुप्तोत्थितोऽपि द्वादश्यामसिकुण्डाप्लुतो नरः ।। २९ ।।

मूर्त्तीः पश्यति यस्तास्तु ब्रह्मभूयाय कल्पते ।।
नास्तीह पुनरावृत्तिर्भवेत्कालविपर्यये ।। 166.३० ।।
इति श्रीवराहपुराणे असिकुण्डप्रभावो नाम षट्षष्ट्यधिकशततमोऽध्यायः ।। १६६ ।।

श्रीवराह उवाच ।।
शृणु देवि यथा संज्ञा विश्रान्तेः कीर्तिता पुरा ।।
राक्षसेन पुरा प्रोक्ता ब्राह्मणाय महात्मने ।। १ ।।
पृथिव्युवाच ।।
किमर्थं राक्षसेनोक्ता संज्ञा विश्रान्तिसंज्ञिता ।।
किमर्थं पृष्टवान्विप्रः सर्वं कथय मे प्रभो ।। २ ।।
श्रीवराह उवाच ।।
उज्जयिन्यामभूद्विप्रः सदाचारविवर्जितः ।।
न स पूजयते देवान्न स साधून्नमस्यति ।। ३ ।।
पुण्यतीर्थं समासाद्य न च स्नानं करोति सः ।।
वेदवेदाङ्गरहितः परदाररतः सदा ।। ४ ।।
सन्ध्ये द्वे शयने चैव नित्यं मूढः स तिष्ठति ।।
न स देवमनुष्यांश्च पितॄन्पूजयते सदा ।। ५ ।।
पापाचाररतो नित्यं पापसङ्गः सुदुर्मतिः ।।
गार्हस्थ्यधर्ममाश्रित्य मोहितो वर्त्तते सदा ।। ६ ।।
गार्हस्थ्यं सर्वधर्माणां श्रेष्ठमुक्तं स्वयंभुवा ।।
यावन्ति जन्तवः सर्वे यथा गोः सर्वतः स्थिताः ।। ७ ।।
यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः ।।
एवं गार्हस्थ्यमाश्रित्य सर्वे जीवन्ति जन्तवः ।। ८ ।।
ततः स चौर्यं कुर्वाणः पापैः सह नराधमः ।।
स च रात्रौ द्रवँल्लोकाँल्लब्धोऽसौ राजरक्षिभिः ।। ९ ।।
पलायमानः स परमन्धकूपेऽपतत्तदा ।।
मृतोऽसौ पतितस्तत्र राक्षसत्वमुपागतः ।। 167.१० ।।
अन्धकूपे स पतितो घोररूपोऽवसत्तदा ।।
कदाचिदथ कार्येषु महान्सार्थ उपागतः ।। ११ ।।
तेषां मध्ये द्विजः कश्चिद्रक्षां कृत्वा वसुन्धरे ।।
रक्षोघ्नेन च मन्त्रेण सर्वं सार्थं च रक्षति ।। १२ ।।
तत्रागत्य च रक्षस्तु ब्राह्मणं वाक्यमब्रवीत् ।।
राक्षस उवाच ।।
अहं दास्यामि ते विप्र यत्ते मनसि वर्त्तते ।। १३ ।।
बहुकालेन संप्राप्तं भोजनं च यथेप्सितम् ।।
उत्तिष्ठ विप्र गच्छ त्वमन्यत्र शयनं कुरु ।। १४ ।।
येनाहं भक्षये सार्थं यावत्तृप्तिर्भवेन्मम ।।

राक्षसस्य वचः श्रुत्वा विप्रो वचनमब्रवीत् ।। १५ ।।
एकः सार्थं प्रयातोऽहं नोत्सृजामि कथंचन ।।
तस्माद्राक्षस गच्छ त्वं सार्थं मम परिग्रहम् ।। १६ ।।
निरीक्षितुं न शक्तोऽसि मम मन्त्रबलेन हि ।।
राक्षस उवाच ।।
मम भक्ष्ये हते विप्र दोषस्तव भविष्यति ।। १७ ।।
दयां कुरु त्वं विप्रर्षे भोजनं मम दीयताम् ।।
ततोऽपृच्छदसौ विप्रो राक्षसं दारुणं प्रति ।। १८ ।।
केन त्वं कर्मदोषेण राक्षसत्वमुपागतः ।।
ततश्च कथयामास कथावृत्तं पुरातनम् ।। १९ ।।
अनाचारादि हेतोश्च राक्षसत्वमुपागतः ।।
आत्मानं कथयामास विप्राग्रे स यथायथम् ।।167.२० ।।
तस्य दुःखेन संयुक्तो विप्रोऽसौ वाक्यमब्रवीत् ।।
विप्र उवाच ।।
मित्रत्वे वर्त्तसे रक्षस्तव दास्यामि किं वद ।। २१ ।।
आत्मना चोपकारेण प्रियं किं करवाणि ते ।।
राक्षस उवाच ।।
ददासि यदि तद्विप्र यन्मे मनसि वर्त्तते ।। २२ ।।
मथुरायां च यत्स्नातं कृतं विश्रान्तिसंज्ञके ।।
तच्च स्नानफलं देहि येन मुक्तिं व्रजाम्यहम् ।। २३ ।।
तेन दुःखेन संयुक्तो विप्रो वाक्यमथाब्रवीत् ।।
विप्र उवाच ।।
कथं जानासि रक्षस्त्वं तीर्थं विश्रान्तिसंज्ञकम् ।। २४ ।।
कथं च संज्ञा तस्याभूत्कथय त्वं हि राक्षस ।।
राक्षस उवाच ।।
पुरी उज्जयिनी नाम्ना तस्यां वासो हि मे सदा ।। २५ ।।
कस्मिंश्चिदथ कालेन गतोऽहं विष्णुमन्दिरम् ।।
तस्याग्रे तिष्ठते विप्रो वाचको वेदपारगः ।। २६ ।।
विश्रान्तितीर्थमाहात्म्यं श्रावयन्स दिनेदिने ।।
तस्य श्रवणमात्रेण मम भक्तिर्हृदिस्थिता ।।२७।।
सा संज्ञा च श्रुता तत्र विश्रान्तेश्च मयाऽनघ ।।
वासुदेवो महाबाहुर्जगत्स्वामी जनार्दनः ।। २८ ।।
विश्रामं कुरुते तत्र तेन विश्रान्तिसंज्ञिता ।।

राक्षसस्य वचः श्रुत्वा विप्रो वचनमब्रवीत् ।। २९ ।।
एकस्नानस्य हि फलं तव दत्तं च राक्षस ।।
विप्रे चेत्युक्तमात्रे च मोक्षावासमवाप सः ।। 167.३० ।।
इति श्रीवराहपुराणे मथुरामाहात्म्ये विश्रान्तिमाहात्म्यं नाम सप्तषष्ट्यधिकशततमोऽध्यायः ।।१६७।।

धरण्युवाच ।।
मथुरां रक्षते कोऽसौ क्षेत्रपालो व्यवस्थितः ।।
तेन दृष्टेन यत्पुण्यं कथयस्वाखिलं प्रभो ।। १ ।।
श्रीवराह उवाच ।।
दृष्ट्वा भूतपतिं देवं वरदं पापनाशनम् ।।
तस्य दर्शनमात्रेण मथुरायां फलं भवेत् ।। २ ।।
पुरा वर्षसहस्रं तु तपस्तप्तं सुदारुणम् ।।
पूर्णे वर्षसहस्रे तु मया सन्तोषितो हरः ।। ३ ।।
वरं वरय भद्रं ते यस्ते मनसि वर्त्तते ।।
ईश्वर उवाच ।।
सर्वगस्त्वं हि देवेश मया ज्ञातं सुनिश्चितम् ।। ४ ।।
मथुरायां च मे स्थानं सदा देव प्रदीयताम् ।।
देवदेव वचः श्रुत्वा हरिर्वचनमब्रवीत् ।। ५ ।।
मथुरायां च देव त्वं क्षेत्रपालो भविष्यसि ।।
त्वयि दृष्टे महादेव मम क्षेत्र फलं भवेत् ।।६।।
अन्यथा नाप्नुयात् सिद्धिमेवमेतन्न संशयः ।।
येन यद्यादृशं पुण्यं कृतं तीर्थे प्रयत्नतः ।।७।।
भजते मनुजः सिद्धिमात्मभावेन तादृशीम् ।।
मम क्षेत्रप्रवेशे च भूमिः संसारनाशिनी ।। ८ ।।
इन्द्रस्यैव पुरी रम्या यथा नाकेऽमरावती ।।
जम्बूद्वीपे तथोत्कृष्टा मथुरा मम वल्लभा ।। ९ ।।
विंशतिर्योजनानां हि माथुरं मम मण्डलम् ।।
पदे पदेऽश्वमेधानां फलं नात्र विचारणा ।। 168.१० ।।
न मया कथितं देवि ब्रह्मणश्च महात्मनः ।।
रुद्रस्य न मया पूर्वं कथितं च वसुन्धरे ।। ११ ।।
मया सुगोपितं पूर्वं गुह्याद्गुह्यतरं परम् ।।
अत्र क्षेत्रे पुरी रम्या सर्वरत्नविभूषिता ।।१२।।
तस्यां तिष्ठन्ति तीर्थानि तानि वक्ष्यामि तच्छृणु ।।
षष्टिकोटिसहस्राणि षष्टिकोटिशतानि च ।। १३ ।।
तीर्थसंख्या च वसुधे मथुरायां मयोदिता ।।
गोवर्द्धनं तथाक्रूरं द्वे कोटी दक्षिणोत्तरे ।। १४ ।।
प्रस्कन्दनं च भाण्डीरं कुरुक्षेत्रसमानि षट् ।।
पुण्यात्पुण्यतरं श्रेष्ठमेतद्विश्रान्तिसंज्ञकम् ।। १५ ।।

असिकुण्डं सवैकुण्ठं कोटितीर्थोत्तमं स्मृतम् ।।
अविमुक्तं सोमतीर्थं यमनं तिन्दुकं ततः ।।१६।।
चक्रतीर्थं तथाक्रूरं द्वादशादित्यसंज्ञितम् ।।
एतत्पुण्यं पवित्रं च महापातकनाशनम् ।।१७।।
कुरुक्षेत्राच्छतगुणं मथुरायां न संशयः ।।
ये पठन्ति महाभागाः शृण्वन्ति च समाहिताः ।। १८ ।।
मथुरायास्तु माहात्म्यं ते यान्ति परमं पदम्।।
कुलानि ते तारयन्ति द्वे शते विंशयोर्द्वयोः ।। १९।।
एतन्मरणकाले तु यः स्मरेत्प्रयतो नरः।।
स गच्छेत्परमां सिद्धिमिह संसारनाशिनीम् ।।168.२० ।।
एतत्ते कथितं देवि सर्वपातकनाशनम् ।।
तीर्थानां चैव माहात्म्यं किमन्यच्छ्रोतुमिच्छसि ।।२१ ।।
इति श्रीवराहपुराणे भगवच्छास्त्रे मथुरामाहात्म्ये अष्टषष्ट्यधिकशततमोऽध्यायः ।। १६८ ।।

श्रीवराह उवाच ।।
मथुरायाः परं क्षेत्रं त्रैलोक्ये न च विद्यते ।।
तस्यां वसाम्यहं देवि मथुरायां च सर्वदा ।। १ ।।
सर्वेषामेव तीर्थानां मथुरा च परं महत् ।।
कृष्णेन क्रीडितं तत्र तच्छुद्धं हि पदे पदे ।। २ ।।
चक्रस्थितं हि तत्सर्वं कृष्णस्यैव पदेन तु ।।
तत्र मध्यं तु तत्स्थानमर्द्धचन्द्रे प्रतिष्ठितम् ।। ३ ।।
तत्रैव वासिनो लोका मुक्तिं यान्ति न संशयः ।।
कृष्णस्य दक्षिणा कोटिरुत्तरा कोटिमध्यतः ।।४।।
तयोर्मध्ये स्थितो देव आकारात्सोमचक्रता ।।
तौ देवौ क्षेत्रफलदौ स्नानदानादिकर्मणि ।। ९ ।।
तस्माद्धि मरणं चात्र द्वे कोटी सर्वकर्मसु ।।
अर्द्धचन्द्रे तु यः स्नानं करोति नियताशनः ।। ६ ।।
तेन वै चाक्षया लोकाः प्राप्ताश्चैव न संशयः ।।
दक्षिणस्यां समारभ्य उत्तरस्यां समापयेत् ।।
यज्ञोपवीतमात्रेण त्रायन्ते च कुलं बहु ।। ७ ।।
पृथिव्युवाच ।।
यज्ञोपवीत मात्राया विधानं कीदृशं प्रभो ।। ८ ।।
यथामानं हि कर्तव्यं तत्सर्वं वक्तुमर्हसि ।।
श्रीवराह उवाच ।।
यज्ञोपवीतस्य विधिं शृणुष्व वरवर्णिनि ।। ९ ।।
दक्षिणस्यां समारभ्य उत्तरस्यां समापयेत् ।।
यज्ञोपवीतस्य विधिरेष एव प्रकार्तितः ।। 169.१० ।।
मनुजा येन विधिना मुक्तिं यान्ति न संशयः ।।
अनेन विधिना चैव उत्तरस्यां समापयेत् ।।
गृहान्निःसृत्य मौनेन यावत्स्नानं समाचरेत् ।। ११ ।।
पूजां कृष्णस्य कृत्वा वै ततो ब्रूयाद्वसुन्धरे ।।
स्नाने समाप्ते विधिवद्देवदेवस्य चैव हि ।। १२ ।।
कृष्णस्य कृत्वा तु मखं स्नानादीनि यथाक्रमम् ।।
गां वै पयस्विनीं दत्त्वा हिरण्यं वसु चैव हि ।।१३।।
ब्राह्मणान्भोजयेत्पश्चाद्विधिरेष उदाहृतः ।।
तथा शयनमुद्दिश्य एवमेवं तु कारयेत् ।। १४ ।।
न तस्य पुनरावृत्तिर्मम लोके महीयते ।।

अर्द्धचन्द्रे मृता देवि मम लोकं व्रजन्ति ते ।।१५।।
अन्यत्र तु मृता ये च अर्धचन्द्रकृतक्रियाः ।।
तेऽपि स्वर्गं गमिष्यन्ति दाहादिकरणैर्युताः ।।१६।।
यावदस्थीन्यर्द्धचन्द्रं यस्य तिष्ठन्ति देहिनः ।।
तावत्सुपुण्यकर्त्ता च स्वर्गलोके महीयते ।।१७।।
अर्द्धचन्द्रे विशेषोऽस्ति तीर्थे विश्रान्तिसंज्ञके ।।
दाहादिकरणे तत्र गर्दभोऽपि चतुर्भुजः ।।१८।।
गर्त्तेश्वरोऽथ भूतेशो द्वे कोटी तु वसुन्धरे ।।
मध्ये सदैव तिष्ठामि न त्यजामि कदाचन ।।१९।।
माथुराणां च यद्रूपं तद्रूपं मे वसुन्धरे ।।
माथुरेण तु तृप्तेन तृप्तोऽहं नात्र संशयः ।।169.२० ।।
शृणु देवि यथावृत्तं गरुडस्य महात्मनः ।।
मथुरामागतो योऽसौ कृष्णदर्शनकांक्षया ।।
मथुरायां स्थितं देवं भिन्नरूपं न पश्यति ।।२१ ।।
तदा गतोऽसौ वसुधे देवस्याग्रे विहंगमः ।।
कृष्णस्य दर्शनार्थाय दिव्यं स्तोत्रमुदीरयन् ।। २२ ।।
गरुड उवाच ।।
विश्वरूप जयादित्य जय विष्णो जयाच्युत ।।
जय केशव ईशान जय कृष्ण नमोऽस्तु ते।।२३।।
जय मूर्त जयाचिन्त्य जय लोकविभूषण ।।
इत्येवं संस्तुतो देवो गरुडेन महात्मना ।।२४।।
गरुडस्य पुरस्तत्र स्थितो देवः शरीरवान् ।।
सान्त्वयामास गरुडं प्रीतिपूर्वमुवाच ह ।।२५।।
किं कुर्यात्स्तोत्रमेतन्मे किं वा तव चिकीर्षितम् ।।
मथुरागमकृत्ये ते सर्वं ब्रूहि ममाग्रतः ।। २६ ।।
गरुड उवाच ।।
मथुरामागतश्चाहं तव दर्शनकांक्षया ।।
आगते तु मया देव न दृष्टं तव रूपकम् ।।२७।।
माथुरैरेव लोकैस्तु समं दृष्टं हि रूपकम् ।।
एकीभूतमहं सर्वं दृष्ट्वा मां मोह आविशत् ।।२८।।
तस्मात्स्तुतिस्तु देवेश कृतानुग्रहकाम्यया ।।
गरुडस्य वचः श्रुत्वा प्रहस्य मधुसूदनः ।। २९ ।।
उवाच श्लक्ष्णया वाचा गरुडं प्रति भाविनि ।।

श्रीकृष्ण उवाच ।।
माथुराणां च यद्रूपं तद्रूपं मे विहंगम ।।169.३०।।
ये पापास्ते न पश्यन्ति मद्रूपा माथुरा द्विजाः ।।
एवमुक्त्वा ततः कृष्णस्तत्रैवान्तरधीयत ।।३१।।
गरुडोऽपि ततः स्थानाद्गतो देवि यथासुखम् ।।
एतत्ते कथितं देवि माथुराणां तु रूपकम् ।।३२।।
येषां पूजितमात्रेण तुष्टोऽहं चैव सर्वदा ।।
मथुरायां मृता ये च मुक्तिं यान्ति न चान्यथा ।।३३।।
अपि कीटः पतंगो वा तिर्यग्योनिगतोऽपि वा ।।
चतुर्भुजास्तु ते सर्वे भवन्तीति विनिश्चितम् ।।३४।।
यः पश्येत्पद्मनाभं तु द्वादश्यामाश्विनस्य तु ।।
एकदेहधरौ देवौ शिवकेशवरूपिणौ ।।३५।।
एकादश्यां चोपवासी कृतशौचः समाहितः ।।
कालिन्द्यां तु नरः स्नातो मुंचते योनिसंकटात् ।। ३६ ।।
चैत्रस्य शुक्लद्वादश्यामुपोष्य स्नानमाचरेत् ।।
चिन्ताविष्णुं समभ्यर्च्य कृत्वा वै जागरं निशि ।। ३७ ।।
यः करोति स मुच्येत नात्र कार्या विचारणा ।।
एकानंशां ततो देवीं यशोदां देवकीं तथा ।।३८।।
महाविद्येश्वरीं देवि मुच्यते ब्रह्महत्यया ।।
या धारा धर्मराजस्य मथुरायाश्च पश्चिमे ।।३९।।
स्नानं करोति तस्यां तु ग्रहदाषैर्न लिप्यते ।।
यं यं देवमभिध्यायेद्भक्तियुक्तेन चेतसा ।। 169.४० ।।
विश्रान्तिसंज्ञकं दृष्ट्वा दीर्घविष्णुं च केशवम् ।।
सर्वेषां दर्शनं पुण्यं पूजनात्तु फलं भवेत् ।। ४१ ।।
इति जपविधिहोमध्यानकाले स सम्यक्सततमभिसमीक्ष्य ब्रह्मणा यत्प्रयुक्तम् ।।
सकलगुणगणानामास्पदं ब्रह्मसंज्ञं जननमरणहीनं विष्णुमेवाभियाति ।। ४२ ।।
इति श्रीवराहपुराणे प्रागितिहासे मथुरामाहात्म्यं नामैकोनसप्तत्यधिकशततमोऽध्यायः ।।१६९।।

श्रीवराह उवाच ।।
पुनरन्यत् प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।।
मथुरायां पुरा वृत्तं गोकर्णस्य महात्मनः।।
वसुकर्णः पिता तस्य वैश्यो धनसमृद्धिमान् ।। १ ।।
तस्य भार्या सुशीला तु नाम्ना गुणसमन्विता ।।
भर्त्तुः प्रियकरी साध्वी न प्रसूता वयोऽधिका ।।२।।
विललाप च सुश्रोणि चैकान्ते दीनमानसा ।।
सरस्वती संगमेऽथ स्त्रियो दृष्ट्वा प्रजावतीः ।। ३ ।।
वृक्षमूले तु तत्रैव मुनिरेकः समास्थितः ।।
तस्या विलपितं श्रुत्वा शनैः सकरुणं हृदि ।। ४ ।।
जात हार्दः प्रियं चेष्टं शनैः स्त्रियमथाब्रवीत् ।।
का त्वं कस्यासि सुभगे किमर्थं रोदिषि स्वयम् ।।९।।
इति तस्य वचः श्रुत्वा सा स्त्री ऋषिमथाब्रवीत् ।।
सापत्यास्तु स्त्रियो दृष्ट्वा क्रीडन्त्यो बालकैः सह ।। ६ ।।
मम तन्नास्ति हि मुने दुर्भगायाः प्रजासुखम् ।।
उवाच मुनिशार्दूलस्तां स्त्रियं पुत्रगर्द्धिनीम् ।। ७ ।।
देवतायाः प्रसादेन तव पुत्रो भविष्यति ।।
शिवस्यायतनं पुण्यं गोकर्णेति च विश्रुतम् ।। ८ ।।
तमाराधय देवेशं पत्या सह यशस्विनि ।।
स्नानदीपोपहारेण स्तोत्रैर्नानाविधैर्जपैः ।।९।।
इत्युक्ता सा च सुश्रोणी प्रणिपत्य प्रसाद्य तम् ।।
भर्त्रे सा कथयामास यदुक्तं मुनिना प्रियम् ।। 170.१० ।।
स तद्वचनमाकर्ण्य प्रीतियुक्तं सुसंयुतम् ।।
जगादोच्चैः प्रियां देवि भद्रं जातो मनोरथः ।। ११ ।।
ममाप्येतन्मतं देवि यदुक्तमृषिणा ततः ।।
इति प्रियां समाभाष्य प्रियया च तथाऽकरोत् ।। १२ ।।
सरस्वत्याः संगमे तौ स्नात्वा गोकर्णमर्चतुः ।।
पुष्पदीपोपहारं तु चक्राते तौ दिनेदिने ।। १३ ।।
एवं तयोर्दशाब्दानि गतानि सुतहेतवे ।।
ततः प्रसन्नो भगवानुमापतिरुवाच ह ।। १४ ।।
भविष्यति युवां पुत्रो रूपवान्गुणसंयुतः ।।
सस्यसन्ततिवद्धश्यः सन्तानो यस्य वै बहु ।। १५ ।।
देवतानां प्रसादेन तदुक्तस्य भविष्यति ।।

इत्युक्तौ तौ तु देवेन स्नानं कृत्वा सरस्वतीम् ।। १६ ।।
प्रभाते देवदेवाय ददौ द्रव्यमनन्तकम् ।।
ब्राह्मणेभ्यो ददौ भोज्यं वस्त्राय बहुदक्षिणम् ।। १७ ।।
ततस्तस्यां सुशीलायां गर्भाधानमविन्दत ।।
ततः प्रववृधे गर्भः शुक्लपक्षे यथा शशी ।।
सुषुवे दशमे मासि पुत्रं बालं शशिप्रभम् ।। १८ ।।
गोसहस्रं तदा दत्त्वा ससुवर्णं सवस्त्रकम् ।।
बहुशः सर्ववर्णेभ्यः पुत्रजन्ममहोत्सवे ।। १९ ।।
जातकर्म तथा चैव नामकर्म चकार च ।।
गोकर्णं नाम तस्यैव पिता चक्रे निरूप्य च ।। 170.२० ।।
एवमन्नप्राशनं च चूडोपनयनं तथा ।।
अतःपरं च गोदानं वैवाहिकमनुत्तमम् ।। २१ ।।
दानं तु ददतस्तस्य देवतां पूजयिष्यतः ।।
कृतानि बहुमुख्यानि मंगलानि यथाविधि ।। २२ ।।
ततः प्रविष्टे तारुण्ये त्वप्रजं वीक्ष्य पुत्रकम् ।।
पुनर्विवाहयामास भार्याणां च चतुष्टयम् ।।२३।।
वयोरूपगुणोपेतास्तस्य भार्याः सुलोचनाः ।।
अप्रजा एव ताः सर्वा नाभवत्पुत्रिणी क्वचित् ।। २४ ।।
तेनैव धर्म आरब्धः प्रजार्थो देवसेवनम् ।।
वापीकूपतडागानि देवतायतनानि च ।। २९ ।।
प्रपामालाश्च नित्यान्नं भोजनं वर्त्तनानि च ।।
अनित्यतां ततो मत्वा चंचलाऽस्थिरजीवितम् ।। २६ ।।
विनियोगः कृतस्तेन सर्वदा सर्वकर्मसु ।।
गोकर्णस्य समीपे तु पश्चिमे चक्रपाणिनः ।।२७।।
प्रासादं कारयामास पंचायतनकं हरेः ।।
आरामस्तत्र विस्तीर्णः पुष्पजात्यस्तथैव च ।।२८ ।।
आम्रजम्बीरनारङ्गं बीजपूरः सदाडिमः ।।
प्राकारं कारयामास परिखामण्डलीयकम् ।। २९ ।।
प्रावर्त्तनं च कूपेषु येन सिंचेत्प्रवाटिकाम् ।।
पुष्पाणि च विचिन्वंति सर्वास्ता वरयोषितः ।। 170.३० ।।
स्नानं पूजादिकं तद्वन्मार्जनं दीपकर्म च ।।
कुर्वन्ति देवतागारे ताः सर्वाः शुभलोचना ।। ३१ ।।
पतिव्रता महाभागाश्चतुरो भगिनीर्यथा ।।

नित्यकालं पतेर्वाक्ये स्थिताः कुर्वन्त्यहर्निशम् ।। ३२ ।।
मालाकारस्तथा नित्यं विटपांश्च प्रसिंचति ।।
पालयामास विधिवद्विधिदृष्टेन कर्मणा ।। ३३ ।।
जाताः सुपुष्पवन्तश्च द्रुमाः फलसमन्विताः ।।
नित्यकालं त्वर्पयन्तः फलानां सुमहोत्सवम् ।। ३४ ।।
दीयते भुज्यते सर्वैर्यथा शक्रस्तथा सदा ।।
एवं तु वसतस्तस्य मथुरायां स्थितस्य च ।। ३५ ।।
धनस्य संक्षयो जातः प्रत्यहं ददतः सतः ।।
शेषमात्रे धने तस्य चिन्ताभून्महती तदा ।। ३६।।
मातापित्रोः कुटुम्बस्य भरणीयस्य भोजनम् ।।
कथं ब्रूहि करिष्यामि महाकष्टं तु सोऽब्रवीत् ।। ३७ ।।
इति निश्चित्य मनसा वणिग्भावं हृदि स्थिरम् ।।
कृत्वा सार्थमुपामन्त्र्य निर्गतः पूर्वमण्डलम् ।। ३८ ।।
तत्र क्रीत्वा सुपण्यानि उत्तरापथगानि च ।।
यातायातं ततः कृत्वा लाभालाभविचक्षणः ।।३९ ।।
क्रीत्वा क्रेयानि वस्तूनि लाभालाभं विचार्य च ।।
उत्तरापथदेशात्तु सार्थं सबहुविस्तरम् ।। 170.४० ।।
मणिरत्नं हयश्वरत्नं पट्टरत्नं समर्थकम् ।।
गृहीत्वा तु समागच्छन्मथुरायां गृहं प्रति ।। ४१ ।।
एकदा सार्थसम्भारो विश्रान्तुमुपचक्रमे ।।
सानौ पर्वतसामीप्ये प्रभूतयवसोदके ।। ४२ ।।
नद्यास्तीरे सुप्रदेशे आवासांश्च प्रचक्रिरे ।।
निवेश्य भाण्डं तत्रैव अश्वानां यवसादिकम् ।। ४३ ।।
समादिश्येतिकृत्यं च भृत्यैः कतिपयैर्वृतः ।।
समारुरोह तं शैलं बहुकन्दरशोभितम् ।। ४४ ।।
क्रीडार्थं विहरंस्तत्र सोऽपश्यत् स्थानमुत्तमम् ।।
प्रसन्नसलिलोपेतं नारङ्गैस्तु विभूषितम् ।। ४५ ।।
फलवन्तश्च वृक्षाश्च पुष्पाणि सुरभीणि च ।।
पाषाणसन्धौ तत्रस्थैर्मालाकारैस्तु रोपितम् ।। ४६ ।।
तत्रारुह्य दरीद्वारं यावद्दृष्टिर्निपात्यते ।।
तावदभ्यागतादीनि स्वागतादि शृणोति च ।। ४७ ।।
श्रुत्वापि शब्दप्रभवं किमेतदिति निश्चयम् ।।
करिष्यंस्तत्र चैकान्ते दृष्टः पञ्जरगः शुकः ।। ४८ ।।

तेनोक्तं भो इहागच्छ आतिथ्यं करवाणि ते ।।
पाद्यं गृहाण भोः पान्थ आसनं ते इदं शुभम् ।। ४९ ।।
फलानीमानि स्वादूनि मधुमांसोदकानि च ।।
यथेष्टं यावतीच्छा च तावद्गृहणन्त्विमे नराः ।। 170.५० ।।
आगत्य पितरौ मह्यं विशेषं तौ करिष्यतः ।।
अतिथेरागतस्येह पूजाया विमुखो भवेत् ।। ५१ ।।
गृहस्थस्तस्य पितरो वसन्ति नरके ध्रुवम् ।।
पूजिते पूजिताः स्वर्गे मोदन्ते कालमक्षयम् ।। ५२ ।।
अतिथिर्यस्य भग्नाशो गृहात्प्रव्रजते यदि ।।
आत्मनो दुष्कृतं तस्मै दत्त्वा तत्सुकृतं हरेत् ।। ५३ ।।
तस्मात्सर्वप्रयत्नेन पूज्यो वै गृहमेधिना ।।
काले प्राप्तस्त्वकाले वा यथा विष्णुस्तथैव सः ।। ५४ ।।
एवंविधाः शुभा वाचो वैश्यो धर्मोपदेशकात् ।।
श्रुत्वा शुकात्स सर्वस्मै गोकर्णो मुदितोऽब्रवीत् ।। ५५ ।।
ऋषिः कस्त्वं पुराणज्ञः किं वा देवोऽथ गुह्यकः ।।
तव प्रसन्नरूपस्य यस्येयं वागमानुषी ।। ५६ ।।
कस्त्वं कथय मे सत्यमुत्साहश्चातिथिप्रियः ।।
धन्यः स मानुषो यस्य नित्यं सन्निहितो भवान् ।। ५७ ।।
इत्युक्तः स शुकः सर्वं शशंसात्मपुराकृतम् ।।
शृणु रौद्रं यथा पूर्वं मया कृतमबुद्धिना ।। ५८ ।।
शुकस्य विप्रियं यादृङ् महर्षेस्तु तपस्यतः ।।
सुमेरोरुत्तरे पार्श्वे महर्षिगणसेविते ।। ५९ ।।
तपश्चचार विपुलं शुको व्याससुतो महान् ।।
श्रोतुकामाः पुराणानि सेतिहासानि नैगमाः ।। 170.६० ।।
ऋषयस्तत्र चाजग्मुरसितो देवलस्तदा ।।
मार्कण्डेयो भरद्वाजो यवक्रीतस्ततो भृगुः ।। ६१ ।।
अङ्गिरास्तैत्तिरी रैभ्यः काण्वो मेधातिथिः कृतः ।।
तन्तुः सुतन्तुरादित्यो वसुमानेकतो द्वितः ।। ६२ ।।
वामदेवश्चाश्वशिरास्त्रिशीर्षो गौतमोदरः ।।
अन्ये च सिद्धा देवाश्च पन्नगा गुह्यकास्तथा ।। ६३ ।।
शुकं सम्मुखयामासुः पप्रच्छुर्द्धर्मसंहिताम् ।।
अहं तु वामदेवस्य शिष्यो नाम्ना शुकोदरः ।। ६४ ।।
भ्रष्टः श्रद्धान्वितो बाल्यात्सुनीत्यामग्रतश्चरन् ।।

ऊहापोहकरं प्रश्नं वारंवारं च पृष्टवान् ।। ६५ ।।
अन्यायवादिनं मां च गुरुर्नित्यं निषेधति ।।
गुरूणामग्रतो वाक्यं कथायां वदतां सह ।। ६६ ।।
पूर्वपक्षाश्च सिद्धान्ताः परस्परजिगीषवः ।।
अन्तरे चान्तराक्षेपं पुनर्नैवमवोचथाः ।।६७ ।।
एवं निषेधितश्चाहं गुरुणा मुनिसत्तमैः ।।
न कृतं यन्मया वाक्यं तेनाहं शपितस्तदा ।।६८।।
शुकेन कोपाच्छापो मे दत्तोऽयं जल्पको बटुः ।।
यथानामा त्वयं पक्षी शुको भवति नान्यथा ।।६९।।
इत्युक्तमात्रे वचने तत्रैवाहं शुकोदरः ।।
शुकत्वं तत्क्षणात्प्राप्तः क्षमस्वेत्यूचु तेजसा ।।170.७०।।
मुनयस्तं महात्मानं शुकं तत्त्वार्थवित्तमम् ।।
नान्यथा नान्यथा चोक्तं कदाचित्त्संभविष्यति ।। ७१ ।।
आगामिकाले दास्यामि वरमस्मै शुकाय भो।।
युष्माकमुपरोधेन यथारूपो विहङ्गमः ।।७२।।
अयं भविष्यति सदा सद्भावहितभावनः।।
पुराणतत्त्ववेत्ता च सर्वशास्त्रार्थपारगः।।७३।।
मथुरायां मृतः पश्चाद्ब्रह्मलोकं गमिष्यति ।।
एवं शापं वरं गृहय तस्माद्दीनो ह्यहं द्रुतम् ।।७४।।
मथुरामथुरोच्चारं कुर्वन्नित्यमतन्द्रितः।।
नित्योद्विग्नश्च मे गात्रे हिमाद्रौ तु गुहां वसन् ।। ७५ ।।
प्राप्तोऽहं शबरेणैव येनाहं पञ्जरे धृतः ।।
शबरस्तु सभार्यो वै क्रीडते स मया सह ।।७६।।
मुनेः प्रसादान्मे ज्ञानं न जहाति कदाचन ।।
भुज्यते ह्यवशेनैव कृतं येन यथा च यत् ।।७७।।
स्वस्थो भव महाभाग मा स्म शोके मनः कृथाः ।।
इत्युक्तः स तु गोकर्णस्तदा तेन शुकेन च ।।७८।।
तस्य तद्वचनं हृद्यं शुकमोक्षप्रदायकम् ।।
या सा मुक्तिप्रदा रम्या मधुरा पापनाशिनी।।७९।।
तस्यां वसाम्यहं भद्र वाणिज्यार्थमिहागतः ।।
पुनरिच्छामहे तत्र भाण्डं गृह्य यथासुखम् ।170.८०।।
मथुरावासिनं श्रुत्वा गोकर्णं स शुकस्तदा ।।
पुत्रं संस्थाप्य चात्मानं गोकर्णस्य यथेप्सितम् ।।८१।।

एवं च वदतस्तस्य शबरी शयनोत्थिता ।।
दर्पान्निर्गत्य तु बहिर्ददर्शासनसंस्थितम् ।। ८२ ।।
भृत्यैः परिवृतं चारुदर्शनीयस्वरूपकम् ।।
निरीक्ष्य बहुशस्तत्र शुको वचनमब्रवीत् ।। ८३ ।।
प्रियातिथिं च संप्राप्तं मातः पूज्यतमं शुचिम् ।।
कुरु पूजां यथार्हं च गोकर्णस्य वरातिथेः ।। ८४ ।।
शुकस्य वचनाद्यावत्पूजार्थमुपकल्पितम् ।।
न ददाति ततस्तत्र वनाच्छबर आगतः ।। ८५ ।।
तस्याग्रे तु पुनस्तेन शुकेनातिथिपूजनम् ।।
शंसितं स तथेत्युक्त्वा कृत्वा पूजां प्रणम्य च ।। ८६ ।।
फलानि मांसयुक्तानि मधूनि सुरभीणि च।।
संपाद्य संविदं कृत्वा वद किङ्करवाणि ते ।। ८७ ।।
इत्युक्तः शबरेणाथ गोकर्णो वाक्यमब्रवीत् ।।
अन्यत्किंचिदथो देयं यदि किंचिद्ददासि च ।। ८८ ।।
शुकोऽयं पञ्जरस्थश्च पुत्रार्थं मे प्रदीयताम् ।।
मथुरायां गमिष्यामि कृतार्थः पितुरन्तिके ।। ८९।।
इत्युक्तमात्रे वचने शबरो वाक्यमब्रवीत् ।।
अस्माकं यमुनास्नानं सङ्गमे यमुनाम्भसः ।।170.९०।।
सरस्वत्याः फले चैव दत्ते दास्यामि ते शुकम् ।।
शबरेणैवमुक्तस्तु गोकर्णः प्रत्यभाषत ।।९१।।
सरस्वत्याः सङ्गमे च यत्फलं लभते नरः ।।
स्नानेन किं फलं तस्य यदि जानासि तद्वद ।।९२।।
शबर उवाच ।।
शुकेनानेन मे सर्वं मथुरायाश्च यत्फलम् ।। ९३ ।।
यत्फलं सङ्गमस्योक्तं शृणुयाद्द्वादशीव्रतम् ।।
वियोनिस्थो राक्षसो वा तिर्यग्योनिं गतस्य वा ।। ९४ ।।
यमुद्दिश्य व्रतं कुर्यात्स गच्छेत्परमां गतिम् ।।
सङ्गमस्य फलं तस्य दृष्ट्वा गोकर्णमीश्वरम् ।।९५।।
नासौ यमपुरं याति विष्णुलोकं च गच्छति ।।
एवं मया श्रुतं तस्य सङ्गमस्य महाफलम् ।। ९६ ।।
इति श्रीवराहपुराणे गोकर्णसरस्वतीमाहात्म्ये सप्तत्यधिकशततमोऽध्यायः ।। १७० ।।

श्रीवराह उवाच ।।
शुकं गृह्य ततः स्थानात्प्रस्थितो मथुरां पुरीम् ।।
प्रविश्य गृह्य तत्पुण्यं मातापित्रोस्तदर्पितम् ।। १ ।।
शुकस्य चरितं सर्वं निवेद्य च महामतिः ।।
एवं निवसतस्तस्य बहुवर्षाणि तत्र वै ।। २ ।।
सुखं प्राप्तं मतं चापि व्यवहारे च पूजने ।।
एवं निवसतस्तस्य द्रव्यं शेषमजायत ।।३।।
पुनस्तत्रैव गमने वणिग्भावे मतिर्गता ।।
समुद्रयाने रत्नानि महामौल्यानि साधुभिः ।।४।।
आनयिष्ये बहून्यत्र सार्धं रत्नपरीक्षकैः ।।
एवं निश्चित्य मनसा महासार्थपुरःसरः ।।
समुद्रयायिभिर्लोकैः संविदं प्रोच्य निर्गतः ।। ५ ।।
पेयाहार समाहारं कृत्वा कृत्यविदार्थकम् ।।
शुकं गृहीत्वा प्रस्थानमकरोत्पुण्यवासरे ।। ६ ।।
मातापित्रोः शुभा वाचो गृहीत्वा देवतागृहे ।।
भार्याणां देवकार्यं च वाटिकायाश्च पोषणम् ।। ७ ।।
पितुः शुश्रूषणं चोक्त्वा सर्वं यूयं करिष्यथ ।।
यथायोगं यथाकालं यथाकृत्यं यथा च यत् ।। ८ ।।
भवतीभिश्च कृत्यं मे करणीयं यथा तथा ।।
सन्दिश्य भार्याः सुश्रोणीर्देवं दृष्ट्वा प्रसाद्य च ।। ९ ।।
भार्याभिः समनुज्ञातो यानपात्रं गतस्तदा ।।
शुकेन सह संप्राप्तो महान्तं लवणार्णवम् ।। 171.१० ।।
पोतारूढास्ततः सर्वे पोतवाहैरुपोहिताः ।।
अपारे दुस्तरेऽगाधे यान्ति वेगेन नित्यशः ।। ११ ।।
अथ दैववशाद्वायुर्विलोमः समजायत ।।
दुर्वातेन तदा नित्यं बलात्पोत उपोहितः ।।
पोतवाहास्ततः सर्वे विसंज्ञा मोहिताः कृशाः ।। १२।।
हा कष्टं हि कथं किञ्च कुत्र गच्छामहे वयम् ।।
तेषां तु वचनं श्रुत्वा ज्ञात्वा दुर्वातपीडनम् ।।
आक्षिपद्वाग्भिरुग्राभिरन्योन्यं शङ्क्य मूर्च्छिताः ।। १३ ।।
जल्पन्ति कोऽत्र पापिष्ठः समारूढो निराकृतः ।।
तस्य पातकसंस्पर्शान्मृताः सर्वे न संशयः ।। १४ ।।
एवं विलपतां तेषां चत्वारोऽपि समभ्ययुः ।।

मासास्तत्रैव वाणिज्यं षण्मासात्सिध्यते फलम् ।। १५ ।।
निर्भर्त्सनं ततस्तेषामन्योन्यमभिजल्पनम् ।।
श्रुत्वा शुकस्य गोकर्णः शशंसात्मविनिन्दनम् ।। १६ ।।
अपुत्रस्य गतिर्नास्ति इति सर्वस्य निश्चितम् ।।
एषां मध्ये ह्यहं पापस्तेन तप्यामि पुत्रक ।। १७ ।।
यदत्र युक्तं कालेऽस्मिन्विषमे समुपस्थिते ।।
वद स्वाध्यायषाड्गुण्यं कृच्छ्रे त्वं कार्यवित्तमः ।। १८ ।।
शुक उवाच ।।
मा जोषमास्व भैस्तात अस्मिन्काले यथोचितम् ।।
अहं करिष्ये तत्सर्वं मा विषादे मनः कृथाः ।। १९ ।।
एवमाश्वास्य पितरं समुड्डीय ततो द्रुतम् ।।
ध्रुवाख्यां दिशमुद्वीक्ष्य उत्तराभिमुखो ययौ ।। 171.२० ।।
नीचगत्या रक्षयन्वै सुतरं दुस्तरं जलम् ।।
सानौ पर्वतसामीप्ये योजनेन वरं गिरिम् ।। २१ ।।
रोमांचिततनुर्जातः शुको वीक्ष्य महागिरिम् ।।
क्रमित्वोर्द्ध्वं च यात्युग्रं तावद्देवालयं शुभम् ।।२२।।
दृष्टं च विष्ण्वायतनं तेजसा चोपशोभितम् ।।
दिक्षु सर्वास्वटित्वैवं निलिल्ये देवमन्दिरे ।।। २३ ।।
वत्साऽयं कोऽत्र संचारी कदा किं तु पिता मम ।।
वितरिष्यति नो कालं दुरन्तं सुकृतिर्यथा ।। २४ ।।
क्षणमेकं तथा चैनं तस्य चिन्तान्वितस्य हि ।।
सौवर्णपात्रहस्ता च देवी देवं समचर्चयत् ।। २५ ।।
नमो नारायणायोक्त्वा निषसाद वरासने ।।
निमेषान्तरमात्रेण वयोरूपसमन्विताः ।।
असंख्याताः समायाता यथा देवी तथैव ताः ।। २६ ।।
गीतं वाद्यं च नृत्यं च यथासौख्यं विहृत्य च ।।
गतास्ता देवताः सर्वा यथास्थानमनुत्तमम् ।। २७ ।।
देवतादक्षिणे भागे पक्षिणां च जटायुषाम् ।।
लक्ष्यान्यनेकयूथानि बृहन्ति बहु सङ्घशः ।। २८ ।।
शुको लेख्यसमस्तेषां मध्ये कृत्वा तु संविदम् ।।
स्वभाषां पुरतः कृत्य शरणं तमयाचत ।। २९ ।।
ते समाश्वास्य तं प्राहुः कथमस्मिन्भवान्गतः ।।
वारिराशिर्दुराधर्षः समुद्रो झषसंकुलः ।। 171.३० ।।

शुकस्तान्प्रत्युवाचाथ पिता मे पोतसंस्थितः ।।
दुर्गवाताद्दुर्गमस्थो विषमे समुपस्थिते ।। ३१ ।।
तस्य त्राणमभीप्सन्वै ह्यागतोऽत्र वरं गिरिम् ।।
कुरुध्वं तस्य मे त्राणं यथा सुखमवाप्यते ।। ३२ ।।
पक्षिण ऊचुः ।।
एहि पुत्र सुकार्यं ते मार्गं द्रक्ष्यामहे वयम् ।।
पोताभ्याशगतिं यासि पितुस्तव गतिं प्रति ।। ३३ ।।
ममैव पादविन्यासे क्रमयिष्ये यथा जलम् ।।
तेन ते पृष्ठतो मह्यं स पिता सन्तरिष्यति ।। ३४ ।।
मम चंच्वावगाहेन नङ्क्ष्यन्ति जलजन्तवः ।।
एतत्पितुः समक्षं हि शंसन् क्षिप्रं नदीपतिम् ।। ३५ ।।
तारयामास वेगेन गत्वा पृष्ठं जटायुषः ।।
स ययौ पर्वतं तीर्त्वा क्वचिन्नाभिसमं जलम् ।। ३६ ।।
हृत्कण्ठं चैव गम्भीरं सुखेन सुकृती यथा ।।
स्तोकान्तरे ततः सोऽथ देवागारमनुत्तमम् ।। ३७ ।।
सरोवरं च पद्माढ्यं मणिरत्नविभूषितम् ।।
स्नात्वा देवान्पितृंश्चैव तर्पयित्वा यथासुखम् ।। ३८ ।।
पुष्पाण्यादाय देवं च पूजयित्वा स केशवम् ।।
पंचायतनकं चैव खचितं रत्नसंचयैः ।।
दृष्ट्वा निलिल्ये चैकान्ते शुकस्यानुमते स्थितः ।। ३९ ।।
क्षणेन ता यथापूर्वं देवताश्चागताः पुनः ।।
नर्त्तयित्वा यथायोग्यं तासां ज्येष्ठाऽब्रवीदिदम् ।। 171.४० ।।
स्वागतस्य क्षुधार्त्तस्य ब्रह्मिष्ठस्य महात्मनः ।।
भोजनार्थं फलं दिव्यं पानार्थं तोयमुत्तमम् ।। ४१ ।।
गोकर्णस्य प्रयच्छध्वं येन तृप्तिस्त्रिमासिकी ।।
यथा शोको यथा पापं यथा मोहः प्रणश्यति ।। ४२ ।।
तथा कृत्वा तमूचुस्ता अभयं तेऽस्तु मा शुचः ।।
वस स्वर्गोपमे स्थाने यावत्सिद्धिर्भवेत्तव ।। ४३ ।।
गतास्ताः पुनरेवं च नित्यमेव दिने दिने ।।
वसते स सुखं तत्र मथुरायां यथा तथा ।। ४४ ।।
पोतात्तस्मादुत्ततार सुवातेनोपवाहितः ।।
रत्नाकरः शुभो यत्र भावित्वाद्दैवयोगतः ।। ४५ ।।
रत्नानि बहु मौल्यानि आहृतानि बहून्यथ ।।

यावत्परीक्षणार्थं च गोकर्णं रत्नकोविदम् ।।४६।।
निरीक्ष्यतेऽस्य संवासो न दृष्टश्चुक्रुशुस्ततः ।।
कुतोऽसौ गतवान्भद्रो मृतो नष्टो जले प्लुतः ।। ४७ ।।
व्रीडायुतो निमग्नोऽयं निश्चितं मकरालये ।।
पितुरस्य वयं सर्वे पुत्रवद्विचरामहे ।। ४८ ।।
यथाभागं च रत्नानां भागं दास्यामहे परम् ।।
एष धर्मः सदास्माकमेकसार्थागमेन हि ।। ४९ ।।
एवं वसन्स गोकर्णो द्वीपस्थः शोकविह्वलः ।।
शुकं प्रोवाच दीनात्मा मातापित्रोः कृते तदा ।। 171.५० ।।
शुकेन मन्त्रमूढत्वात्पितुरेवं निवेदितम् ।।
अहं पक्षी लघुतनुर्भवन्तं नेतुमक्षमः ।।५१।।
याता ऽस्मि मथुरां मार्गे समुद्रे जलमालिनि ।।
पित्रोर्वाक्यं तवाख्यासे त्वदीयं च तयोरहम् ।। ५२ ।।
अवश्यं च गमिष्येऽहमनुज्ञा तु प्रदीयताम् ।।
सत्यमुक्तं ततस्तेन गोकर्णेन शुकं प्रति ।।५३।।
गच्छ त्वं पुत्र मथुरामवस्थां मामकीमिमाम् ।।
त्वया विना न शक्नोमि शीघ्रमागमनं कुरु ।।५४।।
इत्युक्तः स तथेत्युक्त्वा पोतारूढः खगोत्तमः ।।
कालेन मथुरां प्राप्तः सर्वं पित्रे न्यवेदयत् ।। ५५ ।।
श्रुत्वा तौ विषमावस्थं मृतं हृदि निवेश्य च ।।
रुदित्वा सुचिरं कालं शुके स्नेहो निवेशितः ।। ५६ ।।
अस्माकं जीवनार्थाय त्वया कार्यं विहङ्गम ।।
कथाभिरनुकूलाभिर्धर्मदर्शिभिरेव च ।। ५७ ।।
शुकेन पंजरस्थेन कथालापेन विद्यया ।।
पुत्रशोकाभितन्तप्तौ तथैवानेन सान्त्वितौ ।। ५८ ।।
अथ सार्थः समायातो रत्नपूर्णो यथोदधिः ।।
वसुकर्णस्य पुत्रार्थमकरोत्स जनो महान् ।। ९९ ।।
सर्वैस्तैर्विंशतिः संख्या एकैकेन समुद्रगैः ।।
रत्नैः समर्च्चितोऽत्यर्थं पर्वतः कुसुमोत्करैः ।। 171.६० ।।
प्रसाद्य सर्वे सम्पूज्य प्रेषितास्ते गृहं ययुः ।।
एवं ते न्यवसंस्तत्र यावत्कालं सुखेन तु ।। ६१ ।।
शुश्रूषमाणास्तं वैश्यं यथा स्वपितरं तथा ।। ६२ ।।
इति श्रीवराहपुराणे भगवच्छास्त्रे गोकर्णमाहात्म्ये एकसप्तत्यधिकशततमोऽध्यायः ।।१७१।।

श्रीवराह उवाच ।।
गोकर्णस्तु तथा चक्रे तस्मिन्नायतने शुभे ।।
प्रथमेऽह्नि यथा कृत्यमेवमेव त्रयोदश ।। १ ।।
ता देव्यो नृत्यगीतेषु कुशलाश्चागमेऽभवन् ।।
सुरूपाश्च स्वलंकारा रमयन्ति दिनेदिने ।। २ ।।
गोकर्णः सर्वभावेन गृहं विस्मृतवानसौ ।।
तथैकदा स गोकर्णस्ता देव्यश्च हतौजसः ।। ३ ।।
विवर्णं वदना दीना भग्नालंकारवाससः ।।
हीनांगा लुंचितशिरः केशपक्ष्मनखादयः ।। ४ ।।
दृश्यन्ते विकृताकाराः सव्रणा रुधिरस्रवाः ।।
ता दृष्ट्वाऽतीवदुःखार्त्ताश्चक्रे मनसि वेदनाम् ।। ५ ।।
अपुत्रस्य गतिर्नास्ति स्वर्गो नैव च नैव च ।।
मम सङ्गादिमा देव्यो दशमीं च दशां गताः ।। ६ ।।
एवं ज्ञात्वा स पप्रच्छ तासां रूपविपर्ययम् ।।
कथयध्वं महाभागाः किमेतद्रूपव्यत्ययम् ।। ७ ।।
देव्य ऊचुः ।।
अप्रष्टव्यं महाभाग दैवः सर्वेषु कारणम् ।।
कालात्मकः स भगवान्भुज्यते सुकृतं यतः ।। ८ ।।
स एव नित्यकालं च पृच्छति स्म तदुत्तरम् ।।
दुःखार्त्तस्य सुदीनस्य न जल्पन्त्यतिदुःखिताः ।। ९ ।।
निश्चयार्थं पुनः सोऽथ गोकर्णस्ताः प्रणम्य च ।।
पृच्छत्याग्रहरूपेण निश्चयं विन्दते यथा ।। 172.१० ।।
यदि गोप्यं ममार्त्तस्य वैरूप्यं कथयिष्यथ ।।
अगाधे दुस्तरे प्राणांस्त्यक्ष्याम्यद्य सुदुःखितः ।। ११।।
एवमुक्ते तदा तासां मध्ये एकाऽब्रवीदिदम् ।।
दुःखं तस्य समाख्येयं यो विनाशयते रुजम् ।।१२।।
शृणु वत्स वदिष्येऽहं विरूपकरणं यथा ।।
अस्माकं च समुत्पन्नमेकचित्तोऽवधारय ।। १३ ।।
आस्ते मधुपुरी रम्या नृणां मुक्तिप्रदायिनी ।।
अयोध्याधिपतिर्वीरश्चतुरङ्गबलान्वितः ।।१४।।
चातुर्मास्यं तीर्थसेवी स गतो भक्तिपूर्वकम् ।।
विष्णोर्देवस्य चागारं पञ्चसंख्यासमन्वितम् ।। १५ ।।
आरामवाटिकाः शुभ्राः प्राकारवरवेष्टिताः ।।

कूपप्रावर्त्तकोपेताः पुष्पजात्यः सुवासिताः ।।१६।।
फलवन्तो द्रुमास्तस्मिन्सर्वर्त्तुसुमनोहराः ।।
तस्याभ्याशे स राजर्षिश्चकारावासमुत्तमम् ।। १७ ।।
सेवकैर्नाशितः सर्वं आरामः सफलद्रुमः ।।
प्राकारपरिखा चैव स्थण्डिलप्रतिमा कृता ।। १८ ।।
बहुधा वार्यमाणैस्तु पापबुद्धिसमाश्रितैः ।।
एवं तेन कृतं तत्र सोऽपि दैववशङ्गतः ।।१९।।
पञ्जरस्थो यथा सिंहः कोऽस्मांस्त्राता भवेदिति ।।
पिधायाञ्जलिना वक्त्रमश्रुक्लिन्नस्तनान्तरा ।। 172.२० ।।
रुरोदोच्चैः स्वरं दीना हा कष्टमिति जल्पती ।।
सर्वासां रुदतीनां च कुररीणामिव स्वनः ।। २१ ।।
श्रूयते बहुधाकारो गोकर्णोऽप्यतिदुःखितः ।।
एकैकस्यास्तु चक्रेऽसौ मूर्ध्ना पादाभिवन्दनम् ।। २२ ।।
प्राञ्जलिर्दीनया वाचा सान्त्वयामास ताः शनैः ।।
प्राप्तसंज्ञास्तु ताः सर्वाः गोकर्णोऽप्याह सुस्वनः ।। २३ ।।
भविता यदि तत्राहं राजानं तं निवारयम् ।।
किं करिष्यामि दैवेन समर्थोऽप्यवसादितः ।।२४।।
इत्युक्तमात्रे वचने ताः सर्वा लब्धचेतसः ।।
ऐक्यभावेन ताः सर्वाः पप्रच्छुर्वणिजं प्रति ।।
कस्त्वं कथय कस्माच्च स्थानाद्यत्त्वमिहागतः ।। २५ ।।
गोकर्ण उवाच ।।
गोकर्णोऽहं सुचार्वास्यः सुकपोलो ऽब्रवीन्मया ।।
पूर्वं दृष्टा भवत्यो वै चार्वंग्यश्चारुलोचनाः ।। २६ ।।
इदानीं मलिना जाता मम शोकविवर्द्धनाः ।।
कथयध्वं ममात्मानमत्र हेतुमनन्तरम् ।। २७ ।।
ज्येष्ठा सोवाच तस्याग्रे पुष्पजात्या स्वलंकृताः ।।
वयमारामसंस्थाश्च स्वामिना परिपालिताः ।। २८ ।।
हृद्यवेषाः सुचार्वंग्यः पुष्पवृद्धिरताः तदा ।।
पूर्वं द्रष्टाः सुरूपाश्च विपर्ययमथो शृणु ।। २९ ।।
राजलोकैः पीडिताश्च च्छेदनोन्मूलनेन च ।।
पीडिता भृशमुद्विग्नास्तेनेदानीं सकल्मषाः ।। 172.३० ।।
पुष्पमालाविहीनाश्च मूलस्कन्धावशेषिताः ।।
एवंविधाश्च संभूता नष्टसंज्ञाः स्थिता वयम् ।। ३१ ।।

यो देवस्तत्र पाषाणो मृत्पिण्डेष्टकयन्त्रितः ।।
सोऽत्र सत्त्वमयः साक्षी तस्य पुण्यस्य कर्मणि ।। ३२।।
पुण्यं सोदकपूर्णोऽयं तस्यारामस्य सेचकम् ।।
सरश्चोत्पलपूर्णं च कलहंसैर्युतं सदा ।। ३३ ।।
ये च वृक्षाः फलोपेतास्ते सौवर्णाश्च सत्तम ।।
एता रक्षन्ति सततमारामं सुखदं नृणाम् ।।
तस्या नाशाद्यथा नोऽत्र जातेयं च विरूपता ।।३४।।
गोकर्ण उवाच ।।
आरामकर्तुः किं चात्र फलं भवति यादृशम् ।।
करणात्कूपदेवानां तस्य पुण्यफलं वद ।। ३५ ।।
ज्येष्ठोवाच ।।
इष्टापूर्तं द्विजातीनां प्रथमं धर्मसाधनम् ।।
इष्टेन लभते स्वर्गं पूर्ते मोक्षं च विन्दति ।। ३६ ।।
वापीकूपतडागानि देवतायतनानि च ।।
पतितान्युद्धरेद्यस्तु स पूर्तफलमश्नुते ।। ३७।।
भूमिदानेन ये लोका गोदानेन च कीर्त्तिताः ।।
ते लोकाः प्राप्यते पुंभिः पादपानां प्ररोहणे ।।३८।।
अश्वत्थमेकं पिचुमन्दमेकं न्यग्रोधमेकं दश पुष्पजातीः ।।
द्वे द्वे तथा दाडिममातुलिंगे पंचाम्ररोपी नरकं न याति ।। ३९ ।।
यथा सुपुत्रः कुलमुद्धरेद्धि यथाऽतिकृच्छ्रान्नियमप्रयत्नात् ।।
तथाऽत्र वृक्षाः फलपुष्पभूताः स्वं स्वामिनं नरकादुद्धरन्ति ।।172.४० ।।
गोकर्ण उवाच ।।
इन्धनार्थं यदानीतमग्निहोत्रं तदुच्यते ।।
छायाविश्रामपथिकैः पक्षिणां निलयेन च ।। ४१ ।।
पत्रमूलत्वगाद्यैश्च औषधार्थं तु देहिनाम् ।।
उपकुर्वन्ति वृक्षस्य पंचयज्ञः स उच्यते ।। ४२ ।।
गृहकृत्यानि काष्ठानि क्षुद्रजन्तुगृहास्तथा ।।
यत्र निर्वर्त्तनं प्रोक्तं भिक्षा पत्रैः समीकृता ।। ४३ ।।
फलन्ति वत्सरे मध्ये द्विवारं शकुनादयः ।।
सांवत्सरं पितुर्मातुरुपकारं फलैः कृतम् ।।
एवं पुत्रसमारोपा एवं तत्त्वविदो विदुः ।। ४४ ।।
श्रीवराह उवाच ।।
एवमुक्तस्तया देव्या मालत्या पुष्पजातया ।।

हा कष्टं कथमित्येव मुमोह च पपात ह ।। ४५ ।।
ताभिराश्वासितो धीमान्ससंज्ञो वारिणोक्षितः ।।
आत्मानं कथयास्माकं यस्माच्च त्वमुपागतः ।। ४६ ।।
गोकर्ण उवाच ।।
वृद्धौ च मातापितरौ साधु भार्याचतुष्टयम् ।।
मथुरायां ममैवतदुद्यानं देवतागृहम् ।।४७।।
यदि तत्र गतश्चाहं पितृराज्ञोस्तु सन्निधौ ।।
इमामापदमापन्ना यूयं तद्वै निवेदये ।।४८।।
ज्येष्ठा प्रोवाच नेष्यामि यदि ते रोचतेऽनघ ।।
अद्यैव मथुरां देवीमवेक्ष्यामोऽधिगम्यताम् ।। ४९ ।।
विमानप्रतिमाकारं यानमारुह्य सत्वरः ।।
दिव्यानीमानि रत्नानि भूषणानि फलानि च ।। 172.५० ।।
गृह्णीष्वोपायनं राज्ञे तस्मै त्वं देह्यनर्घ्यकम् ।।
आरुह्य स तथेत्युक्त्वा नमस्कृत्य हरिं च ताः ।।५१।।
उत्पपात ततः स्थानाद्यत्र राजा व्यवस्थितः ।।
राज्ञे निवेदयामास रत्नानि सुबहूनि च ।। ५२ ।।
राजा दर्शनमात्रेण सन्तुष्टः सोब्रवीदिदम् ।।
स्वागतं ते महाभाग संमान्य परिपूज्य च ।। ५३ ।।
अर्द्धासने कृतः प्रीत्या रत्नदो धनदो यथा ।।
अस्मात्स्थानादिदानीञ्च अपसर्प्य क्षणान्तरे ।। ५४ ।।
आश्चर्यं दर्शयिष्यामि कथयिष्यामि चापि भोः ।।
स तथेति प्रतिश्रुत्य सेनापतिमुवाच ह ।। ५५ ।।
मुहूर्त्तार्द्धाद्यथा याति सैन्यं तच्च तथा कुरु ।।
क्षिप्रं तत्प्रतिपद्यस्व न कालोऽत्यभ्यगाद्यथा ।। ५६ ।।
कृतं तेन तथा सर्वं यथा राज्ञा हि भाषितम् ।।
ता देव्यो दिव्यरूपाश्च विमानकृतरूपकाः ।। ५७ ।।
साधु साध्विति गोकर्णं प्रशशंसुः पुनः पुनः ।।
वरं दत्त्वा यथाकामं स्वस्तीत्युक्त्वा दिवं ययुः ।। ५८ ।।
गोकर्णस्तु तदाचक्षे तत्सर्वं नृपतेः सुखी ।।
सर्वं तच्चात्मचरितं पूर्त्तधर्मस्य यत् फलम् ।। ५९ ।।
राज्ञा तस्मै प्रदत्ताश्च ग्रामाश्चैव पुराणि च ।।
वस्त्राणि च गजाश्चैव वाजिनोऽन्यधनं बहु ।। 172.६० ।।
आश्चर्यं परमं धर्ममारामस्य महत् फलम् ।।

श्रुत्वा सर्वं चकारासौ सार्वभौमो महीपतिः ।।६१ ।।

इति श्रीवराहपुराणे गोकर्णमाहात्म्ये द्विसप्ततत्यधिकशततमोऽध्यायः ।। १७२ ।।

श्रीवराह उवाच ।।
तत्र स्थित्वा यथान्यायं गोकर्णः सर्वमंगलम् ।।
शुकं च मातापितरौ साधुभार्याचतुष्टयम् ।। १ ।।
संमान्य पूजयामास यथाविभवशक्तितः ।।
मथुरावासिभिर्लोकैरुद्यानं कारयंस्तदा ।। २ ।।
स्वयं च कृतवांस्तत्र अविघ्नस्य महामखम् ।।
भक्ष्यभोज्ये ब्राह्मणेभ्यो ददौ दानानि नित्यशः ।।३।।
गीतवादित्रमंगल्यं पुत्रवृद्धौ यथोचितम् ।।
तत्सर्वं कृतवाँल्लोको गोकर्णस्य महात्मनः।।४।।
एकैकं च परिष्वज्य प्रणिपत्य यथाक्रमम् ।।
मातापित्रोः प्रणम्याथ शिरसा पादपंकजे ।।५।।
शुकं हृदि समालोक्य प्ररुरोद स वै वणिक् ।।
यस्य प्रसादाज्जीवश्च धर्मश्चानुत्तमा गतिः ।। ६ ।।
विशिष्टेन मया प्राप्तो राज्ञो लाभः सुपुष्कलः ।।
शुक पुत्रान्मया प्राप्तमिह लोके परत्र च ।। ७ ।।
एवं वसन्सुखं तत्र गोकर्णः सह बन्धुभिः ।।
शुक नाम्ना कृतं तेन शिवस्यायतनं महत् ।। ८ ।।
शुकेश्वरं प्रतिष्ठाप्य दिव्यं सत्रं चकार ह ।।
ब्राह्मणानां शते द्वे च मिष्टान्नवरभोजने ।।९।।
शुकसत्रमिति ख्यातं मृतो मुक्तिमवाप सः ।।
विमानवरमारुह्य स्वर्गलोकं गतः शुकः ।।173.१०।।
शुकप्रदाने गोकर्णः फलं स्नानस्य संगमात्।।
श्राद्धं सुवर्णैर्गोदानं कृत्वा तस्मै ददौ च सः ।। ११ ।।
शबराय सभार्याय तेन स्वर्गं गतश्च ह ।।
शुकोदरेण सहितो विमानवरमास्थितः ।। १२ ।।
एतत्ते कथितं सर्वं मथुरायां महत्फलम् ।।
सरस्वतीसंगमस्य गोकर्णस्य शिवस्य च ।। १३ ।।
गोकर्णस्य तु सन्तानमक्षयं धर्मतोऽव्ययम् ।।
सम्भूतं स सुखं भुक्त्वा ततो मोक्षमवाप्नुयात् ।। १४ ।।
इति श्रीवराहपुराणे गोकर्णमाहात्म्ये त्रयस्सप्तत्यधिकशततमोऽध्यायः।।१७३।।

श्रीवराह उवाच।।
पुनरन्यत्प्रवक्ष्यामि महापातकनाशनम् ।।
संगमस्य प्रभावं हि पापिनामपि मुक्तिदम् ।।१ ।।
अत्रैव श्रूयते पूर्वं ब्राह्मणः संशितव्रतः ।।
महानामेति विख्यातः स्थितोऽसौ वनमाश्रितः।।२।।
स्वाध्याययुक्तो होमे च नित्ययुक्तः सः योगवित् ।।
जपहोमपरो नित्यं स्वकालं क्षपते च सः ।। ३ ।।
एवं कर्माणि कुर्वन्स ब्रह्मलोकजिगीषया।।
बहून्यब्दान्यतीतानि ब्राह्मणस्य वने तदा।।४।।
तस्य बुद्धिरियं जाता तीर्थाभिगमनं प्रति।।
पुनस्तीर्थजलैरेतत्क्षालयामि कलेवरम् ।।५।।
प्रयातो विधिवत्साक्षात् सूर्यस्योदयनं प्रति ।।
असिकुण्डादितः कृत्वा दक्षिणां कोटिकां ततः ।।६।।
तथा चोत्तरकोट्यां तु तथा मन्माथुरं च यत् ।।
क्रमेण सर्वतीर्थानि स्नात्वा मामपि पुष्करम् ।। ७ ।।
गत्वा सर्वाणि तीर्थानि स्नात्वा पूतो भवाम्यहम् ।।
इति कृत्वा मथुराया निर्जगामाथ स द्विजः ।। ८ ।।
कृतपूजानमस्कारः अध्वानं प्रत्यपद्यत ।।
अध्वप्रपन्नो ह्यद्दशत्पंचप्रेतान्सुभीषणान् ।। ९ ।।
अरण्ये कण्टकवृते निर्जने शब्दवर्जिते ।।
तान्दृष्ट्वा विकृताकारानतितीव्रभयङ्करान् ।। 174.१० ।।
ईषदुत्त्रस्तहृदयस्तिष्ठदुन्मील्य चक्षुषी ।।
आलम्ब्य स ततो धैर्यं त्रासमुत्सृज्य दूरतः ।। ११ ।।
पप्रच्छ मधुरालापः के यूयं रौद्रमूर्त्तयः ।।
भवन्तः कर्मणा केन दुष्कृतेन भयावहाः ।।१२।।
एकस्थानात्सदा यूयं प्रस्थिताः कुत्र वा सदा ।।
प्रेता ऊचुः ।।
क्षुत्पिपासातुरा नित्यं बहुदुःखसमन्विताः ।। १३ ।।
दुर्बुद्ध्या च वृताः सर्वे हीनज्ञाना विचेतसः ।।
न जानीमो दिशं काचिद्विदिशं चापि चाध्वनि ।।१४।।
नान्तरिक्षं महीं चापि जानीमो दिवसं तथा ।।
यदेतद्दुःखमापन्नं सुखोदर्कफलं भवेत् ।। १५ ।।
अप्रकाममिदं भाति भास्करोदयनं प्रति ।।

अहं पर्युषितो नाम परः सूचीमुखस्ततः ।। १६ ।।
शीघ्रगो रोधकश्चैव पंचमो लेखकस्तथा ।।
ब्राह्मण उवाच ।।
प्रेतानां कर्मजातानां नाम्नां वै सम्भवः कुतः ।।१७।।
किं तत्कारणमेतद्धि यूयं सर्वे सनामकाः ।।
प्रेत उवाच ।।
अहं स्वादु सदाश्नामि दग्नि पर्युषितं द्विजे ।। १८।।
एतत्कारणमुद्दिश्य नाम पर्युषितं द्विज ।।
सूचीता बहवोऽनेन विप्राश्चान्नादिकांक्षिणः ।।१९।।
एतत्कारणमुद्दिश्य परः सूचीमुखस्ततः ।।
समर्थितो द्विजेनैव शीघ्रं याति यतो हि सः ।। 174.२० ।।
एतत्कारणमुद्दिश्य शीघ्रगस्तेन सोच्यते ।।
एको गृहस्य मध्ये तु भुङ्क्ते द्विजभयेन हि ।। २१ ।।
समारुह्योद्विग्नमना रोधकस्तेन चोच्यते ।।
मौनेनापि स्थितो नित्यं याचितोऽपि लिखेन्महीम् ।। २२ ।।
अस्माकमपि पापिष्ठो लेखकस्तेन नाम वै ।।
मदेन लेखको याति रोधकस्तु ह्यवाक्छिराः ।।२३।।
शीघ्रगः पङ्गुतां प्राप्तः परं सूचीमुखस्ततः ।।
उषितः केवलग्रीवो लम्बौष्ठो वै महोदरः ।। २४ ।।
बृहद्वृषणशुष्काङ्गः पापादेव प्रजायते ।।
एतत्ते सर्वमाख्यातमात्मवृत्तान्त सम्भवम् ।।२५।।
यदि ते श्रवणे श्रद्धा पृच्छ चान्यद्यदिच्छसि ।।
ब्राह्मण उवाच ।।
ये जीवा भुवि तिष्ठन्ति सर्व आहारजीविनः ।।२६।।
युष्माकमपि चाहारं श्रोतुमिच्छामि तत्त्वतः ।।
प्रेता ऊचुः ।।
शृणु चाहारमस्माकं सर्वभूतदयापर ।। २७ ।।
यच्छ्रुत्वा निन्दसे नित्यं भूयो भूयश्च नित्यशः ।।
श्लेष्ममूत्रपुरीषेण योषितां च समन्ततः ।। २८ ।।
गृहाणि त्यक्तशौचानि प्रेता भुञ्जन्ति तत्र वै ।।
बलिमन्त्रविहीनानि दानहीनानि यानि च ।।२९।।
गुरवो नैव पूज्यन्ते स्त्रीजितानि गृहाणि च ।।
यानि प्रकीर्णभाण्डानि प्रकीर्णोच्छेषणानि च ।।174.३०।।

नित्यं च कलहो यत्र प्रेता भुञ्जन्ति तत्र वै ।।
अपात्रे प्रतिदत्तानि विधिहीनानि यानि च ।।
निन्दितानां द्विजातीनां जुगुप्सितकुलोद्भवे ।। ३१ ।।
जातानां विहितानां च दुष्कृतं कर्म कुर्वताम् ।।
तेभ्यो दत्तं तदस्माकमुपतिष्ठति भोजने ।। ३२ ।।
एतत्पापतरं चान्यद्भोजनं दुष्टकर्मिणाम् ।।
निर्विण्णाः प्रेतभावेन पृच्छामः सुदृढव्रत ।। ३३ ।।
प्रेतो यथा न भवति तथा ब्रूहि तपोधन ।।
ब्राह्मण उवाच ।।
एकरात्रत्रिरात्रेण कृच्छ्रचान्द्रायणादिभिः ।। ३४ ।।
व्रतैरभ्युद्यतः पूतो न प्रेतो जायते नरः ।।
मिष्टान्नपानदाता च सततं श्रद्धयान्वितः ।। ३५ ।।
यतीनां पूजको नित्यं न प्रेतो जायते नरः ।।
त्रीनद्भिः पंच चैकं वा प्रतिनित्यं तु पोषयेत् ।।३६।।
सर्वभूतदयालुश्च न प्रेतो जायते नरः ।।
देवातिथिषु पूजासु गुरुपूजासु नित्यशः ।।३७।।
रतो वै पितृपूजायां न प्रेतो जायते नरः ।।
जितक्रोधो ह्यमात्सर्यस्तृष्णासङ्गविवर्जितः ।। ३८ ।।
क्षमायुक्तो दानशीलो न प्रेतो जायते नरः ।।
एकादशीं सितां कृष्णां सप्तमीं वा चतुर्दशीम् ।। ३९ ।।
उपवासपरो नित्यं न स प्रेतोऽभिजायते ।।
गां ब्राह्मणं च तीर्थानि पर्वतांश्च नदीस्तथा ।। 174.४० ।।
देवांश्च वन्दते नित्यं न प्रेतो जायते हि सः ।।
प्रेता ऊचुः ।।
त्वत्तस्तच्छ्रुतमस्माभिर्यो न प्रेतोऽभिजायते ।। ४१ ।।
प्रेतस्तु जायते केन तद्वद त्वं महामुने ।।
विप्र उवाच ।।
शूद्रान्नेन तु भुक्तेन ब्राह्मणो म्रियते यदि ।। ४२ ।।
तेनैव चोदरस्थेन स प्रेतो जायते ध्रुवम् ।।
नग्नकापालिपाषण्डसङ्गतासनभोजनैः ।।४३।।
मनुष्यः प्रेततां याति स्पर्शेन सुतरां तथा ।।
पूर्वपुण्यं विनश्येत्तु प्रेतो भवति नित्यशः ।।४४।।
पाषण्डाश्रमसंस्थश्च मद्यपः पारदारिकः ।।

वृथामांसरतो नित्यं स च प्रेतोऽभिजायते ।। ४५ ।।
देवस्वं ब्राह्मणस्वं च गुरोर्द्रव्यं हरेत्तु यः ।।
कन्यां ददाति शुल्केन स च प्रेतोऽभिजायते ।। ४६ ।।
मातरं पितरं भ्रातृभगिन्यौ च स्त्रियं सुतम् ।।
अदुष्टान्यस्त्यजेत्सोऽपि प्रेतो भवति च ध्रुवम् ।। ४७ ।।
अयाज्ययाजनाच्चैव याज्यानां परिवर्जनात् ।।
रतो वा शूद्रसेवायां स प्रेतो जायते नरः ।। ४८ ।।
ब्रह्महा च कृतघ्नश्च गोघ्नो वै पञ्चपातकी ।।
भूमिकन्यापहर्ता च स प्रेतो जायते नरः ।। ४९ ।।
गुरोर्धर्म्मोपदेष्टुश्च नित्यं हितमभीप्सतः ।।
न करोति वचस्तस्य स प्रेतो जायते नरः ।। 174.५० ।।
असद्भ्यः प्रतिगृह्णाति नास्तिकेभ्यो विशेषतः ।।
स पापो जायते प्रेत आहारादिविवर्जितः ।। ५१ ।।
प्रेता ऊचुः ।।
य एतत्कर्म कुर्वन्ति मूढाऽधर्मपरायणाः ।।
विरुद्धकारिणः पापास्तेषां कांचिद्गतिं वद ।।५२।।
ब्राह्मण उवाच ।।
ये धर्मविमुखा मूढा दयादानविवर्जिताः ।।
तेषां गतिर्भवेदेका मथुरायान्तु सङ्गमे ।।५३।।
श्रवणद्वादशीयोगे मासि भाद्रपदे तथा ।।
वामनं तत्र देवं तु पूजयेज्जुहुयात्तथा ।।५४।।
सुवर्णमन्नं वस्त्रं च च्छत्रोपानत्सुसंयुतम् ।।
तत्र स्नातो पितृृंस्तर्प्य दत्त्वा करकमेव च ।। ५५ ।।
न ते प्रेता भविष्यन्ति मार्गस्थो यो नमस्यते ।।
विमानवरमारुह्य विष्णुलोकं स गच्छति ।।५६।।
तत्र तीर्थे नरः स्नातो हृष्टपुष्टो यथाश्रुतः ।।
ध्यातश्च कीर्त्तितो वापि तेन गङ्गावगाहिता ।।५७।।
तीर्थस्यैव तु माहात्म्यं प्रेतो भूत्वा शृणोति यः ।।
तस्याक्षयपदं विष्णोर्भवतीति मया श्रुतम् ।। ५८ ।।
प्रेता ऊचुः ।।
अस्माकं वद कल्याण व्रतस्यास्य विधिं परम् ।।
येन वै क्रियमाणेन प्रेतत्वात्तु विमुच्यते ।। ५९ ।।
ब्राह्मण उवाच ।।

एवमेव व्रतस्यास्य विधानं कर्मसंहितम् ।।
पुराणं कथितं राज्ञे मान्धात्रे पृच्छते पुरा ।। 174.६० ।।
वसिष्ठेन महाभागाः शृणुध्वं कथयाम्यहम् ।।
प्रेतानां मोक्षणं पुण्यं गतिप्रवरदायकम् ।। ६१ ।।
मासि भाद्रपदे शुद्धा द्वादशी श्रवणान्विता ।।
तस्यां दत्तं हुतं स्नानं सर्वं लक्षगुणं भवेत् ।। ६२ ।।
सङ्गमे च पुनः स्नात्वा पूजयित्वा तु वामनम् ।।
कलशं विधिना दत्त्वा तस्य पुण्यफलं शृणु ।। ६३ ।।
कपिलानां शतं दत्त्वा हिरण्योपस्कराञ्चितम् ।।
तेन यत्फलमाप्नोति तद्द्वादश्यामखण्डितम् ।। ६४ ।।
राक्षसत्वं न गच्छेत्तु श्रवणद्वादशीव्रतात् ।।
स्वर्गे च वसते तावद्यावदिन्द्राश्चतुर्दश ।। ६९ ।।
ततः स्वर्गात्परिभ्रष्टो ब्राह्मणो वेदपारगः ।।
जातिस्मरो महायोगी मोक्षमार्गपरायणः ।। ६६ ।।
ध्यानयुक्तेन भावेन मुक्तो यात्यपुनर्भवम् ।।
कनकं च सुसंपीतं सान्नं रत्नसमन्वितम् ।। ६७ ।।
यथालाभोपपन्नेन सौवर्णो वामनः कृतः ।।
उपानच्छत्रसंयुक्तो विधिमन्त्रपुरःसरः ।। ६८ ।।
कृत्वा च विधिवत्तस्य स्नानपूजादिकं नरः ।।
मन्त्रैस्तथाविधैर्होमैर्ब्राह्मणं चोपपादयेत् ।। ६९ ।।
आगच्छ वरदानन्त श्रीपते मदनुग्रहात् ।।
सर्वगोपि निजांशेन स्थानमेतदलङ्कुरु ।। 174.७० ।।
(आवाहनम्)
यत्त्वं नक्षत्ररूपेण दवादश्यां नभसि स्थितः ।।
तन्नक्षत्रमहं वन्दे मनोवाञ्छितसिद्धये ।। ७१ ।।
( नक्षत्रम्)
नमः कमलनाभाय कमलालय केशव ।।
( स्नानम् )
अमूर्त्ते सर्वतोव्यापिन्नारायण नमोऽस्तु ते ।। ७२ ।।
सर्वव्यापिन्जगद्योने नमः सर्वमयाच्युत ।।
( पूजा)
श्रवणद्वादशीयोगे पूजां गृह्णीष्व केशव ।। ७३ ।।
धूपोऽयं देवदेवेश शंखचक्रगदाधर ।।

(धूपं) अच्युतानन्त गोविन्द वासुदेव नमोऽस्तु ते ।। ७४ ।।
तेजसा सर्वलोकाश्च विवृताः सन्तु तेऽव्ययाः ।।
( दीपम्)
त्वं हि सर्वगतं तेजो जनार्दन नमोऽस्तु ते ।। ७५ ।।
अदितेर्गर्भमाधाय वैरोचनिशमाय च ।।
त्रिभिः क्रमैर्जिता लोका वामनाय नमोऽस्तु ते ।। ७६ ।। (नैवेद्यम्)
देवानां सम्मतश्चापि योगिनां परमां गतिः ।।
जलशायी जगद्योने अर्घ्यं मे प्रति गृह्यताम् ।। ७७ ।। ( अर्घ्यम्)
हव्यभुग्घव्यकर्त्ता त्वं होता हव्यं त्वमेव च ।।
सर्वमूर्त्ते जगद्योने नमस्ते केशवाय च ।। ७८ ।। (इति स्वाहा होमः)
हिरण्यमन्नं त्वं देव जलवस्त्रमयो भवान् ।। ( दक्षिणाम्)
उपानच्छत्रदानेन प्रीतो भव जनार्दन ।। ७९ ।। ( छत्रादिदानम्)
पर्जन्यो वरुणः सूर्यः सलिलं केशवः शिवः ।।
अग्निर्वैश्रवणो देवः पापं हरतु मेऽव्ययः ।। 174.८० ।। ( वामनस्तुतिम्)
अन्नं प्रजापतिर्विष्णुरुद्रचन्द्रेन्द्रभास्कराः ।।
अन्नं त्वष्टा यमोऽग्निश्च पापं हरतु मेऽव्ययः ।। ८१ ।। ( करकदानं)
वामनो बुद्धिदाता च द्रवस्थो वामनः स्वयम् ।।
वामनस्तारकोभाभ्यां वामनाय नमोऽस्तु ये ।। ८२ ।।( यजमानः)
वामनं प्रतिगृह्णामि वामनो मे प्रयच्छति ।।
वामनस्तारकोभाभ्यां वामनाय नमो नमः ।। ८३ ।। ( द्विजः प्रतिग्रहीता)
कपिलाङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश ।।
दत्त्वा कामदुघां लोका भवन्ति सफला नृणाम् ।।८४।। ( गोदानं)
मम पापच्छिदे तुभ्यं देवगर्भ सुपूजित ।।
मया विसर्जितो देव स्थानमन्यदलङ्कुरु ।।८५।। (विसर्जनम्)
एवं विद्वांस्तु द्वादश्यां यो नरः श्रद्धयान्वितः ।।
यत्र तत्र नभस्ये तु कृत्वा फलमवाप्नुयात् ।। ८६ ।।
ब्राह्मण उवाच ।।
यस्तु सारस्वते तीर्थे यमुनायाश्च सङ्गमे ।।
करोति विधिनानेन तस्य पुण्यं शतोत्तरम् ।।८७।।
मयापि श्रद्धया चैतत्कालं तीर्थस्य सेवनम् ।।
क्षेत्रसंन्यासरूपेण कृतभक्तिसमन्वितम् ।।८८।।
येन यूयं न शक्ता मां बाधितुं पापकर्मिणः ।।
श्रवणद्वादशीयोगे व्रतं तिथिसमन्वितम् ।। ८९ ।।

तावद्व्रतं तु कर्त्तव्यं यावदेकं क्षयं व्रजेत् ।।
तीर्थस्यैव प्रभावो हि प्रत्यक्षमिह दृश्यते ।।174.९० ।।
श्रवणाद्वो गतिः साक्षात्साधु लक्ष्यामि चाऽधुना ।।
श्रीवराह उवाच ।।
एवं ब्रुवति विप्रे तु आकाशे दुन्दुभिस्वनः ।।
पुष्पवृष्टिर्भुव्यपतद्देवैर्मुक्ता सहस्रशः ।।९१ ।।
प्रेतानां तु विमानानि आगतानि समन्ततः ।।
देवदूत उवाचेदं प्रेतानां शृण्वतां तदा।।९२।।
अस्य विप्रस्य सम्भाषात्पुण्यसत्कीर्त्तितेन च ।।
प्रेतभावविमुक्ताः स्थ तीर्थस्य श्रवणादपि ।।९३।।
तस्मात्सर्वप्रयत्नेन सता सम्भाषणं वरम् ।।
कर्त्तव्यस्तीर्थभावश्च व्रतभावश्च मानसे ।।९४।।
तीर्थाभिषेकिपुरुषाद्यथा तेषां दुरात्मनाम् ।।
प्रेतानामक्षयः स्वर्गः सरस्वत्याश्च सङ्गमात् ।।९५।।
प्राप्तं तीर्थप्रभावस्य श्रवणान्मुक्तिदं फलम् ।।
तिलकं सर्वधर्माणां पंचप्रेतत्वमुक्तिदम् ।।९६।।
यः पठेत्परया भक्त्या शृणुयाद्भक्तितत्परः ।।
करोति श्रद्धया युक्तो न प्रेतो जायते नरः ।।९७।।
पिशाचसंज्ञकं नाम तीर्थं त्रैलोक्यविश्रुतम् ।।
यस्य श्रवणमात्रेण न प्रेतो जायते नरः ।। ९८ ।।
इति श्रीवराहपुराणे मधु० मा० सर्वतीर्थे यमुनासंगमप्रभावोनाम चतुःसप्तत्यधिकशततमोऽध्यायः ।।
१७४।।

श्रीवराह उवाच ।।
शृणु चान्यद्वरारोहे कृष्णगङ्गासमुद्भवम् ।।
यमुनास्रोतसि स्नात्वा कृष्णद्वैपायनो मुनिः ।। १ ।।
ध्यात्वा मनसि गङ्गां तां कालिन्दीं पापहारिणीम् ।।
नित्यं च कर्म कुरुते तत्र तीर्थजलाप्लुतिम् ।।२।।
सोमवैकुण्ठयोर्मध्ये कृष्णङ्गेति कथ्यते ।।
यत्रातप्यत स व्यासो मथुरायां स्थितोऽमलः।।३।।
तत्राश्रमपदं दिव्यं मुनिप्रवरसेवितम् ।।
आगच्छन्ति सदा तत्र चातुर्मास्यमुपासितुम् ।।४।।
मुनयो वेदतत्त्वज्ञा ज्ञानिनः संशितव्रताः ।।
श्रौतस्मार्त्तपुराणेषु सन्देहो यस्य कस्यचित्।।५।।
व्यासोऽपनोदयामास नानावाक्यैः सताङ्गतिः।।६।।
कालञ्जरे महादेवं तत्र तीर्थपतिं शिवम्।।
यस्य सन्दर्शनादेव कृष्णगंगाफलं भवेत् ।। ७।।
तत्र स्थितो द्वादशाब्दव्रती संगविवर्जितः।।
पक्षाहारी च फलभुग्दर्शे वै पौर्णमासिके ।।८।।
गत्वा हिमालयं चासौ बदरीमभितो गतः।।
व्यासश्चर्यापरस्तत्र ध्यानयोगपरायणः ।।९।।
त्रिकालदर्शी शुद्धात्मा सिद्धत्वं प्राप्नुयात्प्रभुः।।
तस्याश्रमपदस्थस्य यद्दृष्टं ज्ञानचक्षुषा।।175.१० ।
प्रत्यक्षं कृष्णतीर्थे तु पांचाल्यकुलतन्तुना।
पांचाल्योऽथ द्विजः कश्चिन्नाम्ना वसुरिति श्रुतः।। ११ ।।
दुर्भिक्षपीडितोऽत्यन्तं सभार्यो दक्षिणां गतः।।
शिवनद्या दक्षिणे तु कूले स वरपत्तने।।१२।।
निवासमकरोत्तत्र ब्राह्मणीं वृत्तिमाश्रितः।।
तत्रस्थस्य तदा पंच पुत्राः कन्याभवंस्तदा।।१३।।
ब्राह्मणाय च दत्ता सा धनधान्यसमन्विता ।।
स द्विजः कालसम्पन्नः सभार्यस्तत्र संस्थितः ।। १४ ।।
कन्याऽस्थीनि तु संगृह्य मथुरामाजगाम ह ।।
श्रुत्वा पुराणे पतितमर्द्धचन्द्रेऽस्थिपातनम्।।१५।।
नित्यं स्वर्गे वसति स यस्यास्थि ह्यर्द्धचन्द्रके।।
तीर्थयात्राप्रसंगेन लोकैः प्रचलिता बहिः।।१६।।
तेन सार्थेन सा कन्या मथुरायां जगाम च ।।

कनिष्ठा भगिनी तेषां बालरण्डा बभूव ह ।। १७ ।।
सुरूपा सुकुमाराङ्गी नीलकुंचितमूर्द्धजा ।।
कदलीकाण्डसंकाशे तस्या ऊरू सुमांसले ।। १८ ।।
सुश्लिष्टाङ्गुलिपादा तु नखास्ताम्रोज्ज्वलाः शुभाः ।।
गम्भीरा दक्षिणावर्त्ता नाभिस्त्रिवलि .शोभिता ।।१९।।
क्षामोदरी समकुक्षिः पीनोन्नतपयोधरा ।।
कम्बुग्रीवा संवृतास्या सुदती स्वधराहनुः ।।175.२० ।।
सुनखी स्वक्षिणी सुभ्रूः सुप्रमाणा सुभाषिणी ।।
तेन तेनैव सम्पूर्णरूपेण च तिलोत्तमा ।। २१ ।।
यं यं पश्यति चार्वङ्गी यस्तां चैव प्रपश्यति ।।
स स चित्र इव न्यस्तो विचेता जायते नरः ।। २२ ।।
एवंविधा तत्र तत्र तीर्थस्नानपरायणा ।।
दृष्टा वेश्यासमूहेन प्रागल्भ्येन तदा क्वचित् ।। २३ ।।
कान्यकुब्जाधिपो राजा क्षत्रधर्मे व्यवस्थितः ।।
तस्य सत्रं सर्वकालं देवगर्त्तेश्वरे शिवे ।। २४ ।।
प्रवर्त्तते सुवित्ताढ्य प्रेक्षणीयं मनोरमम् ।।
वादित्राणि च गीतानि शक्रस्य भवने यथा ।। २५ ।।
तस्य देवस्य या वेश्यास्ताभिः सा प्रतिलोभिता ।। २६ ।।
गीतनृत्यादिषु रता तासां धर्ममुपागता ।।
अल्पैस्तु दिवसैः साध्वी असाध्वीभिः परीवृता ।। २७ ।।
एवं वसति सा बाला देवस्यास्य परिग्रहा ।।
यथासुखं समेताभिर्विहरन्ती दिनेदिने ।। २८ ।।
इति श्रीवराहपुराणे मथुरामाहात्म्ये कृष्णगंगाकालिञ्जरप्रभावे पंचसप्तत्यधिकशततमोऽध्यायः ।।
१७५।।

श्रीवराह उवाच ।।
पंचानां तु कनिष्ठो यः पंचालो ब्राह्मणात्मजः ।।
वाणिज्यभाण्डमादाय समूहस्य प्रसंगतः ।। १ ।।
सार्थेन निष्ठितः सोऽथ धनवान्रूपवांस्ततः ।।
क्रमेण ते सर्वदेशान्विषयान् पर्वतान्नदीः ।। २ ।।
आक्रम्य तत्र सम्प्राप्ता यत्र सा मथुरा पुरी ।।
आवासं कारयामासुः प्रभूतयवसेन्धने ।। ३ ।।
तस्मिन्स्थाने स पांचालः प्रातस्तु पुरुषैः सह ।।
तस्मिंस्तीर्थवरे स्नाप्य वस्त्रालङ्कारभूषितः ।।
ऐश्वर्यमदभावेन यानेन महता तदा ।। ४ ।।
देवतादर्शनं कृत्वा दत्त्वा दानान्यनेकशः ।। ९ ।।
कौतुकार्थं ततो गत्वा देवं गर्त्तेश्वरं तदा ।।
तिलोत्तमायास्तद्रूपं दृष्ट्वा मोहवशं गतः ।। ६ ।।
धात्रेयिकायास्तस्याश्च बहुमानपुरःसरम् ।।
वस्त्राणि बद्धरूपाणि कटकानां शतानि च ।। ७ ।।
हारा रत्नमयास्तद्वद्ददौ लोभविमोहितः ।।
ददावगुरुसारं च सकर्पूरं सचन्दनम् ।। ८ ।।
तस्या गृहवरे तत्र वसति स्म दिनेदिने ।।
प्रहरार्द्धे दिने जाते ततः स्वशिबिरं ययौ ।। ९ ।।
स्नात्वा तीर्थे समीपे च कृष्णगङ्गोद्भवे सदा ।।
एवं नित्यं प्रसक्तो हि करोति द्रव्यगर्वितः ।। 176.१० ।।
एवं तु कुर्वतस्तस्य मासषट्कं ततो गतम् ।।
अथैकदा समायातः स्नातुं तत्र सुमन्तुना ।। ११ ।।
स्वाश्रमस्थेन दृष्टः स कृमियुक्तः समागतः ।।
कृमयो रोमकूपेभ्यः पतमाना अनेकशः ।। १२ ।।
यावत्स्नानं स कुरुते पतते राशिमात्रकः ।।
स्नाने कृते नश्यति च सुरूपश्चाभिजायते ।। १३ ।।
एवं सुमन्तुना दृष्टमाश्चर्यं बहुवासरम् ।।
सुमन्तुस्तर्कयामास कोऽयं कस्यात्मजो युवा ।। १४ ।।
इति चिन्तासमायुक्तस्तमपृच्छद्विशंकितः ।।
कस्त्वं कस्यासि सुभग का जातिः कश्च ते पिता ।। १५ ।।
किं करोषि दिवारात्रौ ब्रूहि त्वं पृच्छतो मम ।।
पाञ्चाल उवाच ।।

पांचालो ब्राह्मणसुतो वाणिज्यं च समाश्रितः ।। १६ ।।
दक्षिणापथदेशाच्च मथुरायां समागतः ।।
निशामुषित्वा शिबिरे प्रातस्तीर्थं समाश्रितः ।। १७ ।।
स्नात्वा महेश्वरं दृष्ट्वा त्रिगर्तेश्वरसंज्ञितम् ।।
कालिञ्जरं भवत्पादौ गच्छामि शिबिरं ततः ।। १८ ।।
सुमन्तुरुवाच ।।
आश्चर्यं तव देहेऽस्मिन्नित्यं पश्यामि निःसृतम् ।।
अस्नाते कृमिसम्पूर्णं स्नाते निर्मलवर्चसम् ।।१९।।
अस्ति किंचिन्महत्पापं तव प्रच्छन्नसम्भवम् ।।
अस्यां तीर्थप्रभावेण स्नानाद्गच्छति दूरतः ।। 176.२० ।।
कालिञ्जरस्य संस्पर्शाच्छुद्धं देहं च दृश्यते ।।२१।।
निरूप्य कथयास्माकं यत्ते प्रच्छन्नकिल्बिषम् ।। २२ ।।
तीर्थमाहात्म्याभवं च दृष्ट्वा पृच्छामि ते हितम् ।।
इति तस्य मुनेः श्रुत्वा त्रिकालज्ञस्य भाषितम् ।। २३।।
किंचिन्नोवाच पृष्टोऽपि एवमेव गतः पुनः ।।
तस्यामासीत्स एकान्ते तां तु पप्रच्छ सादरम् ।।२४।।
का त्वं कस्यासि सुभगे कश्च देशः प्रियंवदे ।।
किं तत्कारणमुद्दिश्य वसस्यत्र सुखं सदा ।। २६ ।।
इति निर्बन्धतः पृष्टा किंचिन्नोवाच तं प्रति ।।
पुनःपुनश्च पप्रच्छ सा प्रोवाच न किंचन ।। २६ ।।
किंचित्कालं समास्थाय तेनोक्तं हि प्रियां प्रति ।।
त्यक्ष्यामि हि प्रियान्प्राणान्यदि सत्यं न वक्ष्यति ।। २७ ।।
निर्बन्धं तस्य तज्ज्ञात्वा दुःखेनोवाच तं प्रति ।।
पितरौ भ्रातरश्चेति देशं ज्ञातिं ततः कुलम् ।। २८ ।।
पंचालनगरी रम्या गङ्गायाश्चोत्तरे तटे ।।
तस्यां तौ पितरौ मह्यं वसतश्च यदृच्छया ।। २९ ।।
दुर्भिक्षपीडिते राष्ट्रे गतौ तौ दक्षिणापथम् ।।
नर्मदादक्षिणे कूले ब्राह्मणानां पुरोत्तमे ।। 176.३०।।
तस्मिन् स्थाने पितुर्मह्यं पंच पुत्रा मया सह ।।
जातास्तेषामहं षष्ठी कनिष्ठा विधवाऽभवम् ।। ३१ ।।
योऽसौ कनिष्ठको भ्राता मम ज्येष्ठश्च पंचमः ।।
बाल एव गतो देशं धनतृष्णाप्रलोभितः ।।३२।।
तस्मिन्गतेऽथ पितरौ कालधर्ममुपेयतुः ।।

तीर्थेऽस्मिन्नस्थिपातार्थमहं सार्थैः सहागता ।।३३।।
अत्र स्नानपरा नित्यं देवब्राह्मणवन्दनम् ।।
कुर्वन्ती वशमापन्ना आसां यस्या ममेदृशम् ।। ३४ ।।
आश्रिता कुलटाधर्मं कुलनाशो मया कृतः ।।
कुलद्वये च पुरुषा एकविंशतिसंख्यया ।। ३९।।
नीता नरकमत्युग्रं मया पापिष्ठया भृशम् ।।
एवं सा तस्य तत्सर्वं कथयित्वा तिलोत्तमा ।।३६।।
रुरोद सुस्वरं दीना स्मृत्वा पूर्वं कुलं वरम् ।।
विलप्य बहुधा रात्रौ संस्मृत्य स्वं विचेष्टितम् ।। ३७ ।।
तस्या विलपितं श्रुत्वा स्त्रीजनः स तदागतः ।।
सान्त्वयामास तां बालां कि भद्रे रुदितं तव ।। ३८ ।।
एतच्छ्रुत्वा स पांचाल्यो मूर्च्छितो धरणीं गतः ।।
ताः स्त्रियस्तां समाश्वास्य पांचाल्यं परिवार्य च ।। ३९ ।।
तैस्तैरुपायैर्विविधैर्जीवयित्वा च तं नरम् ।।
लब्धप्राणं तु तं दृष्ट्वा पप्रच्छुर्मोहकारणम् ।। 176.४० ।।
ततस्तेन सवृत्तान्तं कथितं च कुलं महत् ।।
तिलोत्तमासहायानां स्त्रीणामग्रे सविस्तरम् ।। ४१ ।।
ततः स विमना जातो अगम्यागमनेन च ।।
प्रायश्चित्ते मतिरभून्निर्विण्णस्य दुरात्मनः ।। ४२ ।।
ब्रह्महा च सुरापश्च ब्राह्मणो यदि जायते ।।
प्रायश्चित्तं विनिर्दिष्टं मुनिभिर्देहनाशनम् ।।४३।।
मातरं गुरुपत्नीं च स्वसारं पुत्रिकां वधूम् ।।
गत्वा तु प्रविशेदग्निं नान्या शुद्धिर्विधीयते ।। ४४ ।।
ब्रह्मघ्नश्च सुरापश्च स्त्रीघ्नश्च गुरुतल्पगः ।।
अगम्यागमनं कृत्वा एषां स समतामियात् ।। ४९ ।।
इति श्रुत्वा तु पांचाली ज्येष्ठभ्रातरमेव तम् ।।
द्विजेभ्यः प्रददौ सर्वमङ्गलग्नं विभूषणम् ।।४६।।
रत्नं वस्त्रं धनं धान्यं यत्किंचित्तत्र संस्थितम् ।।
तत्सर्वं ब्राह्मणेभ्यश्च दत्त्वाशेषं ददौ धनम् ।।४७।।
कालिञ्जरस्य भूषार्थमारामार्थं विशेषतः ।।
कृष्णगङ्गोद्भवे तीर्थे चितां कृत्वा विधानतः ।। ४८ ।।
आत्मनश्च विशुद्ध्यर्थं प्रजज्वाल हुताशनम् ।।
इति निश्चित्य तत्रैव स्नात्वा देवं प्रणम्य च ।। ४९ ।।

पंचालोऽपि विधानेन नमस्कृत्य मुनिं गुरुम् ।।
सुमन्तुं च महाभागमुपविश्याग्रतश्च सः ।।176.५०।।
मरणायोपयोग्यानि कृत्वा कर्माणि तत्र च ।।
माथुरान्स समाहूय दत्त्वा दानानि सर्वशः ।। ५१ ।।
क्रीत्वा ग्रामांश्च तत्रैव ब्राह्मणेभ्यो ददौ तदा ।।
ईशावास्यं जपं दिव्यं जापकेभ्यः शृणोति च ।। ५२ ।।
तेभ्योऽपि प्रददौ द्रव्यं सत्रार्थं च विभागशः ।।
और्ध्वदेहिकभागार्थं कल्पयित्वा यथाविधि ।।५३।।
स्नात्वा तीर्थे च कृष्णस्य देवं दृष्ट्वा प्रणम्य च ।।
कालिञ्जरस्य पूजार्थं सत्रार्थं परिकल्प्य च ।। ५४ ।।
देवालयं च तत्रैव कृत्वा सन्दिश्य सार्थकान् ।।
सुमन्तोः प्रवरस्याथ पादौ जग्राह धर्मवित् ।। ५५ ।।
देव ज्ञानं च ते दिव्यमद्भुतं लोमहर्षणम् ।।
अगम्यागमनादेव पापं जातं मम प्रभो ।। ५६ ।।
आगतोऽहं यदारभ्य मथुरायां ततो गुरो ।।
भगिन्या सह संयोगे जातोऽयं कुलनाशकः ।। ५७ ।।
त्वया निर्मलदृष्ट्या च वीक्षितोऽहं पुरा मुने ।।
कृमयो मम गात्रात्तु निर्गच्छन्तो हि नित्यदा ।। ५८ ।।
कृष्णगंगाप्रभावेण पुनर्निर्मलतां गतम् ।।
तत्सर्वं हि त्वया दृष्टं पृष्टश्चाहं पुनः पुनः ।। ५९ ।।
तत्सत्यं मम सञ्जातमगम्यागमपातकम् ।।
तत्पापस्य विशुद्ध्यर्थं देहत्यागं करोमि वै ।। 176.६० ।।
अनुज्ञां देहि भो स्वामिंस्तव पादौ नमाम्यहम् ।।
विश्राव्य तस्य तत्पापं चितां दीप्य घृतोक्षिताम् ।। ६१ ।।
प्रवेष्टुकामं तत्राग्नौ खे प्रोवाचाशरीरिणी ।।
मैवं कार्षीः साहसं च विपाप्मानौ यतश्च वाम् ।। ६२ ।।
कस्माद्वा कस्य सन्त्रासान्मरणे कृतनिश्चयौ ।।
यत्र कृष्णस्य संचारः क्रीडितं च यथासुखम् ।। ६३ ।।
चक्राङ्कितपदा तेन स्थानं ब्रह्मसमं शुभम् ।।
अन्यत्र हि कृतं पापं तीर्थमासाद्य गच्छति ।। ६४ ।।
तीर्थे च यत्कृतं पापं वज्रलेपो भविष्यति ।।
द्वावेतौ च यथावश्यं गंगासागरसंगमे ।। ६५ ।।
सकृदेव नरः स्नात्वा मुच्यते ब्रह्महत्यया ।।

पृथिव्यां यानि तीर्थानि सर्वाण्येवाभिषेचनात् ।। ६६ ।।
तत्पंचतीर्थस्नानेन समं नास्त्यत्र संशयः ।।
एकादश्यां च विश्रान्तौ द्वादश्यां सौकरे तथा ।। ६७ ।।
त्रयोदश्यां नैमिषे च प्रयागे च चतुर्दशीम् ।।
कार्त्तिक्यां पुष्करे चैव कार्त्तिकस्य सितासिते ।। ६८ ।।
कालेष्वेषु नरः स्नात्वा सर्वपापं व्यपोहति ।।
मथुरायां च तीर्थेभ्यो विश्रान्तः पंचतीर्थके ।। ६९ ।।
असिकुण्डे सरस्वत्यां तथा कालिञ्जरस्य च ।।
पंचतीर्थाभिषेकाच्च यत्फलं लभते नरः ।। 176.७० ।।
कृष्णगंगा दशगुणं लभते च दिनेदिने ।।
ज्ञानतोऽज्ञानतो वापि यत्पापं समुपार्जितम् ।। ७१ ।।
सुकृतं दुष्कृतं चापि मथुरायां प्रणश्यति ।।
वराहेण पुरा चेदं पृथिव्यै कथितं शुभम् ।। ७२ ।।
तीर्थानां गुणमाहात्म्यं महापातकनाशनम् ।।
सर्वदेवमयो योऽसौ सर्ववेदमयस्तथा ।। ७३ ।।
अनन्तश्चाप्रमेयश्च यस्य चान्तो न विद्यते ।।
यस्य श्रोत्रैकदेशे तु आकाशो लेशमात्रकः ।।७४।।
विलीनो ज्ञायते नैव तस्य देवस्य का कथा ।।
तथा नयनयोः प्रान्ते तेजो लीनं न दृश्यते ।। ७५ ।।
निःश्वासे च विलीनोऽसौ वायुर्नष्टो न दृश्यते ।।
खुराग्रेषु तथा लीनाः समुद्राः सप्त च प्रभोः ।। ७६ ।।
दृश्यन्ते स्वेदसङ्काशा नाममात्रा यथा पुरा ।।
रोमकूपान्तरे लग्ना सशैलवनकानना ।। ७७ ।।
नष्टा पृथ्वी न लभ्येत तस्माद्देवात्तु कोऽधिकः ।।
सोऽत्र तीर्थपरित्राणं कुर्वन्देवः स्वयं प्रभुः ।। ७८ ।।
वराहः संस्थितः साक्षात्पुराणं येन सूचितम् ।।
पृथिव्याः सर्वसन्देहान् स्फोटयामास योऽव्ययः ।। ७९ ।।
तस्य सन्दर्शनादेव सर्वपापविवर्जितः ।।
तत्क्षणादेव जायेत नात्र कार्या विचारणा ।। 176.८० ।।
नवम्यां ज्येष्ठ शुक्लस्य स्नात्वा गङ्गोदके नरः ।।
सूकरे तु त्रिरात्रं च मानवो दीपदः सकृत् ।। ८१ ।।
दत्त्वा दानं यथाशक्ति सर्वपापैः प्रमुच्यते ।।
कालिञ्जरे च द्वादश्यां स्नात्वा संपूज्य देवताम् ।। ८२।।

द्वादशादित्यसङ्काशो विमाने च समास्थितः ।।
विष्णुना समनुज्ञातो विष्णुलोके महीयते ।।८३।।
वराह उवाच ।।
एवं सुखदशब्देन देववाण्या प्रचोदितः ।।
पांचालसंज्ञकस्तत्र सुमन्तुं पर्यपृच्छत ।। ८४ ।।
अस्मद्गुरुः पिता त्वं च ब्रूहि किं करवाणि वै ।।
पावकालम्भनं मे स्यादुताहो तीर्थसेवनम् ।। ८५ ।।
त्रिरात्रं कृच्छ्रपाराक चान्द्रायणमथापि वा ।।
तव पादांकिते वापि स्थित्वा मोक्षमवाप्नुयाम् ।। ८६ ।।
आकाशभारती यत्तु तत्सत्यं नानृतं क्वचित् ।।
मया प्रत्यक्षतः पूर्वं तव गात्रेषु पातकम् ।। ८७ ।।
दिनेदिने च स्नानात्प्राक् प्रतिगच्छति नित्यशः ।।
आश्रमे त्वं स्थितश्चात्र निर्मलश्च शशी यथा ।।८८।।
तिष्ठोपरमितः पापाद्यावत्कालं च जीवसि ।।
इयं तु भगिनी पापादुपावृत्ता सती परम् ।। ८९ ।।
सगतिश्च विपापा च भविष्यति न संशयः ।।
श्रीवराह उवाच ।।
एवं प्रभावस्तीर्थस्य मथुरायां वसुन्धरे ।।176.९० ।।
कृष्णगंगोद्भवस्यापि तथा कालिञ्जरस्य च ।।
सूकरस्य च माहात्म्यं यथा ते वर्णितं पुरा ।।९१ ।।
यः शृणोति वरारोहे श्रद्धया परया युतः ।।
पठति प्रातरेवापि न स पापेन लिप्यते ।।९२।।
सप्तजन्मकृतं पापं तस्य सर्वं व्यपोहति ।।
फलं च गोशतस्यापि दत्तस्य समवाप्नुयात्।।
अमृतत्वं च लभते स्वर्गलोकं च गच्छति।।९३।।
इति श्रीवराहपुराणे कृष्णगंगोद्भवमाहात्म्यं नाम षट्सप्तत्यधिकशततमोऽध्यायः ।।१७६।। ।

श्रीवराह उवाच।।

शृणु चान्यद्वरारोहे कृष्णस्यान्यद्विचेष्टितम् ।।

द्वारकां वसमानस्य साम्बशापादिकं शृणु।।१ ।।

सुखासीनस्य कृष्णस्य पुत्रदारसुतैः सह ।।

आगतो नारदस्तत्र यदृच्छागमनो मुनिः।।

पाद्यमर्घ्यं चासनं च मधुपर्कं सभाजनम्।।

गां च दत्त्वा यथान्यायं कृतं संवादमुत्तमम् ।।३।। ।

एकान्ते प्राप्य कृष्णं च विज्ञप्तिमकरोत्प्रभुः।।

कृष्ण किञ्चिद्वक्तुकामस्तत्त्वं शृणु महामते।।।।

साम्बनामा तव युवा पुत्रो वाग्मी तु रूपवान्।।

स्पृहणीयः सदा कान्तः स्त्रीजनस्य सुरेश्वरः।।५।।

एतास्तु वरनार्यो वै क्रीडार्थं हि सुरेश्वरः।

देवयोन्यो ददुस्तुभ्यं सहस्राणि च षोडश।।६।।

साम्बं दृष्ट्वा च सर्वासां क्षुभ्यते च मनः प्रभो ।।

एतत्तु ब्रह्मलोके च गीयते दैवतैः स्वयम् ।। ७ ।।

त्वत्प्रियार्थं समायातः कथितुं ते सुरोत्तम ।।

श्रूयते चार्थ विद्रूपः श्लोको द्वैपायनेन वै ।। ८ ।।

क्रियातः स्वर्गवासोस्ति नरकस्तद्विपर्ययात् ।।

पुण्यरूपं तु यत्कर्म दिशो भूमिं च संस्पृशेत् ।। ९ ।।

यावत्स शब्दो भवति तावत्पुरुष उच्यते ।।

पुरुषश्चाविनाशी च कथ्यते शाश्वतोऽव्ययः ।। 177.१० ।।

नरके पुरुषः प्रोक्तो विपरीतो मनीषिभिः ।।

तस्मात्साम्बं समाहूय तथा देवीगणं च तम् ।। ११ ।।

आसनेषूपविष्टानां तासां क्षोभं च तत्त्वतः ।।

लक्षयिष्याम्यहं सर्वं सत्यं चासत्यमेव च ।। १२ ।।

तावत्सभ्यासनान्येव स्वास्तीर्य च विभागशः ।।

सर्वास्तास्तु समाहूय आसने चोपवेश्य च ।। १३ ।।

पश्चात्साम्बः समायातस्तस्याग्रे करसंपुटम् ।।

कृत्वा स्थितो मुहूर्तं तु किमाज्ञापयसि प्रभो ।। १४ ।।

दृष्ट्वा रूपमतीवास्य साम्बस्यैव वरस्त्रियः ।।

चुक्षुभुः सकला देव्य कृष्णस्यैव तु पश्यतः ।।१५।।

उत्तिष्ठतः प्रियाः सर्वा गच्छत स्वनिवेशनम् ।।

कृष्णवाक्यात्तदा देव्यो जग्मुः स्वं स्वं निवेशनम् ।।१६।। ।

सांबस्तत्रैव संतस्थौ वेपमानः कृताञ्जलिः ।।
स कृष्णो नारदं वीक्ष्य लज्जयावाङ्मुखोऽभवत् ।। १७ ।।
कृष्णस्तु कथयामास नारदाय सविस्तरम् ।।
स्त्रीस्वभावं चरित्रं च आश्चर्यं पापकारकम् ।। १८ ।।
क्षणो नास्ति रहो नास्ति नास्ति कृत्ये विभावना ।।
तेन नारद नारीणां सतीत्वमुपजायते ।। १९ ।।
एकवासास्तथा गौरी श्यामा वा वरवर्णिनी ।।
मध्यं गता प्रगल्भा च वयोऽतीतास्तथा स्त्रियः ।। 177.२० ।।
सुरूपं पुरुषं दृष्ट्वा क्षरन्ति मुनिसत्तम ।।
स्वभाव एष नारीणां सांबस्य शृणु कारणम् ।। २१ ।।
अतीव मानी तेजस्वी धार्मिकोऽतिगुणान्वितः ।। रूपकारणमुद्दिश्य गतः क्षोभं कथञ्चन ।। २२ ।।
नारदस्त्वेवमेवं च प्रतिपूज्य हरेर्वचः ।।
अन्तरज्ञ उवाचेदं सांबशापकरं तथा ।। २३ ।।
यथा एकेन चक्रेण रथस्य न गतिर्भवेत् ।।
पुरुषास्वादनाच्चैवं क्षरन्ति सततं स्त्रियः ।। २४ ।।
पुंसः सुदृष्टिपातेन कृतकृत्या भवन्ति ताः ।।
प्रद्युम्नं वीक्ष्य नार्यस्तु लज्जामापुः सुपुष्कलाम् ।। २५ ।।
सांबं दृष्ट्वैव ताः सर्वा अनङ्गेन प्रपीडिताः ।।
उद्दीपनविभावोऽयं तासां गन्धादिकं यथा ।। २६ ।।
तस्मात्सांबस्तु दुष्टात्मा तव स्त्रीणां विनाशकृत् ।।
सत्यलोके प्रवादो यस्तव जातो दुरत्ययः ।। २७ ।।
मया श्रुतस्तु लोकेभ्यो ब्रह्मर्षिभ्यो मुहुर्मुहुः ।।
सांबत्यागात्प्रमार्ष्टुं त्वमयशः कुलनाशकम् ।। २८ ।।
त्वमिहार्हस्यमेयात्मन्मया नु कथितं हितम् ।।
इत्युक्त्वा वचनं तत्र नारदो मौनमास्थितः ।। २९ ।।
कृष्णः शशाप सांबं तु विरूपत्वं भविष्यति ।।
शापयुक्तः स सांबस्तु कुष्ठयुक्तोऽभवत्क्षणात्।। 177.३० ।।
शरीरात्तु गलद्रक्तं पूतिगन्धयुतं सदा ।।
पशुवत्कर्तितो यस्तु तद्वद्देहोऽस्य दृश्यते ।। ३१ ।।
ततस्तु नारदेनैव साम्बशापविनाशकः ।।
समादिष्टो महान्धर्म आदित्याराधनं प्रति ।। ३२ ।।
सांब सांब महाबाहो शृणु जांबवतीसुत ।।
पूर्वाचले च पूर्वाह्ने उद्यन्तं तु विभावसुम् ।। ३३ ।।

नमस्कुरु यथान्यायं वेदोपनिषदादिभिः ।।
त्वयोदितं रविः श्रुत्वा तुष्टिं यास्यति नान्यथा ।। ३४ ।।
सांब उवाच ।।
अगम्यगमनात्पापाद्व्याप्तो यः पुरुषो भवेत् ।।
तस्य देवः कथं तुष्टो भविष्यति स वै मुने ।। ३५ ।।
नारद उवाच ।।
भविष्यत्पुराणमिति तव वादाद्भविष्यति ।।
ब्रह्मलोके पठिष्यामि ब्रह्मणोऽग्रे त्वहं सदा ।। ३६ ।।
सुमन्तुर्मर्त्यलोके च मनोः प्रकथयिष्यति ।।
सांब उवाच ।।
कथं पूर्वाचले गत्वा मांसपिण्डोपमः प्रभो ।। ३७ ।।
त्वत्प्रसादान्महद्दुःखं प्राप्तस्त्वहमकल्मषः ।।
नारद उवाच ।।
यथोदयाचले देवमाराध्य लभते फलम् ।। ३८ ।।
मथुरायां तथा गत्वा षट्सूर्ये लभते फलम् ।।
मध्याह्ने च तथा देवं फलप्रियमकल्मषम् ।। ३९ ।।
मथुरायां च मध्याह्ने मध्यन्दिन रवौ तथा ।।
अस्तङ्गते तथा देवं सद्यो राज्यफलं भवेत् ।। 177.४० ।।
मथुरायां तथा पुण्यमुदयास्तं रवेर्जपन् ।।
मध्याह्ने प्रयतो वाग्भिः जपन्मुच्येत पातकात् ।। ४१ ।।
कृष्णगङ्गोद्भवे स्नात्वा सूर्यमाराध्य यत्नतः ।।
सर्वपापविनिर्मुक्तः कुष्ठादिभ्यो विमुच्यते ।। ४२ ।।
श्रीवराह उवाच ।।
ततः साम्बो महाबाहुः कृष्णाज्ञप्तो ययौ पुरीम् ।।
मथुरां मुक्तिफलदां रवेराराधनोत्सुकः ।। ४३ ।।
नारदोक्तेन विधिना सांबो जांबवतीसुतः ।।
षट्सूर्यान्पूजयामास उदयन्तं दिवाकरम् ।। ४४ ।।
कृत्वा योगेन चात्मानं सांबस्याग्रे रविस्तदा ।।
वरं वृणीष्व भद्रं ते मद्व्रतख्यापनाय च ।। ४५ ।।
यस्तोषितो नारदेन तद्वदस्व ममाग्रतः ।।
सांब पंचाशकैः श्लोकेर्वेदगृह्यपदाक्षरैः ।। ४६ ।।
यः स्तुतोऽहं त्वया वीर तेन तुष्टोऽस्मि ते सदा ।।
स्पृष्टो देवेन सर्वाङ्गे तत्क्षणाद्दीप्तसच्छविः ।।४७।।

व्यक्तांगावयवः साक्षाद्द्वितीयोऽभूद्रविर्यथा ।।
मध्याह्ने याज्ञवल्क्यस्य यज्ञं माध्यन्दिनीयकम् ।।४८।।
अध्यापयत्सांबयुतो रविर्मध्यन्दिनोऽभवत् ।।
वैकुण्ठपश्चिमे पार्श्वे तीर्थं माध्यन्दिनीयकम् ।। ४९ ।।
स्नात्वा मध्यन्दिनं दृष्ट्वा सर्वपापैः प्रमुच्यते ।।
उदयास्ते ततो देवः सांबेन सहितो विराट् ।। 177.५० ।।
सायाह्ने कृष्णगंगाया दक्षिणे संस्थितस्तदा ।।
तत्र दृष्ट्वा तु सायाह्ने रविमस्तोदयं प्रभुम् ।। ५१ ।।
सर्वपापविशुद्धात्मा परं ब्रह्माधिगच्छति ।।
श्रीवराह उवाच ।।
एवं सांबस्य तुष्टेन मध्याह्ने तु नभस्तलात् ।। ५२ ।।
द्विधाकृतात्मयोगेन सांबकुष्ठमपोहितम् ।।
साम्बः प्रख्याततीर्थे तु तत्रैवान्तरधीयत ।। ५३ ।।
सांबस्तु सह सूर्येण रथस्थेन दिवानिशम् ।।
रविं पप्रच्छ धर्मात्मा पुराणं सूर्यभाषितम् ।। ५४ ।।
भविष्यमिति विख्यातं ख्यातं कृत्वा पुनर्नवम् ।।
सांबः सूर्यप्रतिष्ठां च कारयामास तत्त्ववित् ।। ५५ ।।
उदयाचलमाश्रित्य यमुनायाश्च दक्षिणे ।।
मध्ये कालप्रियं देवं मध्याह्ने स्थाप्य चोत्तमम् ।।५६।।
मूलस्थानं ततः पश्चादस्तमानाचले रविम् ।।
स्थाप्य त्रिमूर्त्तिं सांबस्तु प्रातर्मध्यापराह्णिकम् ।। ५७ ।।
मथुरायां तथा चैकं स्थाप्य सांबो वसुन्धरे ।।
स्वनाम्ना स्थापयामास पुराणविधिना स्वयम् ।। ५८ ।।
एवं सांबपुरं नाम मथुरायां कुलेश्वरम् ।।
रथयात्रां तथा कृत्वा रविणा कथिता यदा ।। ९९ ।।
माघमासस्य सप्तम्यां दिव्यं सांबपुरं नराः ।।
रथयात्रां प्रकुर्वन्ति सर्वद्वन्द्वविवर्जिताः ।। 177.६० ।।
गच्छन्ति तत्पदं शान्तं सूर्यमण्डलभेदकम् ।।
एतत्ते कथितं देवि सांबशापसमुद्भवम् ।। ६१ ।।
पापप्रशमनाख्यानं महापातक नाशनम् ।। ६२ ।।
इति श्रीवराहपुराणे साम्बवचनत्रयसूर्यप्रतिष्ठानं नाम सप्तसप्तत्यधिकशततमोऽध्यायः ।। १७७ ।।

श्रीवराह उवाच ।।
शत्रुघ्नेन पुरा घोरो लवणः सूदितो यथा ।।
द्विजानुग्रहकामार्थमन्नमुग्रस्वरूपिणम् ।। १ ।।
द्वादश्यां मार्गशीर्षस्य उपोष्य नियतः शुचिः ।।
यः करोति वरारोहे शत्रुघ्नचरितं यथा ।। २ ।।
द्विजानां प्रीणनं कृत्वा स्वधान्नपटुभोजनैः ।।
लवणस्य वधादेव शत्रुघ्नस्य शरीरके ।। ३ ।।
हर्षस्तु सुमहाञ्जातो रामस्याक्लिष्टकर्मणः ।।
अयोध्यायाः समायातो रामः सबलवाहनः ।। ४ ।।
महोत्सवं च कर्तुं स शत्रुघ्नस्य महात्मनः ।।
सितामाग्रहणीं प्राप्य मथुरां लवणान्तकः ।। ५ ।।
एकादश्यां सोपवासः स्नात्वा विश्रान्तिसंज्ञके ।।
कृत्वा महोत्सवं तत्र कुटुम्बसहितः पुरा ।। ६ ।।
तस्मिन्मुक्त्वा यथाकामं ब्राह्मणान्वै प्रतर्प्य च ।।
तस्मिन्नहनि तत्रैव यः कुर्यात्स महोत्सवम् ।। ७ ।।
सर्वपापविनिर्मुक्तः पितृभिः सह मोदते ।।
स्वर्गलोके चिरं कालं यावत्स्थित्यन्तजन्मनः ।। ८।।
इति श्रीवराहपुराणे मथुरामाहात्म्ये शत्रुघ्नलावणे रामतीर्थयात्रायामष्टसप्तत्यधिकशततमोऽध्यायः ।।
१७८ ।।

धरण्युवाच ।।
तवापराधाद्देवेश वर्ज्योऽयं वैष्णवेन च ।।
विनापराधो मनुजः सापराधश्च जायते ।। १ ।।
कर्मणाचरणेनैव करणेन जुगुप्सितः ।।
तच्च पूजाफलं सर्वं ज्ञायते तद्वदस्व मे ।। २ ।।
श्रीवराह उवाच ।।
कर्मणा मनसा वाचा ये पापरुचयो जनाः ।।
भक्षणं दन्तकाष्ठस्य राजान्नस्य तु भोजनम् ।। ३ ।।
मैथुनं शवसंस्पर्शं पुरीषोत्सर्गमेव च ।।
सूतक्युदक्याप्रेक्षा च स्पर्शनं मेहनं तथा ।। ४ ।।
अभाष्य भाषणं चैव पिण्याकस्य च भक्षणम् ।।
रक्तपारक्यमलिनवस्त्रधारित्वनीलिजम् ।। ५ ।।
गुरोश्चालीकनिर्बन्धः पतितान्नस्य भक्षणम् ।।
अभक्ष्य भक्षणं चैव तण्डुलीयविभीतकम् ।। ६ ।।
अदानं तुवरान्नस्य जालपादवराकयोः ।।
भक्षणं देवतागारे सोपानत्कोपसर्पणम् ।। ७ ।।
तथैव देव पूजायां निषिद्धकुसुमार्च्चनम् ।।
अनुत्तार्य च निर्माल्यं पूजा क्षीणान्धकारयोः ।। ८ ।।
पानं सुराया देवस्य अन्धकारे प्रबोधनम् ।।
तावत्कर्मार्च्चने विष्णोरनमस्करणं तथा ।। ९।।
अपराधास्त्रयस्त्रिंशत्समाख्याता मया धरे ।।
एभिर्युक्तस्तु पुरुषो विष्णुं नैव प्रपश्यति ।। 179.१० ।।
दूरस्थो न नमस्कारं कुर्यात्पूजा तु राक्षसी।।
एकरात्रं द्विरात्रं वा त्रिरात्रं स्नानमेव च ।।
सवासाः पंचगव्याशी मलसंवस्त्रकं क्रमात् ।।।।।।
नीलीरक्षापनोदार्थं गोमयेन प्रघर्षणम् ।।
प्राजापत्येन शुद्धिः स्यान्नीलीवस्त्रस्य धारणात् ।। १२ ।।
चान्द्रायणद्वयं कुर्याद्गुरोः क्षयितमुत्तमम् ।।
चान्द्रायणं पराकं च पतितान्नस्य भक्षणात् ।। १३ ।।
चान्द्रायणं पराकं च प्राजापत्यं तथैव च ।।
गोप्रदानं च भोज्यं च अभक्षस्य च भक्षणे ।। १४ ।।
उपवासस्तु पंचाहं पंचगव्येन शुद्ध्यति।।
सोपानत्कश्चरेत्पाद कृच्छ्रस्य द्विरभोजनम् ।।१५।।

पुष्पाभावेऽर्च्चनं स्नानं देवस्पर्शं च कारयन् ।।
अनिर्माल्यनमस्कारं स्नानं पंचामृतेन तु ।। १६ ।
सुरापाने द्विजातीनां चान्द्रायणचतुष्टयम् ।।
तथैव द्वादशाब्दं तु प्राजापत्यत्रयं चरेत् ।। १७ ।।
ब्रह्मकूर्च्चेन शुद्धिः स्याद्गोप्रदानत्रयेण च ।।
त्रयाणामेकरात्रेण पंचामृतनिषेवणात् ।। १८ ।।
मुच्यते त्वपराधैस्तु तथा विष्णोः स्तवं पठन् ।।
एतत्ते कथितं गुह्यं किमन्यच्छ्रोतुमिच्छसि ।। १९ ।।
पुनः पुनरुवाचेदं देवदेवो जनार्दनः ।।
मोहङ्गता तु शृणुते नष्टसंज्ञेव लक्ष्यते ।। 179.२० ।।
मुहुर्त्तमात्रे सा देवी संज्ञां प्राप्येदमब्रवीत् ।।
अपराधे कृते देव सूतकी हि प्रजायते ।। २१ ।।
प्रायश्चित्तानि भूरीणि कृतानि तु नरैः सदा ।।
तेन मे मनसो मोहः दुःखदो यः समभ्ययात् ।। २२ ।।
अस्ति कश्चिदुपायोऽत्र येन त्वं नृषु तुष्यसि ।।
पूजितः सफलश्चासि अपराधविशोधनम् ।। २३ ।।
श्रीवराह उवाच ।।
संवत्सरस्य मध्ये तु तीर्थे सौकरवे मम ।।
कृतोपवासः स्नानेन गंगायां शुद्धिमाप्नुयात् ।। २४ ।।
मथुरायां तथाप्येवं सापराधः शुचिर्भवेत् ।।
अनयोस्तीर्थयोरेवं यः सेवेत सकृन्नरः ।। २५ ।।
सहस्रजन्मसु कृतानपराधाञ्जहाति सः ।।
स्नानात्पानात्तथा ध्यानात्कीर्त्तनाद्धारणात्तथा ।।२६।
श्रवणान्मननाच्चैव दर्शनाद्याति पातकम् ।।
पृथिव्युवाच ।।
मथुरा सूकरं चैव द्वावेतौ तव वल्लभौ ।। २७ ।।
विशिष्टमनयोः किं च सत्यं ब्रूहि सुरेश्वर ।।
श्रीवराह उवाच ।।
पृथिव्यां यानि तीर्थानि आसमुद्रसरांसि च ।। २८ ।।
कुब्जाम्रकं प्रशंसन्ति सदा मद्भावभाविताः ।।
तस्मात्कोटिगुणं गुह्यं सौकरतीर्थमुत्तमम् ।।२९।।
एकाहं मार्गशीर्ष्यां च द्वादश्यां सितवैष्णवम् ।।
गंगासागरिकं नाम पुराणेषु च पठ्यते ।।179.३० ।।

गुह्याद्गुह्यतरं पुण्यं माथुरं मम मण्डलम् ।।
फलं परार्द्धगुणितं सिततीर्थान्न संशयः ।। ३१ ।।
अटित्वा सर्वतीर्थानि कुब्जाम्रादीनि नित्यशः ।।
अघं विनश्यते क्षिप्रं मथुरामागतस्य च ।। ३२ ।।
विश्रमणाच्च विश्रान्तिस्तेन संज्ञा वरा मम ।।
सारात्सारतरं स्नानं गुह्यानां गुह्यमुत्तमम् ।। ३३ ।।
गतिरन्वेषणीयानां मथुरा परमा गतिः ।।
कुब्जाम्रके सौकरे च मथुरायां विशेषतः ।। ३४ ।।
विना सांख्येन योगेन मुच्यते नात्र संशयः ।।
या गतिर्योगयुक्तस्य ब्राह्मणस्य मनीषिणः ।। ३५ ।।
सा गतिस्त्यजतः प्राणान्मथुरायां न संशयः ।।
एतत्ते कथितं सारं मया सत्येन सुव्रते ।।
न तीर्थं मथुराया हि न देवः केशवात्परः ।। ३६ ।।
इति श्रीवराहपुराणे मथुरामाहात्म्ये अपराधप्रायश्चित्तमाहात्म्यं नाम
ऊनाशीत्यधिकशततमोऽध्यायः।।१७९।।

श्रीवराह उवाच ।।
पुनरन्यत्प्रवक्ष्यामि पितृणां तृप्तिकारकम् ।।
ध्रुवतीर्थे पुरावृत्तं तच्छृणुष्व वसुन्धरे ।। १ ।।
अस्यां पुर्यां तु राजासीद्धार्मिकः सत्यविक्रमः।।
चन्द्रसेनेति नाम्ना च यज्वा दानहिते रतः।।२।।
तस्य नार्यः शते द्वे तु कुलशीलवयोयुते ।।
तासां मध्येऽधिका चैका पतिव्रतपरायणा।।३।।
नाम्ना चन्द्रप्रभा चैव वीरसूर्वीरपुत्रका ।।
तस्या दासीशतस्यैका दासी नाम्ना प्रभावती ।। ४ ।।
तस्याः परिग्रहास्त्वेकोद्दिष्टाचारविहीनकाः ।।
तस्या पितृगणाः सर्वे अतीताः शतसंख्यया ।।९।।
स्वदोषैः पतिताः सर्वे नरकं प्रति भामिनि ।।
संकरो नरकायैव कुलघ्नानां कुलस्य हि ।। ६ ।।
कदाचिदपि तस्याथो भ्रष्टः प्राणिजनो महान् ।।
सूक्ष्मः प्राणिसमूहो हि ध्रुवतीर्थे तदापतत् ।। ७ ।।
कृष्णरूपाश्चंक्रमन्तो मशकाकारसन्निभाः ।।
दृष्टास्ते ऋषिणा तत्र त्रिकालज्ञेन भामिनि ।। ८ ।।
षष्ठान्नकालभोक्त्र पयोव्रतेन महात्मना ।।
मानैर्व्रतेन सा देवि सूर्यगत्या स्थितेन च ।।९।।
तस्मिन्क्षणे न च कृतं व्रतं जप्यं विमोहनात् ।।
कृपया परिभूतस्य कौतुकेन निरीक्षता ।।180.१०।।
चतुर्थांशावशेषश्च दिवसः पर्यवर्त्तत ।।
एके तत्र समायान्ति पितरो नभसोऽवनिम् ।। ११ ।।
अन्ये पूर्वोत्तराद्देशाद्दक्षिणात्पश्चिमात्तथा ।।
केचित्स्वभावतो हृष्टाः केचित्पुत्रैः स्वधाकृताः ।। १२ ।।
हृष्टास्तुष्टा सुपुष्टांगा गच्छन्तो दिवि सङ्घशः ।।
तपस्विनः स्नानरता रूक्षाः क्षामशरीरिणः ।। १३ ।।
वस्त्रालङ्कारपुष्टांगा हृष्टा गच्छन्ति संघशः ।।
तथाऽपरे नग्नदेहाः सुपुष्टा यान्ति तत्र वै ।। १४ ।।
अन्ये यथागतं यान्ति आयान्ति पुनरेव हि ।।
यानैरुच्चावचैः केचिन्नानारूपैः खगैस्तया ।। १९ ।।
समागच्छन्ति गच्छन्तीरयन्तश्चाशिषो मुदा ।।
केचिद्यथागता यान्ति क्रुद्धाः शापप्रदायिनः ।। १६ ।।

निर्गतोदरसूक्ष्माश्च गच्छन्ति सुविमानिताः ।।
सम्मानितास्तथान्ये तु पितरः श्राद्धपूजिताः ।। १७ ।।
महोत्सवमिवालक्ष्य विस्मितो मुनिरुत्थितः ।।
गते पितृगणे पुत्राः सकलत्रा गृहान्ययुः ।। १८ ।।
निर्जनं ध्रुवतीर्थं तु वृतवेलमिवाभवत् ।।
तत्रैकान्ते कृशांगोऽथ क्षुत्क्षामो गतिविह्वलः ।। १९ ।।
वेपथुः कोटराक्षश्च पृष्ठलग्नलघूदरः ।।
ऊरुचर्मास्थिरुक्त्रस्तो जृम्भमाणो भृशं कृशः ।। 180.२० ।।
न वाक्च श्रूयते तस्य क्षुद्रपक्षिरवो यथा ।।
को भवान्विकृताकारो वेष्टितो मशकैर्बहु ।। २१ ।।
न गच्छसि यथास्थानमागतस्तु निरुद्यमः ।।
यथावत्पृच्छते मह्यं कथयात्मविचेष्टितम् ।। २२ ।।
ममाद्य नैत्यकं कर्म तीर्थेऽस्मिन्नश्यतेऽनिशम् ।।
इमानुच्चावचाञ्जन्तून्दृष्ट्वा मां मोह आविशत् ।। २३ ।।
त्वां दृष्ट्वेदृक्स्वरूपं च क्रिया मे सा गता त्वयि ।।
विस्रब्धः कथयास्माकं करोमि च हितं तव ।। २४ ।।
जन्तुरुवाच ।।
बृहन्निमित्तमद्यैव पितृणां तृप्तिकारकम् ।।
ध्रुवतीर्थे च यः श्राद्धं पुनः कुर्यात्तिलोदकम् ।। २५ ।।
तिलतृप्ता दिवं यान्ति पितरस्तेन पुत्रिणः ।।
सोऽहं स्वान्तरिकादत्तस्तृप्त्यर्थस्तु बुभुक्षितः ।। २६ ।।
योनिसंकरदोषेण नरकं समुपाश्रितः ।।
आशापाशशतैर्बद्धः शतवर्षैरिहागतः ।। २७ ।।
अगतिर्गमने मे स्यात्ते त्रितापैः समागतः ।।
सन्तानैः पुष्टवपुषो दत्तश्राद्धैः कृतोदकैः ।।२८।।
बलयुक्ता ययुः स्वर्गं निर्बलस्य कुतो गतिः ।।
येषां सन्ततिरक्षय्या तिष्ठत्येवं प्रजावती ।। २९ ।।
ते स्वधापूजितैः पुत्रैर्गच्छन्ति परमां गतिम् ।।
अद्य राज्ञस्तु पितरश्चन्द्रसेनस्य पूजिताः ।। 180.३० ।।
दृष्टास्त्वया त्रिकालज्ञ दिव्यदृष्ट्या दिवं गताः ।।
ब्राह्मणानां च वैश्यानां शूद्राणां पितरस्तथा ।। ३१ ।।
प्रतिलोमानुलोमानां शूद्राणां श्राद्धकर्मिणाम् ।।
सर्वेषां च त्वया दृष्टं येषां सन्ततिरव्यया ।। ३२ ।।

एवं पृष्टः स विप्रेण कथयामास कारणम् ।।
पुनः पप्रच्छ तं जन्तुः कौतूहलसमन्वितः ।। ३३ ।।
तवापि सन्ततिस्तात नास्ति दैवाद्यथोचिता ।।
यदि कश्चिदुपायोऽत्र मह्यं तव हितैषिणे ।। ३४ ।।
वद सर्वं करिष्यामि यदि सत्यं वचो मम ।।
ततः स कथयामास दुःस्थः पितृगणैर्वृतः ।।३५।।
इमे ये मम देहे तु भवन्ति मशकाः कृशाः ।।
सन्तानप्रक्षयादेते मम देहं समाश्रिताः ।। ३६ ।।
तन्तुमन्त्रमहं तेषां मम तन्तुमयी सकृत् ।।
आस्ते नगर्या मध्ये तु चन्द्रसेनस्य वेश्मनि ।।३७ ।।
महिष्याः प्रेषणे नित्यं दासी नाम्ना प्रभावती ।।
तस्या दासी कर्मकरी विरूपनिधिनामतः ।।३८।।
अस्माकं सन्ततेस्तन्तुस्तस्य श्राद्धकृते वयम् ।।
आशया बद्धहृदयाः श्राद्धतर्पणहेतवः ।। ३९ ।।
स्थिता एतावदेवं तु कालं यास्यामहेऽम्बुधौ ।।
नरके त्वप्रतिष्ठे तु निराशाः स्वेन कर्मणा ।। 180.४० ।।
श्रुत्वैतत्स त्रिकालज्ञो मोहाविष्टोऽब्रवीदिदम् ।।
कथं निकृष्टयोन्या यद्दत्तं चापद्यते हविः।।४१।।
विधिरत्र कथं तस्या येन यूयं सपुत्रिणः ।।
प्रोवाच स त्रिकालज्ञं ज्ञानक्लिष्टं कृपान्वितम् ।।४२ ।।
पूर्वकर्मविपाकेन यां यां गतिमधोमुखीम् ।।
ऊर्द्ध्वां यां चापि पितरः पुत्रिणः पुत्रमीहते ।। ४३ ।।
श्राद्धं पिण्डोदकं दानं नित्यं नैमित्तिकं तथा ।।
नान्या गतिः पितृणां स्यात्पितरस्तेन पुत्रिणः।।४४।।
अपि स्यात्स कुलेऽस्माकं यो नो दद्याज्जलाञ्जलिम् ।।
नदीषु बहुतोयासु शीतलासु विशेषतः ।। ४५ ।।
विशेषात्तीर्थमध्ये तु तिलमिश्रं जलाञ्जलिम् ।।
रौप्यजुष्टजलेनाथ नाभिदघ्ने जले स्थितः ।। ४६ ।।
दर्भपाणिस्त्रिस्त्रिगोत्रे पितृनाम समुच्चरन् ।।
तृप्यत्वेवं नाम शर्म स्वधाकारमुदाहरन् ।। ४७ ।।
आदावेकाञ्जलिर्द्वे तु तिस्रो वै तर्पणे स्मृताः ।।
देवर्षिपितृसंघानां क्रमाज्ज्ञेयं विचक्षणैः ।। ४८ ।।
तृप्यध्वमिति चान्ते वै मन्त्रं मन्त्रप्रतिक्रियाः ।।

उदीरतामङ्गिरस आयन्तु न इतीरयेत् ।। ४९ ।।
पित्रे प्रथमतो दद्यान्मात्रे दद्यात्तथाचरन् ।।
गोत्रं माता नाम देवी तृप्यत्वेवं स्वधोच्चरन् ।। 180.५० ।।
एवं मातामहः शर्मा गोत्रे पितामहस्तथा ।।
ऊर्द्ध्वं पितृभ्यो ये चेह ते पितर इहोच्यते ।। ५१ ।।
मधुवातेत्यृचं तद्वत्पूर्ववत्समुदीरयेत् ।।
पितामहीं प्रपितामहीं पत्या मातृवत्स ह ।। ५२ ।।
एवं मातामहानां च पूर्ववत्क्रमशो बुधः ।।
नमो व इति मन्त्रेण प्रत्येकं त्रितयं त्रिषु ।। ५३ ।।
गोत्रोच्चारं प्रकुर्वीत असूर्यान्नाशयामहे ।।
गोत्राय पित्रे महाय शर्मणे चेदमासनम् ।। ५४ ।।
गोत्रायै मात्रे मह्यै तु देव्यै चासनकर्मणि ।।
गोत्रः पितामहः शर्मा गोत्रा मातामही मही ।। ५५ ।।
अर्घ्यपात्रसंकल्पे तु पिण्डदानेऽवनेजने ।।
गोत्रस्य पितुर्महस्य शर्मणोक्तस्य कर्मणि ।।५६ ।।
गोत्रायै मातुर्महायै देव्याश्चाज्ञेयकर्मणि ।।
आवाहने द्वितीया च चतुर्थी पूज्यकर्मणि ।। ५७ ।।
प्रथमा चाशिषि प्रोक्ता दत्तस्याक्षय्यकारिका ।।
श्राद्धपक्षे तथा षष्ठी अक्षय्यासनयोः स्मृता ।। ५८ ।।
पितुरक्षयकाले तु पितॄणां दत्तमक्षयम् ।।
एवमेतत्तु पुत्रेण भक्तिपूर्वं द्विजेन तु ।। ५९ ।।
वार्यपि श्रद्धया दत्तं तदानन्त्याय कल्पते ।।
श्रद्धया ब्राह्मणेनैव यथा श्राद्धविधिक्रिया।।180.६०।।
कृत्वा श्राद्धं तु पितरो हृष्टा मुमुदिरे सदा ।।
जोषमास्स्व त्रिकालज्ञ गच्छामो नरकाय वै।६१।।
पूर्वकर्मविपाकेन चिरं तु वसितुं मुने ।।
त्रिकालज्ञ उवाच ।।
ये मया चागता दृष्टास्तीर्थेऽस्मिन्पितरोऽथ वै ।।६२।।
बहवः स्वस्थमनसो बहवो दुःस्थमानसाः ।।
पुत्रदत्तं तथा श्राद्धं जग्रासोद्विग्नरूपिणः ।।६३।।
मौनेन गच्छतां तेषां किमेतद्वद निश्चयम् ।।
अगस्तिरुवाच ।।
अत्र यन्निश्चयं श्राद्धे पुत्रस्य विफलं भवेत् ।। ६४ ।।

नरस्य करणं किञ्चित्तन्मे निगदतः शृणु ।।
अदेशकाले यद्दत्तं विधिहीनमदक्षिणम् ।।६५।।
अपात्रे मलिनं द्रव्यं महत्पापाय जायते ।।
अश्रद्धेयमपाङ्क्तेयं दुष्टप्रेक्षितमीक्षितम् ।। ६६ ।।
तिलमन्त्रकुशैर्हीनमासुरं तद्भवेदिति ।।
वैरोचनाय देवेन वामनेन विभूतये ।। ६७।।।
सच्छूद्रस्य च श्राद्धस्य फलं दत्तं पुरा किल ।।
तथा दाशरथी रामो हत्वा राक्षसमीश्वरम् ।।६८।।
रावणं सगणं घोरं तुष्टेन सह सीतया ।।
श्रुत्वा भक्तिं च राक्षस्यास्त्रिजटायास्त्रिलोककृत् ।।६९।।
सीतावाक्यप्रतुष्टेन तस्यै प्रादाद्वरं विभुः ।।
अशुचीनि गृहाण्येव तथा श्राद्धहवींषि च ।।180.७० ।।
क्रोधाविष्टानि दानानि विधिपात्रयुतानि च ।।
पाक्षिशौचमनभ्यङ्गप्रतिश्रयमभोजनम् ।। ७१ ।।
त्रिजटे त्वत्प्रयच्छामि यच्च श्राद्धमदक्षिणम् ।।
तथैव शम्भुना दत्तं नागराजाय भक्तितः ।। ७२ ।।
तुष्टेन वै वासुकये तन्मे निगदतः शृणु ।।
अनुज्ञाप्य व्रतं जन्तुर्वार्षिकी सकला क्रिया ।। ७३ ।।
यज्ञस्य योचिता देया दक्षिणा नाददाद्द्विजः ।।
वृथाशपथकारा या देवब्राह्मणसन्निधौ ।। ७४ ।।
अश्रोत्रियाणि श्राद्धानि क्रिया मन्त्रैर्विनापि च ।।
रात्रौ सवाससा स्नानं यथासत्त्वस्वरूपतः ।। ७५ ।।
यः शिष्यो न नमेद्भक्त्या गुरुं ज्ञानप्रदायकम् ।।
तथैव प्राकृतं धर्ममग्रे गेयं करिष्यतः ।। ७६ ।।
सर्वं तुभ्यं मया दत्तं नागराजाय वार्षिकम् ।।
इत्येतद्वै पुराणेषु सेतिहासेषु पठ्यते ।। ७७ ।।
तद्वदलीककरणं श्राद्धं दानं व्रतं तथा ।।
नोपतिष्ठति तेषां वै तेन नग्नादयस्त्वमी ।। ७८ ।।
मुषिताच्छिद्रकरणैस्तद्दानफलभोक्तृभिः ।।
यथा गतास्तथा ते तु श्राद्ध हूतास्तु निष्फलाः ।।७९ ।।
मौनव्रतधरा यान्ति पुनः प्राप्यार्थहेतवे ।।
एवमेतन्महाप्राज्ञ यन्मां त्वां परिपृच्छसि ।। 180.८० ।।
त्रिकालज्ञ उवाच ।।

षट्काले भोजनं त्वद्य नाहं भोक्तुमिहोत्सहे ।।
यावत्तृप्तिर्न ते भूयाद्दृष्ट्वा हन्त स्थिरो भव ।। ८१ ।।
तावत्कालं प्रतीक्षस्व यावदागमनं मम ।।
अस्मिंस्तीर्थे सदैवाहं दिवारात्रमतन्द्रितः ।। ८२ ।।
सोऽहमद्य व्रतं त्यक्त्वा तव कारुण्यपूरितः ।।
गत्वाहमानयिष्यामि त्वयोक्तां तां वरां स्त्रियम् ।। ८३ ।।
अनया कारयिष्यामि श्राद्धं तु विधिना सह ।।
एवमुक्त्वा स षष्ठाशी मौनवाक्संययौ द्रुतम् ।।
राजा समीपगं दृष्ट्वा अकस्मादागतं ऋषिम् ।। ८४ ।।
क्षित्यास्तले विलुलितः पादौ कृत्वा तु मूर्द्धनि ।।
धन्योऽस्म्यनुगृहीतोऽस्मि यद्भवान्गृहमागतः ।। ८५ ।।
सदा यज्ञं करिष्यामि गृहमागमने तव ।।
अद्य मे सफलं जन्म यद्भवांस्त्वमिहागतः ।। ८६ ।।
इदं पाद्यमिदं चार्घ्यं मधुपर्कमिमां च गाम् ।।
गृहाण मुनिशार्दूल येनाहं शान्तिमाप्नुयाम् ।। ८७ ।।
तस्य तत्प्रतिगृह्याशु स मुनिस्त्वरितोऽब्रवीत् ।।
मदीयागमने राजन् शृणु त्वं कारणं महत् ।। ८८ ।।
तच्छ्रुत्वा कुरु तत्सर्वं येनाहं तोषितोऽभवम् ।।
एवमुक्तस्तु राजर्षिरब्रवीत्तं तपोधनम् ।। ८९।।
किं तद्वद यथाकार्यं येन सिद्धं भवेदिदम् ।।
त्रिकालज्ञ उवाच ।।
या सा ते राजमहिषी तामानय वराननाम् ।। 180.९० ।।
तस्या दासी वरारोहा प्रभावत्यपि विश्रुता ।।
सापि देव्या तु सहिता आयातु मम सन्निधौ ।। ९१ ।।
ततश्चान्तःपुराद्देवी सदासी तत्र चागता ।।
क्षितौ विलुलिता साध्वी प्रणाममकरोदृषेः ।।९२ ।।
समासीनां च विप्रेन्द्रः प्रोवाच विनताननाम् ।।
ध्रुवतीर्थे मयाश्चर्यं यद्दृष्टं कथयामि वः ।।९३।।
ये केचित्पितरो लोके लोकानां सर्वतः स्थिताः।।
ये पूजिताः श्राद्धकृद्भिः पुत्रैः प्रीता दिवं ययुः ।। ९४ ।।
एको वृद्धो नरस्तत्र सूक्ष्मप्राणिभिरावृतः ।।
क्षुत्क्षामदेहः शुष्कास्यो निर्गतोदरसूक्ष्मदृक् ।।। ।। ९५ ।।
निराशो गन्तुकामश्च पुनः स निरयेऽशुचौ ।।

कारुण्यात्स मया पृष्टः कस्त्वं ब्रूहि किमिच्छसि ।। ९६ ।।
तेनात्मकर्मजनितं मम कर्म निवेदितम् ।।
ततस्तत्रैव तच्छ्रुत्वा तस्य कारुण्ययन्त्रितः ।। ९७ ।।
तव दास्याश्च या दासी तस्यास्तन्तुः किलोच्यते ।।
नाम्ना विरूपकनिधिस्तामानय वरानने ।। ९८ ।।
इति श्रुत्वानवद्याङ्गी तस्या आनयनेऽत्वरत् ।।
प्रेषयामास सर्वत्र तस्या आनयने बहून् ।। ९९ ।।
सा चैकान्ते च दिवसे पानमांसरता सदा ।।
पुरुषेण सहासीना शय्यायां मदविह्वला ।। 180.१०० ।।
सेवकैः सा करे गृह्य आनीता मुनिसन्निधौ ।।
तां दृष्ट्वा मदिरामत्तां स मुनिः प्राह धर्मवित् ।। १०१ ।।
प्रत्ययार्थं तु तस्या वै मुनिः प्राह क्रियां प्रति ।।
पितॄणां च कृते दत्तं दानं वारि न वा स्वधा ।। १०२ ।।
तर्पणं चापि नो दत्तं पितॄणां चातिमुक्तिदम् ।।
सा नैवमित्युवाचेदं तं मुनिं संशितव्रतम् ।। १०३ ।।
न जानामि पितॄन्स्वान्वै क्रियां कार्यं च वै विभो ।।
इति ब्रुवाणां ता दासीं त्रिकालज्ञोऽभ्युवाच ह ।। १०४ ।।
पत्नी च मथुरेशस्य नृपः सपुरसज्जनः ।।
सर्वे द्रक्ष्यथ माहात्म्यं पितॄणां सन्ततेः फलम् ।। १०९ ।।
सकौतुका महाभागाः श्राद्धदानं च नैव ह ।।
नगरस्थाश्च ते सर्वे ब्राह्मणा भावपूजिताः ।।१ ०६ ।।
राज्ञा नीतास्तत्र तीर्थे श्राद्धार्थं मुनिना सह ।।
लोकैः परिवृतो राजा ध्रुवतीर्थं गतः प्रभुः ।। १०७ ।।
तत्र दृष्टः स वै जन्तुर्न च तन्तुर्विचेतनः ।।
मशकैर्वेष्टितः क्षुद्रैः क्षुधया चातिपीडितः ।। १०८ ।।
उवाच ते तदा विप्रोऽभवत्सन्तानजाः स्त्रियः ।।
आनीतास्तव पुष्ट्यर्थं यथेच्छसि तथा कुरु ।।१ ०९।।
अगस्त्य उवाच ।।
स्नात्वैषा ध्रुवतीर्थे तु ब्रह्मणोक्तक्रमेण च।।
करोतु तर्पणं चास्मिन्पूर्वोक्तविधिना त्वियम् ।।180.११० ।।
ततः श्राद्धं सरौप्यं च सवस्त्रं सविलेपनम्।।
अर्चित्वा पिण्डदानेन करोत्वेषा च भक्तितः।। १११ ।।
अत्रैव सर्वे स्थित्वा वै मामीक्षथ सुखान्वितम् ।।

कारयित्वा यथासर्वं श्राद्धदानं हि तन्तुना।।११२।।
तस्य तद्वचनं श्रुत्वा राजपत्नी यशस्विनी।।
कारयामास दास्या वै श्राद्धं सुबहुदक्षिणम् ।।११३।।
पट्टवस्त्रं तथा धूपं कर्पूरागुरुचन्दनम्।।
तिलोत्तरं तथान्नं च बहुरूपं सपिण्डकम् ।। १ १४।।
कृते श्राद्धे पिण्डदाने स जन्तुः सुकृती यथा ।।
दिव्यकान्तिरदीनात्मा तथाभूतैः पृथक् पृथक् ।।१ १५ ।।
वेष्टितः शुशुभेऽतीव दीक्षितोऽवभृथे यथा ।।
स्वर्गागतैर्विमानैश्च छादितं तत्र वै नभः।।११६।।
तेषां मशकगात्राणां सुगात्राणां सुरूपिणाम्।।
ततस्तुष्टमना जन्तुर्विमानं प्रेक्ष्य चागतम्।।१ १७।।
गन्तुं स्वर्गमुवाचेदं त्रिकालज्ञं मुनिं नृपम्।।
शृण्वन्तु वचनं सर्वे मदीयं पितृतुष्टिदम् ।। १ १८।।
तीर्थानि सरितः श्रेष्ठाः पर्वताश्च सरांसि च ।।
कुरुक्षेत्रं गया चैव स्थानान्यायतनानि च ।।११९ ।।
पितृणां मुक्तिदं चान्यन्न भूतं न भविष्यति ।।
आषाढ्याः पञ्चमे पक्षे प्रतिपत्प्रभृतित्वथ ।। 180.१२० ।।
शुक्लप्रतिपदन्तं च तीर्थं प्राप्य ससत्वराः ।।
पितरः श्राद्धपिण्डादा आश्विने ध्रुवमास्थिताः ।। १२१ ।।
कृत्वा प्रेतपुरीं शून्यां स्वर्ग पातालमेव च ।।
ईहमानाः स्वकं पुत्रं गोत्रतन्तुमथानुजम् ।। १२२ ।।
कन्यां गते सवितरि यः श्राद्धं सम्प्रदास्यति ।।
तर्पणं ध्रुवतीर्थे ते पितृणां षोडशान्तरे ।। १२३ ।।
सुतृप्ताः स्मो वयं शश्वद्यास्यामः परमां गतिम् ।।
एष एव प्रभावोऽत्र ध्रुवस्य कथितो मया ।। १२४ ।।
दृष्टो भवद्भिः सर्वं यदस्माकं सुदुरत्ययम् ।।
दुस्तरं तारितं पापं त्वत्प्रसादान्महामुने ।। १२५ ।।
इति विश्राव्य वचनं राजानं स ऋषिं जनान् ।।
राजपुत्रीं तथा दासीं स्वां सुतां शिवमस्तु वः ।।१२६।।
आरुह्य वरयानं ते गताः स्वर्गं वृता सुरैः ।।
श्रीवराह उवाच ।।
ततः स राजशार्दूलः सगणः परिवारकैः ।। १२७ ।।
दृष्ट्वा तीर्थस्य माहात्म्यं प्रणम्य ऋषिसत्तमम् ।।

प्रविष्टो नगरीं रम्यां संस्मरन्नित्यमच्युतम् ।। १२८ ।।
एतत्ते कथितं भद्रे माहात्म्यं मथुराभवम् ।।
स्मरणाद्यस्य पापानि नश्यन्ते पूर्वजन्मनि ।। १२९ ।।
पठति श्रद्धया युक्तो ब्राह्मणानां च सन्निधौ ।।
स पितॄंस्तर्पयेत्सर्वानभिगम्य गयाशिरे ।। 180.१३० ।।
एतत्त्वयानाव्रतिने न चाशुश्रूषये तथा ।।
कथनीयं महाभागे यश्च नार्च्चयते हरिम् ।। १३१ ।।
तीर्थानां परमं तीर्थं धर्माणां धर्ममुत्तमम् ।।
ज्ञानानां परमं ज्ञानं लाभानां लाभ उत्तमः ।। १३२ ।।
कथनीयं महाभागे पुण्यान्भागवतान्सदा ।।
सूत उवाच ।।
एतच्छ्रुत्वा प्रभोर्वाक्यं धरणी विस्मयान्विता ।। १३३ ।।
पप्रच्छ मुदिता देवी प्रतिमास्थापनं प्रति ।। १३४ ।।
इति श्रीवराहपुराणे भगवच्छास्त्रे मथुरावर्णनं नामाशीत्यधिकशततमोऽध्यायः ।। १८० ।।

अथ मधुकाष्ठाप्रतिमायामर्चास्थापनम् ।।
सूत उवाच ।।
एवं श्रुत्वा परं स्थानं सा मही संशितव्रता।।
सर्वक्षेत्रविभागेषु यश्च वै परमो विधिः ।। १ ।।
संश्रुत्य विस्मयाविष्टा प्रत्युवाच वसुन्धरा ।।
धरण्युवाच ।।
अहो क्षेत्रप्रभावो वै यस्त्वया समुदाहृतः ।। २ ।।
यं श्रुत्वा देवतत्त्वेन जातास्मि विगतज्वरा ।।
एकं मे परमं गुह्यं यन्नित्यं हृदि वर्त्तते ।। ३ ।।
मम प्रीत्यर्थमखिलं तद्विष्णो वक्तुमर्हसि ।।
कथं तिष्ठसि काष्ठेषु शैलमृन्मयजेषु च ।। ४ ।।
ताम्रे कांस्ये च रौप्ये च तिष्ठसि स्थापितः कथम् ।।
सौवर्णेषु च सर्वेषु तिष्ठसि स्थापितः कथम् ।। ५ ।।
ब्रह्मचारी समासाद्य कथं तिष्ठसि माधव ।।
दन्तरत्ने समासाद्य कथं सन्तिष्ठते भवान् ।। ६ ।।
कथं तिष्ठसि वा सव्ये भित्तिसंस्थो जनार्दनः ।।
भूमिसंस्थो महाभाग विधिदृष्टेन कर्मणा ।। ७ ।।
एवं धरावचः श्रुत्वा प्रत्युवाचादिसूकरः ।।
श्रीवराह उवाच ।।
प्रतिमा यस्य कर्त्तव्या तदानीय वसुन्धरे ।। ८ ।।
प्रतिमां कारयेच्चैव लक्षणोक्तां वसुन्धरे ।।
अर्चाशुद्धिं ततः कृत्वा प्रतिष्ठाप्य विधानतः ।।९।।
ततः सम्पूजयेद्देवि संसारभवमुक्तये ।।
तत्र काष्ठेषु मधुकमानीय च वसुन्धरे ।। 181.१० ।।
कृत्वा तत्प्रतिमां चैव प्रतिष्ठाविधिनार्च्चयेत् ।।
तांस्तु दद्यात्तु गन्धांश्च ये मया समुदाहृताः ।। ११ ।।
कर्पूरं कुंकुमं चैव त्वचं चागुरुमेव च ।।
रसं च चन्दनं चैव सिल्हकोशीरकं तथा ।। १२ ।।
एतैर्विलेपनं दद्यादर्चितस्तु विचक्षणः ।।
स्वस्तिकं वर्द्धमानं च श्रीवत्सं कौस्तुभं तथा ।।१३ ।।
विधानपूर्वकं चैव मंगल्यं चैव पायसम् ।।
वर्त्तिस्तिलफलं चैव कर्मण्यानि न संशयः ।। १४ ।।
एवं सर्वं ततो दद्यात्पूजायां विहितं शुभम् ।।

कर्मणा विधिदृष्टेन शुद्धो भागवतः शुचिः।।१५।।
प्राणायामं ततः कृत्वा इमं मन्त्रमुदीरयेत् ।।
योऽसौ भवांस्तिष्ठते च सर्वयोगप्रधानतः ।। १६ ।।
ससम्भ्रमं लोके सुप्रतीतस्तिष्ठ काष्ठे स त्वं भुवि ।।
एवं संस्थापनं कृत्वा काष्ठस्य प्रतिमासु च ।।१७ ।।
पुनः प्रदक्षिणीकृत्य शुद्धैर्भागवतैः सह ।।
प्रज्वाल्य दीपं तत्रैव चार्च्चायाः सम्मुखं स्थितः ।। १८ ।।
नोर्द्ध्वं न तिर्यगीक्षेत कामक्रोधविवर्जितः ।।
नमो नारायणायेति इमं मन्त्रमुदीरयेत् ।। १९ ।।
कुर्यात्संस्करणं तेषां विधिदृष्टेन कर्मणा ।। 181.२० ।।
मन्त्रः –
योऽसौ भवान्सर्वजनप्रवीर गतिः प्रभुस्त्वं वससि ह्यमोघ ।।
अनेन मन्त्रेण च लोकनाथ संस्थापितस्तिष्ठ च वासुदेव ।। २१ ।।
सर्वामेवं ततः कृत्वा मम संस्थापनक्रियाम् ।।
पूज्या भागवताः सर्वे ये तत्र समुपागताः ।। २२ ।।
गन्धमाल्यैरर्चयित्वा उपलेपैश्च भोजनैः ।।
कुर्यात्संस्करणं तेषां विधिदृष्टेन कर्मणा ।। २३ ।।
एतत्कर्मविधानेन मधुकाष्ठस्य सुन्दरि ।।
धर्मसंस्थापनार्थाय एतत्ते कथितं मया ।। २४ ।।
यस्त्वनेन विधानेन अर्च्चां काष्ठस्य स्थापयेत् ।।
स न गच्छति संसारं मम लोकं च गच्छति ।। २५ ।।
इति श्रीवराहपुराणे भगवच्छास्त्रे मधुकाष्ठायां प्रतिमार्च्चास्थापनं नाम
एकाशीत्यधिकशततमोऽध्यायः ।। १८१ ।।

अथ शैलाच्चर्चास्थापनम् ।।
श्रीवराह उवाच ।।
पुनरन्यत्प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।।
यथा तिष्ठामि शैलेषु प्रतिमायामितस्ततः ।। १ ।।
सुरूपां च शिलां दृष्ट्वा निःशल्यां सुपरीक्षिताम् ।।
तत्र दक्षं रूपकारं शीघ्रं च विनियोजयेत् ।। २ ।।
शीघ्रमालिख्य तं तत्र श्वेतवर्तिकया नरः ।।
प्रदक्षिणां ततः कृत्वा पूजयेदक्षतादिभिः ।। ३ ।।
दीपकं च ततो दद्याद्बलिं दध्योदनेन च ।।
नमो नारायणायेति उक्त्वा मन्त्रमुदीरयेत् ।। ४ ।।
मन्त्रः-
योऽसौ भवान्सर्वजनप्रवीरः सोमाग्नितेजाः सुमतिप्रधानः ।।
एतेन मन्त्रेण तु वासुदेव प्रतिष्ठितो वर्द्धय कीर्त्तिराशिम् ।। ५ ।।
प्रवर अयुतवराह जय जय वर्द्धस्व ।।
अनेनैव तु मन्त्रेण कर्त्तव्यं यस्य यादृशम् ।।
एवंरूपं ततः कृत्वा देवं नारायणं प्रभुम् ।। ६ ।।
ततो वै स्थापयेत्तत्र पूर्वाभिमुखमेव तु ।।
अहोरात्रमुषित्वैवं शुक्लवस्त्रेण भूषितः ।। ७ ।।
शुक्लयज्ञोपवीती च कृत्वा वै दन्तधावनम् ।।
सर्वगन्धोदकं गृह्य इमं मन्त्रमुदाहरेत्।।८।।
मन्त्रः –
योऽसौ भवांस्तिष्ठति सर्वरूपं मायाबलं सर्वजगत्स्वरूपम् ।।
एतेन मन्त्रेण जगत्स्वरूप सम्पूजितस्तिष्ठसि लोकनाथ।।९।।
करणधारणप्रवध्यमुदाहरणमपराजितमजरामर ।।
सम्पूज्य स्नापयात्मानमनेन मन्त्रेण ॐ नमो वासुदेवाय ।।
एवं तु स्थापनं कृत्वा शिलायां मम सुन्दरि ।।
ततो ऽधिवासनं कार्यं पूर्वप्रोष्ठपदासु च ।। 182.१० ।।
यो मां संस्थापयेद्भूमे मम कर्मपरायणः ।।
स याति वैष्णवं लोकं नात्र कार्या विचारणा ।। ११ ।।
यावकं पायसं भुक्त्वा अहोरात्रं समापयेत् ।।
ततः पश्चिमसन्ध्यायां दद्याच्चत्वारि दीपकान्।।१२।।
पंचगव्यं च गन्धं च वारिणा सह मिश्रयेत् ।।
चतुरः कलशांश्चैव स्थापयेत्पादमूलतः ।। १३ ।।

गीतवादित्रघोषेण उत्सवं तत्र कारयेत् ।।
ब्राह्मणैः सामगैस्तत्र वेदघोषं तु कारयेत् ।। १४ ।।
ब्रह्माक्षरसहस्राणि पठतां ब्रह्मवादिनाम् ।।
येषां पठितशब्देन शुभगीतस्वरेण च ।। १५ ।।
आगमिष्याम्यहं देवि मन्त्रपाठो मम प्रियः ।।
निःशब्दं च ततः कृत्वा स्थाप्यो भागवतैः सह ।।३५।।
पुनरावाहनं कुर्यान्मन्त्रेणानेन सुव्रतः ।।
आगच्छ हे देव सुमन्त्रयुक्तः पंचेन्द्रियैः षट्सु तथा प्रधानः ।।१७।।
एतेषु भूतेषु च संविधाता आवासितस्तिष्ठति लोकनाथ ।। १८ ।।
अनेनैव तु मन्त्रेण समित्तिलघृतेन च ।।
मधुना चैव होतव्यमष्टोत्तरशताहुतीः ।। १९ ।।
एवं कृते विधाने भवामि सन्निहितः स्वयम् ।।
व्यतीतायां तु शर्वर्यां प्रभाते विमले ततः।।182.२० ।।
पंचगव्यं तत प्राश्य मन्त्रेण विधिपूर्वकम् ।।
सर्वगन्धैश्च लाजैश्च पंचगव्यजलं तथा ।। २१ ।।
ततः प्रासादे स्थाप्योऽहं गीतवादित्रमङ्गलैः ।।
सर्वगन्धांस्ततो गृह्य इमं मन्त्रमुदाहरेत् ।। २२ ।।
मन्त्रश्च -
योऽसौ भवाँल्लक्षणलक्षितश्च लक्ष्म्या च युक्तः सततं पुराणः ।।
अत्र प्रासादे सुसमिद्धतेजाः प्रवेशमायाहि नमो नमस्ते ।।२३।।
तत एतेन मन्त्रेण प्रासादं संप्रवेशयेत् ।।
प्रतिमा स्थापितव्या मे मध्ये न तु विपार्श्वतः ।। २४ ।।
एवं संस्थापनं कृत्वा दद्यादुद्वर्त्तनं विभोः ।।
चन्दनं कुंकुमं चैव मिश्रं कालेयकेन च ।।२५।।
एवं चोद्वर्त्तनं कृत्वा इमं मन्त्रमुदाहरेत् ।।
योऽसौ भवान्सर्वजगत्प्रधानः सम्पूजितो ब्रह्मबृहस्पतिभ्याम् ।।
प्रवन्दितः कारणं मन्त्रयुक्तः सुस्वागतं तिष्ठ सुलोकनाथ ।। २६ ।।
एवं संस्थापनं कृत्वा गन्धमाल्यैश्च पूजयेत् ।।
शुक्लवस्त्राणि मे दद्यादिमं मन्त्रमुदाहरेत् ।। २७ ।।
मन्त्रः-
वस्त्राणि देवेश गृहाण तानि मया सुभक्त्या रचितानि यानि ।।
इमानि सन्धारय विश्वमूर्त्ते प्रसीद मह्यं च नमो नमस्ते ।।२८।।
एवं वस्त्राणि मे दद्याद्विधिदृष्टेन कर्मणा ।।

धूपनं मे ततो दद्यात्कुङ्कुमागुरुमिश्रितम् ।।
एवं च धूपनं दद्यादिमं मन्त्रमुदीरयेत् ।। २९ ।।
मन्त्रः –
असावनादिः पुरुषः पुराणो नारायणः सर्वजगत् प्रधानः ।।
गन्धं च माल्यानि च धूप दीपौ गृहाण देवेश नमो नमस्ते ।। 182.३० ।।
एवं पूजां ततः कृत्वा प्रापणं च निवेदयेत् ।।
पूर्वोक्तेन विधानेन प्रापणं चोपकल्प्य च ।। ३१ ।।
पूर्वोक्तेनैव मन्त्रेण दद्यात्प्रापणकं बुधः ।।
प्रापणान्ते चाचमनं दद्याद्देहविशुद्धये ।। ३२।।
शान्तिजापस्ततः कार्यः सर्वकार्यार्थसिद्धिदः ।।
मन्त्रः-
त्वं वै सुशान्तिं कुरु लोकनाथ राज्ञः सराष्ट्रस्य च ब्राह्मणानाम् ।।
बालेषु वृद्धेषु गवाङ्गणेषु कन्यासु शान्तिं च पतिव्रतासु ।। ३३ ।।
रोगा विनश्यन्तु च सर्वतश्च कृषीवलानां च कृषिः सदा स्यात्।।
सुभिक्षयुक्ताश्च सदा हि लोकाः काले सुवृष्टिर्भविता च शान्तिः ।।३४।।
एवं विधिं ततः कृत्वा विधिदृष्टेन कर्मणा ।।
संपूज्य तत्र देवेशं ब्राह्मणान्भोजयेद्व्रती ।। ३५ ।।
दीनानाथान्प्रतर्प्याथ यथाविभवशक्तितः ।।
य एतेन विधानेन कुर्यात्संस्थापनं मम ।। ३६ ।।
यावन्तो मम गात्रेषु जायन्ते जलबिन्दवः ।।
तावद्वर्षसहस्राणि मम लोकेषु तिष्ठति ।। ३७ ।।
यो मां संस्थापयेद्भूमे सर्वाहङ्कारवर्जितः ।।
तारितं च कुलं तेन सप्त सप्त च सप्ततिः ।। ३८ ।।
एतत्ते कथितं भद्रे शैलिकास्थापनं मम ।।
धर्मसन्धारणार्थाय मम भक्त सुखाय च ।। ३९ ।।
इति श्रीवराहपुराणे शैलार्चास्थापनं नाम द्व्यशीत्यधिकशततमोऽध्यायः ।। १८२ ।।

अथ मृन्मयार्चास्थापनम् ।।

श्रीवराह उवाच ।।

पुनरन्यत्प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।।

तिष्ठामि मृन्मयीं चापि प्रतिमां पूजनेच्छया ।।१।।

आर्च्चां च मृन्मयीं कृत्वा अस्फुटां चाप्यखण्डिताम् ।।

नाधिकां वामनां चापि न वक्रां कारयेद्बुधः ।।२।।

ईदृशीं प्रतिमां कृत्वा मम कर्मपरायणः ।।

भूमे सर्वाणि कर्माणि यथा वा रोचते तथा ।। ३ ।।

काष्ठानामप्यलाभे तु मृन्मयीं तत्र कारयेत् ।।

शैलजां वा ततो भूमे मम कर्मपरायणः ।। ४ ।।

ताम्रेण कांस्यरौप्येण सौवर्णत्रपु रीतिभिः ।।

कुर्वन्ति शुभकर्माणः कोविदः प्रतिमां शुभाम् ।। ५ ।।

अर्चनं त्वपरं वेद्यां मम कमर्परिग्रहात्।।

केचिल्लोकापवादेन ख्यात्यै कुर्वन्ति केचन ।।६।।

गृहं चालोच्य कश्चिन्मां पूजयेत्कामनापरः ।।

पूजयेद्यदि वा चक्रं मम तेजोंशसम्भवम् ।। ७।।

भूमे एवं विजानीहि स्थापितोऽहं न संशयः ।।

सम्पदस्तु प्रयच्छामि पूजितोऽहं धराधरे ।। ८ ।।

मन्त्रैर्वा विधिपूर्वेण यो मे कर्माणि कारयेत् ।।

यं यं फलं समुद्दिश्य मां पूजयति मानवः ।। ९ ।।

तत्तत्फलं प्रयच्छामि प्रसन्नेनान्तरात्मना ।।

मम चैव प्रसादेन प्राप्नोति गतिमुत्तमाम् ।। 183.१० ।।

मद्भक्तः सततं नित्यं कर्मणा परिवेष्टितः ।।

स वै मत्परितोषार्थं मनस्येव प्रपूजयेत् ।। ११ ।।

दद्याज्जलाञ्जलिं मह्यं तेन मे प्रीतिरुत्तमा ।।

तस्य किं सुमनोभिश्च जाप्येन नियमेन किम् ।।१२।।

मह्यं चिन्तयतो नित्यं निभृतेनान्तरात्मना ।।

तस्य कामान्प्रयच्छामि दिव्यान्भोगान्मनोरमान् ।। १३ ।।

एतत्ते सर्वमाख्यातं सुगोप्यं च प्रयत्नतः ।।

मृन्मयीं प्रतिमां कृत्वा मम कर्मसु निष्ठितः ।।१४।।

श्रवणे चैव नक्षत्रे कुर्यात्तस्याधिवासनम् ।।

पूर्वोक्तेन विधानेन स्थापयेन्मन्त्रपूर्वकम् ।। १५ ।।

पंचगव्यं च गन्धं च वारिणा सह मिश्रयेत् ।।

ततो मे स्नपनं कार्यमिमं मन्त्रमुदाहरेत् ।। १६ ।।
मन्त्रः-
योऽसौ भवान्सर्वजगत्प्रकर्त्ता यस्य प्रसादेन भवन्ति लोकाः ।।
स त्वं कुरुष्वाच्युत मत्प्रसादं त्वं तिष्ठ चार्च्चासु च मृन्मयीषु ।। १७ ।।
कारणकारणं ह्युग्रतेजसं द्युतिमन्तं महापुरुषं नमो नमः ।।
अनेन मन्त्रेण वेश्मनि प्रविश्य स्थापनां कुर्यात् ।।
अनेनैव तु मन्त्रेण स्थापयेन्मां समाहितः ।।
पूर्ववत्स्थापयेत्तत्र चतुरः कलशान्पुरा ।।
चतुरस्तान्गृहीत्वा च इमं मन्त्रमुदाहरेत् ।। १८ ।।
मन्त्रः –
ॐ वरुणं समुद्रो लब्ध्वा संपूजितो ह्यात्ममतिप्रसन्नः ।।
एतेन मन्त्रेण ममाभिषेकं प्राप्तं वरिष्ठं हि स ऊर्ध्वबाहुः ।।
अग्निश्च भूमिश्च रसाश्च सर्वे भवन्ति यस्मात्सततं नमस्ये ।। १९ ।।
एवमास्नाप्य विधिवन्मम कर्मपरायणः ।।
पूर्वोक्तविधिना चैव गन्धमाल्यैश्च पूजयेत् ।। 183.२० ।।
अगुरुं चैव धूपं च सकर्पूरं सकुङ्कुमम् ।।
नमो नारायणायेति उक्त्वा धूपं प्रकल्पयेत् ।। २१ ।।
धूपं दत्त्वा यथान्यायं पीतं वस्त्रं तु दापयेत् ।।
नमो नारायणायेति उक्त्वा मन्त्रमुदाहरेत् ।। २२ ।।
मन्त्रः-
वस्त्रेण पीतेन सदा प्रसन्नो यस्मिन्प्रसन्ने तु जगत्प्रसन्नम् ।।
गृहणातु वस्त्रं सुमुखः प्रसन्नो देवः सदा पातु भवस्य बन्धात् ।।२३।।
तत एतेन मंत्रेण वस्त्रं दद्याद्यथोचितम् ।।
धूपदीपादिभिः पूज्य प्रापणं परिकल्पयेत् ।। २४ ।।
पूर्वोक्तेन विधानेन दद्यात्प्रापणकं नरः ।।
पश्चादाचमनं दद्यान्मन्त्रपूर्वं प्रयत्नतः ।। २५ ।।
मन्त्रः-
शान्तिर्भवतु देवानां ब्रह्म क्षत्रविशां तथा ।।
शान्तिर्भवतु वृद्धानां बालानां शान्तिरुत्तमा ।।२६।।
देवो वर्षतु पर्जन्यः पृथिवी सस्यपूरिता ।।
अनेनैव तु मन्त्रेण शान्तिं कृत्वा विधानतः ।। २७ ।।
पश्चाद्भागवतान्पूज्य ततो ब्राह्मणपूजनम् ।।
शिरसा वचनं कार्यं दक्षिणाभिः प्रपूज्य च ।। २८ ।।

अच्छिद्रं वाच्य पश्चाच्च कुर्यादेवं विसर्जनम् ।।
एवं विसर्जनं कृत्वा ये च तत्र समागताः ।। २९ ।।
पूजयेत्तांश्च विधिवद्वस्त्रालंकारभूषणैः ।।
पूजयीत गुरुं तत्र यदीच्छेन्मम सात्म्यताम् ।। 183.३० ।।
यो गुरुं पूजयेद्भक्त्या विधिदृष्टेन कर्मणा ।।
तेनाहं पूजितो नित्यं देवि सत्यं ब्रवीमि ते ।। ३१ ।।
तुष्टो ददाति कृच्छ्रेण ग्राममात्रं नराधिपः ।।
आब्रह्मपदपर्यन्तं हेलया यच्छते गुरुः ।। ३२ ।।
तथैव मम शास्त्रेषु ममैव वचनाच्छुभे ।।
सर्वशास्त्रेषु कल्याणि गुरुपूजा व्यवस्थिता ।। ३३ ।।
य एतेन विधानेन कुर्यात्संस्थापनं मम ।।
तारितानि कुलान्येव त्रीणि त्रिंशच्च सप्ततिः ।। ३४ ।।
पूजायां मम मार्गेषु पतन्ति जलबिन्दवः ।।
तावद्वर्षसहस्राणि मम लोकेषु मोदते ।। ३५ ।।
एवं ते कथितं भूमे स्थापनं मृन्मयस्य तु ।।
कथयिष्यामि ते ह्यन्यत् सर्वभागवतप्रियम् ।। ३६ ।।
इति श्रीवराहपुराणे मृन्मयाच्चर्चास्थापनं नाम त्र्यशीत्यधिकशततमोऽध्यायः ।। १८३ ।।

अथ ताम्रार्चास्थापनम् ।।

श्रीवराह उवाच ।।

ताम्रेण प्रतिमां कृत्वा सुरूपां चैव भास्वराम् ।।

उचितेनोपचारेण वेश्ममध्यमुपानयेत् ।। १ ।।

ततो वेश्मन्युपागम्य स्थापयित्वा उदङ्मुखः ।।

चित्रायां चैव नक्षत्रे कुर्याच्चैवाधिवासनम् ।।२।।

जलं च सर्वगन्धेन पंचगव्येन मिश्रितम् ।।

स्नापयेच्च ततो मां वै इमं मन्त्रमुदाहरेत् ।। ३ ।।

मन्त्रः-

योऽसौ भवांस्तिष्ठति सारभूतः त्वं ताम्रके तिष्ठसि नेत्रभूतः ।।

आगच्छ मूर्त्तौ सह पंचभूतैर्मया च पात्रैः सह विश्वधामन् ।। ४ ।।

अनेनैव तु मन्त्रेण स्थापयित्वा यशस्विनि ।।

पूर्वन्यायेन कर्त्तव्यमधिवासनपूजनम् ।। ५ ।।

व्यतीतायां च शर्वर्यामुदिते च दिवाकरे ।।

ऋचा शुद्धिं विधायाऽथ स्नापयेन्मन्त्रपूर्वकम् ।। ६ ।।

ब्राह्मणा वेदपाठांश्च कुर्युस्तत्र समागताः ।।

बहुनि मङ्गलान्यत्र मण्डपे स्थापयेत्ततः ।।७।।

सुगन्धद्रव्यसंयुक्तं जलं चादाय पूजकः।।

ततो मे स्नपनं कार्यमिमं मन्त्रमुदाहरेत्।।८।।

मन्त्रः –

ॐ योऽसौ भवान्सर्ववरः प्रभुश्च माया बलो योगबलप्रधानः ।।

आगच्छ शीघ्रं च मम प्रियाय सन्तिष्ठ ताम्रेष्वपि लोकनाथ ।। ९ ।।

ज्वलन पवनतुल्यावन भावन तपन श्वासन स्वयं तिष्ठ भगवन् पुरुषोत्तम ओम् ।। इति ।।

ततो द्वारमुपागम्य वेश्म शीघ्रं प्रवेशयेत् ।।

आसने चापि मां स्थाप्य पूजयेद्भक्तिपूर्वकम् ।।184.१०।।

मन्त्रेणानेन मां स्थाप्य गन्धपुष्पादिदीपकैः ।। ११ ।।

स्थापनामन्त्रः –

ॐ प्रकाशप्रकाश जगत्प्रकाश विज्ञानमयानन्दमय त्रैलोक्यनाथात्रागच्छ इह

सन्तिष्ठतां भवान्पुरुषोत्तम मामव इति ।।

अनेन स्थापनां कृत्वा मम शास्त्रानुसारतः ।।

शुक्लवस्त्रं समादाय इमं मन्त्रमुदाहरेत् ।। १२ ।।

मन्त्रः-

ॐ शुद्धस्त्वमात्मा पुरुषः पुराणो जगत्सु तत्त्वं सुरलोकनाथ ।।

वस्त्राणि गृह्णीष्व मम प्रियाणि नमोऽस्तु तस्मै पुरुषोत्तमाय ।। १३ ।।
वस्त्रैर्विभूषितं कृत्वा मम कर्मपरायणः।।
यथान्यायेन मे शीघ्रमर्च्चनं तत्र कारयेत् ।।१४ ।।
अर्च्चनालंकृतं कृत्वा गन्धधूपादिभिः प्रभुम् ।।
सम्पूज्य विधिवन्मां तु नैवेद्यं परिकल्पयेत् ।।१५।।
दत्त्वा स्वादु च नैवेद्यं शान्तिपाठं तु कारयेत् ।।
मन्त्रः –
शान्तिर्भवतु देवानां विप्राणां शान्तिरुत्तमा।।१६।।
शान्तिर्भवतु राज्ञां च सराष्ट्राणां तथा विशाम् ।।
बालानां व्रीहिपण्यानां गर्भिणीनां च देहिनाम् ।। १७ ।।
शान्तिर्भवतु देवेश त्वत्प्रसादान्ममाखिला।।
एवं शान्तिं पठित्वा तु ब्राह्मणांस्तत्र पूजयेत् ।।१८।।
गुरुं भागवतं चैवमर्चयेच्च यथाविधि।।
ब्राह्मणान्भोजयेत्तत्र यथोत्पन्नेन माधवि ।। १९।।
विशेषेण गुरुं पूज्य वस्त्रालंकारभोजनैः ।।
तेनाहं पूजितो भूमे सत्यमेतद्ब्रवीमि ते ।। 184.२० ।।
गुरुर्यस्य न तुष्टो वै तस्माद्दूरतरो ह्ययम् ।।
य एतेन विधानेन कुर्यात्संस्थापनं मम ।। २१ ।।
तारितं च कुलं तेन नवभिः सप्तविंशतिः ।।
एतत्ते कथितं भद्रे ताम्राच्चर्चास्थापनं मम ।। २२ ।।
कथयिष्यामि ते ह्येवं कात्स्न्र्येन प्रतिमाच्चर्नम् ।।
जलस्य बिन्दवो यावन्मम स्नाने च सुन्दरि ।।
तावद्वर्षसहस्राणि मम लोके महीयते ।। २३ ।।
इति श्रीवराहपुराणे ताम्रार्चास्थापनं नाम चतुरशीत्यधिकशततमोऽध्यायः ।। १८४ ।।

अथ कांस्यार्चास्थापनम् ।।

श्रीवराह उवाच ।।

कांस्येन प्रतिमां कृत्वा सुरूपां सुप्रतिष्ठिताम् ।।

सर्वाङ्गावयवैर्युक्तां विमलां कर्मनिर्मिताम् ।। १ ।।

ज्येष्ठायां चैव नक्षत्रे मम वेश्मन्युपानयेत् ।।

गीतवादित्रशब्देन बहुभिर्मङ्गलैस्तथा ।। २ ।।

अर्घ्यं गृह्य यथान्यायमिमं मन्त्रमुदाहरेत् ।। ३ ।।

योऽसौ भवान्सर्वयज्ञेषु पूज्यो ध्येयो गोप्ता विश्वकामो महात्मा ।।

प्रसन्नात्मा भगवान्मे प्रसन्नः सुपूजितस्तिष्ठ हि लोकनाथ ।। ४ ।।

अर्घ्यं दत्त्वा यथान्यायं स्थापयेत्तदुदङ्मुखः ।।

यथान्यायेन संस्थाप्य कुर्याच्चैवाधिवासनम् ।। ५ ।।

चतुरः कलशांश्चैव पंचगव्यसमन्वितान् ।।

सर्वगन्धैश्च लाजैश्च मधुना च विशेषतः ।। ६ ।।

चतुरः कलशान्पूर्य स्नानार्थं मे समन्त्रकम् ।।

ततश्चास्तंगते सूर्ये शुद्धैर्भागवतैः सह ।। ७ ।।

कुर्यात्संस्थापनं तत्र ममार्च्चायास्तु पूजकः ।।

गृहीत्वा कलशांस्तत्र शुद्धान्भागवतांस्तथा ।। ८ ।।

नमो नारायणायेति उक्त्वा मन्त्रमुदाहरेत् ।। ९ ।।

मन्त्रः-

आदिर्भवान्ब्रह्मयुगान्तकल्पः सर्वेषु कालेष्वपि कल्पभूतः ।।

एको भवान्नास्ति कश्चिद्द्वितीय उपागतस्तिष्ठ हि लोकनाथ ।। 185.१० ।।

विकार अविकार अकार सकार शकार षकार स्वच्छन्दरूपः क्षरमक्षरं धृतिरूपः अरूपमिति नमः पुरुषोत्तमायेति ।।

व्यतीतायां तु शर्वर्यामुदिते च दिवाकरे ।।

अश्वेन च मुहूर्तेन प्राप्ते मूलेषु चोत्तरे ।। ११ ।।

पूर्वोक्तेषु विधानेन मम शास्त्रानुदर्शिनाम् ।।

स्थापयेद्द्वारमूले तु मम वेश्मनि सुन्दरि ।। १२ ।।

सर्वशान्त्युदकं गृह्य सर्वगन्धफलानि च ।।

नमो नारायणायेति उक्त्वा मन्त्रमुदाहरेत् ।।१३।।

मन्त्रः-

ॐ इन्द्रो भवांस्त्वं च यमः कुबेरो जलेश्वरः सोमबृहस्पती च।।

शुक्रः शनैश्चरबुधौ सह सैंहिकेयकेतू रविश्चैव धरात्मजस्त्वम् ।।१४।।

तथैव सर्वौषधयो जलानि वायुश्च पृथ्वी च स वायुसारथिः ।।

नागाः सयक्षाश्च दिशश्च सर्वास्तस्मै नमस्ते पुरुषोत्तमाय इति ।।१५।।
अनेनैव तु मन्त्रेण कृत्वा कर्म सुपुष्कलम् ।।
मम तां प्रतिमां गृह्य ततो वेश्मन्युपानयेत् ।।१६।।
एकान्ते स्नापयेन्मां च जलैः पूर्वाभिमन्त्रितैः ।।
प्रगृह्य कलशेभ्यश्च जलं गन्धसमन्वितम् ।। १७ ।।
गात्रसंशोधनार्थाय इमं मन्त्रमुदाहरेत् ।।१८।।
मन्त्रः –
सरांसि ये ते च समस्तसागरा नद्यश्च तीर्थानि च पुष्कराणि ।।
आयान्तु तान्येव तव प्रसादाच्छुद्धयै च मे स्युः पुरुषोत्तमाय इति ।। १९ ।।
एवं मां स्नाप्य विधिना मम कर्मानुसारिणः ।।
एवं न्यायेन मां तत्र अर्चयित्वा यथोचितम् ।।185.२० ।।
गन्धधूपादिभिश्चैव यथाविभवशक्तितः।।
पश्चाद्वस्त्राणि मे दद्यान्मम गात्रसुखानि च ।। २१ ।।
तान्यानयित्वा वस्त्राणि ममाग्रे स्थापयेन्नरः ।।
उभौ तौ चरणौ नत्वा इमं मन्त्रमुदाहरेत् ।। २२ ।।
मन्त्रः-
वस्त्राणि देवेन्द्र मया हृतानि सूक्ष्माणि सौम्यानि सुखावहानि ।।
गात्रस्य सन्तुष्टिकराणि तुभ्यं गृहणीष्व देवेश सुलोकनाथ ।।२३।।
वेदोपवेद ऋग्वेद यजुर्वेद सामवेद अथर्वणवेद संस्तुत इति नमः परम्परायेति ।।
अर्चितालंकृतं कृत्वा पूर्वन्यायेन सुन्दरि ।।
पश्चान्मे प्रापणं दद्यान्मन्त्रवद्विधिपूर्वकम् ।। २४ ।।
दत्त्वा प्रापणकं तत्र दद्यादाचमनं ततः ।।
शान्तिपाठश्च वै कार्यो मन्त्रेणानेन सुन्दरि ।। २५ ।।
विद्याः सर्वे ब्रह्म च ब्राह्मणाश्च ग्रहाः सर्वे सरितः सागराश्च ।।
इन्द्राद्यष्टौ लोकपालाश्च सर्वे पूर्वोक्ता ये सर्वशान्तिं च कुर्युः ।। २६ ।।
आयाम यम कामदम वाम ॐ नमः पुरुषोत्तमायेति सूत्रम् ।।
वृत्तेष्वेवोपचारेषु मम कुर्यात्प्रदक्षिणम् ।।
अभिवादनं स्तुतिं चापि कृत्वा भागवतांश्छुचीन् ।। २७ ।।
सम्पूज्य ब्राह्मणान्पश्चाद्भोजयेत् पायसादिभिः ।।
तेभ्यः शान्त्युदकं गृह्य द्विजेभ्यः कमलेक्षणे ।। २८ ।।
दद्यादभ्युक्षणं मह्यं तेनाहं पूजितोऽभवम् ।।
सर्वान्विसर्जयित्वा तु कुर्याद्वै गुरुपूजनम् ।। २९ ।।
अङ्गुलीयकवासोभिर्दानसंमाननादिभिः ।।

यो गुरुं पूजयेद्भूमे भक्तियुक्तेन चेतसा ।। 185.३० ।।
तेनाहं पूजितो देवि एवमेतन्न संशयः।।
ब्राह्मणान्मम भक्तांश्च गुरूंश्चैव हि निन्दति ।। ३१ ।।
नाशयिष्यामि तं देवि सत्यमतेद्ब्रवीमि ते ।।
जलस्य बिन्दवो यावन्मम गात्रेषु तिष्ठति।।३२।।
तावद्वर्षसहस्राणि मम लोकेषु तिष्ठति ।।
य एतेन विधानेन स्थापयिष्यति मां नरः ।।३३।।
तारितं च कुलं तेन पितृजं मातृजं तथा ।।
एतत्ते कथितं भद्रे कांस्येन स्थापनं मम ।। ३४ ।।
कथयिष्यामि ते ह्येवं रौप्येण स्थापनं मम ।। ३५ ।।
इति श्रीवराहपुराणे कांस्यप्रतिमास्थापनविधिर्नाम पंचाशीत्यधिकशततमोऽध्यायः ।। १८५ ।।

श्रीवराह उवाच।।
राजतीं प्रतिमां कृत्वा सुरूपां निर्मलां शुचिम् ।।
अश्लिष्टां चैव निर्दोषां सर्वतः परिनिष्ठिताम् ।। १ ।।
चन्द्रपाण्डुरसङ्काशां सुश्लक्ष्णां निर्व्रणां शुभाम् ।।
श्रियायुक्तां मनोज्ञां च दीप्यमानां दिशो दश ।।२।।
ईदृशीं प्रतिमां कृत्वा मम कर्मपरायणः ।।
गीतवादित्रशब्देन शंखदुन्दुभिनिःस्वनैः ।। ३ ।।
स्तुतिभिर्मङ्गलैश्चैव मम वेश्मन्युपानयेत् ।।
अर्घ्यपाद्यादिकं गृह्य इमं मन्त्रमुदाहरेत् ।।४।।
मन्त्रः-
ॐ यः सर्वलोकेष्वपि सर्वमर्घ्यं पूज्यश्च मान्यश्च दिवौकसामपि।।
उपागतो गृह्य इदं ममार्घ्यं प्रसीद मां तिष्ठतु लोकनाथ ।।
यो राजते यज्ञपतिश्च यज्ञे सूर्योदये मम कर्माग्निहोत्रम् ।।५।।
मन्दश्चेति आदिमध्यस्वरूपायेति ।।
तत एतेन मन्त्रेण अर्घ्यं दत्त्वा यथाविधि ।।
सुस्नातोऽलंकृतश्चैव स्थापयेत्तामुदङ्मुखः ।। ६ ।।
आश्लेषासु च नक्षत्रे राशौ कर्कटके स्थिते ।।
अस्तङ्गते दिनकरे स्वजने यजति स्थिरे ।। ७ ।।
तत्राधिवासनं कुर्याद्विधिवन्मन्त्रपूर्वकम् ।।
चत्वारः कलशास्तत्र चन्दनोदकमिश्रिताः ।। ८ ।।
सर्वौषधीसमायुक्ताः सहकारविभूषिताः ।।
ततस्ते कर्मिणः सर्वे मम शास्त्रानुसारिणः ।। ९ ।।
गुरोस्तु वचनाद्देवि मनोज्ञान्सुखशीतलान् ।।
नमो नारायणायेति उक्त्वा मन्त्रमुदाहरेत् ।। 186.१० ।।
मन्त्रः -
योऽसौ भवान् सर्वलोकैककर्त्ता सर्वाध्यक्षः सर्वरूपैकरूपः ।।
आयातु मूर्त्तौ सहितो मया च ध्रुवादिभिर्लोकपालैस्तु पूज्यः ।। ११ ।।
नमोऽनन्तायेति ।।
व्यतीतायां तु शर्वर्यामुदिते सूर्यमण्डले ।।
दिशासु च प्रसन्नासु द्वारमूलमुपानयेत् ।। १२ ।।
एवं संस्थापनं कृत्वा मम कर्मानुसारिणः ।।
घटैः पूर्णैर्यथान्यायं कुर्यात्तत्राभिषेचनम् ।। १३ ।।
अभिषिच्य ततः पश्चात्स्थापयेत विधानतः।।

नमो नारायणायेति उक्त्वा मन्त्रमुदाहरेत् ।।१४।।
मन्त्रः -
गङ्गादिभ्यो नदीभ्यश्च सागरेभ्यो मया हृतम् ।।
स्नानाय ते सुरश्रेष्ठ कर्पूरावासितं जलम् ।। १५ ।।
एवं स्नाप्य विधानेन गृहस्याभ्यन्तरं नयेत् ।।
स्थापना तत्र मे कार्या मन्त्रेणानेन सुन्दरि।। १६ ।। ।
मन्त्रः –
वेदैर्वेद्यो वेदविद्भिश्च पूज्यो यज्ञात्मको यज्ञफलप्रदाता ।।
यज्ञार्थं त्वामाह्वये देवदेव मूर्त्तावस्यां तिष्ठ सुलोकनाथ ।। १७ ।।
धनजन रूप्यस्वर्ण अनन्ताय नम इति ।।
एवं संस्थापनं कृत्वा प्रहृष्टेनान्तरात्मना ।।
अर्चयित्वा यथान्यायं पूर्वोक्तविधिना नरः ।।१८ ।।
नील वस्त्राणि मे दद्यात्प्रियाणि मम भूषणम्।।
ततो वस्त्राण्युपादाय जानुभ्यां पतितो भुवि।।१९।।
नमो नारायणायेति उक्त्वा काममुदाहरेत् ।।186.२० ।।
मन्त्रः -
योऽसौ भवांश्चन्द्ररश्मिप्रकाशः शंखेन कुन्देन समानवर्णः ।।
क्षीरोज्ज्वलः कौमुदवर्ण देव वस्त्राणि गृह्णीष्व मम प्रियाय ।। २१ ।।
वेषः सुवेषः अनन्तः अमरः मारणः कारणः सुलभः दुर्ल्लभः श्रेष्ठः सुवर्चा इति ।।
अनैनेव तु मन्त्रेण दत्त्वा वस्त्राणि मे शुचिः ।।
ततो मे प्रापणं दद्याद्भक्तियुक्तेन चेतसा ।। २२ ।।
नमो नारायणायेति इमं मन्त्रमुदाहरेत् ।।
शाल्यन्नं पायसैर्युक्तं सितया च घृतेन च ।। २३ ।।
प्रापणं गृह्यतां देव अनन्त पुरुषोत्तम ।।
दत्त्वा तु मम नैवेद्यं दद्यादाचमनं बुधः ।। २४ ।।
सर्वलोकहितार्थाय शान्तिपाठमुदाहरेत् ।।
ॐ शान्तिं करोति ब्रह्मा च रुद्रो विष्णुर्हि भास्करः।।२५।।
रात्रिश्चैव तु सन्ध्ये द्वे नक्षत्राणि ग्रहा दिशः।।२६।।
अचल चंचल सचल खेचल प्रचल अरविन्दप्रभ उद्भव चेति नमः संस्थापितानां वासुदेव इति ।।
कृत्वा वै शान्तिकं तत्र सर्वपापप्रणाशनम् ।।
पूज्य भागवतांस्तत्र यथाविभवशक्तितः ।। २७ ।।
ब्राह्मणान्भोजयेत्तत्र गुरुं मन्त्रेण पूजयेत् ।।
तेभ्यः शान्त्युदकं गृह्य कुर्यादभ्युक्षणं ततः ।। २८ ।।

ब्राह्मणान्स्वजनं चैव अभिवाद्य कृताञ्जलिः ।।
शीघ्रं विसर्जयेत्तांश्च ये तत्र समुपागताः।।२९।।
ततो गुरुं च संपूज्य दानमानादिभिर्विभुम् ।।
गुरौ सम्पूजिते तत्र मम पूजा कृता भवेत् ।।186.३० ।।
जलस्य बिन्दवो येऽन्नभोजनान्ते पतन्ति हि ।।
तावद्वर्षसहस्राणि विष्णुलोके स मोदते ।।३१ ।।
य एतेन विधानेन पूजयेन्मतिमान्नरः ।।
उद्धृतं च कुलं तेन पितृजं मातृजं तथा ।। ३२ ।।
अनेन विधिना देवि रौप्याचर्चास्थापनं मम ।।
सुवर्णस्य प्रवक्ष्यामि स्थापनं मम सुप्रियम् ।। ३३ ।।
यथैव राजती कुर्यात्तथैव च सुवर्णिकाम् ।।
तेनैव विधिना सर्वं कुर्यादावाहनादिकम् ।।३४।।
यत्फलं दारुशैलादिनाम्ना कांस्यादिराजते ।।
तत्फलं कोटिगुणितं सौवर्णस्य प्रपूजने ।। ३५ ।।
कुलानि तारयेत्सुभ्रु अयुतान्येकविंशतिम् ।।
याति मल्लयतां भूमे पुनरावृत्तिवर्जितः ।। ३६ ।।
एतत्ते कथितं भूमे यत्त्वया परिपृच्छितम् ।।
रहस्यं विपुलश्रोणि किमन्यत्कथयामि ते ।। ३७ ।।
भूमिरुवाच ।।
उक्ता याः प्रतिमाः सर्वाः सुवर्णादि विनिर्मिताः ।।
तासु तिष्ठसि सर्वासु शालग्रामे च सर्वदा ।। ३८ ।।
कति पूज्या गृहादौ च अविशेषस्तु पूजने ।।
विशेषो वा भवेत्तन्मे रहस्यं वद माधव ।। ३९ ।।
शिवादिपूजने के वा संख्यातास्तच्च मे वद ।।
श्रीवराह उवाच ।।
गृहे लिङ्गद्वयं नार्च्यं शालग्रामत्रयं तथा ।। 186.४० ।।
द्वे चक्रे द्वारकायास्तु नार्च्यं सूर्यद्वयं तथा ।।
गणेशत्रितयं नार्च्यं शक्तित्रितयमेव च ।। ४१ ।।
शालग्रामयुगं पूज्यं युग्मेषु द्वितयं न हि ।।
विषमा नैव पूज्याः स्युर्विषमे एक एव हि ।। ४२ ।।
गृहेऽग्निदग्धा भग्ना वा नैव पूज्या वसुन्धरे ।।
आसां तु पूजनाद्गेहे उद्वेगं प्राप्नुयाद्गृही ।। ४३ ।।
शालग्राम शिला भग्ना पूजनीया सचक्रका ।ऽ।

खण्डिता स्फुटिता वापि शालग्रामशिला शुभा ।। ४४ ।।
शिला द्वादश वै देवि शालग्रामसमुद्भवाः ।।
विधिवत्पूजिता येन तस्य पुण्यं वदामि ते ।।४५।।
कोटिद्वादशलिङ्गैस्तु पूजितैः स्वर्णपङ्कजैः ।।
यत्स्याद्द्वादशकल्पैस्तु दिनेनैकेन तद्भवेत् ।।४६ ।।
यः पुनः पूजयेद्भक्त्या शालग्रामशिलाशतम् ।।
तत्फलं नैव शक्तोऽहं वक्तुं वर्षशतैरपि ।। ४७ ।।
सर्वैर्वर्णैस्तु सम्पूज्याः प्रतिमाः सर्वदेवताः ।।
लिङ्गान्यपि तु पूज्यानि मणिभिः कल्पितास्तथा ।। ४८ ।।
शालग्रामो न स्पृष्टव्यो हीनवर्णैर्वसुन्धरे ।।
स्त्रीशूद्रकरसंस्पर्शो वज्रस्पर्शाधिको मतः ।। ४९ ।।
मोहाद्यः संस्पृशेच्छूद्रो योषिद्वापि कदाचन ।।
पच्यते नरके घोरे यावदाभूतसंप्लवम् ।।186.५० ।।
यदि भक्तिर्भवेत्तस्य स्त्रीणां वापि वसुन्धरे ।।
दूरादेवास्पृशन्पूजां कारयेत्सुसमाहितः ।। ५१ ।।
चरणामृतपानेन सर्वपापक्षयो भवेत् ।।
अभक्ष्यं शिवनिर्माल्यं पत्रं पुष्पं फलं जलम् ।। ५२ ।।
शालग्रामशिलायोगात्पावनं तद्भवेत्सदा ।।
दद्याद्भक्ताय यो देवि शालग्रामशिलां नरः ।। ५३ ।।
सुवर्णसहितां तस्य यत्पुण्यं तच्छृणुष्व मे ।।
सुवर्णसहिता भूमिः सपर्वतवनाकरा ।। ५४ ।।
ससमुद्रा भवेद्दत्ता सत्पात्राय वसुन्धरे ।।
शालग्रामशिलायास्तु मूल्यमुद्घाटयेत्क्वचित् ।। ।।
विक्रेता क्रयकर्त्ता च नरके नीयते ध्रुवम् ।।
पूजाफलं न शक्नोति वक्तुं वर्षशतैरपि ।। ५६ ।।
एतत्ते कथितं गुह्यं प्रतिमा स्थापनं प्रति ।।
शालग्रामे विशेषश्च लिङ्गादीनां च यो भवेत् ।।५७।।
पूजनादौ विधिश्चापि किमन्यच्छ्रोतुमिच्छसि ।।५८।
इति श्रीवराहपुराणे प्रागितिहासे भगवच्छास्त्रे रौप्यसौवर्णार्चालिंगादिस्थापनसंख्यादिकं नाम
षडशीत्यधिकशततमोऽध्यायः ।। १८६ ।।

अथ सृष्टिपितृयज्ञौ ।।
सूत उवाच ।।
एवं नारायणाच्छ्रुत्वा सा मही संशितव्रता ।।
कराभ्यामञ्जलिं कृत्वा माधवं पुनरब्रवीत् ।। १ ।।
धरण्युवाच ।।
श्रुतमेतन्मयाख्यानं क्षेत्रस्य च महत्फलम् ।।
एकं मे परमं गुह्यं तद्भवान्वक्तुमर्हति ।। २ ।।
पितृयज्ञस्य माहात्म्यं सोमदत्तो नराधिपः ।।
मृगयां समुपागम्य यत्त्वया पूर्वभाषितम् ।।३ ।।
को गुणः पितृयज्ञस्य कथमेव प्रयुज्यते ।।
केन चोत्पादितं श्राद्धं कस्मिन्नर्थे किमात्मकम् ।। ४ ।।
एतदिच्छाम्यहं श्रोतुं विस्तरेण वदस्व मे।।
श्रीवराह उवाच ।।
साधु भूमे महाभागे यन्मां त्वं परिपृच्छसि ।। ५ ।।
मोहितासि वरारोहे भाराक्रान्ता वसुन्धरे ।।
दिव्यां ददामि ते बुद्धिं शृणु सुन्दरि तत्त्वतः ।।६।।
कथयिष्यामि ते ह्येवं श्राद्धोत्पत्तिविनिश्चयम् ।।
आदौ स्वर्गस्य चोत्पत्तिं देवानां च वरानने ।।७ ।।
निष्प्रभेऽस्मिन्निरालोके सर्वतस्तमसावृते ।।
स्रष्टुं वै बुद्धिरुत्पन्ना त्रैलोक्यं सचराचरम् ।।८।।
सोऽहं च शेषपर्यङ्के एकश्चैव पराङ्मुखः ।।
स्वपामि च वरारोहे अनन्तशयने ह्यहम् ।। ९ ।।
निद्रां मायामयीं कृत्वा जागर्मि च स्वपामि वा ।।
विष्णुमायामयं कृत्वा जानासि त्वं न धारिणि ।।187.१०।।
युगं युगसहस्राणि यास्यन्ति च गतानि च ।।
न त्वं मम विजानासि ज्ञातुं मायां यशस्विनि ।। ११ ।।
धारितं मम सुश्रोणि दिवा पंचशतानि च ।।
वाराहं रूपमादाय न जानासि हि भामिनि ।। १२ ।।
यन्मां पृच्छसि वै ज्ञातुमात्मानं च यशस्विनि ।।
एकमूर्त्तिस्त्रिधा जातो ब्रह्मविष्णु हरात्मकः ।। १३ ।।
क्रोधहेतोर्मया सृष्ट ईश्वरोऽसुरनाशनः ।।
मम नाभ्यामभूत्पद्मं पद्मगर्भः पितामहः ।। १४।।
एवं त्रयो वयं देवाः कृत्वा ह्येकार्णवां महीम् ।।

तिष्ठाम परमप्रीत्या मायां कृत्वा तु वैष्णवीम् ।। १५ ।।
सर्वं तज्जलपूर्णं तु न चाज्ञायत किञ्चन ।।
वटमेकं वर्जयित्वा विष्णुमूलं यशोद्रुमम् ।। १६ ।।
तिष्ठाम वटवृक्षेऽहं मायया बालरूपधृक् ।।
पश्यामि च जगत्सर्वं त्रैलोक्यं यन्मया कृतम् ।। १७ ।।
वारयामि वरारोहे जानासि त्वं धरे शुभे ।।
कालेन तु तदा देवि कृत्वा वै वडवामुखम् ।। १८ ।।
विनिस्सृतं जलं तत्र मायया तदनन्तरम् ।।
प्रलये च विनिर्वृत्ते ब्रह्मा लोकपितामहः ।। १९ ।।
मुहूर्त्तं ध्यानमास्थाय भाषितो वचनं मया ।।
शीघ्रमुत्पादय ब्रह्मन्देवतासुरमानुषान् ।। 187.२० ।।
एवमुक्तो मया देवि गृह्य तत्र कमण्डलुम् ।।
उपस्पृश्य शुचिर्भूत्वा ब्रह्मा चोत्पादयन्सुरान् ।। २१ ।।
आदित्या वसवो रुद्रा अश्विनौ च मरुद्गणाः ।।
तारणार्थं च सर्वेषां ब्राह्मणान्भुवि दैवतान् ।। २२ ।।
बाहुभ्यां क्षत्रमुत्पन्नं वैश्या ऊरुविनिःस्सृताः ।।
पद्भ्यां विनिःसृताः शूद्राः सर्ववर्णोपचारकाः ।। २३ ।।
देवताश्चासुरा देवि जातास्ते ब्रह्मणस्तथा ।।
देवता ह्यसुराः सर्वे तपोवीर्यबलान्विताः ।। २४ ।।
आदित्या वसवो रुद्रा अश्विनौ च मरुद्गणाः ।।
देवतास्तु त्रयस्त्रिंशददित्यां जनयन्पुरा ।। २९ ।।
दित्यां च जनिताः पुत्रा असुराः सुरशत्रवः ।।
प्रजापतिश्चाजनयदृषींश्चैव तपोधनान् ।। २६ ।।
तेजसा भास्कराकाराः सर्वे शास्त्रविदो द्विजाः ।।
तेषां पुत्राश्च पौत्राश्च जनिता ब्रह्मसूनुना ।। २७ ।।
निमेस्तु वंशसम्भूतो आत्रेय इति विश्रुतः ।।
जातमात्रो महात्मा स श्रीमांश्चापि तपोनिधिः ।। २८ ।।
एकचित्तं समाधाय तपश्चरति निश्चलः ।।
पंचाग्निर्वायुभक्षश्च एकपादोर्द्ध्वबाहुकः ।। २९ ।।
शीर्णपर्णाम्बुभक्षश्च शिशिरे च जलेशयः ।।
स कृच्छ्रे फलभक्षश्च पुनश्चान्द्रायणं चरन् ।। 187.३० ।।
वर्षाणां च सहस्राणि तपस्तप्त्वा वसुन्धरे ।।
मृत्युकालमनुप्राप्तस्ततः पञ्चत्वमागतः ।। ३१ ।।

नष्टं च तं सुतं दृष्ट्वा निमेः शोक उपाविशत् ।।
पुत्रशोकाभिसंयुक्तो दिवा रात्रौ च चिन्तयन् ।। ३२ ।।
निमिः कृत्वा ततः शोकं विधानात्तत्र माधवि ।।
तं मनोगतसंकल्पं त्रिरात्रे प्रत्यपद्यत ।। ३३ ।।
तस्य प्रतिविशुद्धस्य माघमासे तु द्वादशीम् ।।
मानसं सृज्य विषयं बुद्धिर्विस्तारगामिनी ।।३४ ।।
स निमिश्चिन्तयामास श्राद्धकल्पं समाहितः ।।
यानि तस्यैव भोज्यानि मूलानि च फलानि च ।। ३५ ।।
यानि कानि च भक्ष्याणि नवश्च रससंभवः ।।
यानि तस्यैव चेष्टानि सर्वमेतदुदाहरेत् ।। ३६ ।।
आमन्त्र्य ब्राह्मणं पूर्वं शुचिर्भूत्वा समाहितः ।।
दक्षिणावर्ततः सर्वमकरोदृषिसत्तमः ।। ३७ ।।
सप्तकृत्वस्ततस्तत्र युगपत्समुपाविशत् ।।
दत्त्वा तु मांसशाकानि मूलानि च फलानि च ।।३८।।
पूजयित्वा तु विप्रान्स सप्तकृत्वश्च सुन्दरि ।।
कृत्वा तु दक्षिणाग्रांश्च कुशांश्च प्रयतः शुचिः ।। ३९ ।।
प्रददौ श्रीमते पिण्डं नामगोत्रमुदाहरन् ।।
तत्कृत्वा स मुनिश्रेष्ठो धर्मसंकल्पमात्मनः ।। 187.४०।।
एवं दिने गते भद्रे ह्यस्तं प्राप्ते दिवाकरे ।।
ब्रह्म कर्मोत्तमं दिव्यं भावसाध्यमुपासत ।। ४१ ।।
एकाकी यतचित्तात्मा निराशी निष्परिग्रहः ।।
शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।। ४२ ।।
नात्युच्चं नातिनीचं च चेलाजिनकुशोत्तरम् ।।
तत्रैकाग्रं मनः कृत्वा यतचित्तो जितेन्द्रियः ।। ४३ ।।
उपविश्यासनेऽयुञ्जद्योगमात्मविशुद्धये ।।
समं कायशिरोग्रीवं धारयन्नचलं स्थितः ।। ४४ ।।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ।।
प्रकाशात्मा विगतभीर्ब्रह्मचारी व्रते स्थितः ।। ४५ ।।
संयम्य मयि चित्तं यो युक्त आसीत मत्परः ।।
प्रयुञ्जीत तदात्मानं मद्भक्तो नान्यमानसः ।। ४६ ।।
एवं निवृत्तसंध्यायां ततो रात्रिरुपागता ।।
पुनश्चिन्तितुमारब्धः शोकसंविग्नमानसः ।। ४७ ।।
कृत्वा तु पिण्ड संकल्पं पश्चात्तापं चकार ह ।।

अकृतं मुनिभिः सर्वं किं मया तदनुष्ठितम् ।। ४८ ।।
निवापकर्म ह्यशुचि पुत्रार्थे विनियोजितम् ।।
अहो स्नेहप्रभावेण मया चाकृतबुद्धिना ।।४९।।
कथं ते मुनयः शापात्प्रदहेयुर्न मामिति ।।
सदेवासुरगन्धर्वपिशाचोरगराक्षसाः ।। 187.५०।।
किं वक्ष्यन्ति च मां सर्वे ये वै पितृपदे स्थिताः ।।
एवं विचिन्त्यमानस्य गता रात्रिर्वसुन्धरे ।। ५१ ।।
पूर्वसन्ध्यानु सम्प्राप्ता उदिते च दिवाकरे ।।
सन्ध्याविधिं विनिर्वर्त्त्य हुत्वाग्नीन्द्विजसत्तमः।। ५२ ।।
पुनश्चिन्तां प्रपन्नः स आत्रेयो ह्यतिदुःखितः ।।
एकाकी भाषते तत्र शोकपीडितमानसः ।। ५३ ।।
धिग्वयो धिक्च मे कर्म धिग्बलं धिक्च जीवितम् ।।
पुत्रं सर्वसुखैर्युक्तं जीवितं हि न दृश्यते ।। ५४ ।।
नरकं पूतिकाख्यातं हृदि दुःखं विदुर्बुधाः ।।
परित्राणं ततः पुत्रादिच्छन्तीह परत्र च ।। ५५ ।।
पूजयित्वा तु देवांश्च दत्त्वा दानं त्वनेकशः ।।
हुत्वाग्निं विधिवच्चैव स्वर्गं तु लभते नरः ।। ५६ ।।
पुत्रेण लभते येन पौत्रेण च पितामहाः ।।
अथ पुत्रस्य पौत्रेण मोदन्ते प्रपितामहाः ।। ५७ ।।
पुत्रेण श्रीमता हीनं नाहं जीवितुमुत्सहे ।।
एतस्मिन्नन्तरे देवि नारदो द्विजसत्तमः ।। ५८ ।।
जगाम तापसारण्यमृष्याश्रमविभूषितम् ।।
सर्वकामयुतं रम्यं बहुपुष्पफलोदकम् ।। ५९ ।।
तत्प्रविश्याश्रमपदं भ्राजमानं स्वतेजसा ।।
तं दृष्ट्वा पूजयामास स्वागतेनाथ धर्मवित् ।। 187.६० ।।
तस्मै दत्त्वा पाद्यमर्घ्यं आसने चोपवेश्य च ।।
उपविश्यासने देवि नारदो वाक्यमब्रवीत ।। ६१ ।।
नारद उवाच ।।
निमे शृणु महाप्राज्ञ शोकमुत्सृज्य दूरतः ।।
अशोच्यानन्वशोचस्त्वं प्रज्ञावान्नावबुध्यसे ।। ६२ ।।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ।।
मृतं वा यदि वा नष्टं यो यान्तमनुशोचति ।। ६३ ।।
अमित्रास्तस्य हृष्यन्ति स चापि न निवर्त्तते ।।

अमरत्वं न पश्यामि त्रैलोक्ये सचराचरे ।। ६४ ।।
देवतासुरगन्धर्वा मानुषा मृगपक्षिणः ।।
सर्वे कालवशं यान्ति सर्वे कालमुदीक्षते ।। ६५ ।।
जातस्य सर्वभूतस्य कालो मृत्युरुपस्थितः ।।
अवश्यं चैव गन्तव्यं कृतान्तविहितेन च ।। ६६ ।।
तव पुत्रो महात्मा वै श्रीमान्नाम श्रियो निधिः ।।
पूर्णं वर्षसहस्रं तु तपः कृत्वा सुदुश्चरम् ।। ६७ ।।
मृत्युकालमनुप्राप्य गतो दिव्यां परां गतिम् ।।
एतत्सर्वं विदित्वा तु नानुशोचितुमर्हति ।। ६८ ।।
नारदेनैवमुक्ते तु श्रुत्वा स द्विजसत्तमः ।।
प्रणम्य शिरसा पादौ निमिरुद्विग्नमानसः ।। ६९ ।।
भीतो गद्गदया वाचा निःश्वसंश्च मुहुर्मुहुः ।।
सव्रीडो भाषते विप्रः कारुण्येन समन्वितः ।। 187.७० ।।
अहो मुनिवरश्रेष्ठ अहो धर्मविदां वर ।।
सान्त्वितोऽस्मि त्वया विप्र वचनैर्मधुराक्षरैः ।। ७१ ।।
प्रणयात्सौहृदाद्वापि स्नेहाद्वक्ष्यामि तच्छृणु ।।
शोको निरन्तरं चित्ते ममैतद्धृदि वर्त्तते ।। ७२ ।।
कृतस्नेहस्य पुत्रार्थे मया संकल्प्य यत्कृतम् ।।
तर्पयित्वा द्विजान्सप्त अन्नाद्येन फलेन च ।। ७३ ।।
पश्चाद्विसर्जितं पिण्डं दर्भानास्तीर्य भूतले ।।
उदकानयनं चैव ह्यपसव्येन वासितम् ।। ७४ ।।
शोकस्य तु प्रभावेण एतत्कर्म मया कृतम् ।।
अनार्यजुष्टमस्वर्ग्यमकीर्त्तिकरणं द्विज ।। ७५ ।।
नष्टबुद्धिस्मृतिसत्त्वो ह्यज्ञानेन विमोहितः ।।
न च श्रुतं मया पूर्वं न देवैर्ऋषिभिः कृतम् ।। ७६ ।।
भयं तीव्रं प्रपश्यामि मुनिशापात्सुदारुणात् ।।
नारद उवाच ।।
न भेतव्यं द्विजश्रेष्ठ पितरं शरणं व्रज ।। ७७ ।।
अधर्मं न च पश्यामि धर्मो नैवात्र संशयः ।।
नारदेनैवमुक्तस्तु निमिर्ध्यानमुपाविशत् ।। ७८ ।।
कर्मणा मनसा वाचा पितरं शरणं गतः ।।
ततोऽतिचिन्तयामास वंशकर्त्तारमात्मनः ।। ७९ ।।
ध्यायमानस्ततोऽप्याशु आजगाम तपोधनम् ।।

पुत्रशोकेन सन्तप्तं पुत्रं दृष्ट्वा तपोधनम् ।। 187.८० ।।
पुत्रमाश्वासयामास वाग्भिरिष्टाभिरव्ययैः ।।
निमे संकल्पितस्तेऽयं पितृयज्ञस्तपोधन ।। ८१ ।।
पितृयज्ञेति निर्दिष्टा धर्मोऽयं ब्रह्मणा स्वयम् ।।
ततो ह्ययतितरो धर्मः क्रतुरेकः प्रतिष्ठितः ।। ८२ ।।
कृतः स्वयंभुवा पूर्वं श्राद्धं यो वित्त्वित्तमः ।।
शृण्वतो नारदस्यापि विधिं विधिविदां वरः ।। ८३ ।।
श्राद्धकर्मविधिं चैव प्रेतकर्म च या क्रिया।।
शृषु सुन्दरि तत्त्वेन यथा दाता सपुत्रकः ।।८४।।
मम चैव प्रसादेन तस्य बुद्धिं ददाम्यहम् ।।
जातस्य सर्वभूतस्य कालमृत्युरुपस्थितः ।। ८५ ।।
अवश्यमेव गन्तव्यं धर्मराजस्य शासनात् ।।
अमरत्वं न पश्यामि पिपीलादीनि जन्तवः ।। ८६ ।।
जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।।
मोक्षः कर्मविशेषेण प्रायश्चित्तेन च ध्रुवम् ।। ८७ ।।
सत्त्वं रजस्तमश्चैव त्रयः शारीरजाः स्मृताः ।।
अल्पायुषो नराः पश्चाद्भविष्यन्ति युगक्षये ।। ८८ ।।
सात्त्विकं नावबुद्ध्यन्ति कर्मदोषेण तामसः ।।
तामसं नरकं विन्द्यात्तिर्यग्योनिं च राक्षसीम्।।८९।।
सात्त्विकं मुक्तियानाय यान्ति वेदविदो जनाः।।
धर्मज्ञानं तथैश्वर्यं वैराग्यमिति सात्विकम् ॥187.९०॥
क्रूरो भीरुर्विषादि च हिंसको निरपत्रपः॥
अज्ञानान्धश्च पैशाचमेतेषां तामसा गुणाः॥९१॥
तामसं तद्विजानीयादुच्यमानो न बुद्ध्यति ॥
दुर्मदोऽश्रद्धधानश्च विज्ञेयास्तामसा नराः ॥ ९२ ॥।
प्रबलो वाचि युक्तश्चाचलबुद्धिः सदायतः ॥
शूरः सर्वेषु व्यक्तात्मा विज्ञेया राजसा नराः।।९३।।
क्षान्तो दान्तो विशुद्धात्मा विज्ञेयः श्रद्धयान्वितः।।
तपःस्वाध्याशीलश्च एतेषां सात्विका गुणाः।।९४।।
एवं सञ्चिन्तयानस्तु न शोकं कर्तुमर्हसि ॥
त्यज शोकं महाभाग शोकः सर्वविनाशनः ॥ ९५ ।॥
शोको दहति गात्राणि बुद्धिः शोकेन नश्यति ॥
लज्जा धृतिश्च धर्मश्च श्रीः कीर्तिश्च स्मृतिर्नयः ॥९६॥

त्यजन्ति सर्वधर्मश्च शोकेनोपहतं नरम्॥
एवं शोकं त्यजित्वा तु निःशोको भव पुत्रक ॥९७॥
मूढः स्नेहप्रभावेण कृत्वा हिंसानृते तथा ॥
पच्यते नरके घोरे ह्यात्मदोषैर्वसुन्धरे॥ ९८ ॥
स्नेहं सर्वेषु संयम्य बुद्धिं धर्मे नियोजयेत् ॥
धर्मलोक हितार्थाय शृणु सत्यं ब्रवीम्यहम् ॥९९॥
चातुर्वर्णस्य वक्ष्यामि यश्च स्वायंभुवोऽब्रवीत् ॥
नेमिप्रभृतिनामेवं येन श्राद्धं प्रवर्त्तते॥187.१००॥
कण्ठस्थानं गते जीवे भीतिविभ्रान्तमानसः ॥
ज्ञात्वा च विह्वलं तत्र शीघ्रं निःसारयेद्गृहात् ॥ १० १ ॥
कुशास्तरणशायी च दिशः सर्वा न पश्यति॥
लब्धस्मृतिर्मुहूर्तं तु यावज्जीवो न पश्यति ॥१०२॥
वाचयेत्स्नेहभावेन भूमिदेवा द्विजातयः ॥
सुवर्णं च हिरण्यं च यथोत्पन्नेन माधवि ॥१०३॥
परलोकहितार्थाय गोप्रदानं विशिष्यते ॥
सर्वदेवमया गाव ईश्वरेणावतारिताः ॥ १०४ ।॥
अमृतं क्षरयन्त्यश्च प्रचरन्ति महीतले ॥
एतासां चैव दानेन शीघ्रं मुच्येत किल्बिषात् ॥१०५॥
पश्चाछ्रुतिपथं दिव्यमुत्कर्णेन च श्रावयेत् ॥
यावत्प्राणान्प्रमुञ्चेत कृत्वा कर्म सुदुष्करम् ॥१०६॥
दृष्ट्वा सुविह्वलं ह्येनं मम मार्गानुसारिणम्॥
प्रयाणकाले तु नरो मन्त्रेण विधिपूर्वकम् ॥१०७॥
मंत्रेणानेन कर्तव्यं सर्वसंसारमोक्षणम् ॥
मधुपर्कं त्वरन् गृह्य चेमं मन्त्रमुदाहरेत् ॥ १०८॥
मन्त्रः-
ॐ गृह्णीष्व मे सुविमलं मधुपर्कमाद्यं संसारनाशनकरं त्वमृतेन तुल्यम् ॥
नारायणेन रचितं भगवत्प्रियाणां दाहे च शान्तिकरणं सुरलोकपूज्यम् ॥ १०९ ॥
तत एतेन मन्त्रेण दद्याद्वै मधुपर्ककम् ॥
मृत्युकाले तु पुरुषो परलोकसुखावहम् ॥ 187.११० ॥
एवं विनिस्सृते प्राणे संसारं च न गच्छति ॥
नष्टसंज्ञं समुद्दिश्य ज्ञात्वा मृत्युवशङ्गतम् ॥१११॥
महावनस्पतिं गत्वा गन्धांश्च विविधानपि ॥
घृततैलसमायुक्तं कृत्वा वै देहशोधनम् ॥११२॥।

तेजोऽव्ययकरं चास्य तत्सर्वं परिकल्प्य च ॥
दक्षिणायां शिरः कृत्वा सलिले सन्निधाप्य च ॥११३॥
तीर्थाद्यावाहनं कृत्वा स्नापनं तस्य कारयेत् ॥
गयादीनि च तीर्थानि ये च पुण्याः शिलोच्चयाः॥११४॥
कुरुक्षेत्रं च गङ्गा च यमुना च सरिद्वरा॥
कौशिकी च पयोष्णी च सर्वपापप्रणाशिनी ॥११५॥
गण्डकी भद्रनामा च सरयूर्बलदा तथा ॥
वनानि नव वाराहे तीर्थे पिण्डारके तथा ॥ ११६ ॥|
पृथिव्यां यानि तीर्थानि चत्वारः सागरास्तथा ॥
सर्वाणि मनसा ध्यात्वा स्नानमेवं तु कारयेत् ॥ ११७ ।॥
प्राणैर्हृतं तु तं ज्ञात्वा चितां कृत्वा विधानतः ॥
तस्या उपरि संस्थाप्य दक्षिणाग्रं शिरस्तथा ॥११८॥
दिव्यानग्निमुखान्ध्यात्वा गृह्य हस्ते हुताशनम् ॥
प्रज्वाल्य विधिवत्तत्र मन्त्रमेतमुदाहरेत्॥११९॥।
कृत्वा सुदुष्करं कर्म जानता वाप्यजानता॥
मृत्युकालवशं प्राप्य नरः पंचत्वमागतः ॥187.१२०॥
धर्माधर्मसमायुक्तो लोभमोहसमावृतः ॥
दह चैतस्य गात्राणि देवलोकं स गच्छतु ॥ १२१ ।॥
एवमुक्त्वा ततः शीघ्रं कृत्वा चैव प्रदक्षिणाम् ॥
ज्वलमानं तदा वह्निं शिरःस्थाने प्रदापयेत् ॥ १२२ ॥।
चातुर्वर्ण्येषु संस्कारमेवं भवति पुत्रक ॥
गात्राणि वाससी चैव प्रक्षाल्य विनिवर्तयेत्॥१२३॥
मृतं नाम तथोद्दिश्य दद्यात्पिण्डं महीतले॥
तदाप्रभृति चाशौचं देवकर्म न कारयेत्॥१२४॥
इति श्रीवराहपुराणे भगवच्छास्त्रे श्राद्धोत्पत्तिनिरूपणं नाम सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥

अथ पिण्डकल्पश्राद्धोत्पतिप्रकरणम् ॥

धरण्युवाच ॥

देवदेवोऽसि देवानां लोकनाथोऽपरिग्रहः ॥

आाशौचकर्म विधिवच्छ्रोतुमिच्छामि माधव ॥ १ ॥

श्रीवराह उवाच ॥

आशौचं शृणु कल्याणि यथा शुध्यन्ति मानवाः ॥

गतायुषस्तृतीयेन स्नानं कुर्यान्नदीजले ॥ २ ॥

पिण्डं संचूरणं दद्यात्त्रींश्च दद्याज्जलाञ्जलीन् ॥

चतुर्थे पंचमे षष्ठे पिण्डमेकं जलाञ्जलिम् ॥ ३ ॥

अन्यस्थानेषु दातव्यं स्नानात्त्वहनि सप्तमे ॥

एवं प्रतिदिनं कार्यं यावच्च दशमं दिनम् ॥ ४ ॥

क्षारादिना वस्त्रशौचं दिने च दशमे तथा ॥

तिलामलकस्नेहेन गोत्रजः स्नानमाचरेत् ॥ ६॥

पिण्डदानं विवर्त्याथ क्षौरकर्म तु कारयेत् ॥

स्नानं कृत्वा विधानेन ज्ञातिभिः स्वगृहं व्रजेत्।।६।।

एकादशे च दिवसे एकोद्दिष्टं यथाविधि।।

स्नात्वा चैव शुचिर्भूत्वा प्रेतं विप्रेषु योजयेत्।।७।।

एकोद्दिष्टं मनुष्याणां चातुर्वर्ण्यस्य माधवि॥

यथैकं द्रव्यसंयुक्तं स्वं विप्रं भोजयेत्तदा ॥८॥

स्नात्वा चैव शुचिर्भूत्वा प्रेतं प्रेतेषु योजयेत्॥

एकोद्दिष्टं तु द्रव्याणां चातुर्वर्ण्यस्य माधवि।।९।।

अपाकद्रव्यं संगृह्य ब्रह्मणो वचनं यथा।।

त्रिषु वर्णेषु कर्त्तव्यं पाकभोजनमित्युत।।188.१०।।

शुश्रूषया विपन्नानां शूद्राणां च वरानने।।

त्रयोदशे दिने प्राप्ते सुपक्वैर्भोजयेद्द्विजान्।।११।।

मृतस्य नाम चोद्दिश्य यस्यार्थे च प्रयोजितः।।

स्वर्गतस्येति सङ्कल्प्य कृत्वा ब्राह्मणमन्दिरम् ॥ १२ ॥

गत्वा निमन्त्रितं विप्रं नम्रो भूत्वा समाहितः ॥

मन्त्रेणानेन भो देवि मनस्येव पठन्ति तम् ॥ १३ ॥

गतोऽसि दिव्यलोके त्वं कृतान्तविहितेन च ॥

मनसा वायुभूतस्त्वं विप्रमेनं समाश्रय ॥ १४ ॥

अस्तङ्गते तथादित्ये गत्वा ब्राह्मणमन्दिरम् ॥

दत्त्वा तु पाद्यं विधिवन् नमस्कृत्य द्विजोत्तमम् ॥ १९ ॥

पादसंवाहनं कार्यं प्रेतस्य हितकाम्यया ॥
प्रेतभोगशरीरे तु ब्राह्मणस्य च सुन्दरि ॥१६॥
यावत्तु तिष्ठते तत्र प्रेतभोगमुदीक्षते ॥
तावन्न संस्पृशेद्भूमे मम गात्रं प्रतिष्ठितम् ॥१७॥
प्रभातायां तु शर्वर्यामुदिते च दिवाकरे ॥
श्मश्रुकर्म प्रकर्त्तव्यं विप्रस्य तु यथाविधि॥१८॥
स्नापनाभ्यञ्जनं कार्यं प्रेतसन्तोषदायकम्॥
गृहीत्वा भूमिभागं च स्थण्डिलं तत्र कारयेत्॥१९॥
निपातदेशं संगृह्य शुचिदेशे समाहितः॥
नदीकूले निखाते वा प्रेतभूमिं विनिर्देशेत्॥188.२०॥
चतुःषष्टिकृतं भागं यथावत्सुकृतं भवेत्॥
ततो दक्षिणपूर्वेषु दिग्विभागेषु सुन्दरि॥२१ ॥
छायायां कुंजरस्यापि नदीकूलद्रुमे तथा ॥
चाण्डालादिप्रहीणे तु प्रेतकार्यं समाचरेत् ॥२२॥
यं देशं च न पश्यन्ति कुक्कुटश्वानशूकराः ॥
श्वा चापोहति रावेण गर्जितेन च शूकरः।।२३।।
कुक्कुटः पक्षवातेन चाण्डालश्च यथा धरे।।
तत्र कुर्वन्ति ये श्राद्धं पितृणां बन्धनप्रदम्।।२४।।
वर्जनीया बुधैरेते प्रेतकार्येषु सुन्दरि ॥
देवतासुरगन्धर्वाः पिशाचोरगराक्षसाः॥ २५ ॥
नागा भूतानि यज्ञाश्च ये च स्थावरजङ्गमाः ॥
स्नानं कृत्वा यथा देवि तव पृष्ठे प्रतिष्ठिताः ॥ २६ ॥।
धारयिष्यामि सुश्रोणि विष्णुमायाततं जगत् ॥
चण्डालमादितः कृत्वा नराणां तु शुभाशुभम्॥ २७॥
स्नानं कुर्वन्तु ते भूमे स्थण्डिले तदनन्तरे ॥
अकृत्वा पृथिवीभागं निवापं ये तु कुर्वते ॥ २८॥
त्वदधीनं जगद्भद्रे तवोच्छिष्टं हतं भवेत् ॥
न देवाः पितरस्तस्य गृह्णन्तीह कदाचन ॥ २९ ॥
पतन्ति नरके घोरे तेनोच्छिष्टेन सुन्दरि ॥
स्थण्डिले प्रेतभागं तु दद्यात्पूर्वाह्णिकं तु तम् ॥ 188.३० ॥
कृत्वा तु पिण्डसङ्कल्पं नामगोत्रेण माधवि ॥
पश्चादश्नन्ति गोत्राणि कुलजाश्चैकभोजनाः ॥ ३१ ॥
न दद्यादन्यगोत्रेभ्यो ये न भुञ्जन्ति तत्र वै ॥

चतुर्णामपि वर्णानां प्रेतकार्येषु सुन्दरी ॥ ३२ ॥
एवं दत्तेन प्रीयन्ते प्रेतलोकगता नराः ॥
अदत्वा प्रेतभागं तु भुङ्क्ते यस्तत्र मानवः ॥ ३३ ॥
गत्वा महानदीं सोऽपि सचैलं स्नानमाचरेत् ॥
तीर्थानि मनसा गत्वा त्रिभिरभ्युक्षयेद्ध्रुवम् ॥ ३४ ॥
एवं शुद्धिं ततः कृत्वा ब्राह्मणान् शीघ्रमानयेत् ॥
आगतांश्च द्विजान् दृष्ट्वा कर्त्तव्या स्वागतक्रिया ॥३५॥
अर्घ्यं पाद्यं ततो दद्याद्धृष्टपुष्टेन माधवि ॥
आसनं चोपकल्पेत मन्त्रेण विधिपूर्वकम् ॥३६॥
मन्त्रः-
इदं ते आसनं दत्तं विश्रामं क्रियतां द्विज॥
कुरुष्व मे प्रसादं च सुप्रसीद् द्विजोत्तम ॥ ३७॥
उपवेश्यासने विप्रं छत्रं सङ्कल्पयेत्पुनः ॥
निवारणार्थमाकाशे भूता गगनचारिणः ॥३८॥
देवगन्धर्व यक्षाश्च सिद्धसंघा महासुराः ॥
धारणार्थं तथाकाशे छत्रं तेजस्विनां कृतम् ॥ ३९ ॥।
प्रेतस्य च हितार्थाय धारयेत वसुन्धरे ॥
पूर्वं संहृष्टतुष्टेन प्रेतभागं च दापयेत् ॥ 188.४० ॥
छत्रमावरणार्थं तु दद्याञ्चैव द्विजातये ॥
आकाशे तत्र पश्यन्ति देवाः सिद्धपुरोगमाः॥४१॥
गन्धर्वा ह्यसुराः सिद्धा राक्षसाः पिशिताशिनः ॥
दृश्यमानेषु सर्वेषु प्रेतः संव्रीडितो भवेत् ॥४२॥
व्रीडमानं ततो दृष्ट्वा हसंत्यसुरराक्षसाः ॥
एवं निवारणं छत्रमादित्येन कृतं पुरा॥४३॥
प्रेतलोकगतानां च सर्वदेवर्षिणां पुरा ॥
अग्निवर्षं शिलावर्षं तप्तं तत्र जलोदकम्॥४४॥
भस्मवर्षं ततो घोरमहोरात्रेण माधवि ॥
पादौ च ते न दह्येतां यमस्य विषयं गते ॥
तमोऽन्धकारविषमं दुर्गमं घोरदर्शनम् ॥४७॥
एकाकी दुःसहं लोके पथा येन स गच्छति ॥
कालो मृत्युश्च दूतश्च यष्टिमुद्यम्य पृष्ठतः ॥ ४८॥
अहोरात्रेण घोरेण प्रेतं नयति माधवि ॥
दद्यात्तदर्थं विप्राय पदत्रे च सुखावहे ॥ ४९॥

तप्तवालुमयी भूमिः कण्टकैरुपसंस्तृता।।
तेन दुर्गाणि तरति दत्तयोपानहात्र वै।।188.५०।।
पश्चाद्धूपं च दीपं च दद्याद्वै मन्त्रपूर्वकम्।।
याति येन विजानीयात्पृथक्प्रेतेन योजयेत् ॥ ५१ ॥
नामगोत्रमुदाहृत्य प्रेताय तदनन्तरम् ॥
शीघ्रमावाहयेद्भूमे दर्भपात्रे च भूतले॥५२॥
मन्त्रः-
इह लोकं परित्यज्य गतोऽसि परमां गतिम् ॥
गृहण गन्धं मुदा युक्तो भक्त्या प्रेतोपपादितम् ॥ ५३॥
गन्धमन्त्रः-
सर्वगन्धं सर्वपुष्पं धूपं दीपं तथैव च ॥
प्रतिगृहृणीष्व विप्रेन्द्र प्रेतमोक्षप्रदो भव ॥ ५४ ॥
एवं वस्त्राणि विप्राय सर्वाण्याभरणानि च ॥
पुनः पुनश्च पक्वान्नं प्रयच्छेत्तु वसुन्धरे ॥ ५५ ॥
एवमादीनि द्रव्याणि प्रेतभोग्यानि सर्वशः ॥
पादशौचादि त्रिः कृत्वा चातुर्वर्ण्यस्य माधवि ॥५६॥
एवंविधः प्रयोक्तव्यः शूद्राणां मन्त्रवर्जितम् ॥
अमन्त्रस्य च शूद्रस्य विप्रो गृहणाति मन्त्रतः ।।५७।।
एतत्सर्वं विनिर्वर्त्य पक्वान्नं भोजयेद्द्विजम्।।
भोक्ष्यमाणेन विप्रेण ज्ञानशुद्धेन सुन्दरि ।।५८।।
प्रेताय प्रथमं दद्यान्न स्पृशेत परात्परम् ।।
सर्वं व्यञ्जनसंयुक्तं प्रेतभागं प्रकल्पयेत् ।।५९।।
देवत्वं ब्राहमणत्वं च प्रेतपिण्डे प्रदीयते ।।
मानुषत्वं निवापेषु ज्ञातव्यं सततं बुधैः ।।188.६०।।
पितृस्थाने प्रदातव्यं विधानान्मन्त्रसंयुतम् ।।
एवं प्रेतेषु विप्रेषु एव कालो न विद्यते ।। ६१।।
हस्तशौचं पुनः कृत्वा हयुपस्पृश्य यथाविधि ।।
समन्त्रं प्रतिगृहणाति पक्वान्नं भक्ष्यभोजनम् ।। ६२ ।।
भुज्यमानस्य विप्रस्य प्रेतभागं च नित्यशः ।।
ज्ञातिवर्गेषु गोत्रेषु सम्बन्धिस्वजनेषु च ।। ६३ ।।
भागस्तत्र प्रदातव्यस्तस्यार्थे यस्य विद्यते ।।
विप्राय दीयमाने तु वारणीयं न केनचित् ।। ६४ ।।
निवारयति यो दत्तं गुरुहत्याफलं लभेत् ।।

न देवा प्रतिगृह्णन्ति नाग्नय पितरस्तथा ।।६५ ।।
एवं विलुप्यते धर्मः प्रेतस्तत्र न तुष्यति ।।
एवं विचिन्त्यमानस्य यथा धर्मो न लुप्यते ।। ६६ ।।
ज्ञातिसम्बन्धिमध्ये तु यो दद्यात्प्रेतभोजनम् ।।
हृष्टेन मनसा विप्रे प्रेतभागं विशेषतः ।। ६७ ।।
कूटवत्प्रतितिष्ठेत दृष्ट्वा तृप्तिं न गच्छति ।।
एवं तु प्रेतभावेन शीघ्रं मुञ्चति किल्बिषात् ।। ६८ ।।
तृप्तिं ज्ञात्वा तु विप्रस्य पक्वान्नेन तु माधवि ।।
दातव्यमुदके तस्य पाणावभ्युक्षणं ततः ।। ६९ ।।
दृष्ट्वा तु प्रोषितं तेन उच्छिष्टं न विसर्ज्जयेत् ।।
ब्राह्मणे नाप्यनुज्ञातः शीघ्रं संरंभयेत्ततः ।। 188.७० ।।
दातव्यं तत्र चोच्छिष्टं येन हेतुमगर्हितम् ।।
उपस्पृश्य विधानेन मम तीर्थगतेन च ।। ७१ ।।
शुचिर्भूत्वा तु विधिवत्कृत्वा शान्त्युदकानि तु ।।
प्रणम्य शिरसा देवि निवापस्थानमागतः ।।
मन्त्रैः स्तुतिस्तु कर्त्तव्या तव भक्त्याऽवतिष्ठता ।। ७२ ।।
नमो नमो मेदिनि लोकमातरुर्व्यै महाशैलशिलाधरायै ।।
नमोनमो धारिणि लोकधात्रि जगत्प्रतिष्ठे वसुधे नमोऽस्तु ते ।।७३ ।।
एवं निवापदानेन तव भक्तेन सुन्दरि ।।
दद्यात्तिलोदकं तस्य नामगोत्रमुदाहरेत् ।। ७४ ।।
जानुभ्यामवनिं गत्वा नमस्कृत्य द्विजोत्तमान् ।।
पाणिं संगृह्य हस्तेन मन्त्रेणोत्थापयेद्द्विजान्।।७५।।
दद्याच्छय्यानं देवि तथैवाञ्जनकङ्कणम् ।।
अंजनं कंकणं गृह्य शय्यामाक्रम्य स द्विजः ।।७६।।
मुहुर्तं तत्र विश्रम्य निवापस्थानमागतः।।
गवां लांगूलमुद्धृत्य दद्याद्ब्राह्मणहस्तके।।७७।।
पात्रेणोदुम्बरस्थेन कृत्वा कृष्णतिलोदकम् ।।
उदाहरेत्तु मन्त्रान्वै सौरभेयान् द्विजातयः ।। ७८ ।।
मन्त्रपूतं तदा तोयं सर्वपापप्रणाशनम् ।।
उद्धृत्य तच्च लांगूलं तोयेनाभ्युक्ष्य वै ततः ।। ७९ ।।
पश्चात्प्रेतं विसर्ज्यैवं दद्याद्दानं द्विजातये ।।
निवापमन्नमशुचिं दद्याद्वायसतर्पणम।।188.८०।।
गत्वा तु ब्राह्मणेभ्योऽपि स्वगृहं यत्र तिष्ठति ।।

पक्वान्नं भोजयेत्सर्वं न तिष्ठेत् प्रतिवासिकम् ।। ८१ ।।
पिपीलिकादिभूतानि प्रेतभागं च सर्वशः ।।
कृत्वा तु तर्पणं देवि यस्यार्थे तस्य कल्पयेत् ।। ८२ ।।
भुक्तेषु तेषु सर्वेषु दीनानाथान् प्रतर्प्य च।।
प्रेतराजपुरं गत्वा प्रयच्छति स माधवि।।८३।।
सर्वान्नमक्षयं तस्य दत्तं भवति सुन्दरि।।
कर्त्तव्य एवं संस्कारः प्रेतभावविशोधनः।।८४।।
नेमिप्रभृतिभिः शौचं चातुर्वर्ण्यस्य सर्वतः।।
भविष्यति न सन्देहो दृष्टपूर्वं स्वयम्भुवा।।८५।।
कृत्वा तु धर्मसंकल्पं प्रेतकार्यं विशेषतः।।
न भेतव्यं त्वया पुत्र प्रेतकार्ये कृते सति ।।८६।।
विस्तरेण मया प्रोक्तं प्रत्यक्षं नारदस्य च।।
त्वया वत्स सुतस्यार्थे क्रतुरेकः प्रतिष्ठितः ।।८७।।
तस्मात्प्रभृति लोकेषु पितृयज्ञो भविष्यति ।।
एवं यास्यति वत्स त्वं न शोकं कर्त्तुमर्हसि ।। ८८ ।।
शिवलोकं ब्रह्मलोकं विष्णुलोकं न सशंयः।।
एवमुक्त्वा तदात्रेयः पितृकर्म यथाविधि ।।८९।।
दातव्यं तु तृतीये च मासे सप्तनवेषु च ।।
एकादशे तथा मासे दद्यात्सांवत्सरीं क्रियाम्।।188.९०।।
प्रेतस्यावाहनं कृत्वा शुचिर्भूत्वा समाहितः ।।
पक्वान्नं भोजयेत्तत्र प्रेतभागं यथाविधि ।।९१ ।।
मन्त्रयुक्तोपचारेण चातुर्वर्ण्यस्य सर्वतः ।।
वृषलानाममन्त्राणां प्रयोक्तव्यं यथाविधि ।। ९२ ।।
प्रेतकार्ये निवृत्ते तु पूर्णे संवत्सरे तथा ।।
प्रयान्ति जन्तवः केचिद्गत्वा गच्छन्ति चापरे ।। ९३ ।।
पितामहः स्नुषा भार्या ज्ञातिसम्बन्धिबान्धवाः ।।
यद्येते बहवः सन्ति स्वप्नोपममिदं जगत् ।। ९४ ।।
स्वयं मुहूर्त्तं रोदित्वा ततो याति पराङ्मुखः ।।
स्नेहपाशेन बद्धो वै क्षणार्द्धान्मुच्यते ततः ।।९५ ।।
कस्य माता पिता कस्य कस्य भार्या सुतास्तथा ।।
युगे युगे तु वर्त्तन्ते मोहपाशेन बध्यते ।।९६।।
स्नेहभावेन कर्त्तव्यः संस्कारो हि मृतस्य च ।।
मातापितृसहस्राणि पुत्रदारशतानि च ।। ९७।।

संसारेष्वनुभूतानि कस्य ते कस्य वा वयम् ।।
स्वयम्भुवा विधिः प्रोक्तः प्रेतसंस्कारलक्षणः ।। ९८ ।।
प्रेतकार्ये निवृत्ते तु पितृत्वमुपजायते ।।
मासि मासि ह्यमायां वै कर्त्तव्यं पितृतर्पणम् ।।९९।।
पिता पितामहश्चैव तथैव प्रपितामहः ।।
जुहुयाद्ब्राह्मणमुखे तृप्तिर्भवति शाश्वती ।। 188.१०० ।।
एवमुक्त्वा स आत्रेयः पितृयज्ञ विनिश्चयम् ।।
मुहूर्तं ध्यानमास्थाय तत्रैवान्तरधीयत ।। १०१ ।।
नारद उवाच ।।
श्रुत्वा तु मृतसंस्कारमात्रेयोक्तं यथाविधि ।।
चातुवर्ण्यस्य सर्वस्य त्वया धर्मः प्रतिष्ठितः ।। १०२ ।।
पितृयज्ञमुपश्राद्धे मासि मासि दिने तथा ।।
वर्त्तयन्ति यथान्यायमृषयश्च तपोधनाः ।। १०३ ।।
निर्दिष्टं ब्राह्मणानां वै शूद्राणां मन्त्रवर्जितम् ।।
नेमिना च कृतं श्राद्धं ततः प्रभृति वै द्विजाः ।। १०४ ।।
कुर्वन्ति सततं श्राद्धं नैमिश्राद्धं तदुच्यते ।।
स्वस्त्यस्तु ते महाभाग यास्यामि मुनिसत्तम ।। १०५ ।।
एवमुक्त्वा मुनिश्रेष्ठो नारदो द्विजतत्तमः ।।
तेजसा द्योतयन्सर्वं गतः शक्रपुरं प्रति ।। १०६ ।।
एवं च पिण्डसंकल्पं श्राद्धोत्पत्तिश्च माधवि ।।
आत्रेयेणैव मुनिना स्थापितं ब्राह्मणेषु च ।। १०७ ।।
इति श्रीवराहपुराणे भगवच्छास्त्रे पिण्डकल्प श्राद्धोत्पत्तिर्नामाष्टाशीत्यधिकशततमोऽध्याय ।। १८८ ।।

अथ पिण्डकल्पोत्पत्तिप्रकरणम् ।।
धरण्युवाच ।।
श्रुतं श्राद्धं यथावृत्तं शौचाशौचांश्च सर्वशः ।।
चतुर्णामपि वर्णानां प्रेतभोज्यं यथाविधि ।। १ ।।
उत्पन्नं संशयं मेऽद्य भगवन्वक्तुमर्हसि ।।
चातुर्वर्ण्येषु सर्वेषु दद्याद्दानं द्विजोत्तमे ।। २ ।।
प्रतिगृह्णन्ति ये तत्र प्रेतभागं विशेषतः ।।
अनिष्टं गर्हितं तत्र प्रेतेन सह भोजनम् ।। ३ ।।
भुक्त्वा तेषां द्विजो देव मुच्यते केन कर्मणा ।।
कथं ते तारयिष्यन्ति दातारं पुरुषोतम ।। ४ ।।
प्रणयात्स्त्रीस्वभावेन पृच्छामि त्वां जनार्दन ।।
एवमुक्तोऽपि भूम्या ऽसौ शंखदुन्दुभिनिःस्वनः ।। ५ ।।
वराहरूपी भगवान्प्रत्युवाच वसुन्धराम् ।।
श्रीवराह उवाच ।।
साधु भूमे वरारोहे यन्मां त्वं परिपृच्छसि ।।६।।
कथयिष्यामि ते देवि तारयन्ति यथा द्विजाः।।
भुक्त्वा तु प्रेतभोज्यानि ब्राह्मणो ज्ञानदुर्बलः ।। ७ ।।
विशोधनार्थं देहस्य उपवासं तु कारयेत् ।।
अहोरात्रोषितो भूत्वा विप्रो ज्ञानेन संयुतः ।। ८ ।।
पूर्वसंध्यां विनिर्वर्त्य कृत्वा चैवाग्नितर्पणम् ।।
तिलहोमं प्रकुर्वीत शान्तिमङ्गलपाठकः।।९।।
प्राक्स्रोतसं नदीं गत्वा स्नानं कृत्वा विधानतः ।।
पंचगव्यं ततः पीत्वा मधुपर्केण संयुतम् ।। 189.१० ।।
औदुम्बरे च पात्रे च कृत्वा शान्त्युदकानि च।।
प्रोक्षयेच्च गृहं सर्वं यत्रातिष्ठत्स्वयं द्विजः ।। ११ ।।
देवाश्चाग्निमुखाः सर्वे तर्पयित्वा विभागशः ।।
भूतानां च बलिं दद्याद्ब्राह्मणेभ्यश्च भोजनम् ।। १२ ।।
एका गौस्तु प्रदातव्या पापक्षयकरी तदा ।।
एवं तु कुरुते यश्च स याति परमां गतिम् ।। १३ ।।
प्रेतान्ने चोदरस्थे तु कालधर्ममुपागतः ।।
आकल्पं नरके घोरं वसमानः सुदुःखितः ।। १४ ।।
प्राप्नोति राक्षसत्वं वै ततो मुच्येत किल्बिषात् ।।
प्रायश्चित्तं तु कर्त्तव्यं दातृभोक्तृसुखावहम् ।। १५ ।।

गोहस्त्यश्वधनादीनि सागरान्तानि माधवि ।।
प्रतिगृह्णन्ति ये विप्रा मन्त्रेण विधिपूर्वकम् ।। १६ ।।
प्रायश्चित्तं चरेद्यस्तु स तारयति निश्चितम् ।
द्विजो ज्ञानेन सम्पन्नो वेदाभ्यासरतः सदा ।। १७ ।।
स तारयति चात्मानं दातारं नैव संशयः ।।
ब्राह्मणो नावमन्तव्यस्त्रिभिर्वर्णैर्धराधरे ।। १८ ।।
दैवे च जन्मनक्षत्रे श्राद्धकाले च पर्वसु ।।
प्रेतकार्येषु सर्वेषु परीक्ष्य निपुणं द्विजम् ।। १९ ।।
वेदविद्याव्रतस्नातं बहुधर्मनिरन्तरम् ।।
शीलयुक्तं सुसन्तुष्टं धर्मज्ञं सत्यवादिनम् ।। 189.२० ।।
क्षमायुक्तं च शास्त्रज्ञमहिंसायां रतं तथा ।।
एभिर्गुणैस्तु संयुक्तं ब्राह्मणं प्राप्य सत्वरः ।। २१ ।।
दद्याद्दानानि विप्राय स वै तारयितुं क्षमः ।।
कुण्डगोलेषु यद्दत्तं निष्फलं तत्तु जायते ।। २२ ।।
कुण्डगोलं प्रतिग्राहि दातारं चाप्यधो नयेत् ।।
पित्र्ये कर्मणि चैकं तु कुण्डं वा गोलकं तथा ।। २३ ।।
दृष्ट्वा तं पितरो यान्ति निराशा निरयं द्रुतम् ।।
दैवे कर्मणि चैवं तु तेषां दत्तं सुनिष्फलम् ।। २४ ।।
तस्माद्दानं न दातव्यमपात्राय यशस्विनि ।।
अत्रार्थे यत्पुरा वृत्तं तच्छृणुष्व वसुन्धरे ।।२५।।
अवन्तीविषये कश्चिद्राजा ह्यत्यन्तधार्मिकः ।।
नाम्ना मेधातिथिश्चैव मनुवंशविवर्द्धनः ।। २६ ।।
राज्ञः पुरोहितश्चासीच्चन्द्रशर्म्मा द्विजोत्तमः ।।
आत्रेयगोत्रे चोत्पन्नो वेदवादरतः सदा ।। २७ ।।
स राजा ब्राह्मणेभ्यश्च गा ददाति दिने दिने ।।
शतं दत्त्वा विधानेन पृश्चाद्भुङ्क्ते नराधिपः ।। २८ ।।
गते बहुतिथे काले राज्ञो मेधातिथेः पितुः ।।
श्राद्धस्य दिवसः प्राप्तो वैशाखे वरवर्णिनि ।।
विप्रानाह्वापयामास पितुर्वै श्राद्धकारणात् ।। २९ ।।
आगतान्ब्राह्मणान्दृष्ट्वा मेधातिथिरकल्मषः ।।
विप्रान्नत्वा गुरुं चैव श्राद्धारम्भमथाकरोत् ।। 189.३० ।।
श्राद्धं कृत्वा तु विधिवत्पिण्डान्निर्वाप्य यत्नतः ।।
श्राद्धसंकल्पितं चान्नं विप्रेभ्यः प्रददौ बहु ।। ३१ ।।

तन्मध्ये ब्राह्मणः कश्चिद्गोलकोऽवस्थितस्तदा ।।
श्राद्धे संकल्पितं चान्नं तस्मै दत्तं विधानतः ।। ३२ ।।
तेनैव श्राद्धदोषेण राज्ञस्तु पितरस्तदा ।।
स्वर्गाद्भ्रष्टावलम्बन्ते वने कण्टकसंयुते ।।३३।।
क्षुत्पिपासार्दिता नित्यं क्रन्दन्ते च पुनः पुनः ।।
कदाचिद्दैवयोगेन राजा मेधातिथिः स्वयम्।।३४।।
मृगयार्थं गतस्तत्र द्वित्रैः परिजनैर्वृतः ।।
तत्रावलम्बतो दृष्ट्वा तानपृच्छद्द्विजप्रियः ।। ३५ ।।
के भवन्तोऽत्र संप्राप्ता दशामेतां सुदुःखिताः ।।
केन कर्मविपाकेन भवन्तः कथयन्तु मे ।। ३६ ।।
पितर ऊचुः ।।
अस्मद्वंशकरो नित्यं नाम्ना मेधातिथिः प्रभुः ।।
वयं तस्यैव पितरो नरकं गन्तुमुद्यताः ।।३७।।
तेषां तु वचनं श्रुत्वा राजा दुःखसमन्वितः ।।
उवाच तान्पितॄन्सर्वान्सान्त्वपूर्वमिदं वचः ।।३८ ।।
मेधातिथिरुवाच।।
मेधातिथिरहं नाम्ना भवन्तः पितरो मम ।।
केन वै कर्मदोषेण निरयं गन्तुमुद्यताः ।। ३९ ।।
पितर ऊचुः ।।
श्राद्धं संकल्पितं चान्नं दत्तं तद्गोलकाय वै ।।
तेनैव कर्मदोषेण नरकं गन्तुमुद्यताः ।। 189.४० ।।
तत्र दुःखं महद्भुक्त्वा पुनर्गच्छामहे दिवम् ।।
पुत्र त्वं चैव दाता च सर्वलोकहिते रतः ।। ४१ ।।
असंख्यातास्त्वया दत्ता गावः सुबहुदक्षिणा।।
तेन पुण्येन गच्छामः स्वर्गं ह्यतिसुखप्रदम्।।४२।।
तत्र चान्नं न विद्येत येन तृप्तिर्भविष्यति ।।
पुनः श्राद्धं त्वया कार्यं पितृणां तृप्तिदायकम् ।। ४३।।
तेषां तु वचनं श्रुत्वा मेधातिथिरगाद्गृहम् ।।
आहूय चन्द्रशर्माणं गुरुं वचनमब्रवीत् ।। ४४ ।।
मेधातिथिरुवाच ।।
चन्द्रशर्मन्पुनः श्राद्धं करिष्ये पितुरद्य वै ।।
आहूयन्तां द्विजाः सर्वे कुण्डगोलकवर्जिताः ।। ४९ ।।
इत्युक्तमात्रे वचने चन्द्रशर्मा पुरोहितः ।।

आहूतवान्द्विजान्सर्वान्वेदपाठकृतश्रमान् ।। ४६।।
साधून्क्षांतान्कुलीनांश्च सुशीलान्मानवर्जितान् ।।
राज्ञा तु कारयामास श्राद्धं विधिविदां वरः ।। ४७ ।।
कृते श्राद्धे ततः पश्चात्पिण्डान्निर्वाप्य यत्नतः ।।
ब्राह्मणान्भोजयामास दक्षिणाभिः प्रपूज्य च ।। ४८ ।।
पश्चाद्विसर्जयामास स्वयं तु बुभुजे नृपः ।।
भुक्त्वा पुनर्वनं गत्वा दृष्टवांश्च स्वकान्पितॄन् ।।४९।।
हृष्टान्पुष्टान्बलैर्युक्तान्राजा तु मुमुदे भृशम् ।।
दृष्ट्वा तु पितरश्चैव राजानं पितृवत्सलम् ।। 189.५० ।।
ऊचुर्विनयसम्पन्नाः प्रीतिपूर्वमिदं वचः।।
स्वस्ति तेऽस्तु गमिष्यामः स्वर्गलोकं प्रति प्रभो ।। ५१ ।।
इदानीं च त्वया कार्यमस्मद्धितमनुऽत्तमम् ।।
गोलकाय न दातव्यं दैवं पित्र्यमथापि वा ।। ९२ ।।
तयोर्दत्तं तु यच्छ्राद्धं निष्फलं तत्स्मृतं बुधैः ।।
दैवे कर्मणि दिव्ये च ब्राह्मणो नैव लभ्यते ।। ५३।।
सङ्कल्पयित्वा चान्नं तु गोभ्यो देयं यथाविधि ।।
गवामभावे नद्यां वा क्षिपेदन्नं प्रयत्नतः ।। ५४ ।।
अपात्राय न दातव्यं नास्तिकाय गुरुद्रुहे ।।
गोलकाय न दातव्यं कुण्डाय च विशेषतः ।।५५।।
इत्युक्त्वा पितरः सर्वे गताः स्वर्गाय भामिनि।।
मेधातिथिरपि प्रायात्स्वपुरं ब्राह्मणैर्वृतः।।५६।
यदुक्तं पितृभिः सर्वं तच्चकार मुदायुतः ।।
तस्मात्ते कथितं देवि एकोऽपि ब्राह्मणोत्तमः ।।५७।।
सन्तारयति दुर्गेभ्यो विषमेभ्यो न संशयः ।।
एकोऽपि तारितुं शक्तो यथा नावा महज्जलम् ।।५८ ।।
तस्माद्दानं प्रदातव्यं ब्राह्मणाय वसुन्धरे ।।
देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम् ।। ५९ ।।
सर्वे श्राद्धं करिष्यन्ति निमिप्रभृतयो धरे ।।
मासे मासे च वै पश्चात्पितृपक्षे तपोधनाः ।। 189.६० ।।
इति श्रीवराहपुराणे भगवच्छास्त्रे पिण्डकल्पोत्पत्तिर्नामैकोननवत्यधिकशततमोऽध्यायः ।। १८९ ।।

अथ श्राद्धपितृयज्ञनिश्चयप्रकरणम् ।।
धरण्युवाच ।।
देवमानुषतिर्यक्षु प्रेतेषु नरकेषु च ।।
आयान्ति जन्तवः केचिद्भूत्वा गच्छन्ति चापरे ।। १ ।।
स्वप्नोपममिमं लोकं ह्यात्मकर्म शुभाशुभम् ।।
वर्त्तते तिष्ठते देव तव मायाबलैर्जगत् ।। २ ।।
क एते पितरो देव श्राद्धं भोक्ष्यन्ति योगतः ।।
आत्मकर्मवशाल्लोके गतिः पञ्चसु वर्त्तते ।। ३ ।।
कथं तं पिण्डसङ्कल्पं मासे मासे नियोजयेत् ।।
के भवन्ति च भोक्तारः श्राद्धे पिण्डान्पितृक्रियाः ।। ४ ।।
निश्चयं श्रोतुमिच्छामि परं कौतूहलं हि मे ।।
पृथिव्या एवमुक्तस्तु देवो नारायणो हरिः ।।५।
वराहरूपी भगवान्प्रत्युवाच वसुन्धराम्।।
श्रीवराह उवाच ।।
साधु भूमे वरारोहे सर्वधर्मव्यवस्थिते ।। ६ ।।
कथयिष्यामि ते देवि यन्मां त्वं परिपृच्छसि ।।
ये ते भवन्ति भोक्तारः पितृयज्ञेषु माधवि ।।७।।
पिता पितामहश्चैव तथैव प्रपितामहः ।।
क्रियते पिण्डसङ्कल्पो मासे ह्येकदिने तथा।।८।।
ज्ञात्वा नक्षत्रसंयोगं पितृपक्षे ह्युपागते ।।
तिथिं पर्वं विजानीयाद्येषु दत्तं महत्फलम् ।। ९ ।।
करिष्यन्ति च ये श्राद्धं श्रद्धया ज्ञानिनो जनाः ।।
तत्सर्वं कथयिष्यामि श्रूयतां शुभ लोचने ।। १९०.१० ।।
केचिद्यजन्ति यज्ञं वै ब्रह्मयज्ञं द्विजातयः ।।
केचिद्यजन्ति सुभगे देवयज्ञं हुताशने ।। ११।।
केचिच्च भूतयज्ञेन वर्त्तयन्ति सुमध्यमे ।।
केचिन्मनुष्ययज्ञेन पूजयन्ति गृहाश्रमे ।। १२ ।।
पितृयज्ञं च भो देवि शृणु वक्ष्यामि निश्चयम् ।।
ये यजन्ति वरारोहे क्रतूनेकशतैरपि ।। १३ ।।
सर्वे ते मयि वर्त्तन्ते सत्यमेतद्ब्रवीमि ते ।।
अग्निर्मुखं च देवानां हव्यकव्येषु माधवि ।। १४ ।।
उत्तरोऽग्निरहं चैव दक्षिणाग्निरहं तथा।।
अहमाहवनीयोऽग्निः सर्वयज्ञेषु सुन्दरि ।। १५ ।।

पावनः पावकश्चैव अहमेव व्यवस्थितः ।।
सर्वेष्वेव तु कार्येषु देवसत्रेषु माधवि।।१६।।
वैश्वदेवे नियुञ्जीत ब्रह्मचारी शुचिः सदा ।।
भिक्षुको देवतीर्थेषु वानप्रस्थो यतिस्तथा ।। १७ ।।
एतान्न भोजयेच्छ्राद्धे देवतीर्थेषु पूजयेत् ।।
व्रतस्थान्संप्रवक्ष्यामि श्राद्धमर्हन्ति ये द्विजाः ।। १८ ।।
उत्तमो गृहसन्तुष्टः क्षान्तो दान्तो जितेन्द्रियः ।।
उदासीनः सत्यसन्धः श्रोत्रियो धर्म पाठकः ।। १९ ।।
वेदविद्याव्रतस्नातो सुविमृष्टान्नभोजकः ।।
ईदृशान्भोजयेच्छ्राद्धे पितृयज्ञेषु माधवि ।। १९०.२० ।।
दत्त्वा हुताशनायादौ देवतीर्थेषु सुन्दरि ।।
मुखेषु पश्चाद्ब्राह्मणस्य पित्रे दद्याद्यथाविधि ।। २१ ।।
चतुर्णामेव वर्णानां यद्यथा श्राद्धमर्हति ।।
तथा विधिः प्रयोक्तव्यः पितृयज्ञेषु सुन्दरि ।। २२ ।।
यन्न पश्यन्ति ते भोज्यं श्वानः कुक्कुटसूकराः ।।
ब्राह्मणाश्चाप्यपांक्तेया नराः संस्कारवर्जिताः ।।२३ ।।
सर्वकर्मकरा ये च सर्वभक्षाश्च ये नराः ।।
एताञ्श्राद्धे न पश्येत्तु पितृयज्ञेषु सुन्दरि ।। २४ ।।
एते पश्यन्ति यच्छ्राद्धं तच्छ्राद्धं राक्षसं विदुः ।।
मया प्रकल्पितो भागो बलये पूर्वमेव तु ।। २५।।
हृतं यदा तु त्रैलोक्यं शक्रस्यार्थे त्रिविक्रमे ।।
एवं श्राद्धं प्रतीक्षन्ति मन्त्रहीनमविक्रियम् ।। २६ ।।
वर्जनीया बुधैरेते पितृयज्ञेषु सुन्दरि ।।
प्रच्छन्नं भोजयेच्छ्राद्धे तर्पयित्वा द्विजं शुचिः ।। २७ ।।
पितॄंस्तत्राह्वयेद्भूमे मन्त्रेण विधिपूर्वकम् ।।
पिण्डास्त्रयः प्रदातव्याः सह व्यञ्जनसंयुताः ।। २८ ।।
पिता पितामहश्चैव तथैव प्रपितामहः ।।
अपसव्येन दातव्यं मासिमासि तिलोदकम् ।। २९ ।।
प्रणम्य शिरसा देवीर्निर्वापस्य च धारिणीः ।।
वैष्णवी काश्यपी चेति अजया चेति नामतः ।। १९०.३० ।।
एवं दत्तेन प्रीयन्ते पितरश्च न संशयः ।।
परमात्मा शरीरस्थो देवतानां मया कृतः ।। ३१ ।।
त्रयस्तत्र वरारोहे देवगात्राद्विनिस्सृताः ।।

पितृदेवा भविष्यन्ति भोक्तारः पितृपिण्डकान् ।। ३२ ।।
देवतासुरगन्धर्वा यक्षराक्षसपन्नगाः ।।
छिद्रं श्राद्धेऽस्य पश्यन्ति वायुभूता न संशयः ।। ३३ ।।
पितृयज्ञं विशालाक्षि ये कुर्वन्ति विदो जनाः ।।
आयुः कीर्तिं बलं तेजो धनपुत्रपशुस्त्रियः ।। ३४ ।।
ददन्ते पितरस्तस्य आरोग्यं नात्र संशयः ।।
आत्मकर्मवशाल्लोकान् प्राप्नुवन्तीह शोभनान् ।।३५।।
तिर्यग्भ्यश्च विमुच्यन्ते प्रेतभावेन मानवाः ।।
नरके पच्यमानानां त्राता भवति मानवः।।३६।।
पूजकः पितृदेवानां सर्वकालं गृहाश्रमे ।।
द्विजातींस्तर्पयित्वा तु पूर्णेन विधिना नरः ।। ३७।।
अक्षय्यं तस्य मन्यन्ते पितरः श्राद्धतर्पिताः ।।
नरा ये पितृभक्तास्ते प्राप्नुवन्ति परां गतिम् ।। ३८ ।।
सात्विकं शुक्लपन्थानमेते यान्ति विदो जनाः ।।
पुनरन्यत्प्रवक्ष्यामि शृणु तत्त्वेन सुन्दरि ।।३९।।
अज्ञानतमसारूढा निकृतिज्ञाः शठास्तथा ।।
स्नेहपाशशतेनैव पच्यन्ते नरके नराः ।। १९०.४० ।।
कल्पान्तं पच्यमानापि त्रायन्ते येन मानवाः ।।
तेषां पुत्राश्च पौत्राश्च कदाचिदपि सुन्दरि।।४१ ।।
मुंचन्ति जलबिन्दूंश्च अमां प्राप्य जलाशये ।।
तेनैव भविता तृप्तिस्तेषां निरयगामिनाम् ।।४२।।
ये वै श्राद्धं प्रकुर्वन्ति तर्पयित्वा द्विजातयः ।।
दत्त्वा तिलोदकं पिण्डान् पितृभ्यो भक्तिभावतः ।। ४३ ।।
निरयात्तेऽपि मुच्यन्ते तृप्तिर्भवति चाक्षया ।।
गृह्य चौदुम्बरं पात्रं कृत्वा तत्र तिलोदकम् ।।४४।।
विप्राणां वचनं कृत्वा यथाशक्त्या च दक्षिणा ।।
देया तेषां तु विप्राणां पितृणां मोक्षणाय च ।। ४५ ।।
देयो नीलो वृषस्तत्र नरकार्त्तिविनाशनः ।।
नीलषण्डस्य लांगूले तोयमप्युद्धरेद्यदि ।। ४६ ।।
षष्टिवर्षसहस्राणि पितरस्तेन तर्पिताः ।।
मुक्तमात्रेण शृङ्गेण नीलषण्डेन सुन्दरि ।। ४७ ।।
उद्धृतो यदि सुश्रोणि पंकः शृङ्गेण तेन च ।।
बान्धवाः पितरस्तस्य निरये पतितास्तु ये ।। ४८ ।।

तानुद्धृत्य वरारोहे सोमलोकं स गच्छति ।।
मुक्तेन नीलषण्डेन यत्पुण्यं जायते भुवि ।। ४९ ।।
षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ।।
सोमलोकेषु मोदन्ते क्षुत्तृड्भ्यां च विवर्जिताः ।। १९०.५० ।।
एष धर्मो गृहस्थानां पुत्र पौत्रसमन्विताः ।।
त्रातारश्च भविष्यन्ति वर्तयन्तो यथासुखम् ।। ५१ ।।
पिपीलिकादिभूतानि जङ्गमाश्च विहङ्गमाः ।।
उपजीवन्ति सुश्रोणि गृहस्थेषु न संशयः ।। ५२ ।।
एवं गृहाश्रमो मूलं धर्मस्तत्र प्रतिष्ठितः ।।
मासिमासि तु ये श्राद्धं प्रकुर्वन्ति गृहाश्रमे ।। ५३ ।।
तिथौ पर्वणि ये चैव स्वपितॄंस्तारयन्ति वै ।। ५४ ।।
न यज्ञदानाध्ययनोपवासैस्तीर्थाभिषेकैरपि चाग्निहोत्रैः ।।
दानैरनेकैर्विधिसम्प्रदत्तैर्न तत्फलं श्राद्धगृहस्य धर्मे ।। ५५ ।।
पितरो निर्गतास्तत्र ब्रह्मविष्णुशरीरगाः ।।
पिता पितामहश्चैव तथैव प्रपितामहः ।। ५६ ।।
एवं क्रमेण वै तत्र पितृदेवा वसुन्धरे ।।
देवताः कश्यपोत्पन्ना श्राद्धेषु विनियोजिताः ।। ५७ ।।
तत एते न जानन्ति देवाः शक्रपुरोगमाः ।।
ईश्वरश्च न जानाति आत्मदेहविनिःसृताः ।। ५८ ।।
न च ब्रह्मा विजानाति निःसृतो मम मायया ।।
एवं मायामयौ भूमौ ब्रह्मरुद्रौ बहिष्कृतौ ।।५९।।
पुनश्चान्यत्प्रवक्ष्यामि पितृयज्ञेषु सुन्दरि ।।
दद्याद्वै ब्राह्मणमुखे नाग्नौ तु जुहुयात्क्वचित् ।।१९०.६० ।।
कृत्वा वै पिण्डसङ्कल्पं दर्भानास्तीर्य भूतले ।।
तेन ते पितृपिण्डेन पितृदेवा वसुन्धरे ।।६१।।
अजीर्णेनाभिपीड्यन्ते भुज्यन्ते न च सुन्दरि ।।
ततो दुःखेन सन्तप्ता पद्यन्ते सोममेव च ।। ६२ ।।
दृष्टाः सोमेन सुश्रोणि देवताजीर्णपीडिताः ।।
स्वागतेनाथ वाक्येन पूजितास्तदनन्तरम् ।। ६३ ।।
सोम उवाच ।।
देवताः कस्य चोत्पन्ना दुखिःताः केन हेतुना ।।
एवं तु भाषमाणस्य सोमस्य तदनन्तरम् ।। ६४ ।।
ऊचुस्ते सोममेवापि वाक्यं नः श्रूयतामिति ।।

त्रयस्तु पितरो देवा ब्रह्मविष्णुहरोद्भवाः ।। ६९ ।।
श्राद्धे नियोजितास्तैस्तु पितृपिण्डेन तर्पिताः ।।
अजीर्णं जायते सोम तेन वै दुःखिता वयम् ।। ६६ ।।
सोम उवाच ।।
सखा चाहं भविष्यामि त्रयाणां च चतुर्थकः ।।
सहितास्तत्र गच्छामो यथा श्रेयो भविष्यति।।६७।।
एवमुक्तास्तु सोमेन पितृदेवास्तदन्तरे ।।
सोमं सोमेन गच्छन्ति श्रेयस्कामा वसुन्धरे ।। ६८ ।।
शरण्यं शरणं देवं ब्रह्माणं पद्मसंभवम् ।।
मेरुशृङ्गे सुखासीनं ब्रह्मर्षिगणसेवितम् ।। ६९ ।।
दृष्ट्वा पितामहं देवं प्रणम्य सहसा क्षितौ ।।
अत्रिपुत्रेण सोमेन भाषितो वै पितामहः ।। १९०.७० ।।
य एते पितरो देव दुःखिताजीर्णपीडिताः ।।
आगताः शरणं चात्र सोमं सोमेन सत्तम ।।७१ ।।
यथा नश्यंति जीर्णानि तथा कुरु पितामह।।
मुहूर्तं ध्यानमास्थाय ईश्वरं च ददर्श ह ।। ७२ ।।
उवाच वचनं तत्र ब्रह्मा योगीश्वरं प्रति ।।
एते ते पितरो देव दुःखिताजीर्णपीडिताः ।। ७३ ।।
आगताः शरणं चात्र सोमेन सहिता मम ।।
आचक्ष्व निर्मिता येन यथा श्रेयो भवेत्तव ।।७४।।
ब्रह्मणा चैवमुक्तस्तु ईश्वरः परमेश्वरः।।
मुहूर्तं ध्यानमास्थाय दिव्यं योगं च माधवि।।७५।।
पश्यते ईश्वरं तत्र योगवेदाङ्गनिर्मितम् ।।
विस्मयं परमं गत्वा ब्रह्माणं वाक्यमब्रवीत् ।।७६।।
निर्मिता विष्णुना ब्रह्मन् वैष्णव्या मायया च ते ।।
प्रथमं पितरौ देवा ये च श्रेष्ठा भवंति ते ।। ७७ ।।
पिता तु ब्रह्मदैवत्यो मम गात्राद्विनिर्मितः ।।
पितामहो विष्णुदेवो विष्णुगात्राद्विनिर्मितः ।। ७८ ।।
प्रपितामहो रुद्रदेवो मम गात्राद्विनिर्मितः ।।
श्राद्धे नियोजितास्तेऽत्र मर्त्त्येषु पितृदेवताः ।। ७९ ।।
ब्राह्मणानां हितार्थाय निर्मिता विष्णुमायया ।।
तर्पिताः पितृयज्ञेषु पितरोऽजीर्णपीडिताः ।। १९०.८० ।।
आगताः शरणं ब्रह्मन्सोमेन सहिता यदि ।।

येन नश्यत्यजीर्णं च पितृणां च सुखं भवेत् ।।८१।।
शृणु तत्ते प्रवक्ष्यामि ब्रह्मन्लोकपितामह ।।
शाण्डिल्यपुत्रस्तेजस्वी धूम्रकेतुर्विभावसुः ।।८२।।
श्राद्धे तु प्रथमं तस्य दातव्यं मानुषेषु वा ।।
सह तेनैव भोक्तव्यं पितृपिण्डविसर्जितम् ।। ८३ ।।
ईश्वरेणेवमुक्तस्तु ब्रह्मा कमलसंभवः ।।
आहूय मनसा चैव ह्यागतो हव्यवाहनः ।। ८४ ।।
प्रदीप्तस्तेजसा वह्निः सर्वभक्षो हुताशनः ।।
योजितः पंचयज्ञेषु ब्रह्मणा मम मायया ।।८५।।
ब्रह्माग्निं भाषते तत्र शृणुष्व च हुताशन ।।
भोक्तव्यं प्रथमं ब्रह्मन्पितृपिण्डविसर्जितम् ।।८६।।
त्वया भुक्तेति भोक्ष्यन्ति देवताः समरुद्गणाः ।।
भोक्तव्यं मध्यमं श्राद्धं पथ्यमन्नं च वै सह ।।८७।।
पश्चाद्दत्तं तु तं पिण्डं सह सोमेन भुञ्जते ।।
ब्रह्मणा ह्येवमुक्तास्तु पितृदेवहुताशनाः।।८८।।
प्रस्थिताः सह सोमेन देवतास्ता वसुन्धरे।।
पितृयज्ञं वरारोहे भोक्ष्यन्ति सहिताः सदा।। ८९ ।।
एवं तु प्रथमं श्राद्धं दद्यादग्नेर्वसुन्धरे।।
उद्दिश्य च पितृन्देवि तर्पयित्वा द्विजातयः।।१९०.९०।।
पश्चात्पिण्डान्प्रदद्याच्च दर्भानास्तीर्य भूतले ।।
प्रथमं ब्रह्मणोंशाय दद्यात्पिण्डं विधानतः।।९१।।
पितामहाय रुद्रांशसंभूताय तु मध्यमम् ।।
प्रपितामहाय विष्णोस्तु दद्यात्पिण्डं महीतले ।। ९२ ।।
विधिना मन्त्रपूर्वेण श्राद्धं कुर्वन्ति ये नराः ।।
तेषां वरं प्रयच्छन्ति पितरः श्राद्धतर्पिताः ।। ९३ ।।
मम मायाबलेनैव कृतं श्राद्धं द्विजातिभिः ।।
अपांक्तेयांस्तथा विप्रान्प्रवक्ष्यामि वसुन्धरे ।। ९४ ।।
नपुंसकाश्चित्रकारा वसुपालविनिन्दकाः ।।
कुनखाः श्यावदन्ताश्च काणाश्च विकटोदराः ।। ९५ ।।
नर्त्तका गायनाश्चैव तथा रङ्गोपजीविनः ।।
वेदविक्रयिणश्चैव सर्वे याजकयाजकाः ।। ९६।।
राजोपसेवकाश्चैव वाणिज्यक्रयविक्रयाः ।।
ब्रह्मयोन्यां समुत्पन्नाः सङ्कीर्णा पतिताश्च ये ।। ९७ ।।

असंस्कारप्रवृत्ताश्च शूद्रकर्मोपजीविनः ।।
शूद्रकर्मकरा ये च गणका ग्रामयाजकाः ।। ९८ ।।
दीक्षितः क्रोडपृष्ठश्च यश्च वार्धुषिको द्विजः ।।
विक्रेतारो रसानां च ये च वैश्योपजीविनः ।। ९९ ।।
तस्करा लेखकाराश्च याजका रङ्गकारकाः ।।
शौलिका गिरिका ये च दाम्भिका ये च माधवि ।। १९०.१०० ।।
सर्वकर्मकरा ये च सर्वविक्रयिणस्तथा ।।
एतान्न भोजयेच्छ्राद्धे पित्रर्थे च वसुन्धरे ।। १०१ ।।
दूराध्वानं गता ये च तत्र कर्मोपजीविनः ।।
रस विक्रयिणश्चैव शैलूषस्तिलविक्रयी ।। १०२ ।।
श्राद्धकालमनुप्राप्तं राजसं तं विदुर्बुधाः ।।
अन्ये ये दूषिता देवि द्विजरूपेण राक्षसाः ।।१०३।।
एतान्न पश्येच्छ्राद्धेषु पितृपिण्डेषु माधवि ।।
अपांक्तेयांस्तथा विप्रान्भुञ्जतः पश्यतो द्विजान् ।। १०४ ।।
पितरस्तस्य षण्मासं दुःखमृच्छन्ति दारुणम् ।।
न्यस्तपात्रं द्रुतं कुर्यात्प्रायश्चित्तमुभौ धरे ।। १०५।।
धृतं तु जुहुयादग्नावादित्यं चावलोकयेत् ।।
पुनरावपनं कृत्वा पितरं च पितामहान् ।।१०६।।
गंधपुष्पं च धूपं च दद्यादर्घ्यं तिलोदकम् ।।
यथाविधिं च विप्राय भोजयेच्च पुनः शुचिः ।। १०७।।
पुनश्चान्यत्प्रवक्ष्यामि शृणु तत्त्वेन सुन्दरि ।।
ज्ञानशुद्धेन विप्रेण मन्त्रशुद्धिं यथाविधि ।।१०८।।
मृतान्नं ये न भुञ्जंति कदाचिदपि माधवि ।।
वैश्वदेवेषु दातव्यं श्राद्धेषु च न योजयेत् ।। १०९ ।।
प्रेतान्नं भुञ्जमानास्तु श्राद्धमर्हन्ति ये द्विजाः ।।
तेषां दोषं प्रवक्ष्यामि भुक्तं भोजयते तु सः ।। १९०.११० ।।
दम्भकार कृतोच्छिष्टं कृत्वा तु नरकं व्रजेत् ।।
प्रायश्चित्तं प्रवक्ष्यामि यथा शुध्यन्ति ते नराः ।।१११।।
माघमासे तु द्वादश्यां सर्पिर्युक्तं तु पायसम् ।।
स लिहेन्मधुमांसेन तर्पयित्वा द्विजातयः ।। ११२ ।।
सवत्सां कपिलां दद्यादात्मनः शुद्धिकामुकः ।।
पुनः श्राद्धं प्रकुर्वीत चात्मनः शुभ कामुकः ।। ११३।।
स्नानोपलेपनं भूमे कृत्वा विप्रान्प्रमन्त्रयेत् ।।

दन्तकाष्ठं विसृज्यैव ब्रह्मचारी शुचिर्भवेत् ।।११४।।
यत्नेन मिथुनं श्राद्धे भोजयित्वा विसर्ज्जयेत् ।।
अमायां च विशालाक्षि दन्तकाष्ठं न खादयेत् ।। ११५ ।।
अमायां तु च यो मूर्खो दन्तकाष्ठं हि खादति ।।
हिंसितो हि भवेत्सोमो देवताः पितरस्तथा ।। ११६ ।।
प्रभातायां तु शर्वर्यामुदिते च दिवाकरे ।।
दिवाकृत्यं ततो गृह्य विप्रस्य विधिपूर्वकम् ।। ११७ ।।
श्मश्रुकर्म च कर्त्तव्यं नखानां छेदनानि च ।।
स्नापनाऽभ्यञ्जने दद्यात्पितृभक्तेन सुन्दरि ।। ११८ ।।
पक्वान्नं तत्र वै कार्यं सुविमृष्टं च शुद्धितः ।।
वृत्ते तु तत्र मध्याह्ने श्राद्धारम्भं तु कारयेत् ।। ११९ ।।
स्वागतं च तथा कृत्वा पाद्यार्थं सलिलं शुचि ।।
पाद्यं दत्त्वा तु विप्राय गृहस्याभ्यन्तरं नयेत् ।। १९०.१२०।।
आसनं कल्पयित्वा तु आवाह्य तदनन्तरम्।।
अर्घ्यं दत्त्वा विधानेन गन्धमाल्यैः प्रपूज्य च ।। १२१ ।।
धूपं दीपं तथा वस्त्रं तिलोदकमथापि वा ।।
पात्रं च भोजनस्यार्थे विप्राग्रे धारयेत्तथा ।।१२२ ।।
भस्मना मण्डलं कार्यं पङ्क्ति दोषनिवारकम् ।।
अग्निकार्यं ततः कृत्वा अन्नं च परिवेषयेत् ।। १२३ ।।
तत्र कार्यो न संकल्पः पितॄनुद्दिश्य सुन्दरि ।।
यथासुखेन भोक्तव्यमिति ब्रूयाद्द्विजं प्रति ।। १२४ ।।
रक्षोघ्नमन्त्रपाठांश्च श्रावयीत विचक्षणः ।।
तृप्तं तु ब्राह्मणं दत्त्वा दद्याद्वै विकिरं ततः ।।१२५ ।।
उत्तरीयासनं दत्त्वा पिण्डप्रश्नं तु कारयेत् ।।
दक्षिणाभिमुखो भूत्वा दर्भानास्तीर्य भूतले ।। १२६ ।।
पिण्डदानं प्रकुर्वीत पित्रादित्रितये तथा ।।
पिण्डानां पूजनं कार्यं तन्तुवृद्ध्यै यथाविधि ।। १२७ ।।
ब्राह्मणस्य च हस्ते तु दद्यादक्षय्यमात्मवान् ।।
दक्षिणाभिः प्रतोष्यापि स्वस्ति वाच्यं विसर्जयेत् ।। १२८ ।।
पिण्डास्त्रयस्तु वसुधे यावत्तिष्ठन्ति भूतले ।।
अप्यायमानाः पितरस्तावत्तिष्ठन्ति वै गृहे ।। १२९ ।।
उपस्पृश्य शुचिर्भूत्वा दद्याच्छान्त्युदकानि च ।।
प्रणम्य शिरसा भूमौ निवापस्य च धारिणीः ।।१९०.१३० ।।

वैष्णवी काश्यपी चेति अक्षया चेति नामतः ।।
भक्षयेत्प्रथमं पिण्डं पत्न्यै देयं तु मध्यमम् ।।१३१ ।।
तृतीयमुदके दद्याच्छ्राद्धे एवं विधिः स्मृतः ।।
पितृदेवांश्च विसृजेत्ततश्च प्रणमेत्तु तान् ।। १३२ ।।
एवं दत्तेन तुष्यन्ति पितृदेवा न संशयः।।
दीर्घायुष्यं प्रयच्छन्ति पुत्रपौत्रधनानि च ।।१३३।।
ज्ञानोत्तमेषु विप्रेषु दद्याच्छ्राद्धं विधानतः।।
अन्यथा तत्तु वै श्राद्धं निष्फलं नास्ति संशयः ।।१३४।।
मन्त्रहीनं क्रियाहीनं यः श्राद्धं कुरुते द्विजः ।।
मद्भक्तस्यासुरेन्द्रस्य फलं भवति भागतः ।।१३५ ।।
उद्धरेद्यदि पात्रं तु ब्राह्मणो ज्ञानवर्जितः।।
राक्षसैर्ह्रियते तच्च भुञ्जतस्तस्य सुन्दरि ।। १३६ ।।
एतत्ते कथितं भद्रे पितृकार्यमनुत्तमम् ।।
उत्पतिश्चैव दानं च यत्पुण्यं कथितं तव ।।१३७।।
अपरं चापि वसुधे किमन्यच्छ्रोतुमिच्छसि ।।१३८।।
इति श्रीवराहपुराणे श्राद्धपितृयज्ञनिश्चयो नाम नवत्यधिकशततमोऽध्यायः ।।१९०।।

अथ मधुपर्कोत्पत्तिदानसंकरणप्रकरणम् ।।

सूत उवाच ।।

एवं श्रुत्वा बहून्धर्मान् धर्मशास्त्रविनिश्चयात्।।

वराहरूपिणं देवं पुनः पप्रच्छ मेदिनी ।। १ ।।

धरण्युवाच।।

एवं शास्त्रं मया देव तव वक्त्राद्विनिःसृतम् ।।

श्रुतं सुबहुशश्चैव तृप्तिर्मम न विद्यते।।२।।

ममैवानुग्रहार्थाय रहस्यं वक्तुमर्हसि ।।

कीदृशो मधुपर्क्कश्च किं पुण्यं का च देवता ।।३।।

कानि द्रव्याणि कस्मै च देयानीति वदस्व मे ।।

इति भूम्या वचः श्रुत्वा देवदेवो जनार्दनः ।।४।।

वराहरूपी भगवान्प्रत्युवाच वसुन्धराम् ।।५।।

श्रीवराह उवाच ।।

शृणु भूमे प्रयत्नेन मधुपर्को यथा कृतः ।।

उत्पत्तिश्चैव दानं च सर्वो यस्य च हीयते ।।६।।

अहं ब्रह्मा च रुद्रश्च कृत्वा लोकस्य संक्षयम् ।।

अव्यक्तानि च भूतानि यानि कानि च सर्वथा ।।७।।

ततो भूमे दक्षिणाङ्गात्पुरुषो मे विनिःसृतः ।।

रूपवान्द्युतिमांश्चैव श्रीमान्ह्रीकीर्तिमान्नरः ।। ८ ।।

तत्र पप्रच्छ मां ब्रह्मा मम गात्राद्विनिःसृतः ।।

य एव तिष्ठते विष्णो त्रयाणां च चतुर्थकः ।। ९ ।।

सरहश्च लघुर्देव एतत्तव न युज्यते ।।

ब्रह्मणो वचनं श्रुत्वा मयाप्येवं प्रभाषितम् ।। 191.१० ।।

एवं च मे समुत्पन्नः सर्वकर्मसु निष्ठितः ।।

मधुपर्क्केति विख्यातो भक्तानां भवमोक्षणः ।। ११ ।।

मयात्र संशितं ब्रह्मन् रुद्रे चापि समासतः ।।

साधु विष्णो भागतस्ते एष चापि विनिःसृतः ।। १२ ।।

उद्भवं मधुपर्क्कस्य आत्मसम्भवनिश्चयम् ।।

ततस्तु माऽब्रवीद्ब्रह्मा कारणं मधुरं वचः ।। १३ ।।

मधुपर्केण किं कार्यमेतदाचक्ष्व निष्कलम् ।।

पितामहवचः श्रुत्वा मयाऽसौ प्रतिभाषितः ।। १४ ।।

कारणं मधुपर्कस्य दानं सङ्करणं तथा ।।

ममार्चनविधिं कृत्वा मधुपर्कं प्रयच्छति ।।१५।।

ब्रह्मन् यात्युत्तरं स्थानं यत्र गत्वा न शोचति।।
तस्य क्रियां प्रवक्ष्यामि मम दानप्रतिग्रहात् ।। १६ ।।
यस्य दानविधिं प्राप्य यान्ति दिव्यां गतिं मम ।।
वृत्तेष्वेवोपचारेषु ये च ब्रह्मन्मम प्रियाः ।। १७ ।।
संगृह्य मधुपर्कं वै इमं मन्त्रमुदाहरेत् ।। १८ ।।
मन्त्रः---
ॐ एष हि देव भगवंस्तव गात्रसूतिः संसारमोक्षणकरो मधुपर्कनामा ।।
भक्त्या मयाऽयं प्रतिपादितोऽद्य गृहाण देवेश नमो नमस्ते ।। १९ ।।
पुनरन्यत्प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।।
यादृशो मधुपर्क्को वै या च तस्य महान् क्रिया ।।191.२०।।
मध्वेवं दधि सर्पिश्च कुर्याच्चैव समं तथा ।।
विधिना मन्त्रपूतेन यदीच्छेत्सिद्धिमुत्तमाम् ।। २१ ।।
सामासाद्य ततः कृत्वा मम कर्मपरायणः ।।
उचितेनोपचारेण यत्त्वया परिपृच्छितम् ।। २२ ।।
इति श्रीवराहपुराणे मधुपर्क्कोत्पत्तिदानसंकरणं नामैकनवत्यधिकशततमोऽध्यायः ।। १९१ ।।

अथ सर्वशान्तिवर्णनम् ।।
सूत उवाच ।।
श्रुत्वा तु मधुपर्क्कस्य ह्युत्पत्तिं दानमेव च ।।
पुण्यं चैव फलं चैव कारणं ग्रहणं तथा ।। १ ।।
विस्मयं परमं गत्वा सा मही संशितव्रता ।।
पादौ गृह्य यथान्यायं प्रत्युवाच जनार्दनम् ।। २ ।।
देव वृत्तोपचारेण तव यन्मनसि प्रियम् ।।
किं च तत्रैव दातव्यं तव कर्मपरायणैः ।। ३ ।।
एतदाचक्ष्व तत्त्वेन तत्र यत्परमं महत् ।।
श्रीवराह उवाच ।।
साधु भूमे महाभागे यन्मां त्वं परिपृच्छसि ।। ४ ।।
कथयिष्यामि तत्सर्वं दुःखसंसारमोक्षणम् ।।
कृत्वा तु मम कर्माणि यत्त्वया पूर्वभाषितम् ।। ५ ।।
पश्चाच्छान्तिं च मे कुर्याद्भूमे राष्ट्रसुखावहम् ।।
सर्वकर्म ततः कृत्वा भूम्यां जानु निपात्य च ।। ६ ।।
नमो नारायणायेति उक्त्वा मन्त्रमुदाहरेत् ।।
मन्त्रः-
ॐ नमो नमो वासुदेव त्वं गतिस्त्वं परायणम् ।। ७ ।।
शरणं त्वां गतो नाथ संसारार्णवतारक ।।
आगतस्त्वं च सुमुख पुनः समुचितेन वै ।। ८ ।।
दिशः पश्य अधः पश्य व्याधिभ्यो रक्ष नित्यशः ।।
प्रसीद स्वस्य राष्ट्रस्य राज्ञः सर्वबलस्य च ।।९ ।।
गर्भिणीनां च वृद्धानां व्रीहीणां च गवां तथा ।।
ब्राह्मणानां च सततं शान्तिं कुरु शुभं कुरु ।। 192.१० ।।
अन्नं कुरु सुवृष्टिं च सुभिक्षमभयं तथा ।।
राष्ट्रं प्रवर्द्धतु विभो शान्तिर्भवतु नित्यशः ।। ११ ।।
देवानां ब्राह्मणानां च भक्तानां कन्यकासु च ।।
पशूनां सर्वभूतानां शान्तिर्भवतु नित्यशः ।। १२ ।।
एवं शान्तिं पठित्वा तु मम कर्मपरायणः।।
पुनर्जलाञ्जलिं दत्त्वा त्विमं मन्त्रमुदाहरेत्।।१३।।
मन्त्रः-
योऽसौ भवान्सर्वजगत्प्रसूतो यज्ञेषु देवेषु च कर्मसाक्षी ।।
शान्तिं कुरु त्वं मम वासुदेव संसारमोक्षं च कुरुष्व देव ।।१४।।

एषा सिद्धिश्च कीर्तिश्च ओजसा तु महौजसम् ।।
लाभानां परमो लाभो गतीनां परमा गतिः ।। १५ ।।
एवं पठति तत्त्वेन मम शान्तिं सुखावहाम् ।।
ते तु मल्लयतां यान्ति पुनरावृत्तिवर्जिताः ।। १६ ।।
एवं शान्तिं पठित्वा तु मधुपर्कं प्रयोजयेत् ।।
नमो नारायणायेति चोक्त्वा मन्त्रमुदाहरेत् ।।१७।।
मन्त्रः-
योऽसौ भवान्देववरप्रसूतो यो वै समच्र्यो मधुपर्क्कनामा ।।
आगच्छ सन्तिष्ठ इमे च पात्रे ममापि संसारविमोक्षणाय।।१८।।
सर्पिर्दधिमधून्येव समं पात्रे ह्युदुम्बरे ।।
अलाभे मधुनश्चापि गुडेन सह मिश्रयेत् ।।१९ ।।
घृतालाभे तु सुश्रोणि लाजैः सह विमिश्रयेत् ।।
अलाभे वापि दध्नश्च क्षीरेण सह मिश्रयेत्।।192.२०।।
दधि क्षौद्रं घृतं चैव कारयेत समं तथा ।।
समर्पयामि देवेश रुद्र सर्पिर्घृतं मधु ।।२१।।
सर्वेषामप्यलाभे तु मम कर्मपरायणाः ।।
अप एव ततो गृह्य इमं मन्त्रमुदाहारेत् ।। २२ ।।
मन्त्रः—
योऽसौ भवान्नाभिमात्रप्रसूतो यज्ञैश्च मन्त्रैः सरहस्यजप्यैः ।।
सोऽयं मया ते परिकल्पितश्च गृहाण दिव्यो मधुपर्क्कनामा ।। २३ ।।
यो ददाति महाभागे मयोक्तं विधिपूर्वकम् ।।
सर्वयज्ञफलं प्राप्य मम लोकं प्रपद्यते ।। २४ ।।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।।
यो वै प्राणान्प्रमुंचेत मम कर्मपरायणः ।। २५ ।।
तस्य चैवेह दातव्यं मन्त्रेण विधिपूर्वकम् ।।
यावत्प्राणान्प्रमुंचेत कृत्वा कर्म सुपुष्कलम् ।।२६।।
मद्भक्तेन तु दातव्यं सर्वसंसारमोक्षणम् ।।
दृष्ट्वा तु विह्वलं ह्येनं मम कर्मपरायणः ।।२७।।
मधुपर्क्कं परं गृह्य चेमं मन्त्रमुदाहरेत् ।।२८ ।।
मन्त्रः-
योऽसौ भवांस्तिष्ठति सर्वदेहे नारायणः सर्वजगत्प्रधानः ।।
गृहाण चैवं सुरलोकनाथ भक्तोपनीतं मधुपर्क्कसंज्ञम् ।। २९ ।।
अनेनैव तु मन्त्रेण दद्याच्च मधुपर्क्ककम् ।।

नरस्य मृत्युकाले तु दद्यात्संसार मोक्षणम् ।। 192.३० ।।
एषा गतिर्महाभागे मधुपर्क्कस्य कीर्त्तिता ।।
एवं कश्चिन्न जानाति मधुपर्कं वसुन्धरे।।३१ ।।
एवं हि मधुपर्क्कश्च देयः सिद्धिमभीप्सुभिः ।।
अर्चित्वा देवदेवेशं सर्वसंसारनाशनम् ।। ३२ ।।
ददाति मधुपर्कं यः स याति परमां गतिम् ।।
अयं पवित्रो विमलः सर्वकाम विशोधनः ।। ३३ ।।
दीक्षिताय च दातव्यो यश्च शिष्यो गुरुप्रियः ।।
न मूर्खाय प्रदातव्यमविनीताय कर्हिचित् ।।३४।।
शृणोति मधुपर्क्कस्य चाख्यानं पापनाशनम् ।।
याति दिव्यां परां सिद्धिं मधुपर्क्कस्य कारणात् ।। ३५ ।।
एतत्ते कथितं भद्रे मधुपर्क्कविभावनम् ।।
सर्वसंसारमोक्षार्थं यदीच्छेत्सिद्धिमुत्तमाम् ।। ३६ ।।
राजद्वारे श्मशाने वा भये च व्यसने तथा ।।
ये पठन्ति त्विमां शान्तिं शीघ्रं कार्यं भविष्यति ।। ३७ ।।
अपुत्रो लभते पुत्रमभार्यश्च प्रियां लभेत् ।।
अपतिर्लभते कान्तं बद्धो मुच्येत बन्धनात् ।।३८ ।।
एतत्ते कथितं भूमे महाशान्तिं सुखावहाम् ।।
सर्वसंसारमोक्षार्थं रहस्यं परमं महत्।।३९।।
यस्त्वनेन विधानेन कुर्याच्छान्तिमनुत्तमाम्।।
सर्वसङ्गान्परित्यज्य मम लोकं च गच्छति ।। 192.४० ।।
इति श्रीवराहपुराणे भगवच्छास्त्रे सर्वशान्तिकरणं नाम द्विनवत्यधिकशततमोऽध्यायः ।। १९२ ।।

अथ नचिकेतः प्रयाणवर्णनम् ।।
लोमहर्षण उवाच ।।
व्यासशिष्यं महाप्राज्ञं वेदवेदाङ्गपारगम् ।।
द्वारदेशे समासीनं कृतपूर्वाह्णिकक्रियम् ।। १ ।।
अश्वमेधे तथा वृत्ते राजा वै जनमेजयः ।।
ब्रह्मवध्याभिभूतस्य दीक्षां द्वादशवार्षिकीम् ।। २ ।।
प्रायश्चित्तं चरित्वैवमागतो गजसाह्वयम् ।।
उपगम्य महात्मानं जाह्नवीतीरसंश्रयम् ।। ३ ।।
ऋषिं परमसम्पन्नं वैशम्पायनमञ्जसा ।।
कर्मणा प्रेरितस्तेन चिन्ताव्याकुललोचनः ।। ४ ।।
कुरूणां पश्चिमो राजा पश्चात्तापेन पीडितः ।।
व्यासशिष्यमुपागम्य प्रश्नमेनमपृच्छत ।। ५ ।।
जनमेजय उवाच ।।
भगवञ्जायते तीव्रं चिन्तयानस्य सुव्रत ।।
कर्मपाकफलं यस्मिन्मानुषैरुप भुज्यते।।६।।
एतदिच्छाम्यहं श्रोतुं कीदृशं तु यमालयम्।।
किं प्रमाणं च किं रूपं कथं गत्वा स पश्यति ।।७।।
न गच्छेयं कथं विप्र प्रेतराज्ञो निवेशनम् ।।
धर्मराजस्य धीरस्य सर्वलोकानुशासिनः ।। ८ ।।
सूत उवाच ।।
एवं पृष्टो महातेजास्तेन राज्ञा द्विजोत्तमः ।।
उवाच मधुरं वाक्यं राजानं जनमेजयम् ।। ९ ।।
वैशम्पायन उवाच ।।
शृणु राजन्पुरावृत्तां कथां परमशोभनाम् ।
धर्मवृद्धिकरीं नित्यां यशस्यां कीर्तिवर्द्धिनीम् ।। 193.१० ।।
पावनीं सर्वपापानां प्रवृत्तौ शुभकारिणीम् ।।
इतिहासपुराणानां कथां वै विदुषां प्रियाम् ।। ११ ।।
कश्चिदासीत्पुरा राजनृषिः परमधार्मिकः ।।
उद्दालक इति ख्यातः सर्ववेदाङ्गतत्त्ववित् ।। १२ ।।
तस्य पुत्रो महातेजा योगमास्थाय बुद्धिमान् ।।
नाचिकेत इति ख्यातः सर्ववेदाङ्गतत्त्ववित् ।। १३ ।।
तेन रुष्टेन शप्तोऽभूत्पुत्रः परमधार्मिकः ।।
गच्छ शीघ्रं यमं पश्य मम क्रोधेन दुर्मते ।। १४ ।।

तथेत्युक्त्वा महातेजाः पुत्रः परमधार्मिकः ।।
चिन्तयित्वा मुहुर्तं तु योगमास्थाय बुद्धिमान् ।। १९ ।।
क्षणेनान्तर्हितो जातः पितरं प्रत्युवाच ह ।।
विनयात्पृष्ठतो वाक्यं भावेन च समन्वितम् ।। १६ ।।
मा भूद्वाक्यं च ते मिथ्या धार्मिकस्य कदाचन ।।
गमिष्यामि पुरं रम्यं धर्मराजस्य धीमतः ।। १७ ।।
इह चैव पुनस्तावदागमिष्ये न संशयः ।। १८ ।।
पितोवाच ।।
एकस्त्वमसि वत्सश्च नान्यो बन्धुर्विधीयते ।।
अधर्मं चानृतं चास्तु त्वकीर्त्तिर्वापि पुत्रक ।। १९ ।।
मिथ्याभिशंसिनं तात यथेष्टं तारयिष्यति ।।
रोषेण हि मृषावादी निर्दयः कुलपांसनः ।। 193.२०।।
अप्रवृत्तस्त्वसम्भाष्यो योऽहं मिथ्या प्रयुक्तवान् ।।
त्वां वै धर्मसमाचारमभिधानेन शप्तवान् ।। २१ ।।
अहं पुत्र न सद्वादी न क्षमे धर्मदूषितम् ।।
मम त्वं हि महाभाग नित्यं चित्तानुपालकः।।२२।।
धर्मज्ञश्च यशस्वी च नित्यं क्षान्तो जितेन्द्रियः।।
शुश्रूषुरनहंवादी शक्तस्तारयितुं मम ।।२३।।
याचितस्त्वं मया पुत्र गन्तुं वै तत्र नार्हसि ।।२४।।
यदि वैवस्वतो राजा तत्र प्राप्तं यदृच्छया ।।
रोषेण त्वां महातेजा विसृजेन्न कदाचन ।। २५ ।।
विनश्येयमहं पश्य कुलसेतुविनाशनः।।
धिक्कृतः सर्वलोकेन पापकर्त्ता नराधमः ।। २६।।
नरकस्य पुदित्याख्या दुःखेन नरकं विदुः।।
पुतित्राणं भवेत्पुत्रादिहेष्यति परत्र च ।।२७।।
हुतं दत्तं तपस्तप्तं पितरश्चापि पोषिताः ।।
अपुत्रस्य हि तत्सर्वं मोघं भवति निश्चयः ।। २८ ।।
शुश्रूषावान्भवेच्छूद्रो वैश्यो वा कृषिजीवनः ।।।
सस्यगोप्ता तु राजन्यो ब्राह्मणो वा स्वकर्मकृत् ।। २९ ।।
तपो वा विपुलं तप्त्वा दत्त्वा दानमनुत्तमम् ।।
अपुत्रो नाप्नुयात्स्वर्गं यथा तात मया श्रुतम् ।। 193.३० ।।
पुत्रेण लभते जन्म पौत्रेण तु पितामहः ।।
पुत्रस्य च प्रपौत्रेण मोदते प्रपितामहः ।। ३१ ।।

न हास्यामीति वत्स त्वां मम वंशविवर्द्धनम् ।।
याच्यमानः प्रयत्नेन तत्र गन्तुं न चार्हति ।। ३२ ।।
वैशम्पायन उवाच ।।
एवं विलपमानं तं पितरं प्रत्युवाच ह ।।
हृष्टपुष्ट वपुर्भूत्वा पुत्रः परमधार्मिकः ।। ३३ ।।
पुत्र उवाच ।।
न विषादस्त्वया कार्यो द्रक्ष्यसे मामिहागतम् ।।
दृष्ट्वा च तमहं देवं सर्वलोकनमस्कृतम् ।। ३४ ।।
आगच्छामि पुनश्चात्र न भयं मेऽस्ति मृत्युतः ।।
पूजयिष्यति मां तात राजा त्वदनुकंपया ।। ३५ ।।
सत्ये तिष्ठ महाभाग सत्यं च परिपालय ।।
सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ।। ३६।।
सूर्यस्तपति सत्येन वातः सत्येन वाति च ।।
अग्निर्दहति सत्येन सत्येन पृथिवी स्थिता ।।३७।।
उदधिर्ल्लङ्घयेन्नैव मर्यादां सत्यपालितः ।।
मन्त्रः प्रयुक्तः सत्येन सर्वलोकहितायते ।।३८।।
सत्येन यज्ञा वर्त्तन्ते मन्त्रपूताः सुपूजिताः ।।
सत्येन वेदा गायन्ति सत्ये लोकाः प्रतिष्ठिताः ।। ३९ ।।
सत्यं गाति तथा साम सर्वं सत्ये प्रतिष्ठितम् ।।
सत्यं स्वर्गश्च धर्मश्च सत्यादन्यन्न विद्यते ।। 193.४० ।।
सत्येन सर्वं लभते यथा तात मया श्रुतम् ।।
न हि सत्यमतिक्रम्य विद्यते किंचिदुत्तमम् ।।४१।।
देवदेवेन रुद्रेण वेदगर्भः पुरा किल ।।
सत्यस्थितेन देवानां परित्यक्तो महात्मना ।। ४२ ।।
दीक्षां धारयते ब्रह्मा स तेनैव सुयन्त्रितः ।।
और्वेणाग्निस्तथा क्षिप्तः सत्येन वडवामुखे ।। ४३ ।।
संवर्तेन पुरा तात सर्वे लोकाः सदैवताः ।।
देवानामनुकंपार्थं धृता वीर्यवता तदा ।।४४।।
पाताले पालयन् सत्यं बद्धो वैरोचनो वसन् ।।
वर्द्धमानो महाशृङ्गैः शतशृङ्गो महागिरिः ।। ४५ ।।
स्थितः सत्ये महाविन्ध्यो वर्द्धमानो न वर्द्धते ।।
सर्वं चराचरमिदं सत्येन श्रीयते जगत् ।। ४६ ।।
गृहधर्माश्च ये दृष्टा वानप्रस्थाश्च शोभिताः ।।

यतीनां च गतिः शुद्धा ये चान्ये व्रतसंस्थिताः ।।४७।।
अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ।। ४८ ।।
सत्येन पाल्यते धर्मो धर्मो रक्षति रक्षितः ।।
तस्मात् सत्यं कुरुष्वाद्य रक्ष आत्मानमात्मना ।। ४९ ।।
एवमुक्त्वा हृष्टपुष्टः स्वेन देहेन सुव्रत ।।
तपसा प्राप्तयोगस्तु जितात्मा कृतसंयमः ।।193.५०।।
ऋषिपुत्रो महातेजा सत्यवागनसूयकः ।।
प्राप्तश्च परमं स्थानं यत्र राज्ञो यमस्य तु ।। ५१ ।।
इति श्रीवराहपुराणे प्रागितिहासे संसारचक्रे नचिकेतप्रयाणं नाम त्रिनवत्यधिकशततमोऽध्यायः ।। १९३ ।।

अथ नचिकेतसो आगमनवर्णनम् ।।
वैशम्पायन उवाच ।।
गतश्च परमं स्थानं यत्र राजा दुरासदः ।।
अर्चितस्तु यथान्यायं दृष्ट्वैव तु विसर्जितः ।। १ ।।
ततो हृष्टमना राजन्पुत्रं दृष्ट्वा तपोनिधिः ।।
परिष्वज्य च बाहुभ्यां मूर्द्धन्याघ्राय यत्नतः ।। २ ।।
दिवं च पृथिवीं चैव नादयामास हृष्टवत् ।।
स संहृष्टमनाः प्रीतस्तानुवाच तपोधनान् ।। ३ ।।
पश्यन्तु मम पुत्रस्य प्रभावं दिव्यतेजसः ।।
यमस्य भवनं गत्वा पुनः शीघ्रमिहागतः ।। ४ ।।
पितृस्नेहानुभावेन गुरुशुश्रूषयापि च ।।
दैवेन हेतुना चायं जीवन्दृष्टो मया सुतः ।। ५ ।।
लोके मत्सदृशो नास्ति पुमान्भाग्यसमन्वितः ।।
एष मृत्युमुखं गत्वा मम पुत्र इहागतः ।। ६ ।।
कच्चित्त्वं न हतो वत्स नैव बद्धो यमालये ।।
कच्चित्ते स शिवः पन्था गच्छतस्तव पुत्रक ।।७ ।।
कच्चित्ते व्याधयो घोरा नान्वगच्छन्यमालये ।।
किमपूर्वं त्वया दृष्टं कच्चित्तुष्टो महातपाः ।। ८ ।।
कच्चिद्राजा त्वया दृष्टः प्रेतानामधिपो बली ।।
परुषेण न कच्चित्त्वां यमः पश्यति चक्षुषा ।। ९ ।।
कच्चिन्न तुष्टो भगवांस्त्वां दृष्ट्वा स्वयमागतम् ।।
कच्चिच्छीघ्रं विसृष्टोऽसि धर्मराजेन पुत्रक ।। 194.१० ।।
कच्चिद्दौवारिकास्तत्र न रौद्रास्त्वां यमालये ।।
कच्चिद्राज्ञा विसृष्टं तु ना बाधन्तेतरे जनाः ।। ११ ।।
कच्चित्पन्थास्त्वया लब्धो निर्गमो वा यमालये ।।
अयं मम सुतः प्राप्तः प्रसन्ना मम देवताः ।। १२ ।।
ऋषयश्च महाभागा द्विजाश्च सुमहाव्रताः ।।
यन्मे वत्स पुनः प्राप्तो यमलोकाद्दुरासदात् ।। १३ ।।
एवमाभाषमाणं तु श्रुत्वा सर्वे वनौकसः ।।
त्यक्त्वा व्रतानि सर्वाणि नियमांश्च तथैव च ।। १४ ।।
जपन्तश्चैव जाप्यानि पूजयन्तश्च देवताः ।।
उदूर्द्ध्वबाहवः केचित्तिष्ठन्तोऽन्ये सुदारुणम् ।। १५।।
एकपादेन तिष्ठन्तः पश्यन्तोऽन्ये दिवाकरम् ।।

एवमेव परित्यज्य नियमान्पूर्वसंचितान् ।। १६ ।।
वैश्वानरा महाभागास्तपसा संशितव्रताः ।।
आगतास्त्वरितं द्रष्टुं नाचिकेतं सुतं तदा ।। १७ ।।
दिग्वाससश्च ऋषयो दन्तोलूखलिनस्तथा ।।
अश्मकूटाश्च मौनाश्च शीर्णपर्णांबुभोजनाः।।१८।।
धूमदाश्च तथा चान्ये तप्यमानाश्च पावके ।।
परिवार्य तथा दृष्ट्वा तस्य पुत्रं तपोनिधिम्।। १९ ।।
उपविष्टास्तथा चान्ये स्थिताश्चान्ये सुयन्त्रिताः ।।
ते सर्वे तं तु पृच्छन्ति ऋषयो वेदपारगाः ।। 194.२० ।।
तं नाचिकेतसं दृष्ट्वा यमलोकादिहागतम् ।।
भीतास्तत्र स्थिता हृष्टा केचित्कौतूहलान्विताः ।।२१ ।।
केचिद्विमनसश्चैव केचित्संशयवादिनः ।।
तमूचुः सहिताः सर्वे ऋषिपुत्रं तपोधनम् ।। २२ ।।
ऋषय ऊचुः ।।
भो भो सत्यव्रताचार गुरुशुश्रूषणे रत ।।
नाचिकेतः सुत प्राज्ञ स्वधर्मपरिपालक ।। २३ ।।
ब्रूहि सत्यं त्वया दृष्टं श्रुतं च सविशेषकम् ।।
ऋषीणां श्रोतुकामानां पितुश्चैव विशेषतः।।२४।।
अपि गुह्यं च वक्तव्यं पृष्टे सति विशेषतः ।।
सर्वस्यापि भयं तीव्रं यद्द्वारा प्रतिदृश्यते।।२५।।
मृतं नैव परं तात दृश्यते कालमायया ।।
स्वकर्म भुज्यते तात प्रयत्नेन च मानवैः।।२६।।
इह चैव कृतं यत्तु तत्परत्रोपभुज्यते।।
करोति यदि तत्कर्म शुभं वा यदि वाऽशुभम् ।।२७।।
तथाऽत्र दृश्यते काले कालस्यैव तु मायया ।।
म्रियते च यथा जन्तुर्यथा गर्भे च तिष्ठति।।२८।।
तस्य पारं न गच्छन्ति बहवः पारचिन्तकाः ।।
तत्र स्थिते जगत्सर्वं लोभमोहतमोवृतम्।।२९।
चिन्तयेत न चिन्ताऽत्र मृगयन्ति च यद्धितम् ।।
करोति चित्रगुप्तः किं किं च जल्पत्यसौ पुनः।।194.३०।।
धर्मराजस्य किं रूपं कालो वा कीदृशो मुने।।
किंरूपा व्याधयश्चैव विपाको वापि कीदृशः।।३१।।
किंच कुर्वन्प्रमुच्येत किं वा कर्म समाचरेत्।।

आस्पदं सर्वलोकस्य तत्कर्म दुरतिक्रमम्।।३२।।
क्रोधबन्धनजं क्लेशं कर्षणं छेदनं तथा ।।
येन गच्छन्ति विप्रेन्द्र लोके कर्मविदो जनाः।।३३।।
जितात्मानः कथं यान्ति कथं गच्छति पापकृत् ।।
यथाश्रुतं यथादृष्टं यथा चैवावधारितम् ।।३४।। प्
रणयात्सौहृदात्स्नेहादस्माभिरभिपृच्छितम् ।।
वद सर्वं महाभाग याथातथ्येन विस्तरम्।।३९।।
वैशम्पायन उवाच।।
ऋषिभिस्त्वेवमुक्तस्तु नाचिकेतो महामनाः ।।
यदुवाच महाराज शृणु तज्जनमेजय ।।३६ ।।
इति श्रीवराहपुराणे संसारचक्रे नचिकेतागमनं नाम चतुर्नवत्यधिकशततमोऽध्यायः ।।१९४।।

अथ यमलोकस्थपापिवर्णनम् ।।

नाचिकेत उवाच ।।

कथ्यमानं मया विप्राः शृण्वन्तु तपसि स्थिताः ।।
नमश्च तस्मै देवाय धर्मराजाय धीमते ।।१।।
संसारं तु यथाशक्ति कथ्यमानं निबोधत ।।
असत्यवादिनो ये च जन्तुस्त्रीबालघातकाः।।२।।
तथा ब्रह्महणः पापा ये च विश्वासघातकाः ।।
ये ये शठाः कृतघ्नाश्च लोलुपाः पारदारिकाः ।।३।।
कन्यानां दूषका ये च ये च पापरता नराः ।।
वेदानां दूषकाश्चैव वेदमार्गविहिंसकाः ।।४।।
शूद्राणां याजकाश्चैव हाहाभूता द्विजातयः ।।
अयाज्ययाजकाश्चैव ये ये कुष्ठयुता नराः ।।५।।
सुरापो ब्रह्महा चैव यो द्विजो वीरघातकः ।।
तथा वार्धुषिका ये च जिह्मप्रेक्षाश्च ये नराः ।। ६ ।।
मातृत्यागी पितृत्यागी यः स्वसाध्वीं परित्यजेत् ।।
गुरुद्वेषी दुराचारो दूताश्चाव्यक्तभाषिणः ।।७ ।।
गृहक्षेत्रहरा ये च सेतुबन्धविनाशकाः।।
अपुत्राश्चाप्यदाराश्च श्रद्धया च विवर्जिताः।।८।।
अशौचा निर्दयाः पापा हिंसका व्रतभञ्जकाः ।।
सोमविक्रयिणश्चैव स्त्रीजितः सर्वविक्रयी ।। ९ ।।
भूम्यामनृतवादी च वेदजीवी च यो द्विजः ।।
नक्षत्री च निमित्ती च चाण्डालाध्यापकस्तथा ।।195.१० ।।
सर्वमैथुनकर्ता च अगम्यागमने रतः ।।
मायिका रतिकाश्चैव तुलाधाराश्च ये नराः ।।११ ।।
सर्वपापसुसङ्गाश्च चिन्तका येऽतिवैरिणः ।।
स्वाम्यर्थे न हता ये च ये च युद्धपराङ्मुखाः।।१२।।
परवित्तापहारी च राजघाती च यो नरः ।।
अशक्तः पापघोषश्च तथा ये ह्यग्निजीविनः ।। १३ ।।
शुश्रूषया च मुक्ता ये लिङ्गिनः पापकर्मिणः ।।
पात्रकारी चक्रिणश्च नरा ये चाप्यधार्मिकाः ।।१४।।
देवागारांश्च सत्राणि तीर्थविक्रयिणस्तथा ।।
व्रतविद्वेषिणो ये च तथाऽसद्वादिनो नराः ।। १५ ।।
मिथ्या च नखरोमाणि धारयन्ति च ये नराः ।।

कूटा वक्रस्वभावाश्च कूटशासनकारिणः ।।१६।।
अज्ञानादव्रती यश्च यश्चाश्रमबहिष्कृतः ।।
विप्रकीर्णप्रतिग्राही सूचकस्तीर्थनाशकः ।।१७।।
कलही च प्रतर्क्यश्च निष्ठुरश्च नराधमः।।
एते चान्ये च बहवो ह्यनिर्दिष्टाः सहस्रशः।।१८।।
स्त्रियो नराश्च गच्छन्ति यत्र तच्छृणुतामलाः ।।
कुर्वन्तीह यथा सर्वे तत्र गत्वा यमालये ।।१९।।
तानि वै कथयिष्यामि श्रूयतां द्विजसत्तमाः ।।
वैशम्पायन उवाच ।।
एवं तस्य वचः श्रुत्वा सर्व एव तपोधनाः।।195.२०।।
पप्रच्छुर्विस्मयाविष्टा नाचिकेतमृषिं तदा ।।
ऋषय ऊचुः ।।
त्वया सर्वं यथा दृष्टं ब्रूहि तत्र विदां वर ।। २१ ।।
यथास्वरूपः कालोऽसौ येन सर्वं प्रवर्त्तते ।।
इह कर्माणि यः कृत्वा पुरुषो ह्यल्पचेतनः ।।२२।।
वारयेत्स तदा तं तु ब्रह्मलोके च स प्रभुः ।।
कल्पान्तं पच्यमानोऽपि दह्यमानोपि वा पुनः ।।२३।।
न नाशो हि शरीरस्य तस्मिन्देशे तपोधनाः ।।
यस्य यस्य हि यत्कर्म पच्यमानः पुनः पुनः ।।२४ ।।
अवश्यं चैव गन्तव्यं तस्य पार्श्वं पुनःपुनः ।।
न तु त्रासाद्द्विजः शक्तस्तत्र गन्तुं हि कश्चन ।।२५।।
न गच्छन्ति च ये तत्र दानेन निगमेन च ।।
वैतरण्याश्च यद्रूपं किंतोयं च वहत्यसौ ।।२६।।
रौरवो वा कथं विप्र किंरूपं कूटशाल्मलेः ।।
कीदृशा वा हि ते दूताः किं कार्याः किं पराक्रमाः ।। २७ ।।
किं च किंच तु कुर्वाणाः किंच किंच समाचरन् ।।
न चेतो लभते जन्तुच्छादितं पूर्वतेजसा ।।२८।।
धृतिं न लभते किंचित्तैस्तैर्दोषैः सुवासिताः ।।
दोषं सत्यमजानन्तस्तथा मोहेन मोहिताः ।।२९।।
बोद्धव्यं नावबुध्यन्ते गुणानां तु गुणोत्तरम् ।।
हाहाभूताश्च चिंतार्त्ताः सर्वदोषसमन्विताः ।।195.३०।।
परं परमजानन्तो रमन्ते कस्य मायया ।।
क्लिश्यन्ते बहवस्तत्र कृत्वा पापमचेतसः ।।३१ ।।

एतत्कथय वत्स त्वं यतः प्रत्यक्षदर्शिवान् ।। ३२।।

इति श्रीवराहपुराणे संसारचक्रे यमलोकस्थपापिविर्णनं नाम पञ्चनवत्यधिकशततमोऽध्यायः ।। १९५ ।।

अथ धर्मराजपुरवर्णनम् ।।
वैशम्पायन उवाच ।।
तेषां तद्वचनं श्रुत्वा ऋषीणां भावितात्मनाम् ।।
उवाच वाक्यं वाक्यज्ञः सर्वं निरवशेषतः ।। १ ।।
नाचिकेत उवाच ।।
श्रूयतां द्विजशार्दूलाः कथ्यमानं मया द्विजाः ।।
योजनानां सहस्रं तु विस्तराद्द्विगुणायतम् ।। २ ।।
द्विगुणं परिवेषेण तद्वै प्रेतपतेः पुरम् ।।
भवनैरावृत्तं दिव्यैर्जाम्बूनदमयैः शुभैः ।। ३ ।।
हर्म्यप्रासादसंबाधमहाट्टालसमन्वितम् ।।
सौवर्णेनैव महता प्राकारेणाभिवेष्टितम् ।।४ ।।
कैलासशिखराकारैर्भवनैरुपशोभितम् ।।
तत्र वै विमला नद्यस्तोयपूर्णाः सुशोभनाः ।। ५ ।।
दीर्घिकाश्च तथा कान्ता नलिन्यश्च सरांसि च ।।
तडागाश्चैव कूपाश्च वृक्षषण्डाः सुशोभनाः ।।६।।
नरनारीसमाकीर्णा गजवाजिसमाकुलाः ।।
नानादेशसमुत्थानैर्नानाजातिभिरेव च ।।७।।
सर्वजीवैस्तथाकीर्णं तस्य राज्ञः पुरोत्तमम्।।
क्वचिद्युद्धं क्वचिद्द्वंद्वं तेन बद्धो यमालये ।।८।।
क्वचिद्गायन् हसंश्चैव क्वचिद्दुःखेन दुःखितः ।।
क्वचित्क्रीडन्यथाकर्म क्वचिद्भुञ्जन् क्वचित्स्वपन् ।।९।।
क्वचिन्नृत्यन्क्वचित्तिष्ठन् क्वचिद्बन्धनसंस्थितः ।।
एवं शतसहस्राणि तस्य राज्ञः पुरोत्तमे ।।196.१०।।
स्वकर्मभिः प्रदृश्यन्ते स्थूलाः सूक्ष्माश्च जन्तवः।।
मया दृष्टा द्विजश्रेष्ठास्तस्य राज्ञः पुरोत्तमे ।। ११ ।।
अङ्गानि चैव सीदन्ति मनो विह्वलतीव मे ।।
दिव्यभावाः स्पृशन्त्येते चिन्तयानस्य तत्फलम् ।। १२ ।।
तथापि कथयिष्यामि यथादृष्टं तथाश्रुतम् ।।
पुष्पोदका नाम तत्र नदीनां प्रवरा नदी ।। १३ ।।
दृश्यते न च दृश्येत नानावृक्षसमाकुला ।।
सुवर्णकृतसोपाना दिव्यकांचनवालुका ।। १४ ।।
प्रसन्नेन च तोयेन शीतलेन सुगन्धिना ।।
पुष्प्यत्फलवनाकीर्णा नाना पक्षिसमाकुला ।। १५ ।।

अथ शुभाशुभ फलानुकीर्तनवर्णनम् ।।
ऋषिपुत्र उवाच ।।
इदमन्यत्पुरा विप्राः श्रूयतां तस्य भाषितम् ।।
यमस्य चित्रगुप्तस्य यच्च तत्र मया श्रुतम् ।। १ ।।
अयं तु भवतां यातु यातु स्वर्गं महीक्षिताम् ।।
अयं वृक्षस्त्वयं तिर्यगयं मोक्षं व्रजेन्नरः ।। २ ।।
अयं नागो भवेच्छीघ्रमयं तु परमां गतिम् ।।
स्वपूर्वकान्पश्यतेऽयमात्मनस्तु पितामहान् ।। ३ ।।
क्लिश्यतो रुदतश्चैव वदतश्च पुनःपुनः ।।
स्वेन दोषेण सर्वे वा अक्षयं नरकङ्गताः ।। ४ ।।
दारत्यागी त्वधर्मिष्ठः पुत्रपौत्रविवर्जितः ।।
क्षिप्तं वै रौरवे ह्येनं क्षपयन्तु महौजसः ।। ५ ।।
मुच्यतां त इमे सर्वे ह्यतीतानागतास्तथा ।।
मुच्यन्तामाशु मुच्यन्तां त एते पापवर्जिताः ।। ६।।
आगमे च विपत्तौ च सर्वधर्मानुपालकाः ।।
ते तु कल्पान्बहून्स्वर्ग उषित्वा ह्यनसूयकाः ।।७।।
बहुसुन्दरनार्यङ्के ह्याद्ये परमधार्मिकम् ।।
कलौ मानुषतां यातु धर्मस्येह निदर्शनम् ।। ८ ।।
त्रिविष्टपे परिक्लेशो वासो ह्यस्याक्षयो भवेत् ।।
अयमायोधने शत्रुं हत्वा तु निधनङ्गतः ।। ९ ।।
ब्राह्मणार्थे गवार्थे वा राष्ट्रार्थे निधनङ्गतः ।।
शक्रस्य ह्यमरावत्यां निवेदयत मा चिरम् ।।205.१०।।
तत्र वैमानिको भूत्वा कल्पमेकं निवत्स्यति ।।
तथैवायं महाभागो धर्मात्मा धर्मवत्सलः ।। ११ ।।
बहुदानरतो नित्यं सर्वभूतानुकम्पकः ।।
एनं गन्धैश्च माल्यैश्च शीघ्रमेव प्रपूजय ।। १२ ।।
अस्मै पूजा भवेद्देया मयादिष्टा महात्मने ।।
वीज्यतां चामरैरेष रथमस्मै प्रदीयताम् ।।१३।।
प्रेतवासं समुत्सृज्य हीतो यातु त्रिविष्टपम् ।।
इन्द्रस्यार्द्धं भवेच्चैव देवदेवस्य धीमतः ।। १४ ।।
शङ्खतूर्यनिनादेन तत्र वै विजयेन च ।।
तत्र वै पूजयित्वा च प्रायशो लभतां सुखम् ।। १५ ।।
अयं गच्छतु भद्रं चापीन्द्रदेशं दुरासदम् ।।

अनेन वै कीर्तिमता लोकः सर्वो ह्यलंकृतः ।। १६।।
गुणैश्च शतसंख्याकैः शक्र एनं प्रतीक्षते ।।
तावत्स्थास्यति धर्मात्मा यावच्छक्रस्त्रिविष्टपे ।। १७ ।।
तावत्स मोदते स्वर्गे यावद्धर्मोऽनुमीयते ।।
ततच्युतश्च कालेन मानुष्ये सुखमश्नुते ।। १८ ।।
रत्नवेणुप्रदश्चैव सर्वधर्मैरलंकृतः ।।
अश्विनोर्नय लोकं तु सर्वसौख्यसमन्वितम् ।। १९ ।।
अयं यातु महाभागो देवदेवं सनातनम् ।।
अतिसृष्टः पुरा येन यथोक्ताः सुखदोहनाः ।। 205.२० ।।
सर्वशक्त्या समेतेन द्विजेभ्य उपपादिताः ।।
शुचीनां ब्राह्मणानाम्बह्वन्नदानं विशेषतः ।। २१ ।।
तेन कल्पं वसिष्यन्ति रुद्रकल्पा मनोरमाः ।।
तत्र कल्पं वसेद्गत्वा रुद्रलोकं न संशयः ।। २२ ।।
तेन दत्तं द्विजातिभ्यो मधुखण्डपुरःसरम् ।।
रसैश्च विविधैर्युक्तं सर्वगन्धमनोरमम् ।। २३ ।।
तरुणी क्षीरसम्पन्ना गौः सुवर्णयुता शुभा ।।
सवत्सा हेमवासाश्च दत्ताऽनेन महात्मना ।। २४ ।।
अस्य लेख्यं मया दृष्टं तिस्रः कोट्यस्त्रिविष्टपे ।।
स्वर्गात्परिच्युतश्चापि ऋषीणां जायते कुले ।।२५।।
सुवर्णस्य प्रदाता च त्रिदशेभ्यो निवेद्यताम् ।।
त्रिदशानभ्यनुज्ञाप्य यातु देवमुमापतिम् ।। २६ ।।
तत्रैष वै महातेजा यथेष्टं काममाप्नुयात् ।।
तत्रैवायमपि प्रेतगणभक्तो महातपाः ।। २७ ।।
प्रयातु पितृभिः सार्द्धं तर्पिता येन पूर्वजाः ।।
दानव्रता दिवं यान्तु नानालोकनमस्कृताः ।।२८ ।।
अयं भद्रो महाकामं सर्वभूतहिते रतः ।।
सर्वकामैरयं पूज्यः सर्वकामप्रदो नरः ।। २९ ।।
क्षितिप्रदो द्विजातिभ्यो ह्ययं यातु त्रिविष्टपम् ।।
तत्रैव तिष्ठताद्वीरो ब्रह्मलोके सहानुगः ।। 205.३० ।।
विविधैः कामभोगैस्तु सेव्यमानो नरोत्तमः ।।
अक्षयं चाजरं स्थानं पूज्यमानो महर्षिभिः ।।३१ ।।
इति श्रीवराहपुराणे भगवच्छास्त्रे संसारचक्रे शुभाशुभफलानुकीर्त्तनं नाम
पञ्चाधिकद्विशततमोऽध्यायः ।। २०५ ।।

अथ शुभकर्मफलोदय प्रकरणम् ।।

ऋषिरुवाच ।।

चित्रगुप्तस्य सन्देशो वदतो यो मया श्रुतः ।।

श्रूयतां वै महाभागास्तपःसिद्धा द्विजोत्तमाः ।। १ ।।

इमं सर्वातिथिं दान्तं सर्वभूतानुकम्पकम् ।।

समान्नदानदातारं शेषभोजनभोजिनम् ।। २ ।।

मुञ्च मुञ्च महाभृत्य चैष धर्मस्य निर्णयः ।।

अहं कालेन सार्द्धं हि मृत्युना प्रकृतस्तथा ।। ३ ।।

मम स्थास्यन्ति पार्श्वेषु पापा वै विकृतास्तथा ।।

एनं गास्यन्ति गन्धर्वा गगनेऽप्सरसस्तथा ।।४ ।।

दीयतामासनं दिव्यं तथान्यद्यानमेव च ।

अन्यान्यान्कामयेत्कामान्मनसा यानि चेच्छति ।। ५ ।।

तत्तु शीघ्रं प्रदातव्यं धर्मराजस्य शासनात् ।।

अक्रियाणि तु दानानि पूर्वं दत्तानि धीमता ।। ६ ।।

प्रेक्षतां च महाभागो भोक्तुं चैव सहानुगः ।।

तिष्ठत्येषोऽत्र वै वीरो ममादेशान्महायशाः ।। ७ ।।।

यावत्स्वर्गाद्विमानानि समागच्छन्ति कृत्स्नशः ।।

ततः स प्रवरैर्यानैः सानुगः सपरिच्छदः ।। ८ ।।

देवानां भवनं यातु दैवतैरभिपूजितः ।।

तत्रैव रमतां वीरो यावल्लोको हि धार्यते ।। ९ ।।

स कृतार्थः सदा लोके यत्रैषोऽभिप्रयास्यति ।।

तत्र मेध्यं पवित्रं च यत्र स्थास्यत्ययं शुचिः ।। 206.१० ।।

नैककन्याप्रदातारं नैकयज्ञकृतं तथा ।।

पूज्यतां सर्वकामैस्तु पदं गच्छतु वैष्णवम् ।। ११ ।।

तत्रैष रमतां धीरः सहस्रमयुतं समाः ।।

ततो वै मानुषे लोके आद्ये वै जायतां कुले ।। १२ ।।

भूतानुकम्पको ह्येष क्रियतामस्य चार्च्चनम् ।।

वर्षाणामयुतं चायं तत्र तिष्ठतु देववत् ।। १३ ।।

जायते तु ततः पश्चात्सर्वमानुषपूजितः ।।

उपानहौ च छत्रं च जलभाजनमेव च ।। १४ ।।

असकृद्येन दत्तानि तस्मै पूजां प्रयच्छथ ।।

सभा यत्र प्रवर्त्तन्ते यस्मिन्देशे सहस्रशः ।। १५ ।।

हस्तेन संस्पृशत्येष मृदुना शीतलेन च ।।

विद्याधरस्तथा ह्येष नित्यं मुदितमानसः ।। १६ ।।

महापद्मानि चत्वारि तस्मिंस्तिष्ठन्तु नित्यशः ।।

ततश्च्युतश्च कालेन मानुषं लोकमास्थितः ।। १७ ।।

बहुसुन्दरनारीके कुले जन्म समाप्नुयात् ।।

दधि क्षीरं घृतं चैव येन दत्तं द्विजातिषु ।।१८।।

एष वा यातु नः पार्श्वमस्मै पूजां प्रयच्छथ ।।

नीयतां नीयतां शीघ्रं यत्रयत्र न चालयेत् ।। १९ ।।

गोरसस्य तु पूर्णानि भाजनानि सहस्रशः ।।

यत्र दत्त्वा च पीत्वा च बान्धवेभ्यो विभागशः ।। 206.२० ।।

ततः पश्चादयं यातु यत्र लोकोऽनसूयकः ।।

तत्रैव रमतां धीरो बहुवर्षशतान्ययम् ।। २१ ।।

बहुसुन्दरनारीभिः सेव्यमानो महातपाः ।।

अमराख्यो भवेत्तत्र गोलोकेषु समाहितः ।। २२ ।।

इदमेवापरं चैव चित्रगुप्तस्य भाषितम् ।।

सर्वदेवमया देव्यः सर्ववेदमयास्तथा ।। २३ ।।

अमृतं धारयन्त्यश्च प्रचरन्ति महीतले ।।

तीर्थानां परमं तीर्थमतस्तीर्थं न विद्यते ।। २४ ।।

पवित्रं च पवित्राणां पुष्टीनां पुष्टिरेव च ।।

तस्मात्पुरस्तु दातव्यं गवां वै मेध्यकारणात् ।। २५ ।।

दध्ना हि त्रिदशाः सर्वे क्षीरेण च महेश्वरः ।।

घृतेन पावको नित्यं पायसेन पितामहः ।। २६ ।।

सकृद्दत्तेन प्रीयन्ते वर्षाणां हि त्रयोदश ।।

तां दत्त्वा चैव पीत्वा च प्रीतो मेध्यस्तु जायते ।। २७ ।।

पंचगव्येन पीतेन वाजिमेधफलं लभेत् ।।

गव्यं तु परमं मेध्यं गव्यादन्यन्न विद्यते ।। २८ ।।

दन्तेषु मरुतो देवा जिह्वायां तु सरस्वती ।।
खुरमध्ये तु गन्धर्वाः खुराग्रेषु तु पन्नगाः ।। २९ ।।
सर्वसन्धिषु साध्याश्च चन्द्रादित्यौ तु लोचने ।।
ककुदे सर्वक्षत्राणि लांगूले धर्म आश्रितः ।। 206.३० ।।
अपाने सर्वतीर्थानि प्रस्रावे जाह्नवी नदी ।।
नानाद्वीपसमाकीर्णाश्चत्वारः सागरास्तथा ।। ३१ ।।
ऋषयो रोमकूपेषु गोमये पद्मधारिणी ।।
रोमे वसन्ति विद्याश्च त्वक्केशेष्वयनद्वयम् ।। ३२ ।।
धैर्यं धृतिश्च शान्तिश्च पुष्टिर्वृद्धिस्तथैव च ।।
स्मृतिर्मेधा तथा लज्जा वपुः कीर्त्तिस्तथैव च ।। ३३ ।।
विद्या शान्तिर्मतिश्चैव सन्ततिः परमा तथा ।।
गच्छन्तमनुगच्छन्ति ह्येता गावो न संशयः ।। ३४।।
यत्र गावो जगत्तत्र देवदेवपुरोगमाः ।।
यत्र गावस्तत्र लक्ष्मीः सांख्यधर्मश्च शाश्वतः ।। ३५ ।।
सर्वरूपेषु ता गावस्तिष्ठन्त्यभिमतास्तथा ।।
भवनेषु विशालेषु सर्वप्रासादपङ्क्तिषु ।। ३६ ।।
स्त्रियश्च पुरुषाश्चैव रक्षन्तश्च सुयन्त्रिताः ।।
शयनासनपानेषु ह्युपविष्टाः सहस्रशः ।। ३७ ।।
क्रीडन्ति विविधैर्भोगैर्भोगेषु च सहस्रशः ।।
तत्र पानगृहेष्वन्ये पुष्पमालाविभूषिताः ।। ३८ ।।
भक्ष्याणां विविधानां च भोजनानां च संचयात् ।।
शयनासनपानानि वाजिनो वारणांस्तथा ।। ३९ ।।
अपश्यन्विविधास्तत्र स्त्रियश्च शुभलोचना ।।
शोभयन्ति स्त्रियः काश्चिज्जलक्रीडा गतास्तथा ।। 206.४० ।।
उद्यानेषु तथा चान्या भवनेषु च पुण्यतः ।।
अनेन सदृशं नास्ति ह्यस्मादन्यन्न विद्यते ।। ४१ ।।
अहो सूत्रकृतं शिल्पमहोरत्नैरलंकृतम् ।।
एवं गृहाद्गृहं गच्छन्नहं तत्र ततस्तमः ।। ४२ ।।
ततस्तु निखिलं सम्यग्दृष्ट्वा कर्म महोदयम् ।।
पुनरेवागतः पार्श्वं यमस्य द्विजसत्तमाः ।। ४३ ।।
इति श्रीवराहपुराणे संसारचक्रे शुभकर्मफलोदयो नाम षडधिकद्विशततमोऽध्यायः ।। २०६ ।।

अथ संसारचक्रपुरुष विलोभनप्रकरणम् ।।
ऋषिपुत्र उवाच ।।
इदमन्यन्महाभागान्नारदात्कलहप्रियात् ।।
श्रुतं विप्रा यथा तत्र यमस्य सदसि स्वयम् ।। १ ।।
तथा च पृच्छतस्तस्य पुरावृत्तं महात्मनः ।।
आख्यानं कथयामास यदुक्तं चित्रभानुना ।। २ ।।
यथा च जनको राजा कामान्दिव्यानवाप्तवान् ।।
तत्सर्वं कथयिष्यामि श्रूयतां मुनिसत्तमाः ।।३।।
अयं तत्र महातेजा नारदो मुनिसत्तमः ।।
धर्मराजसभां प्राप्तस्तपसा द्योतितप्रभः ।।४ ।।
तत्र राजाऽथ वेगेन तं दृष्ट्वा स्वयमागतम् ।।
अर्चयित्वा यथान्यायं कृत्वा चैव प्रदक्षिणम् ।। ५ ।।
उवाच च महातेजाः सूर्यपुत्रः प्रतापवान् ।।
स्वागतं ते द्विजश्रेष्ठ दिष्ट्या प्राप्तोऽसि नारद ।। ६ ।।
सर्वज्ञः सर्वदर्शी च सर्वधर्मविदां वरः ।।
गान्धर्वस्येतिहासस्य विज्ञाता त्वं महामुने ।। ७।।
वयं पूताश्च मेध्याश्च त्वां दृष्ट्वा ह्यागतं विभो ।।
अयं देशः पुनः पूतः सर्वतो मुनिसत्तम ।। ८ ।।
यत्कार्यं येन वा कार्यं यद्वै मनसि वर्त्तते ।।
प्रब्रूहि भगवन्नाशु यच्चान्यत्किंचिदुत्तमम् ।। ९ ।।
दुर्ल्लभं त्रिषु लोकेषु यच्च प्रियतरं तव ।।
तपोमयानां सर्वेषां द्विजातीनां च सुव्रत ।। 207.१० ।।
इति धर्मवचः श्रुत्वा नारदः प्राह धर्मवित् ।।
अहं ते कथयिष्यामि यत्पृष्टं संशयास्पदम् ।। ११ ।।
नारद उवाच।।
भवान् पाता च गोप्ता च नेता धर्मस्य नित्यशः ।।
सत्येन तपसा क्षान्त्या धैर्येण च न संशयः ।। १२ ।।
भावज्ञश्च कृतज्ञश्च त्वदन्यो न हि विद्यते ।।
संशयं सुमहत्प्राप्तस्तन्ममाचक्ष्व सुव्रत ।। १३ ।।
अमरत्वं कथं याति व्रतेन नियमेन च ।।
केन वा दानधर्मेण तपसा वा सुरोत्तम ।। १४ ।।
अतुलां च श्रियं लोके कीर्त्तिं च सुमहत्फलम् ।।
लभन्ते शाश्वतं स्थानं दुर्ल्लभं विगतज्वराः ।। १५ ।।

केन गच्छन्ति नरकं पापिष्ठं लोकगर्हणम् ।।
सर्वमाख्याहि तत्त्वेन परं कौतूहलं हि मे ।। १६ ।।
यम उवाच ।।
गच्छन्ति हि नरा घोरा बहवोऽधर्मनिर्मितम् ।।
बन्धांश्च सुबहूंस्तत्र प्राप्नुवन्ति तपोधन ।। १७ ।।
विस्तरेण तु तत्सर्वं ब्रवीमि मुनिसत्तम ।।
श्रूयतां तन्महाभाग श्रुत्वा चैवोपधारय ।। १८ ।।
नाग्निचिन्नरकं याति न पुत्री न च भूमिदः ।।
शूरश्च शतवर्षी च वेदानां चैव पारगः ।। १९ ।।
पतिव्रता न गच्छन्ति सत्यवाक्याश्च ये नराः ।।
अजिताश्चाशठाश्चैव स्वामिभक्ताश्च ये नराः ।। 207.२० ।।
अहिंसका न गच्छन्ति ब्रह्मचर्यव्यवस्थिताः ।।
पतिव्रता दानवन्तो द्विजभक्ताश्च ये नराः ।। २१ ।।
स्वदारनिरता दान्ताः परदारविवर्जकाः ।।
सर्वभूतात्मभूताश्च सर्वभूतानुकम्पकाः ।। २२ ।।
न गच्छन्ति तु तं देशं पापिष्ठं तमसावृतम् ।।
यातनास्थानसंपूर्णं हाहाकारभयाकुलम् ।। २३ ।।
ज्ञानवन्तो द्विजा ये च ये च विद्यां पराङ्गताः ।।
उदासीना न गच्छन्ति स्वाम्यर्थे च हता नराः ।। २४ ।।
न गच्छन्त्यत्र दातारः सर्वभूतहिते रताः ।।
शुश्रूषका मातृपित्रोर्न गच्छन्ति च ये नराः ।। २५ ।।
तिलान् गां च हिरण्यं च पृथिवीं चापि शाश्वतीम् ।।
ब्राह्मणेभ्यः प्रयच्छन्ति न गच्छन्ति न संशयः ।। २६ ।।
यथोक्तं यजमानाश्च सत्रयाजिन एव च।।
चातुर्मास्यकरा ये च ये द्विजाः आहिताग्नयः ।।२७।।
गुरुचित्तानुपालाश्च कृतिनो मौनयन्त्रिताः ।।
नित्यस्वाध्यायिनो दान्ताः सदा सभ्याश्च ये नराः ।।२८।।
मां न पश्यन्ति ते चैव स्वात्मभावेन भाविताः।।
अपर्वमैथुना ये च न गच्छन्ति जितेन्द्रियाः ।।२९।।
ब्राह्मणा अमरत्वं च प्राप्नुवन्ति न संशयः ।।
निवृत्ताः सर्वकामेभ्यो निराशाः सुजितेन्द्रियाः ।। 207.३० ।।
न गच्छन्ति हि तद्घोरं यत्र ते पापकर्मिणः ।। ३१ ।।
नारद उवाच ।।

किं दानं श्रेय आहोस्वित्पात्रेण फलमुच्यते ।।
किं वा कर्म महत्कृत्वा स्वर्गलोके महीयते ।। ३२ ।।
रूपं वा धनधान्यं वा ह्यायुश्च कुलमेव वा ।।
प्राप्यते येन दानेन तन्ममाचक्ष्व सुव्रत ।। ३३ ।।
यम उवाच ।।
न शक्यं विस्तरेणेह वक्तुं वर्षशतैरपि ।।
शुभाशुभानां गतयो द्रष्टुं वा प्रष्टुमेव वा ।। ३४ ।।
किंचिन्मात्रं प्रवक्ष्यामि येन यत्प्राप्यते नरैः ।।
विविधानि च सौख्यानि प्रायशस्तु गुणागुणैः ।। ३५ ।।
रहस्यमिदमाख्यानं श्रूयतां मुनिसत्तम ।।
या गतिः प्राप्यते येन प्रेत्यभावे न संशयः ।। ३६ ।।
तपसा प्राप्यते स्वर्गस्तपसा प्राप्यते यशः ।।
आयुःप्रकर्षो भोगाश्च भवति तपसैव तु ।। ३७ ।।
ज्ञानविज्ञानमारोग्यं रूपसौभाग्यसम्पदः।।
तपसा प्राप्यते भोगो मनसा नोपदिश्यते ।।३८।।
एवं प्राप्नोति पुण्येन मौनेनाज्ञां महामुने ।।
उपभोगांस्तु दानेन ब्रह्मचर्येण जीवितम् ।। ३९ ।।
अहिंसया परं रूपं दीक्षया कुलजन्म च ।।
फल मूलाशिनो राज्यं स्वर्गः पर्णाशिनां भवेत् ।।207.४० ।।
पयोभक्ष्या दिवं यान्ति जायते द्रविणाढ्यता ।।
गुरुशुश्रूषया नित्यं श्राद्धदानेन सन्ततिः।।४१ ।।
गवाद्याः कालदीक्षाभिर्ये तु वा तृणशायिनः ।।
स्वयं त्रिषवणाद्ब्रह्म त्वपः पीत्वेष्टलोकभाक् ।। ४२ ।।
क्रतुयष्टा दिवं याति चोपहारं च सुव्रत ।।
कृत्वा तु दशवर्षाणि नीरपानाद्विशिष्यते ।। ४३ ।।
रसानां प्रतिसंहारात् सौभाग्यमनुजायते ।।
आमिषस्य प्रतीहाराद्भवत्यायुष्मती प्रजा ।।४४।।
गन्धमाल्यनिवृत्त्या तु मूर्त्तिर्भवति पुष्कला।।
अन्नदानेन च नरः स्मृतिं मेधां च विन्दति।।४५।।
छत्रप्रदानेन गृहं वरिष्ठं रथं ह्युपानद्युग सम्प्रदानात् ।।
वस्त्रप्रदानेन सुरूपता च धनैश्च पुत्रैश्च भृता भवन्ति ।। ४६ ।।
पानीयस्य प्रदानेन तृप्तिर्भवति शाश्वती ।।
अन्नपानप्रदानेन कामभोगैस्तु तृप्यते ।।४७।।

पुष्पोपगन्धं च फलोपगंधं यः पादपं स्पर्शयते द्विजाय ।।
स स्त्रीसमृद्धं हि सुरत्नपूर्णं गृहं हि सर्वोपचितं लभेत ।।४८ ।।
वस्त्रान्नपानीयरसप्रदानात् प्राप्नोति तानेव रसप्रदानात् ।।
स्रग्धूपगन्धान्यनुलेपनानि पुष्पाणि गृह्याणि मनोरमाणि ।। ४९ ।।
दत्त्वा द्विजेभ्यः स भवेत्सुरूपो रोगांश्च कांश्चिल्लभते न जातु ।।
बीजैरशून्यैः शयनाभिरामं दद्याद्गृहं यः पुरुषो द्विजाय ।। 207.५० ।।
स स्त्रीसमृद्धं गजवाजिपूर्णं लभेदधिष्ठानवरं वरिष्ठम् ।।
धूपप्रदानेन तथा गवां च लोकानाप्नोति नरो वसूनाम् ।। ५१ ।।
गजं तथा गोवृषभप्रदानैः स्वर्गे सुखं शाश्वतमामनन्ति ।।
घृतेन तेजः सुकुमारतां च प्राणद्युतीः स्निग्धता चापि तैलैः ।। ५२ ।।
क्षौद्रेण नानारसतृप्ततां च दीपप्रदानाद्द्युतिमाप्नुवन्ति ।। ५३ ।।
पायसेन वपुःपुष्टिं कृसरात्स्निग्धसौम्यताम् ।।
फलैस्तु लभते पुत्रं पुष्पैः सौभाग्यमेव च ।। ५४ ।।
रथैर्दिव्यं विमानं तु शिबिकां चैव मानवः ।।
प्रेक्षणैरपि सौभाग्यं प्राप्नोतीह न संशयः ।। ५५ ।।
अभयस्य प्रदानेन सर्वकामानवाप्नुयात् ।। ५६ ।।
इति श्रीवराहपुराणे संसारचक्रे पुरुषविलोभनं नाम सप्ताधिकद्विशततमोऽध्यायः ।। २०७ ।।

अथ पतिव्रतोपाख्यानवर्णनम् ।।
ऋषिपुत्र उवाच ।।
मुहूर्त्तस्य तु कालस्य दिव्याभरणभूषितान् ।।
प्रयातान्दिवि संप्रेक्ष्य विमानैः सूर्यसन्निभैः ।। १ ।।
ब्राह्मणास्तपसा सिद्धाः सपत्नीकाः सबान्धवाः ।।
सानुरागा ह्युभयतो मन्युनाभिपरिप्लुताः ।। २ ।।
विवर्णवदनो राजा प्रभातेजोविवर्जितः ।।
अचिरादेव सञ्जातः क्रोधेन भृशदुःखितः ।। ३ ।।
तं तथा निष्प्रभं दृष्ट्वा धर्मराजं तपोधनः ।।
नारदश्चाब्रवीत्तत्र ज्ञात्वा तस्य मनोगतम् ।। ४ ।।
अपि त्वं भ्राजमानस्तु पशोः पतिरिवापरः ।।
कस्मात्ते शोभनं वक्त्रं क्षणाद्वैवर्ण्यमापतत् ।। ५ ।।
विनिःश्वसन्यथा नागः कस्मात्त्वं परितप्यसे ।।
राजन्कस्माद्बिभेषि त्वमेतदिच्छामि वेदितुम् ।। ६ ।।
यम उवाच ।।
विवर्णं जायते वक्त्रं शुष्यते न च संशयः ।।
यन्मया हीदृशं दृष्टं श्रूयतां तन्महामुने ।। ७ ।।
यायावरास्तु ये विप्रा उञ्छवृत्तिपरायणाः ।।
दृढस्वाध्यायतपसो ह्रीमन्तो ह्यनसूयकाः ।। ८ ।।
अतिथिप्रियकाश्चैव नित्ययुक्ता जितेन्द्रियाः ।।
ते त्वहंमानिनः सर्वे गच्छन्त्युपरि मे द्विज ।। ९ ।।
न च मामुपतिष्ठन्ति न चैव वशगा मम ।।
मस्तकं मम गच्छन्ति सपत्नीकाः सहानुगाः ।। 208.१० ।।
दिव्यगन्धैर्विलिप्ताङ्गा माल्यभूषितवाससः ।।
सृजन्तो मम माल्यानि तेन ताम्ये द्विजोत्तम ।। ११ ।।
मृत्यो तिष्ठसि कस्यार्थे को वा मृत्युः कथं भवेत् ।।
कि त्वं न भाषसे मृत्यो ब्रूहि लोके निरर्थकः ।। १२ ।।
लोभासक्तान्सदा हंसि पापिष्ठान्धर्मवर्जितान् ।।
एषां तपसि सिद्धानां नाहं विग्रहवानिह ।। १३ ।।
निग्रहानुग्रहौ नापि मया शक्यौ महात्मनाम् ।।
कर्त्तुं वा प्रतिषेद्धुं वा तेन तप्ये भृशं मुने .।। १४ ।।
एतस्मिन्नन्तरे तत्र विमानेन महाद्युतिः ।।
पतिव्रता समं भर्त्रा सानुगा सपरिच्छदा।।१५।।

महता तूर्यघोषेण सम्प्राप्ता प्रियदर्शना ।।
धर्मराजहितं सर्वं धर्मज्ञा धर्मवत्सला ।।१६।।
साब्रवीत्तु विमानस्था साधयन्ती शुभाङ्गना ।।
विचित्रं प्रसृतं वाक्यं सर्वसत्त्वसुखावहम् ।। १७।।
पतिव्रतोवाच।।
धर्मराज महाबाहो कृतज्ञः सर्वसम्मतः ।।
मैवमीर्षां कुरुष्व त्वं ब्राह्मणेषु तपस्विसु।।
एतेषां तपसां वीर माहात्म्यं बलमेव च ।।
अचिन्त्याः सर्वभूतानां ब्राह्मणा वेदपारगाः ।।१९ ।।
ब्राह्मणाः सततं पूज्या ब्राह्मणाः सर्वदेवताः ।।
मात्सर्यं क्रोधसंयुक्तं न कर्त्तव्यं द्विजातिषु ।।208.२०।।
त्वया शुभाशुभं कर्म नित्यं पूजा मनस्विनाम् ।।
रागो वा रोषमोहौ वा न कर्तव्यौ सदा सताम् ।। २१ ।।
प्रयाता गगने दृष्टा विद्युत्सौदामिनी यथा ।।
दृष्ट्वा पतिव्रतां नारीं धर्मराजेन पूजिताम् ।। २२ ।।
अब्रवीन्नारदस्तत्र धर्मराजं तथागतम् ।। २३ ।।
नारद उवाच ।।
का चैषा सुमहाभागा सुरूपा प्रमदोत्तमा ।।
या त्वया पूजिता राजन् हितमुक्त्वा गता पुनः ।।२४।।
एतदिच्छाम्यहं ज्ञातुं परं कौतूहलं हि मे ।।
एतन्मे सुमहाभाग कथयस्व समासतः ।।२५।।
यम उवाच ।।
अहं ते कथयिष्यामि कथां परमशोभनाम् ।।
एषा मया यथा तात पूजितापि च कृत्स्नशः ।। २६ ।।
पुरा कृतयुगे तात निमिर्नाम महायशाः ।।
आसीद्राजा महातेजाः सत्यसन्ध इति श्रुतः ।। २७ ।।
तस्य पुत्रो मिथिर्नाम जननाज्जनकोऽभवत् ।।
तस्य रूपवती नाम पत्नी प्रियहिते रता ।। २८ ।।
सा चाप शुभकर्माणि पतिभक्ता पतिव्रता ।।
प्रीत्या परमया युक्ता भर्त्तुर्वचनकारिणी ।। २९ ।।
सोऽपि राजा महाभागः सर्वभूतहिते रतः ।।
धर्मात्मा च महात्मा च सत्यसन्धो महातपाः ।। 208.३० ।।
य इमां पृथिवीं सर्वां धर्मेण परिपालयन् ।।

न व्याधिर्न जरा मृत्युस्तस्मिन्राजनि शासति ।। ३१ ।।
ववर्ष सततं देवस्तस्य राष्ट्रे महाद्युतेः ।।
एवं बहुगुणोपेतं तस्य राज्यं महात्मनः ।। ३२ ।।
न कश्चिद् दृश्यते मर्त्यो रुजार्त्तो दुःखितोऽपि वा ।।
अथात्र बहुकालस्य राजानं मिथिलाधिपम्।।३३।।
उवाच राज्ञी विप्रेन्द्र विनयात्प्रश्रितं वचः।।३४।।
राज्ञ्युवाच ।।
भृत्यानां च द्विजातीनां तथा परिजनस्य च ।।
यदस्ति द्रविणं किंचित्पृथिव्यां यद्गृहे च ते ।। ३५।।
विनियुक्तं तु तत्सर्वं सान्निध्यं तु तथा त्वया ।।
न च राजन्विजानासि भोजनस्य प्रशंससि ।। ३६ ।।
नास्ति तन्नियमः कश्चित्पुष्पमूल्यं च नास्ति नः ।।
न वा गवादिकं किंचिन्न च वस्त्राणि कर्हिचित् ।। ३७ ।।
न चैव वार्षिकः कश्चिद्विद्यते भाजनस्य च ।।
दृश्यते हि महाराज मम चैवाथ सुव्रत ।। ३८ ।।
यत्कर्तव्यं मया वापि तन्मे ब्रूहि नराधिप ।।
कर्त्र्यस्म्यहं विशेषेण यद्वाक्यमपि मन्यसे ।। ३९ ।।
राजोवाच ।।
न शक्यमुपरोधेन वक्तुं भामिनि विप्रियम् ।।
न च पश्याम्यहं देवि तव चैव जनस्य च ।। 208.४० ।।
तद्ब्रवीमि यथाशक्त्या यदि मे मन्यसे प्रिये ।।
हविष्ये वर्त्तमानानामिदं वर्षशतं गतम् ।। ४१ ।।
कुद्दालेन हि काष्ठेन क्षेत्रं वै कुर्महे प्रिये ।।
ततो धर्मविधिं तत्त्वात्प्राप्नुयां मे न संशयः ।।४२।।
भक्ष्यं भोज्यं च ये ये च ततस्त्वं सुखमाप्स्यसि ।।
एवमुक्ता ततो राज्ञी राजानमिदमब्रवीत् ।। ४३ ।।
देव्युवाच ।।
भृत्यानां तु सहस्राणि तव राजन्निवेशने ।।
अश्वानां च गजानां च सैरिभानां तथैव च ।। ४४ ।।
उष्ट्राणां महिषाणां च खराणां च महायशाः ।।
एते सर्वे कथं राजन्न कुर्वन्ति तवेप्सितम् ।। ४५ ।।
राजोवाच ।।
नियुक्तानि हि कर्माणि वार्षिकाणीतराणि च ।।

सर्वकर्माणि कुर्वन्ति ये भृत्या मे वरानने ।। ४६ ।।
बलीवर्दाः खरा अश्वा गजा उष्ट्रा ह्यनेकशः ।।
सर्वे नियुक्ता मे देवि सर्वकर्मसु शोभने ।। ४७ ।।
आयसं त्रापुषं ताम्रं राजतं कांचनं तथा ।।
नियुक्तानि तु सर्वाणि सर्व कर्मस्वनिन्दिते ।। ४८ ।।
ननु पश्याम्यहं देवि किंचिद्धैमं न चायसम् ।।
येन कुर्यामहं देवि कुद्दालं सुसमाहितः ।।४९।।
एवमुक्ता महादेवी तेन राज्ञा सुशोभना ।।
हृष्टपुष्टमना देवी राजानमिदमब्रवीत् ।। 208.५० ।।
गच्छ राजन्यथाकाममनुयास्यामि पृष्ठतः ।।
एवमुक्तः सुनिष्क्रान्तः सभार्यः स नरेश्वरः ।। ५१ ।।
ततो राजा च देवी च क्षेत्रं मृगयतस्तदा ।।
गतौ च परमाध्वानं ततो राजाब्रवीदिदम् ।। ५२ ।।
इदं भद्रं मम क्षेत्रमास्स्वात्र वरवर्णिनि ।।
यावद्गुल्मानिमान् भद्रे कण्टकांश्च वरानने ।। ५३ ।।
अहं छिनद्मि वै देवि त्वमेताञ्छोधय प्रिये ।।
एष ते कर्म योगस्तु ततः प्राप्स्यामि चेप्सितम् ।। ५४ ।।
एवमुक्ता महादेवी तेन राज्ञा तपोधन ।।
उवाच मधुरं वाक्यं प्रहसन्ती नृपाङ्गना ।। ५५ ।।
वृक्षोऽत्र दृश्यते पार्श्वे सौवर्णो गुल्म एव च ।।
पानीयस्य तु सान्निध्यं न किंचिदिह दृश्यते ।। ५६ ।।
कथं क्षेत्रं करिष्यावो हृद्रोगस्य तु कारकम् ।।
इयं नदी ह्ययं वृक्ष इयं भूमिः समांसला ।। ५७ ।।
अस्मिन्वापि कृतं कर्म कथं गुणकरं भवेत् ।।
तस्यास्तद्वचनं श्रुत्वा राजा वचनमब्रवीत् ।। ५८ ।।
शुभं सानुनयं वाक्यं भूतानां गुणवत्सलः ।।
पूर्वगृहे भवेत्पूर्वं विनियुक्तं तथा प्रिये ।। ५९ ।।
पानीयस्य तु पार्श्वेन सन्निकृष्टेन सुन्दरि ।।
चतुर्थं जनपर्यन्तं न किंचिदिह दृश्यते ।। 208.६० ।।
अयं गृहो महादेवि न च बाधाऽत्र कस्यचित् ।।
ततस्तच्छोधयामास तत्क्षेत्रं भार्यया सह ।। ६१ ।।
वियन्मध्ये तथोग्रश्च सविता तपते सदा ।।
समृद्धश्च तदा तत्र निदाघः काल आगतः ।। ६२ ।।

प्रवृद्धो दारुणो घर्मः कालश्चैवातिदारुणः ।।
ततः सा तृषिता देवी क्षुधिता च तपस्विनी ।। ६३ ।।
स्निग्धौ ताम्रतलौ पादौ तस्यां सन्तापमागतौ ।।
गुणप्रवाहरक्तौ तु तस्याः पादौ च सुव्रत ।। ६४ ।।
सूर्यस्य पादा मध्याह्ने तापयन्त्यग्निसन्निभाः ।।
ततः सा व्यथिता देवी भर्त्तारमिदमब्रवीत् ।। ६५ ।।
तृषितास्मि महाराज भृशमुष्णेन पीडिता ।।
पानीयं दीयतां राजन्मम शीघ्रं प्रसादतः ।। ६६ ।।
इत्युक्त्वा पतिता देवी विह्वला दुःखपीडिता ।।
पतन्त्या च तया सूर्यो दृष्टो विह्वलया तथा ।। ६७ ।।
यदृच्छया पतन्त्या तु सूर्यः कोपेन वीक्षितः ।।
ततो विवस्वान् भगवान् सन्त्रस्तो गगने तदा ।। ६८।।
दिवं मुक्त्वा महातेजाः पतितो धरणीतले ।।
ततो दृष्ट्वा तु राजाऽसौ स्वभावेन च वर्जितम् ।। ६९ ।।
किमर्थमिह तेजस्विंस्त्यक्त्वा मण्डलमागतः ।।
किं करोमि महातेजाः सर्वलोकनमस्कृतः ।। 208.७० ।।
एवं ब्रुवन्तं राजानं सूर्यः सानुनयोऽब्रवीत् ।।
पतिव्रता शुभाक्षी च ममैषा रुषिता भृशम् ।। ७१ ।।
ततोऽहं पतितो राजंस्तव कार्यानुशासनः ।।
अनया सदृशी नारी त्रैलोक्ये नैव विद्यते ।। ७२ ।।
पृथिव्यां स्वर्गलोके वा न काचिदिह दृश्यते ।।
अहोऽस्याः परमं सत्त्वमहोऽस्याः परमं तपः ।। ७३।।
अहो धैर्यं च शक्तिश्च तवैवं शंसिता गुणाः।।
तथेयं ते महाभाग तव चित्तानुसारिणी।।७४।।
अनुरूपा विशुद्धा च तपसा च वराङ्गना।।
पतिव्रता च साध्वी च नित्यं तव हिते रता।।७९।।
सदृशी ते महाभाग शक्रस्येव यथा शची ।।
पात्रं पात्रवता प्राप्तं सुकृतस्य महत्फलम् ।।७६।।
अनुरूपः सुरूपो वा यतो जातः सुयन्त्रितः ।।
मा च ते वितथः कामो भवेच्चैव नराधिपः ।।७७ ।।
कुरुष्व दयितं क्षेत्रं यथा मनसि वर्त्तते ।।
भोजनार्थं महाराज त्वदन्यो न हि विद्यते।।७८।।
फलदं च यशस्यं च भविष्यति हि कामदम्।।

एवमुक्त्वा ततः सूर्यः ससर्ज जलभाजनम्।।७९।।
उपानहौ च छत्रं च दिव्यालंकार भूषितम् ।।
ददौ च राज्ञे सविता प्रीत्या परमया युतः ।।208.८० ।।
उपभोक्तुं सुखस्यार्थं सुपुण्यस्य विशेषतः ।।
दत्त्वा तत्पुण्यकर्माणं ततः प्राह दिवाकरः ।। ८१ ।।
एवमुक्त्वा तु भगवांस्तथा तत्कृतवान् क्वचित् ।।
राज्ञा च जनकेनैव प्रियाया हितकाम्यया ।। ८२ ।।
ततः साप्यायिता देवी तोयेन शुभलक्षणा ।।
लब्धसंज्ञा गतभया राजानमिदमब्रवीत् ।। ८३ ।।
देवी दृष्ट्वा तदाश्चर्यं विस्मयोत्फुल्ललोचना ।।
केन दत्तं शुभं तोयं दिव्यं छत्रमुपानहौ ।। ८४ ।।
एतन्मे संशयं राजन्कथयस्व तपोधन ।।
राजोवाच ।।
एष देवो महादेवि विवस्वान्नाम नामतः ।। ८५ ।।
तवानुकम्पया देवि मुक्त्वाकाशमिहागतः ।।
एवमुक्ता तु सा देवी भर्त्तारमिदमब्रवीत् ।। ८६ ।।
करवाण्यस्य कां प्रीतिं ज्ञायतामस्य वाच्छितम् ।।
ततो राजा महातेजाः प्रणिपत्य कृताञ्जलिः ।। ८७ ।।
विज्ञापयामास तदा भगवन् किं करोमि ते ।।
एवमुक्तो नरेन्द्रेण सूर्यो वचनमब्रवीत् ।। ८८ ।।
अभयं मे महाराज स्त्रीभ्यो भवतु मानद ।।
तच्छ्रुत्वा वचनं तस्य भास्करस्य तु मानदः ।। ८९ ।।
तां प्रियां प्रीतहृदयां श्रावयंस्तस्य भाषितम् ।।
राज्ञस्तु वचनं श्रुत्वा देवी वचनमब्रवीत् ।। 208.९० ।।
प्रीत्या परमया युक्ता तस्य राज्ञो मनःप्रिया ।।
रश्मीनां तारणार्थाय छत्रं दत्त्वा तु कुण्डिकाम् ।। ९१ ।।
इमौ चोपानहौ दत्त्वा चौभौ पादस्य शङ्करौ ।।
अभयं ते महाभाग यथा त्वं वृतवानसि ।। ९२ ।।
एवं पतिव्रतां विप्र पूजयामि नमामि च ।। ९३ ।।
इति श्रीवराहपुराणे संसारचक्रे पतिव्रतोपाख्यानं नाम अष्टाधिकद्विशततमोऽध्यायः ।। २०८ ।।

अथ पतिव्रतामाहात्म्य वर्णनम् ।।
नारद उवाच ।।
कर्मणा केन राजेन्द्र तपसा वा तपोधनाः ।।
उत्तमां च गतिं यांति कृष्णवासः प्रशंस मे ।।१।।
एवमुक्तस्तु धर्मात्मा नारदेनाब्रवीत्तदा ।।
यम उवाच ।।
न तस्य नियमो विप्र तपो नैव च सुव्रत ।। २ ।।
उपवासो न दानं वा न देवो वा महामुने ।।
यादृशी तु भवेद्विप्र शृणु तत्त्वं समासतः ।। ३ ।।
प्रसुप्ते या प्रस्वपिति जागर्ति विबुधे स्वयम् ।।
भुङ्क्ते तु भोजिते विप्र सा मृत्युं जयति धुवम् ।।४ ।।
मौने मौना भवेद्या तु स्थिते तिष्ठति या स्वयम् ।।
सा मृत्युं जायते विप्र नान्यत्पश्यामि किंचन ।।५ ।।
एकदृष्टिरेकमना भर्त्तुर्वचनकारिणी ।।
तस्या बिभीमहे सर्वे ये तथान्ये तपोधन ।। ६ ।।
देवानामपि सा साध्वी पूज्या परमशोभना ।।
भर्त्रा चाभिहिता यापि न प्रत्याख्यायिनी भवेत् ।।७।।
वर्त्तमानापि विप्रेन्द्र प्रत्याख्यातापि वा सदा ।।
न दैवतं सम्प्रयाति पत्युरन्यं कदाचन ।। ८ ।।
सा न मृत्युमुखं याति एवं या स्त्री पतिव्रता ।।
एवं या तु भवेन्नित्यं भर्त्तुः प्रियहिते रता ।। ९ ।।
अनुवेष्टनभावेन भर्त्तारमनुगच्छति ।।
सा तु मृत्युमुखद्वारं न गच्छेद्ब्रह्मसम्भव ।। 209.१० ।।
एष माता पिता बन्धुरेष मे दैवतं परम् ।।
एवं शुश्रूषते या तु सा मां विजयते सदा ।।११।।
पतिव्रता तु या साध्वी तस्यां चाहं कृताञ्जलिः ।।
भर्तारमनुध्यायन्ती भर्त्तारमनुगच्छती ।। १२ ।।
भर्त्तारमनुशोचन्ती मृत्युद्वारं न पश्यति ।।
गीतवादित्रनृत्यानि प्रेक्षणीयान्यनेकशः ।। १३ ।।
न शृणोति न पश्येद्या मृत्युद्वारं न पश्यति ।।
स्नान्ती च तिष्ठती वापि कुर्वन्ती वा प्रसाधनम् ।। १४ ।।
नान्यं या मनसा पश्येन्मृत्युद्वारं न पश्यति ।।
देवता अर्चयन्तं वा भुज्यमानमपि द्विज ।। १५ ।।

पतिं न त्यजते चित्तान्मृत्युद्वारं न पश्यति ।।
भानौ चानुदिते वापि उत्थाय च तपोधन ।। १६ ।।
गृहं मार्जयते नित्यं मृत्युद्वारं न पश्यति ।।
चक्षुर्देहश्च भावश्च यस्या नित्यं सुसंवृतम् ।। १७ ।।
शौचाचारसमायुक्ता सापि मृत्युं न पश्यति।।
भर्त्तुर्मुखं प्रपश्येद्या भर्त्तुश्चित्तानुसारिणी ।। १८ ।।
वर्त्तते च हिते भर्त्तुर्मृत्युद्वारं न पश्यति ।।
एवं कीर्त्तिमतां लोके दृश्यन्ते दिवि देवताः ।। १९ ।।
मानुषाणां च भार्या वै तत्र देशे तु दृश्यते ।।
कथितैव पुरा विप्र आदित्येन पतिव्रता ।। 209.२० ।।
मया तस्मात्तु विप्रर्षे यथावृत्तं यथाश्रुतम् ।।
गुह्यमेतत्ततो दृष्ट्वा पूजयामि पतिव्रताः ।। २१ ।।
इति श्रीवराहपुराणे संसारचक्रे पतिव्रतामाहात्म्यंनाम नवाधिकद्विशततमोऽध्यायः ।। २०९ ।।

पुनः पतिव्रतामाहात्म्यवर्णनम् ।।
नारद उवाच ।।
रहस्यं धर्ममाख्यानं त्वयोक्तं तु महायशः ।।
स्त्रीणां माहात्म्यमुद्दिश्य भास्करस्य मतं यथा ।। १ ।।
इदं हि सर्वभूतेषु परं कौतूहलं मम ।।
तदहं श्रोतुमिच्छामि कथयस्व महातपाः ।। २ ।।
ये नरा दुःखसन्तप्तास्तपस्तीव्रं समाश्रिताः ।।
नानाव्रतशतोपायैः सुखहेतोर्महाप्रभ ।। ३ ।।
मनसा निश्चितात्मानस्त्यक्त्वा सर्वप्रियाप्रियम् ।।।
कांक्षन्ते बहवः केचित्केनचिद्विनिहन्यते।।४।।
श्रुता लोके श्रुतिस्तात श्रेयोधर्मा हि नित्यशः।।
सम्यक्कृच्छ्राश्रितस्याथ कथं पापे मतिर्भवेत्।।५।।
कस्यैतच्चेष्टितं तात कर्त्ता कारयितापि वा ।।
कः कर्षति जगच्चैको भूतग्रामं चतुर्विधम् ।। ६ ।।
कं वा द्वेषं पुरस्कृत्य मतिस्तस्य प्रवर्त्तते ।।
सुखदुःखादि लोकेऽस्मिन्प्रकरोति सुदारुणम् ।। ७ ।।
यद्येवं तु मया गुह्यं दुर्विज्ञेयं सुरैरपि ।।
शक्यं श्रोतुं महाराज तदाख्याहि तपोधन ।। ८ ।।
नारदेनैवमुक्तस्तु धर्मराजो महामनाः ।।
विनयात्प्रश्रितं वाक्यमिदमाह महामुनिम् ।। ९ ।।
यम उवाच ।।
देवर्षे श्रूयतां पुण्यं यद्ब्रवीषि महामुने ।।
त्वदुक्त्या मे कथयतः शृणुष्वावहितोऽनघ ।। 210.१० ।।
न कश्चिद्दृश्यते लोके कर्त्ता कारयितापि वा ।।
यद्वै परमधर्मात्मन् यस्मिन्कर्म प्रतिष्ठितम् ।। ११ ।।
यस्य वै कीर्त्त्यते नाम येन चाज्ञाप्यते जगत् ।।
व्यवहरामि वचश्चाहं यः करोति स्वयं कृतम् ।। १२ ।।
दिव्येऽस्मिन् सदसि ब्रह्मन् ब्रह्मर्षिगणसंवृते ।।
यथाश्रुतं यथादृष्टं कथयिष्याम्यहं विभो ।।१३।।
स्वकर्म भुज्यते तात सम्भूतैर्यत्कृतं स्वयम् ।।
आत्मानं पातयत्यात्मा किञ्चित्कर्म च कारयेत् ।। १४।।
वायुना भाविता संज्ञा संसारे सा दृढीकृता ।।
तामेव भजते जन्तुः सुकृतं वाथ दुष्कृतम् ।। १५ ।।

अभिघाताभिभूतस्तु आत्मनात्मानमुद्धरेत् ।।
आत्मा शत्रुश्च बन्धुश्च न कश्चिद्बन्धुरात्मनः ।। १६ ।।
बन्धुं बन्धुपरिक्लेशं निर्मितं पूर्वकर्मभिः ।।
जगत्यामुपभुङ्क्ते वै जीवा योनिशतैरपि।।१७।।
मिथ्याप्रवृत्तः शब्दोऽयं जगद्भ्रमति सर्वशः ।।
यावत्तत्कुरुते कर्म तावत्कर्म स्वयंकृतम् ।। १८ ।।
यथा यथा क्षयं याति ह्यशुभं पुरुषस्य वै ।।
तथा तथा शुभा बुद्धिर्मनुजस्य प्रवर्त्तते ।। १९ ।।
संसारे प्राप्तदोषस्य जायमानस्य देहिनः ।।
पततां च गतो भावः पापकर्मक्षयेन तु ।। 210.२० ।।
शुभाशुभकरीं बुद्धिं लभते पौर्वदैहिकीम् ।।
दुष्कृतैः कर्मभिर्देही शुभैर्वा स्वयमर्जितैः।।
क्लेशक्षयं पापहरं शुभं कर्म करोत्यथ ।।२१।।
शुभाशुभं नरः प्राप्य कर्माकर्म तथैव च।।
विवृते विमले कर्मण्यमरेषु महीयते।।२२।।
स्वर्गः शुभफलप्राप्तिर्निरयः पापसंभवः ।।
नैव कश्चित्प्रदाता च नापहर्ता प्रदृश्यते ।। २३ ।।
नारद उवाच ।।
यद्येवं स्वकृतं कर्म समन्वेति शुभाशुभम् ।।
शुभस्येह भवेदवृद्धिरशुभस्य क्षयोऽपि वा ।। २४ ।।
मनसा कर्मणा वापि तपसा चरितेन वा ।।
यथा न रोहते जन्तुस्तथा त्वं वक्तुमर्हसि ।। २५ ।।
यम उवाच ।।
इदं पुण्यं पवित्रं च ह्यशुभानां शुभप्रदम् ।।
कीर्त्तयिष्यामि ते सम्यक्पापदोषक्षयं सदा ।। २६ ।।
प्रणम्य शिरसा सम्यक्पापपुण्यकराय च ।।
कर्तृणे जगतो नित्यं विश्वस्य जगतो ह्यहम् ।।२७।।
येन सृष्टमिदं सर्वं त्रैलोक्यं सचराचरम् ।।
अनादिमध्यनिधनं दुर्विज्ञेयं सुरासुरैः ।। २८ ।।
यः समः सर्वभूतेषु जितात्मा शान्तमानसः ।।
स पापेभ्यो विमुच्येत ज्ञानवान्सर्ववेदवित् ।।२९ ।।
तत्त्वार्थं वेत्ति यः सम्यक्पुरुषं प्रकृतिं तथा ।।
ज्ञात्वा वा यो न मुह्येत पदं प्राप्नोति शाश्वतम् ।।210.३०।।

गुणागुणपरिज्ञाता ह्यक्षयस्य क्षयस्य च ।।
ध्याने नैव ह्यसंमूढः स पापेभ्यः प्रमुच्यते ।।३१।।
स्वदेहे परदेहे च सुखदुःखेन नित्यशः ।।
विचारज्ञो भवद्येस्तु स मुच्येतैनसा ध्रुवम् ।।३२।।
अहिंस्रः सर्वभूतेषु तृष्णाक्रोधविवर्जितः ।।
शुभन्यायः सदा यश्च स पापेभ्यः प्रमुच्यते ।। ३३ ।।
प्राणायामैश्च निर्गृह्य त्वधः सन्धारणानि च ।।
व्यवस्थितमना यस्तु स पापेभ्यः प्रमुच्यते ।। ३४ ।।
निराशः सर्वतस्तिष्ठेदिष्टार्थेषु न लोलुपः।।
परीतात्मा त्यजेत्प्राणान्सर्वपापात्प्रमुच्यते ।।३५।।
श्रद्दधानो जितक्रोधः परद्रव्यविवर्जकः ।।
अनसूयश्च यो मर्त्यः स पापेभ्यः प्रमुच्यते ।। ३६ ।।
गुरुशुश्रूषया युक्तस्त्वहिंसानिरतश्च यः ।।
अक्षुद्रशीलस्तु नरः स पापेभ्यः प्रमुच्यते ।।३७।।
प्रशस्तानि च यः कुर्यादप्रशस्तानि वर्जयेत् ।।
मङ्गले परमो यश्च स पापेभ्यः प्रमुच्यते ।।३८।।
योऽभिगच्छति तीर्थानि विशुद्धेनान्तरात्मना ।।
पापादुपरतो नित्यं स पापेभ्यः प्रमुच्यते ।। ३९ ।।
उत्थाय ब्राह्मणं गच्छेन्नरो भक्त्या समन्वितः ।।
अभिगम्य प्रदानेन स पापेभ्यः प्रमुच्यते ।। 210.४० ।।
नारद उवाच ।।
एतच्छ्रेयोहितं चैव सर्वेषां वै परन्तप ।।
उपपन्नं च युक्तं च तत्त्वया समुदाहृतम् ।। ४१ ।।
विविधैः कारणोपायैः सम्यक्तत्त्वार्थदर्शितैः ।।
संशयोऽभून्मम पुरा स त्वया नाशितः प्रभो ।। ४२ ।।
ततोऽप्यल्पतरश्चेत्स्यादुपायो योगवित्तम ।।
कथ्यतां मे महाभाग येन पापं प्रणश्यति ।।४३।।
दुष्करं पूर्वमुक्तं हि योगधर्मस्य साधनम् ।।
पापापहरणं लोके यदन्यत्सुखसाधनम् ।। ४४ ।।
अल्पोपायकरं चैव सुखोपायं च सर्वशः ।।
येन पापकृतान्दोषानपोहति सुदारुणान्।।४५।।
आत्मायत्ताश्च ये नित्यं न च विस्तारविस्तरः ।।
गुणैश्च विविधैर्युक्ता इहलोके परत्र च ।। ४६ ।।

कर्मणामशुभानां च विविधोत्पत्तिजन्मनाम् ।।
यः समर्थः स्फोटयितुं तन्मे ब्रूहि महातपाः ।। ४७ ।।
यम उवाच ।।
यथा स भगवानाह धर्ममेतं प्रजापतिः ।।
तदहं भावयिष्यामि नमस्कृत्य स्वयम्भुवम् ।। ४८ ।।
लोकानां श्रेयसोऽर्थं तु पापानां तु विनाशनम् ।।
क्रियाकारनियोगं च प्रोच्यमानं निबोध मे ।। ४९ ।।
कैवल्यमभिसम्पन्ने श्रद्दधानो भवेन्नरः ।।
अनन्यमानसः कुर्याद्यथा धर्मानुशासनम् ।। 210.५० ।।
प्राप्नुयादीप्सितान्कामान्पापैर्मुक्तो यथासुखम् ।।
यः कुर्याद्धर्मसंयुक्तं विशुद्धेनान्तरात्मना ।। ५१ ।।
यस्तु कारयते रूपं शिशुमारं प्रजापतिम् ।।
दृष्ट्वा नमस्येत्प्रयतः स पापेभ्यः प्रमुच्यते ।। ५२ ।।
यदा तस्य शरीरस्थं सोमं पश्येत्समाहितः ।।
महापातकनाशस्तु तदा तस्य विधीयते ।। ५३ ।।
ललाटे तूत्थितं दृष्ट्वा मुच्यते च स पातकैः ।।
कण्ठस्थं पातकैः सर्वैर्हृदिस्थं च कृताकृतैः ।। ५४।।
मनसा कर्मणा वाचा यत्किंचित्कलुषं कृतम् ।।
उदरस्थं तु तं दृष्ट्वा मुच्यते नात्र संशयः ।। ५५ ।।
वाङ्मनोभिः कृतानां तु पापानां विप्रमोक्षणम् ।।
यदा लांगलकण्ठे तु स्थितं पश्येद्दिवाकरम् ।। ५६ ।।
तदा स दुष्कृतान्सर्वान्विनाशयति मानवः ।।
यदा सोमं गुरुं सर्वं यः कुर्यात्तु प्रदक्षिणम् ।।५७।।
ध्यायेत ह्यक्षयं यस्तु स पापेभ्यः प्रमुच्यते ।।
भृगुर्बुधः शनैश्चारो लोहिताङ्गश्च वीर्यवान् ।।५८।।
सौम्यरूपो यदा चन्द्रः कुरुते च प्रदक्षिणाम् ।।
हृदि कृत्वा तु तत्पापं यो ध्यायेदक्षरं शुचिः ।।५९।।
तदा निर्मलतां याति चन्द्रमाः शारदो यथा ।।
प्राणायामशतं कृत्वा सर्वपापैः प्रमुच्यते ।। 210.६० ।।
जघनस्थं शुचिर्दृष्ट्वा नरश्चन्द्रमसं मुने ।।
नमस्येत्प्रयतो भूत्वा सर्वपापैः प्रमुच्यते ।। ६१ ।।
आर्द्रस्थमार्द्रकर्मा तु ध्यात्वा चाष्टशताक्षरम् ।।
यदा चन्द्रश्च सूर्यश्च द्वावन्योऽन्यं प्रपश्यतः ।। ६२ ।।

सम्पूर्णौ विमलौ सम्यग्भ्राजमानौ स्वतेजसा ।।
कृत्वा हृदि तथा पापं यो ध्यायेत्परमव्ययम् ।। ६३ ।।
वामनं ब्राह्मणं दृष्ट्वा वाराहं च जलोत्थितम् ।।
धरणी चोद्धृता येन सिंहं चापि महामुने ।। ६४ ।।
नमस्येद्वै पयोभक्षः स पापेभ्यः प्रमुच्यते ।।
प्राणायामं च यः कुर्यात्सोऽपि पापात्प्रमुच्यते ।। ६९ ।।
इति श्रीवराहपुराणे भगवच्छास्त्रे संसारचक्रे पापनाशोपायनिरूपणं नाम दशाधिकद्विशततमोऽध्यायः ।।२१० ।।

पुनः पापनाशोपायवर्णनम् ।।
ऋषिपुत्र उवाच।।
एतच्छ्रुत्वा शुभं वाक्यं धर्मराजस्य नारदः ।।
इदं भावेन भक्त्या च पुनर्वचनमब्रवीत् ।। १ ।।
नारद उवाच ।।
समः सर्वेषु भूतेषु स्थावरेषु चरेषु च ।।
धर्मराज महाबाहो पितृतुल्यपराक्रम ।। २ ।।
ब्राह्मणानां हितार्थाय यदुक्तं मे प्रदक्षिणम् ।।
इदं श्रेयतमाख्यानं श्रुतं श्रुतपरं पदम् ।। ३ ।।
त्रयो वर्णा महाभाग यज्ञसामान्यभागिनः ।।
शूद्रा वेदपवित्रेभ्यो ब्राह्मणैस्तु बहिष्कृताः ।। ४ ।।
यथैव सर्वसमता तव भूतेषु मानद ।।
तथैव तेषामपि हि श्रेयो वाच्यं महामते ।। ५ ।।
यथा कर्म हितं वाक्यं शूद्राणामपि कथ्यताम् ।।
यम उवाच ।।
अहं ते कथयिष्यामि चातुर्वर्ण्यस्य नित्यशः ।। ६ ।।
यद्धितं धर्मयुक्तं च नित्यं भवति सुव्रत ।।
केवलं श्रुतिसंयोगाच्छ्रद्धया नियमेन च ।। ७ ।।
करोति पापनाशार्थमिदं वक्ष्यामि तच्छृणु ।।
गावः पवित्रा मङ्गल्या देवानामपि देवताः ।। ८ ।।
यस्ताः शुश्रूषते भक्त्या स पापेभ्यः प्रमुच्यते ।।
सौम्ये मुहुर्ते संयुक्ते पंचगव्यं तु यः पिबेत् ।। ९ ।।
यावज्जीव कृतात्पापात्तत्क्षणादेव मुच्यते ।।
लांगूलेनोद्धृतं तोयं मूर्ध्ना गृह्णाति यो नरः ।।211.१० ।।
सर्वतीर्थफलं प्राप्य स पापेभ्यः प्रमुच्यते ।।
प्रस्रवेण च यः स्नायाद्रोहिण्यां मानवे द्विज ।। ११ ।।
सर्वपापकृतान्दोषान्दहत्याशु न संशयः ।।
धेनुस्तनाद्विनिष्क्रान्तां धारां क्षीरस्य यो नरः ।। १२ ।।
शिरसा प्रतिगृह्णाति स पापेभ्यः प्रमुच्यते ।।
ब्राह्मणस्तु सदा स्नातो भक्त्या परमया युतः ।।१३।।
नमस्येत्प्रयतो भूत्वा स पापेभ्यः प्रमुच्यते ।।
उदयान्निःसृतं सूर्यं भक्त्या परमया युतः ।। १४ ।।
नमस्येत्प्रयतो भूत्वा स पापेभ्यः प्रमुच्यते ।।

दध्यक्षताञ्जलीभिस्तु त्रिभिः पूजयते शुचिः ।।१५।।
तस्य भानुः प्रसन्नश्च ह्यशुभं यत्समर्जितम् ।।
तस्य भानुः स संदह्य दूरीकुर्यात्सदा द्विज ।।१६।।
तावकं दधिमिश्रं तु पात्रे औदुम्बरे स्थितम् ।।
सोमाय पौर्णमास्यां हि दत्वा पापैः प्रमुच्यते ।। १७।।
अरुन्धतीं बुधं चैव तथा सर्वान्महामुनीन् ।।
अभ्यर्च्य वेदविधिना तेभ्यो दत्त्वा च तावकम् ।। १८ ।।
एकाग्रमानसो भूत्वा यो नमस्येत्कृताञ्जलिः ।।
किल्बिषं तस्य वै सर्वं तत्क्षणादेव नश्यति ।। १९ ।।
द्विजं शुश्रूषते यस्तु तर्पयित्वातिभक्तितः ।।
नमस्येत्प्रयतो भूत्वा स पापेभ्यः प्रमुच्यते ।। 211.२० ।।
विषुवेषु च योगेषु शुचिर्दत्त्वा पयो नरः ।।
तस्य जन्मकृतं पापं तत्क्षणादेव नश्यति ।। २१ ।।
प्राचीनीग्रान्कुशान् कृत्वा स्थापयित्वा वृषं नरः ।।
द्विजैः सह नमस्कृत्य सर्वपापैः प्रमुच्यते ।। २२ ।।
दक्षिणावर्त्तसव्येन कृत्वा प्राक्स्रोतसं नदीम् ।।
कृत्वाऽभिषेकं विधिवत्ततः पापात्प्रमुच्यते ।। २३ ।।
दक्षिणावर्त्तशङ्खेन कृत्वा चैव करे जलम् ।।
शिरसा तद्गृहीत्वा तु विप्रो हृष्टमनाः शुचिः ।। २४ ।।
तस्य जन्मकृतं पापं तत्क्षणादेव नश्यति ।।
प्राक्स्रोतसं नदीं गत्वा नाभिमात्रजले स्थितः।।२५।।
स्नात्वा कृष्णतिलैर्मिश्रा दद्यात्सप्ताञ्जलीर्नरः ।।
प्राणायामत्रयं कृत्वा ब्रह्मचारी जितेन्द्रियः ।। २६ ।।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ।।
अच्छिद्रपद्मपत्रेण सर्वरत्नोदकेन तु ।। २७ ।।
त्रिधा यस्तु नरः स्नायात्सर्वपापैः प्रमुच्यते ।।
अन्यच्च ते प्रवक्ष्यामि गुह्याद्गुह्यतरं मुने ।। २८ ।।
कार्त्तिकेऽमलपक्षे तु स्मृता ह्येकादशी तिथिः ।।
भुक्तिमुक्तिप्रदा या तु नाम्ना ख्याता प्रबोधिनी ।। २९ ।।
या सा विष्णोः परा मूर्त्तिरव्यक्तानेकरूपिणी ।।
सा क्षिप्ता मानुषे लोके द्वादशी मुनिपुङ्गव ।। 211.३० ।।
ये उपोष्यन्ति विधिवन्नारायणपरायणाः ।।
न तेषामशुभं किञ्चिज्जन्मकोटिकृतं मुने ।। ३१ ।।

एकादशीं समाश्रित्य पुरा पृष्टो महेश्वरः ।।
वाराहरूपी धरया सर्वलोकहिताय वै ।। ३२ ।।
धरण्युवाच ।।
अस्मिन्कलियुगे घोरे नराः पापरताः प्रभो ।।
ब्रह्मस्वहरणे युक्ता तथा ब्राह्मणघातकाः ।। ३३ ।।
गुरुद्रोहरता देव मित्रद्रोहरतास्तथा ।।
स्वामिद्रोहरताश्चैव परदाराभिमर्शकाः ।। ३४ ।।
परद्रव्यापहरणे संसक्ताश्च सुरेश्वर ।।
अभक्ष्यभक्षणरता वेदब्राह्मणनिन्दकाः ।। ३५ ।।
दाम्भिका भिन्नमर्यादा नायमस्तीति वादिनः ।।
असत्प्रतिग्रहे सक्ता अगम्यागमने रताः ।। ३६ ।।
एतैश्चान्यैश्च पापैश्च संसक्ता ये नरा विभो ।।
किमासाद्य गतिर्देव तेषां वद सुरेश्वर ।। ३७ ।।
श्रीवराह उवाच ।।
साधु देवि महाभागे यत्पृष्टोऽहं वरानने ।।
रहस्यं ते प्रवक्ष्यामि लोकानां हितकाम्यया ।।३८ ।।
महापातकयुक्ता ये नराः सुकृतवर्जिताः ।।
तेषां मया हितार्थाय निर्मितं तच्छृणुष्व मे ।। ३९ ।।
या सा विष्णोः परा शक्तिरव्यक्तानेकरूपिणी ।।
सा मर्त्ये निर्मिता भूमे द्वादशीरूपधारिणी ।। 211.४० ।।
तामुपोष्य नरा भद्रे महापापरताश्च ये ।।
पुण्यपापविनिर्मुक्ता गच्छन्ति पदमव्ययम्।।४१।।
उपायोऽतःपरो नान्यो विद्यते हि वसुन्धरे ।।
एकादशीं विना येन सर्वपापक्षयो भवेत् ।।४२।।
यथा शुक्ला तथा कृष्णा ह्युपोष्या सा प्रयत्नतः ।।
शुक्ला भक्तिप्रदा नित्यं कृष्णा मुक्तिं प्रयच्छति।।४३।।
तस्मात्सर्वप्रयत्नेन कर्त्तव्या द्वादशी सदा।।
यदीच्छेद्वैष्णवं लोकं गन्तुं वै भूतधारिणि।।४४।।
मनसा वचसा चैव कर्मणा समुपार्जितम् ।।
पापं मासकृतं पुंसां दहत्येकादशी कृता ।। ४५ ।।
दहन्तीह पुराणानि भूयोभूयो वरानने ।।
न भोक्तव्यं न भोक्तव्यं सम्प्राप्ते हरिवासरे ।। ४६ ।।
यदीच्छथ नरा गन्तुं तद्विष्णोः परमं पदम् ।।

न भोक्तव्यं न भोक्तव्यं तदा केशववासरे।।४७।।
ऊर्ध्वबाहुर्विरौम्येष प्रलापं मे शृणुष्व तम् ।।
आराधयस्व विश्वेशमेकादश्यामतन्द्रितः ।। ४८ ।।
न शंखेन पिबेत्तोयं न हन्यान्मत्स्यसूकरौ ।।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।। ४९ ।।
स ब्रह्महा सुरापश्च स स्तेयी गुरुतल्पगः ।।
एकादश्यां तु यो भुंक्ते पक्षयोरुभयोरपि ।।211.५०।।
किं तेन न कृतं पापं दुर्वृत्तेनात्मघातिना ।।
एकादश्यां विशालाक्षि भुक्तं येन विजानता ।।५१।।
एकादशीं च यः शुक्लामसमर्थं उपोषितुम् ।।
तदा नक्तं प्रकर्त्तव्यं तथाऽयाचितमेव वा ।। ५२ ।।
एकभक्तेन दानेन कर्त्तव्यं द्वादशीव्रतम् ।।
न करोति यदा भूमे व्रतं वा दानमेव वा ।। ५३।।
महापातकभागी स्यात्सुगतिं नाप्नुयात्क्वचित् ।।
उपवासासमर्थानां तथैव पृथुलोचने ।। ९४ ।।
एका सा द्वादशी पुण्या उपोष्या सा प्रबोधिनी ।।
तस्यामाराध्य विश्वेषं जगतामीश्वरेश्वरम् ।। ५५ ।।
प्राप्नोति सकलं चैतद्द्वादशद्वादशीफलम् ।।
पूर्वाभाद्रपदायोगे सैव या द्वादशी भवेत ।। ५६ ।।
अतीव महती तस्यां सर्वं कृतमिहाक्षयम् ।।
उत्तराभाद्रसहिता यदि सैकादशी भवेत् ।। ५७ ।।
तदा कोटिगुणं पुण्यं केशवाल्लभते फलम् ।।
सकृद्देवेऽर्च्चिते तस्यां लभते भूतधारिणि ।। ५८ ।।
यथा प्रबोधिनी पुण्या तथा यस्यां स्वपेद्धरिः ।।
उपोष्या हि महाभागे त्वनन्तफलदा हि सा ।। ५९ ।।
शयने बोधने चैव हरेस्तु परिवर्त्तने ।।
उपोष्यैव विधानेन नरो निर्मलतां व्रजेत् ।। 211.६० ।।
तस्मात्सर्वप्रयत्नेन द्वादशीं समुपोषयेत् ।।
यदीच्छेत्तु विशालाक्षि शाश्वतीं गतिमात्मनः ।। ६१ ।।
एकादशी सोमयुता कार्त्तिके मासि भामिनि ।।
उत्तराभाद्रसंयोगे अनन्तफलदा हि सा ।। ६२ ।।
तस्यां यत्क्रियते भद्रे तदनन्तगुणं स्मृतम् ।।
एकादशी भौमयुता यदा स्याद्भूतधारिणि ।। ६३ ।।

स्नात्वा देवे समभ्यर्च्य प्राप्नोति परमं फलम् ।।
प्राप्नोति सकलं चैव द्वादशद्वादशीफलम् ।। ६४ ।।
जलपूर्णं तथा कुंभं स्थापयित्वा विचक्षणः ।।
पञ्चरत्नसमोपेतं घृतपात्रयुतं तथा ।। ६५ ।।
तस्योपरि न्यसेन्मत्स्यस्वरूपं तु जनार्दनम् ।।
निष्कमात्रसुवर्णेन घटितं तु वरानने ।। ६६ ।।
पंचामृतेन संस्नाप्य कुंकुमेन विलेपितम् ।।
पीतवस्त्रयुगच्छन्नं छत्रोपानद्युगान्वितम् ।। ६७ ।।
पूजयेत् कमलैर्देवि मद्भक्तः संयतेन्द्रियः ।।
मत्स्यं कूर्मं वराहं च नरसिंहं च वामनम् ।।६८।।
रामं रामं च कृष्णं च बुद्धं चैव च कल्किनम् ।।
एवं दशावतारांश्च पूजयेद्भक्तिसंयुतः ।। ६९ ।।
पुष्पैर्धूपैस्तथा दीपनैवद्यैर्विविधैरपि ।।
संपूज्यैवमलङ्कारैर्विविधैरुपशोभितम् ।। 211.७० ।।
रात्रौ चोत्थापनं कार्यं देवदेवस्य सुव्रते।।
प्रभाते विमले स्नात्वा भक्त्या संपूज्य केशवम्।।७१।।
पुष्पधूपादिनैवेद्यैः फलैर्नानाविधैः शुभैः।।
ततस्तु पूजयेद्विद्वानाचार्यं भक्तिसंयुतः ।।७२।।
अलङ्कारोपहारैश्च वस्त्राद्यैश्च स्वशक्तितः ।।
पूजयित्वा विधानेन तं देवं प्रतिपादयेत् ।। ७३ ।।
जगदादिर्जगद्रूपो जगदादिरनादिमान् ।।
जगदादिर्जगद्योनिः प्रीयतां मे जनार्दनः ।। ७४ ।।
अनेनैव विधानेन कुर्यादेकादशीव्रतम् ।।
तस्य पुण्यं भवेद्यत्तु तच्छृणुष्व वसुन्धरे ।। ७१ ।।
यदि वक्त्रसहस्राणां सहस्राणि भवन्ति तैः ।।
संख्यातुं नैव शक्यन्ते प्रबोधिन्यास्तथा गुणाः ।। ७६ ।।
तथाप्युद्देशमात्रेण शक्त्या वक्ष्यामि तच्छृणु ।।
चन्द्रतारार्कसङ्काशमधिष्ठायानुजीविभिः ।। ७७ ।।
सहैव यानमागच्छेन्मम लोकं वसुन्धरे ।।
ततः कल्पसहस्रांते सप्तद्वीपेश्वरो भवेत् ।। ७८ ।।
आयुरारोग्यसंपन्नो जन्मातीतो भवेत्ततः ।।
ब्रह्मघ्नश्च सुरापश्च स्तेयी च गुरुतल्पगः ।। ७९ ।।
पापान्येतानि सर्वाणि श्रवणेनैव नाशयेत्।।211.८०।।

पश्ये च धीमानधनोऽपि भक्त्या स्पृशेन्मनुष्यं इह चिन्त्यमानः।।
शृणोति भक्तस्य मतिं ददाति विकल्मषः सोऽपि दिवं प्रयाति ।। ८१ ।।
दुःस्वप्नः प्रशममुपैति पठ्यमाने माहात्म्ये भवभयहारके नरस्य ।।
यः कुर्याद्व्रतवरमेतदव्ययाया बोधिन्याः किमुत फलं तु तस्य वाच्यम् ।। ८२ ।।
ते धन्यास्ते कृतार्थाश्च तैरेव सुकृतं कृतम्।।
तैरात्मजन्म सफलं कृतं ये व्रतकारकाः ।। ८३ ।।
नारायणाच्युतानन्त वासुदेवेति यो नरः ।।
सततं कीर्त्तयेद्भूमे याति मल्लयतां प्रिये ।। ८४ ।।
किं पुनः श्रद्धया युक्तः पूजयेन्मामनन्यधीः ।।
गुरूपदिष्टमार्गेण याति मल्लयतां नरः ।। ८५ ।।
तस्य यज्ञवराहस्य विष्णोरमिततेजसः ।।
प्रयाणं ये च कुर्वति ते पूज्याः सततं सुरैः ।।८६।।
तस्मात् सुनियतैर्भाव्यं वैष्णवं मार्गमास्पदम्।।
दुर्ल्लभं वैष्णवत्वं हि त्रिषु लोकेषु सुन्दरि।।८७।।
जन्मान्तरसहस्रेषु समाराध्य वृषध्वजम् ।।
वैष्णवत्वं लभेत् कश्चित्सर्वपापक्षये सति ।। ८८।।
पापक्षयमवाप्नोति चेश्वराराधने कृते ।।
ज्ञानमन्विच्छता रुद्रं पूजयेत्परमेश्वरम् ।।८९।।
मामाराध्य तथा याति तद्विष्णोः परमं पदम् ।।
वैष्णवा हि महाभागाः पुनन्ति सकलं जगत्।।211.९०।।
संस्मृतः कीर्तितो वापि दृष्टः स्पृष्टोऽपि वा प्रिये ।।
पुनाति भगवद्भक्तश्चाण्डालोऽपि यदृच्छया।।९१।।
एतज्ज्ञात्वा तु विद्वद्भिः पूजनीयो जनार्दनः।।
वेदोक्तविधिना भद्रे आगमोक्तेन वा सुधीः।।९२।।
यम उवाच ।।
एतच्छ्रुत्वा महाभागा धरणी संशितव्रता ।।
समाराध्य जगन्नाथं विधिना तल्लयङ्गता ।। ९३ ।।
अतो यत्नेन वै साध्यं वैष्णवत्वं विपश्चिता ।।
ये वैष्णवा महात्मानो विष्णुपूजनतत्पराः ।। ९४।।
तेषां नैवास्त्ययं लोको यान्ति तत्परमं पदम्।।
ये सकृद्द्वादशीमेतामुपोष्यंति विधानतः ।।९५।।
प्रबोधनाख्यां सुधियस्ते यांति परमं पदम् ।।
न यमं यातनादण्डान्नरकं न च किङ्करान् ।।९६ ।।

पश्यंति द्विजशार्दूल इति सत्यं मयोदितम् ।।
एतत्ते सर्वमाख्यातं यथादृष्टं यथाश्रुतम् ।।९७।।
कथितं मे महाभाग यत्त्वया परिपृच्छितम्।।
स्वयंभुवा यथा प्रोक्तं गुह्याख्यानं महामुने ।।९८।।
तत्ते सर्वं समासेन व्याख्यातं धर्मवत्सल ।। ९९ ।।
इति श्रीवराहपुराणे पापनाशोपायवर्णनं नामैकादशाधिकद्विशततमोऽध्यायः ।। २११ ।।

अथ संसारचक्रोपाख्याने प्रबोधनीयवर्णनम् ।।
नारद उवाच ।।
साधु साधु महाराज सर्वधर्मविदां वर ।।
त्वया तु कथिता दिव्या कथेयं धर्मसंहिता ।।१।।
अतोऽहमपि सुप्रीतस्तव धर्मपथे स्थितः ।।
तव वाक्यान्निस्सृतानि प्रोक्तानि च श्रुतानि च ।।२।।
त्वयाहं चैव राजेन्द्र पूजितश्च विशेषतः ।।
गच्छामि त्वरितो लोकान्यत्र मे रमते मनः ।। ३ ।।
स्वस्ति तेऽस्तु महाराज त्वकम्पो भव सुव्रत ।।
एवमुक्त्वा ततो यातो नारदो मुनिसत्तमः ।। ४ ।।
तेजसा द्योतयन्सर्वं गगनं भास्करो यथा ।।
विचचार दिवं रम्यां कामचारो महामुनिः ।। ५।।
गते तस्मिंस्तु सुचिरं स राजा धर्मवत्सलः ।।
मां दृष्ट्वा सुमना विप्रा वाक्यैश्चित्रैरवन्दयन् ।। ६ ।।
कृत्वा पूजां च मे युक्तां प्रियमुक्त्वा च सुव्रत ।।
विसर्जयामास विभुः सुप्रीतेनांतरात्मना ।। ७ ।।
एतद्वः कथितं विप्रास्तस्य राज्ञः पुरोत्तमे ।।
यथा दृष्टं श्रुतं चैव यथा चेहागतो ह्यहम् ।।८।।
वैशंपायन उवाच ।।
तस्य तद्वचनं श्रुत्वा हृष्टपुष्टास्तपोधनाः ।।
केचिद्वैखानसास्तत्र केचिदासन्निरासनाः ।। ९ ।।
साधु साध्विति चैवोक्त्वा विस्मयोत्फुल्ललोचनाः ।।
यायावरास्तथा चान्ये वानप्रस्थास्तथापरे ।।212.१०।।
शालानीश्च तथा केचित्कापोतीवृत्तिमास्थिताः ।।
तथा चान्ये जगुर्वृत्तिं सर्वभूतदयां शुभाम्।।११।।
शिलोंच्छाश्च तथैवान्ये काष्ठान्ताश्च महौजसः ।।
अपाकपाचिनः केचित्पाकिनश्च क्वचित्पुनः ।। १२ ।।
नानाविधिधराः केचिज्जितात्मानस्तु केचन ।।
स्थानमौनव्रताः केचित्तथान्ये जलशायिनः ।। १३ ।।
तथोर्द्ध्वशायिकाश्चान्ये तथान्ये मृगचारिणः ।।
पंचाग्नयस्तथा केचित् केचित्पर्णफलाशिनः ।।१४ ।।
अब्भक्षा वायुभक्षाश्च तथान्ये शाकभक्षिणः ।।
अतोऽन्येऽप्यतितीव्रं वै तपश्चैव प्रपेदिरे ।। १५।।

तपसोऽन्यन्न चास्तीति चिन्तयित्वा पुनः पुनः ।।
जन्मनो मरणाच्चैव केचिद्धीरा महर्षयः ।। १६ ।।
त्यक्त्वा धर्ममधर्मं च शाश्वतीं धियमास्थिताः ।।
श्रुत्वा चैव कथामेतामृषयो दिव्यवर्चसः ।। १७ ।।
जगृहुर्नियमांस्तांस्तान्भयहेतोरनिन्दिताः ।।
नाचिकेतोऽपि धमात्र्मा पुत्रो दृष्ट्वा तपोधनम् ।। १८ ।।
प्रीत्या परमया युक्तो धर्ममेवान्वचिन्तयत् ।।
वेदार्थममितं विष्णुं शुद्धं चिन्मयमीश्वरम् ।। १९ ।।
चिन्तयामास धर्मात्मा तपः परममास्थितः ।।
इदं तु परमाख्यानं भगवद्भक्तिकारकम् ।। 212.२० ।।
शृणुयाच्छ्रावयेद्वापि सर्वकामानवाप्नुयात् ।। २१ ।।
इति श्रीवराहपुराणे प्रागितिहासे संसारचक्रोपाख्याने प्रबोधनीयं नाम द्वादशाधिकद्विशततमोऽध्यायः ।। २१२ ।।

**अथ गोकर्णेश्वरमाहात्म्यम् ।।**

सूत उवाच ।।

पुरा देवैर्विनिहते संग्रामे तारकामये ।।

अत्युच्छ्रिते प्रतिबले दानवानां बले तथा ।। १ ।।

सहस्राक्षे लब्धपदे क्षीणशत्रौ गतास्पदे ।।

सम्यक्प्रसूतिमापन्ने त्रैलोक्ये सचराचरे ।। २ ।।

शृङ्गे चैवाचलेन्द्रस्य मेरोः सर्वहिरण्यये ।।

मणिविद्रुमविद्धे च विपुले पंकजासने ।। ३ ।।

सुखोपविष्टमेकाग्रं स्थिरचित्तं कृतेक्षणम् ।।

निवृत्तकार्यं मुदितं सूर्यवैश्वानरद्युतिम् ।। ४ ।।

प्रणम्य मूर्ध्ना चरणावुपगृह्य समाहितः ।।

ब्रह्माणं परिपप्रच्छ कुमारो नतिपूर्वकः ।। ५ ।।

सनत्कुमार उवाच ।।

भगवञ्छ्रोतुमिच्छामि पुराणमृषिसंस्तुतम् ।।

पुराणं तु महाभाग त्वत्तस्तत्त्वविदां वर ।।६ ।।

कथमुत्तर गोकर्णं दक्षिणं च कथं विभो।।

शृङ्गेश्वरस्य परमं कथं सम्यक्प्रतिष्ठितम्।।७।।

क्षेत्रस्य कि प्रमाणं स्यात्किञ्च तीर्थफलं स्मृतम् ।।

कथं पशुपतिस्तत्र भगवान्मृगरूपधृक् ।। ८ ।।

सर्वैस्त्वत्प्रमुखैर्देवैः कथमासादितं पुनः ।।

मृगरूपं कथं चास्य शरीरं क्व प्रतिष्ठितम् ।। ९ ।।

यथा यत्र च यस्तत्र विधिः सम्यगनुष्ठितः ।।

तत्सर्वं निखिलेनाशु ब्रूहि मे वाग्विदां वर ।। 213.१० ।।

एवमुक्तः स भगवान्ब्रह्मा ब्रह्मविदां वरः ।।

उवाच तस्मै पुत्राय गुह्यमेतत्पुरातनम् ।। ११ ।।

ब्रह्मोवाच ।।

शृणु वत्स महाभाग यथातत्त्वं ब्रवीमि ते ।।

पुराणमेतद्ब्रह्मर्षे सरहस्यं यथाश्रुतम् ।। १२ ।।

अस्ति भूधरराजस्य मन्दरस्योत्तरे शुचौ ।।

मुञ्जवान्नाम शिखरो नन्दनोपवनद्युतिः ।। १३ ।।

वज्रस्फटिकपाषाणः प्रवालांकुरशर्क्करः ।।

नीलामलशिलावर्णो गुहानिर्झरकन्दरः ।। १४ ।।

विचित्रकुसुमोपेतैर्लतामञ्जीरधारिभिः ।।

रेजे यः प्रांशुभिः शृङ्गैरुल्लिखद्भिरिवाम्बरम् ।। १५ ।।

दर्यस्तत्राधिकं रेजुर्नानाधातुपरिस्रवैः ।।

शिलीन्ध्रकुसुमोपेताश्चित्रिता इव सर्वतः ।। १६ ।।

तेऽत्र केतकिखण्डाश्च कुंदखंडाश्च पुष्पिताः ।।

उन्मीलिता इवाभान्ति धातकीवनराजिभिः ।।१७।।

भिन्नेन्द्रनीलविमलैर्धौतैः प्रस्रवणाम्बुभिः ।।

चित्रैः कुसुमसंछन्नैः शिलाप्रस्तरविस्तरैः ।।१८।।

शक्रचापनिभै रम्यैः कुबेरभवनद्युतौ ।।

तस्मिन्नगवरे रम्ये महोरगनिषेविते ।। १९ ।।

क्रीडद्भिर्देवमिथुनेर्नृत्यद्भिश्चाप्सरोगणैः ।।

कूजद्भिः शिखिभिर्मत्तैः सेविते च नगोत्तमे ।। 213.२० ।।

कल्हारकुसुमोपेते हंससारससेविते।।

प्रसन्नसलिलाकीर्णे सरोभिः फुल्लपंकजैः ।।२१।।

गजयूथानुकीर्णाभिर्जुष्टाभिर्मृगपक्षिभिः ।।

सेविताभिर्मुनिगणैः सरिद्भिरुपशोभिते ।। २२ ।।

किन्नरोद्गीतकुहरे परपुष्टनिनादिते ।।

विद्याधरशताकीर्णे देवगन्धर्व सेविते ।। २३ ।।

धारापातैश्च तोयानां विस्फुलिङ्गैः सहस्रशः ।।

प्रज्वालितेऽतुले शृङ्गे रम्ये हरितशाद्वले ।। २४ ।।

सर्वर्तुकवनोद्याने पुष्पाकरसुशोभिते ।।

यज्ञकिम्पुरुषावासे गुह्यकानामथाश्रये ।। २५ ।।

तस्मिन्गिरिवरे रम्ये सेवितव्ये सुशोभने ।।

धर्मारण्ये तपःक्षेत्रे मुनिसिद्धनिषेविते ।। २६ ।।

वरदस्तत्र भगवान्स्थाणुर्नाम महेश्वरः ।।

सर्वामरगुरुर्देवो नित्यं सन्निहितः प्रभुः ।। २७ ।।

भक्तानुकम्पी स श्रीमान्गिरीन्द्रसुतया सह ।।

स ह्यध्यास्ते गिरिवरं पार्षदैश्च गुहेन च ।। २८ ।।

विमानयायिनः सर्वे तं देवमजमव्ययम् ।।

आजग्मुः सेवितुं देवा वरेण्यमजमव्ययम् ।। २९ ।।

अन्ये देवनिकायाश्च सेवितुं प्रपतन्ति तम् ।।

ततस्त्रेतायुगे काले नन्दी नाम महामुनिः ।। 213.३० ।।

आरिराधयिषुः शर्वं तपस्तेपे सुदारुणम् ।।

ग्रीष्मे पंचतपास्तिष्ठेच्छिशिरे सलिलाश्रयः ।। ३१ ।।

ऊर्ध्वबाहुर्निरालम्बस्तोयाऽनिलहुताशनैः ।।

व्रतैश्च विविधैरुग्रै स्तपोभिर्नियमैस्तथा ।। ३२ ।।

जपपुष्पोपहारैश्च कालेकाले मुनिः सदा ।।

शङ्करं विधिवद्भक्त्या सोऽर्च्चयद्द्विजपुङ्गवः ।। ३३ ।।

उग्रेण तपसात्मानं योजयामास सुव्रतः ।।

काष्ठभूतो यदा विप्रः कृशो धर्मसुसन्ततः ।। ३४ ।।

क्षामोऽभूत्कृष्णवर्णश्च ततः प्रीतश्च शङ्करः ।।

सम्यगाराधितो भक्त्या नियमेन च तोषितः ।। ३५ ।।

तदात्मदर्शनं प्रादात्स मुनेर्वृषभध्वजः ।।

उक्तवांश्च मुनिं शर्वश्चक्षुर्दिव्यं ददामि ते ।। ३५ ।।

अदृश्यं पश्य मे रूपं वत्स प्रीतोऽस्मि ते मुने ।।

यत्पश्यन्तीह विद्वांसो रूपमप्रतिमौजसम् ।।३७।।

सहस्रसूर्यकिरणं ज्वालामालिनमूर्जितम् ।।

बालार्क मण्डलाकारं प्रभामण्डलमण्डितम्।।३८।।

जटाजूटतटाश्लिष्टं चन्द्रालंकृतशेखरम् ।।

जगदालोचनं श्रीमत्प्रदीप्तस्वत्रिलोचनम् ।।३९।।

प्रादेशमात्रं रुचिरं शतशीर्षं शतोदरम्।।

सहस्रबाहुचरणं सहस्राक्षिशिरोमुखम् ।।213.४०।।
अणीयसामणीयांसं बृहतां तु बृहत्तरम् ।।
अक्षमालापवित्राङ्गं कमण्डलु करोद्यतम्।।४१।।।।
सिंहचर्माम्बरधरं व्यालयज्ञोपवीतिनम् ।।
दृष्ट्वा देवं महादेवं हृष्टरोमा महातपाः ।।४२।।
प्राञ्जलिः प्रणतो भूत्वाऽगृणाद्ब्रह्म सनातनम् ।।
नमो धात्रे विधात्रे च संभवे वरदाय च ।। ४३ ।।
जगद्गोक्त्रे त्रिनेत्राय शंकराय शिवाय च ।।
भवाय भवगोप्त्रे च मुनये कृत्तिवाससे ।। ४४ ।।
नीलकण्ठाय भीमाय भूतभव्यभवाय च ।।
लम्बभ्रुवे करालाय हरिनेत्राय मीढुषे ।। ४५ ।।
कपर्दिने विशालाय मुञ्जकेशाय धीमते ।।
शूलिने पशुपतये विभवे स्थाणवे तथा ।। ४५ ।।
गणानां पतये स्रष्ट्रे संक्षेप्त्रे भीषणाय च ।।
सौम्याय सौम्यतपसे भीमाय त्र्यम्बकाय च ।। ४७ ।।
प्रेतावासनिवासाय रुद्राय वरदाय च ।।
कपालमालिने तस्मै हरिश्मश्रुधराय च ।। ४८ ।।
भक्तप्रियाय सततं नमोऽस्तु परमात्मने ।।
एवं नन्दी भवं स्तुत्वा नमस्कृत्य च सर्वशः ।। ४९ ।।
प्रणम्य शिरसा देवं पुनः पुनरवन्दत ।।
ततस्तु भगवान्प्रीतस्तस्मै विप्राय शंकरः। ।। 213.५० ।।
उवाच च वचः साक्षात्तमृषिं वरदः प्रभुः ।।
वरान्वृणीष्व विप्रेन्द्र यानिच्छसि महामुने ।। ५१ ।।
तांस्ते सर्वान्प्रयच्छामि दुर्ल्लभानपि मारिष ।।
प्रभुत्वममरत्वं वा शक्रत्वमपि वा प्रभो ।। ५२ ।।
ब्रह्मत्वं लोकपालत्वमपवर्गमथापि वा ।।
अथाष्टगुणमैश्वर्यं गाणपत्यमथापि वा ।। ५३ ।।
यदिच्छसि मुने शीघ्रं तद्ब्रूहि द्विजपुङ्गव ।।

इत्युक्तोऽसौ भगवता शर्वेण मुनिपुङ्गवः ।। ५४ ।।

प्रोवाच वरदं देवं प्रहृष्टेनान्तरात्मना ।।

न प्रभुत्वं न देवत्वं नेन्द्रत्वमपि वा प्रभो ।। ५५ ।।

ब्रह्मत्वं लोकपालत्वं नापवर्गं वरप्रद ।।

नैवाष्टगुणमैश्वर्यं गाणपत्यं न च प्रभो ।। ५६ ।।

स्पृहये देवदेवेश प्रसन्ने त्वयि शंकर ।।

यदि प्रीतोऽसि भगवन्ननुक्रोशतया मम ।।५७।।

अनुग्राह्यो ह्ययं देव त्वयावश्यं सुराधिप ।।

यथान्ये न भवेद्भक्तिस्त्वत्तो नित्यं महेश्वर ।। ५८ ।।

तथाहं भक्तिमिच्छामि सर्वभूताशये त्वयि ।।

यथा च न भवेद्विघ्नं तपस्यानिरतस्य मे ।। ५९ ।।

कोटिजप्येन रुद्राणामाराधनपरस्य च ।।

एतत्तु वचनं श्रुत्वा नन्दिनः स महेश्वरः ।। 213.६० ।।

प्रहस्योवाच तं प्रीत्या ततो मधुरया गिरा ।।

प्रीतोऽस्म्युत्तिष्ठ विप्रर्षे तप्यमानेन सुव्रत ।। ६१ ।।

आराधितश्च भक्त्याहं त्वया शुद्धेन चेतसा ।।

पर्याप्तं ते महाभाग तपः कर्तुं तपोधन ।। ६२ ।।

निवर्त्तयति मां वत्स मत्पादाराधने रतः ।।

जप्ता ते त्रिगुणा कोटी रुद्राणां पुरतो मम ।। ६३ ।।

पूर्णं वर्षसहस्रं च तपस्तीव्रं महामुने ।।

न कृतं यत्पुरा देवैर्नासुरैर्ऋषिभिर्न च ।। ६४ ।।

कृतं सुमहदाश्चर्यं त्वया कर्म सुदुष्करम् ।।

संक्षोभितमिदं सर्वं त्रैलोक्यं सचराचरम् ।। ६५ ।।

आगमिष्यन्ति ते द्रष्टुं देवाः सर्वे सवासवाः ।।

अक्षयश्चाव्ययश्च त्वमतर्क्यः ससुरासुरैः ।। ६६ ।।

दिव्यतेजोवपूः श्रीमान्दिव्याभरणभूषितः ।।

मत्तुल्यो मत्प्रभावश्च त्वमेकः ससुरासुरैः ।।६७ ।।

मद्रूपधारी मत्तेजास्त्र्यक्षः सर्वगुणोत्तमः ।।

भविष्यसि न सन्देहो देवदानवपूजितः ।। ६८ ।।
अनेनैव शरीरेण जरामरणवर्जितः ।।
दुष्प्राप्येयमवाप्ता ते देवैर्गाणेश्वरी गतिः ।। ६९ ।।
पार्षदानां वरिष्ठस्त्वं मामकानां द्विजोत्तम ।।
नन्दीश्वर इति ख्यातो भविष्यसि न संशयः ।। 213.७० ।।
प्राप्तमष्टगुणं सत्यमैश्वर्यं ते तपोधन ।।
द्वितीयां मे तनुं त्वां तु नमस्यन्ति च देवताः ।। ७१ ।।
अद्यप्रभृति देवाग्र्य देवकार्येषु सर्वतः ।।
प्रभुस्त्वं भविता लोके मत्प्रसादान्मुनीश्वर ।। ७२ ।।
त्वामेवाभ्यर्च्चयिष्यन्ति सर्वभूतानि सर्वतः ।।
मत्तः समभिवाञ्छन्ति प्रसादं पार्षदाधिप ।। ७३ ।।
वरान्वरार्थिनां दाता विधाता जगतः सदा ।।
भविष्यसि च धर्मज्ञ भीतानामभयप्रदः ।। ७४ ।।
यस्त्वां द्वेष्टि स मां द्वेष्टि यस्त्वामनु स मामनु ।।
नावयोरन्तरं किंचिदम्बरानिलयोरिव ।। ७५ ।।
द्वारे तु दक्षिणे नित्यं त्वया स्थेयं गणाधिप ।।
वामे तु विभुना चापि महाकालेन सर्वदा ।। ७६।।
प्रतीहारो भवानद्य सर्वदा त्रिदशोत्तमः ।।
शिरो मे रक्षतु भवान्महाकालेऽपि मे गणः ।। ७७ ।।
न वज्रेण न दण्डेन न चक्रेण न चाग्निना ।।
कांचिच्छक्नोति वै बाधां कर्त्तुं वै भुवनत्रये ।। ७८ ।।
देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ।।
त्वामेव संश्रयिष्यन्ति मद्भक्ताः पुरुषाश्च ये ।। ७९ ।।
त्वयि तुष्टे ह्यहं तुष्टः कुपिते कुपितस्त्वहम् ।।
त्वत्तः प्रियतरो नास्ति ममान्यो द्विजपुंगव ।। 213.८० ।।
एवं तस्मै वरान्दत्त्वा प्रीतः स्वयमुमापतिः ।।
उवाच भूयः स्पष्टेन स्वरेणाम्बरचारिणा ।। ८१ ।।
आगतान्विद्धि सर्वान्वै त्रिदशान्समरुद्गणान् ।।

दिदृक्षया च भद्रं ते कृतकृत्यश्च साम्प्रतम् ।। ८२ ।।

यदीरितं मया वत्स वरं प्रतिवचस्त्वयि ।।

प्रविष्टं न श्रुतिपथं दिवि सर्वदिवौकसाम् ।। ८३ ।।

नारायणं पुरस्कृत्य सेन्द्रास्ते समरुद्गणाः ।।

प्रेमार्थे चागमिष्यन्ति वरार्थं तपसाऽमराः ।। ८४ ।।

यक्षविद्याधरगणाः सिद्धगन्धर्वपन्नगाः ।।

मुनयश्च महात्मानस्तपोलब्धाः सहस्रशः ।।८५।।

ते बुद्ध्वा त्वद्गतामृद्धि प्रतप्ताः परमेर्ष्यया ।।

तपांसि विविधान्यत्र विविधान्नियमांस्तथा ।। ८६ ।।

चर्तुं समभिवाञ्छन्ति सदाभ्यासे वरार्थिनः ।।

वरदं यामभिज्ञाय गिरौ मौञ्जवति स्थितम् ।। ८७ ।।

अत्रैते यावदागम्य न मां पश्यन्ति मानवाः ।।

तावदेव त्वितः शीघ्रं गमिष्यामि महामुने ।। ८८ ।।

अद्य ते तु मया सर्वे देवा ब्रह्मपुरोगमाः ।।

द्रष्टव्याश्चानुमन्तव्या मत्तोऽनुग्रहकांक्षिणः ।। ८९ ।।

अभिप्रायं च सर्वेषां जानामि द्विजसत्तम ।।

अनुगृह्य वरैस्तैश्च तत्रैवान्तरधीयत ।। 213.९० ।।

इति श्रीवराहपुराणे भगवच्छास्त्रे गोकर्णेश्वरमाहात्म्ये त्रयोदशाधिकद्विशततमोऽ ध्यायः ।। २१३ ।।

**पुनः गोकर्णमाहात्म्यनन्दिकेश्वरवरप्रदानवर्णनम् ।।**

ब्रह्मोवाच ।।

अन्तर्हितं ततस्तस्मिन्भवे वै भूतनायके ।।

बभूव दिव्यः स तदा नन्दी गणचमूपतिः ।। १ ।।

चतुर्भुजस्त्रिणयनो दिव्यसंस्थानसंस्थितः ।।

दिव्यवर्णवपूश्चारुर्दिव्यागुरुसमन्वितः ।। २ ।।

त्रिशूली परिघी दण्डी पिनाकी मौञ्जमेखली ।।

शुशुभे तेजता तत्र द्वितीय इव शंकरः ।। ३ ।।

आस्थितः पादमाकृष्य ह्याह्वयन्निव स द्विजः ।।

त्रिभिः क्रमैः क्रांतुमनास्त्रिविक्रम इवोद्यतः ।। ४ ।।

तं दृष्ट्वा खेचराः सर्वा देवताः परिशंकिताः ।।

आख्यातुं पुरुहूताय सम्भ्रान्ताः प्रययुर्दिवम् ।। ५ ।।

तेभ्यः श्रुत्वा सहस्राक्षः सर्वे चान्ये दिवौकसः ।।

विषादं परमं गत्वा चिन्तामापेदिरे भृशम् ।। ६ ।।

अयं कश्चिद्वरं लब्ध्वा ह्युमाकान्तान्महेश्वरात् ।।

अत्यूर्जितबलः श्रीमांस्त्रैलोक्यं प्राप्स्यति ध्रुवम् ।। ७ ।।

यादृशोऽस्य महोत्साहस्तेजोबलसमन्वितः ।।

नूनमेष महासत्त्वो हरेत्स्थानं दिवौकसाम् ।। ८ ।।

यावच्चैवोजसा नाकमसौ चंक्रमते प्रभुः ।।

प्रसादयामो वरदं तावदेव महेश्वरम् ।। ९ ।।

एवमुक्त्वा तु ते तत्र मया सह सुरोत्तमाः ।।

गिरेर्मौञ्जवतः शृङ्गमाजग्मुर्देवनिर्मितम् ।। 214.१० ।।

विधाता भगवान्विष्णुः प्रभुस्त्रिभुवनेश्वरः ।।

अभ्यधावंस्ततः सोऽथ स हि जानाति हृद्गतम् ।। ११ ।।

कृतेन तेन विबुधाः पश्यन्ति मुनयश्च तं ।।

ततः स भगवान्विष्णुः सहदेवः सधातृकः ।। १२ ।।

जगाम तत्र यत्रासौ नन्दी तिष्ठति देववत् ।।

नन्द्युवाच ।।

सफलं जीवितं मेऽद्य सफलश्च परिश्रमः ।। १३ ।।

यन्मे दृष्टः सुराध्यक्षः सर्वलोकगुरुर्हरिः ।।

पर्याप्तं तन्ममाद्येह कृतकृत्योऽस्मि तेन वै ।।१४।।

यच्च मे प्रभुरव्यग्रः प्रीतः पापहरो हरः ।।

विधाय पार्षदत्वं मे वरानिष्टान्ददौ शिवः ।।१५।।

परो मेऽनुग्रहः सोऽत्र पूतोऽस्मि खलु साम्प्रतम् ।।

यच्चोक्तं विधिना वाक्यं देवान्प्रति महात्मना ।।१६।।

मामुद्दिश्य हितं तथ्यं तथैव च न चान्यथा ।।

यन्मां देवर्षयः प्रीत्या समागत्य प्रियंवदाः ।।१७।।

तेनास्मि परमप्रीत आदृतः परमेष्ठिना ।।

देवा ऊचुः ।।

वयं तं वरदं देवं द्रक्ष्यामस्ते वरप्रदम्।।१८।।

तवैष तपसा तुष्टः स्वयं प्रत्यक्षताङ्गतः ।।

इत्युक्तवन्तस्ते देवाः पुनरूचुर्द्विजोत्तमम् ।। १९।।

कुत्र द्रक्ष्यामहे देवं भगवन्तं कपालिनम्।।

नन्द्युवाच ।।

अनुगृह्य तु मां देवस्तत्रैवादर्शनं गतः ।।214.२०।।

न जाने कुत्र वा देवं कुत्रास्ते तद्गवेष्यताम्।।

सनत्कुमार उवाच ।।

किमत्र नन्दिनं देवो येनासौ नोक्तवान्प्रभुम् ।। २१।।

तन्मे कथय देवेश गुह्यं किं चास्ति शूलिनः ।।

ब्रह्मोवाच ।।

यदुक्तवान्महेशानो नाख्येयोऽस्मि पुरान्जनि ।। २२ ।।

किमुक्तवान्महादेवो नन्दिनं तच्छृणुष्व मे ।।

ईश्वर उवाच ।।

अस्ति कश्चित्समुद्देशः क्षितेः सिद्धोऽद्रिसंकटः ।। २३ ।।

पारे हिमवतः पुण्ये तपोवनगणैर्युतः ।।

तत्र श्लेष्मातको नाम वसते पन्नगोत्तमः ।। २४ ।।

सोऽनुग्राह्यो मयावश्यं तपसा दग्धकिल्बिषः ।।

तदभ्याशे च रुचिरं न चासौ वानराश्रयः।।२५।।

तस्य नाम्ना च तत्स्थानं दिव्यं चिरतपोभृतम्।।

श्लेष्मातकवनं नाम पुण्यशीलशिलोच्चयम्।।२६।।

मृगरूपेण चरता तत्र वै त्रिदशा मया ।।

द्रष्टव्याः सञ्जिघृतक्षन्तः खिन्नाश्चान्वेषणे मम ।। २७ ।।

नाख्यातव्यं त्वया तेषां देवताप्सरसामिदम् ।।

अनुगृह्य वरैस्तैश्च तत्रैवान्तरधीयत ।। २८ ।।

विद्योतयन्दिशः सर्वास्त्रिदशैः परिवारितः ।।

बालकेन्दुनिभं दिव्यमर्च्चितं दिव्यबिन्दुभिः ।। २९ ।।

कामगं रथमारुह्य महेन्द्रः समरुद्गणः ।।

आयातः शैलपृष्ठन्तमोजसा पूरयन्निव ।। 214.३० ।।

गणावृतश्च वरदो वरुणो यादसांपतिः ।।

वज्रस्फटिक चित्रेण विमानेनातितेजसा ।। ३१ ।।

तप्तकाञ्चनवर्णेन रत्नचित्रेण भास्वता ।।

विमानेनागतः शृङ्गे द्योतयन्वै धनाधिपः ।। ३२ ।।

विमानशत कोटीभिरागतो यक्षराक्षसैः ।।

श्रीमद्भिर्बहुभिर्दिव्यैर्विमानैः सूर्यसन्निभैः ।।३३।।

अधिष्ठितः सुकृतिभिः प्रायाद्वैवस्वतोपमः ।।

चन्द्रादित्यौ ग्रहाः सर्वे समग्रं त्वृक्षमण्डलम् ।। ३४ ।।

विमानैरग्नितुल्याभैराजग्मुः खान्महीधरम् ।।

रुद्रास्त्वेकादशा याताः सूर्या द्वादश चैव तु ।। ३५ ।।

आगतावश्विनौ देवौ मौञ्जवन्तं महागिरिम् ।।

विश्वेदेवाश्च साध्याश्च गुरुश्च तपसान्वितः ।। ३६ ।।

संछाद्यैरावतपथं सहसाभ्याययुर्द्रुतम् ।।

स्कन्दश्चैव विशाखश्च भगवांश्च विनायकः ।।३७।।

संप्राप्तस्तं गिरिवरं मयूरशतनादितम् ।।

नारदस्तुम्बुरुश्चैव विश्वावसुपरावसू ।। ३८ ।।
हाहाहूहूस्तथा चान्ये सर्वे गन्धर्वसत्तमाः ।।
वैहायसैर्यानवरैर्विविधैर्वासवाज्ञया ।। ३९ ।।
अनिलश्चानलश्चैव धर्मः सत्यो ध्रुवोऽपरः ।।
देवर्षयश्च सिद्धाश्च यक्षा विद्याधरास्तथा ।। 214.४० ।।
गुह्यकाश्च महात्मानः सर्व एव समागताः ।।
गन्धकाली घृताची च बुद्धा गौरी तिलोत्तमा ।। ४१।।
उर्वशी मेनका रंभा पंचस्या च तथापरा ।।
एताश्चान्याश्च तच्छैलमाजग्मुर्देवयोषितः ।।४२।।
पुलस्त्योऽत्रिर्मरीचिश्च वसिष्ठो भृगुरेव च ।।
कश्यपः पुलहश्चापि विश्वामित्रोऽथ गौतमः ।।४३।।
भारद्वाजोऽग्निवेश्यश्च तथा वृद्धपराशरः ।।
मार्कण्डेयोऽङ्गिरा गर्गः संवर्त्तः क्रतुरेव च ।।४४ ।।
मरीचिर्जमदग्निश्च भार्गवश्च्यवनस्तथा ।।
नियोगान्मम विष्णोश्च शक्रस्य त्रिदिवस्पतेः ।।४५।।
सिंधुश्च पुरुषश्चैव सरयूश्च महानदी।।
ताम्रारुणा चारुभागा वितस्ता कौशिकी तथा ।।४१।।।
पुण्या सरस्वती कोका नर्मदा बाहुदा तथा ।।
शतद्रूश्च विपाशा च गंडकी च सरिद्वरा ।।४७।।
गोदावरी च वेणी च तापी च सरिदुत्तमा ।।
करतोया स शीता च तथा चीरवती नदी ।।४८ ।।
नंदा च परनन्दा च तथा चर्मण्वती नदी ।।
पर्णाशा दैविका चैव वितस्ता च तथापरा ।। ४९ ।।
सिंधुश्च पुरुषश्चैव प्रभासः सोम एव च ।।
लोहितश्चाययुस्तत्र गंगासागर एव च ।। 214.५० ।।
अन्यानि चापि मेदिन्यां तीर्थान्यायतनानि च ।। ५१।।
निजस्वरूपेणाजग्मुस्तत्र पुण्यान्यनेकशः ।।
उपागतानि चेन्द्रस्य नियोगादुत्तमं गिरिम् ।। ५२।।

शैलोत्तमो महामेरुः कैलासो गन्धमादनः ।।
हिमवान्हेमकूटश्च निषधश्च महागिरिः ।।५३।।
विन्ध्यो महेन्द्रः सह्यश्च मलयो दर्दुरस्तथा ।।
माल्यवांश्चित्रकूटश्च तथा द्रोणः शिलोच्चयः ।। ५४ ।।।
श्रीपर्वतो लतावेष्टः पारियात्रश्च शैलराट् ।।
आगताः सर्व एवैते शैलेन्द्राः काननौकसः।।५५।।
सर्वे यज्ञाः सर्वविद्या वेदाश्चत्वार एव च ।।
धर्मः सत्यं दमः स्वर्गः कपिलश्च महानृषिः ।।५६ ।।
वासुकिश्च महाभागश्चामृताशी भुजङ्गराट्।।
ज्वलत्फणासहस्रेण अनन्तश्च धराधरः ।। ५७।।
फणींद्रो धृतराष्ट्रश्च किर्मीराङ्गश्च नागराट् ।।
अंभोधरश्च स श्रीमान्नागराजो महाद्युतिः ।।५८।।
अर्बुदो न्यर्बुदबलस्तथा चक्षुःश्रवाधिपः ।।
विद्युज्जिह्वो द्विजेह्वेंद्र शङ्खवर्च्चा महाद्युतिः ।५।।
ख्यातस्त्रिभुवने धीमान्नहुषोऽनिमिषेश्वरः ।।
विरोचनसुतः सत्यः स्फुटोमणिशतैश्चितः ।। 214.६० ।।
फणाशतधरो रूपी भूरिशृङ्ग इवाचलः ।।
अरिमेजयसंयुक्तः प्रज्ञावान् भुजगेश्वरः ।। ६१ ।।
विनतो नागराजश्च कम्बलाश्वतरौ तथा ।।
भुजगाधिपतिर्वीर एलापत्रस्तथैव च ।। ६२ ।।
उरगानामधिपती कर्कोटकधनञ्जयौ ।।
एवमाद्याः समायाता भुजगेन्द्रा महाबलाः ।। ६३ ।।
अहोरात्र तथा पक्षा मासाः संवत्सरास्तथा ।।
द्यौर्मेदिनी दिशश्चैव विदिशश्च समागताः ।। ६४ ।।
ततश्चैवागतैर्देवैर्यक्षैः सिद्धैश्च सर्वशः।।
अपूर्यत गिरेः शृङ्गे वेला काले यथोदधेः।।६९।।
तस्मिन्देवसमाजे तु रम्ये शैलेन्द्रमूर्द्धनि।।
पुष्पाणि मुमुचुस्तत्र तरवो ह्यनिलार्दिताः ।। ६६ ।।

प्रगीता देवगन्धर्वाः प्रनृत्ताप्सरसां गणाः ।।

पक्षिणः संप्रहृष्टाश्च कूजन्ति मधुरं तदा ।। ६७ ।।

पुण्यगन्धाः सुखस्पर्शास्तत्र वांति च वायवः ।।

एवमागत्य ते सर्वे देवा विष्णुपुरोगमाः ।। ६८ ।।

श्रिया ज्वलन्तं ददृशुर्नन्दिनं पुरतः स्थितम् ।।

स च तानागतान्द्रष्ट्वा गन्धर्वाप्सरसां गणान् ।। ६९ ।।

स हि तान्दैवराजेन सार्द्धमन्यैश्च दैवतैः ।।

मूर्ध्ना प्रणम्य चरणौ प्राञ्जलिः प्रयतात्मवान् ।। 214.७० ।।

सम्भ्रान्तः सहसा तेभ्यो नमस्कर्तुं प्रचक्रमे ।।

नमस्कृत्य च तान् सर्वान् स्वागतानभिभाष्य च ।। ७१ ।।

अर्घ्यपाद्यादिभिः शीघ्रमासनैश्च न्यमन्त्रयत् ।।

प्रणिधानेन तस्यार्थं श्रुत्वा तत्प्रतिपूजयेत् ।। ७२ ।।

आदित्या वसवो रुद्रा मरुतश्चाश्विनावपि ।।

साध्या विश्वे सगन्धर्वा गुह्यकाश्च प्रपूजयेत् ।। ७३ ।।

विश्वावसुर्हाहाहूहू तथा नारदतुम्बुरू ।।

चित्रसेनादयः सर्वे गन्धर्वास्तमपूजयन् ।। ७४ ।।

तं वासुकिप्रभृतयः पन्नगेन्द्रा महौजसः ।।

सौम्यमभ्यर्च्चयन्ति स्म दृष्ट्वा नन्दीश्वरं तथा ।। ७५ ।।

सिद्धचारणसङ्घाश्च विद्याश्चाप्सरसाङ्गणाः ।।

सत्कृतं देवदेवेन गणास्तमभिपूजयन् ।। ७१ ।।

यक्षविद्याधराश्चैव ग्रहाः सागरपर्वताः ।।

सिद्धा ब्रह्मर्षयश्चैव गङ्गाद्याः सरितस्तथा ।। ७७ ।।

आशिषः प्रददुस्तस्य सर्व एव मुदान्विता ।।

देवा ऊचुः ।।

स सुप्रीतोऽस्तु ते देवः सदा पशुपतिर्मुने ।। ७८ ।।

सर्वत्र चाप्रतिहता गतिश्चास्तु तवानघ ।।

भवान्देवैस्तु वा न स्यादत ऊर्ध्वं द्विजोत्तम ।। ७९ ।।

निरामयोऽमृतीभूतश्चरिष्यति विभुः सुखी ।।

लोकेषु सप्तसु विभो त्र्यम्बकेन सहाच्युत ।। 214.८० ।।

इत्युक्तस्त्रिदशैर्नन्दी पुनस्तान्प्रत्युवाच ह ।।

नन्दिकेश्वर उवाच ।।

यद्भवद्भिः प्रियं सर्वैः प्रीतिमद्भिः सुरोत्तमैः ।। ८१ ।।

आशिषाऽनुगृहीतोऽस्मि नियोज्योऽहं सदा हि वः ।।

ब्रूत यूयं किमस्माभिः कर्त्तव्यं भवतामिह ।। ८२ ।।

आज्ञापयध्यमाज्ञप्तस्तस्माद्विबुधसत्तमाः ।।

तस्य तद्वचनं श्रुत्वा शक्रः प्रोवाच तं तदा ।। ८३ ।।

शक्र उवाच।।

कुत्रासौ प्रस्थितो भद्र कुत्र वा स गतोऽपि वा ।।

पश्यामो विप्र तं सर्वे देवानामधिपं विभुम् ।। ८४ ।।

स्थाणुमुग्रं शिवं देवं शर्वमेव स्वयं मुने ।।

यदि जानासि भगवानीश्वरो यत्र तिष्ठति ।।८५।।

तत्स्थानं नः समाख्याहि महर्षे शीघ्रमेव हि ।।

तच्छ्रुत्वा वचनं धीमदीरितं वज्रपाणिना ।।८६।।

प्रत्युवाच ततः शक्रं नन्दी पशुपतिं स्मरन् ।।

नन्दिकेश्वर उवाच ।।

श्रोतुमर्हसि देवेन्द्र यथातत्त्वं दिवस्पते ।।८७।।

अस्मिन्गिरौ मुञ्जवति स्थाणुरभ्यर्च्चतो मया ।।

प्रीतोऽसौ मां वरैर्दिव्यैरनुगृह्य हरः प्रभुः ।।८८

प्रीतो विनिर्गत इतस्तं विज्ञातुं बिभेम्यहम्।।

यद्याज्ञापयसे देवं चाहं त्वच्छासने स्थितः ।।८९।।

मार्गयामो हि यत्नेन भगवन्तं तु वासव ।। 214.९० ।।

इति श्रीवराहपुराणे गोकर्णमाहात्म्ये नन्दिकेश्वरवरप्रदानं नाम चतुर्दशाधिकद्विशततमोऽ ध्यायः ।। २१४ ।।

**अथ गोकर्णेश्वरजलेश्वरमाहात्म्यवर्णनम् ।।**

ब्रह्मोवाच ।।

ततः शक्रः सुरगणैः सह सर्वैः समेत्य च ।।

बुद्धिं चकार गमने मार्गितुं यत्र शङ्करः ।। १ ।।

तत उत्थाय ते देवाः सर्व एव शिलोच्चयात् ।।

विहायसा ययुः शीघ्रं तेनैव सह नन्दिना ।। २ ।।

स्वर्लोकं ब्रह्मलोकं च नागलोकं च सर्वशः ।।

बभ्रमुस्त्रिदशाः सर्वे रुद्रान्वेषणतत्पराः ।। ३ ।।

खिन्नाः क्लिष्टाश्च सुभृशं न पुनस्तत्पदं विदुः ।।

चतुःसमुद्रपर्यन्तसप्त द्वीपवतीं महीम् ।। ४ ।।

सशैलकाननोपेतां मार्गयद्भिर्हि तं सुरम् ।।

कन्दरेषु महाद्रीणां तुङ्गेषु शिखरेषु च ।। ५ ।।

विततेषु निकुञ्जेषु विहारेषु च सर्वतः ।।

विचिन्वद्भिः क्षितिमिमां तृणं द्विविदलीकृतम् ।।६।।

न प्रवृत्तिः क्वचिदपि शम्भोरासाद्यते सुरैः ।।

यदा निर्विण्णमनसो मार्गमाणाः सुरास्तदा ।। ७ ।।

न पश्यन्ति शिवं तत्र तदेषां भयमाविशत् ।।

भीतास्ते संविदं कृत्वा सञ्चिन्त्य गुरुलाघवम् ।। ८ ।।

सम्भूयान्योऽन्यममरा मामेव शरणं ययुः ।।

तमेकाग्रेण मनसा शङ्करं लोकशङ्करम् ।।९।।

उपायमात्रं दृष्टं मे ध्यायंस्तद्वेषभूषणैः ।।

यथा यत्र च सोऽस्माभिर्द्रष्टव्यो वृषभध्वजः ।। 215.१० ।।

सर्वं त्रैलोक्यमस्माभिर्विचितं वै निरन्तरम्।

श्लेश्मातकवनोद्देशं स्थानं मुक्त्वा महीतले ।। ११ ।।

आगच्छध्वं गमिष्यामस्तमुद्देशं सुरोत्तमाः ।।

इत्येवमुक्त्वा तैः सर्वैस्तामाशां प्रस्थिता वयम् ।।१२।।

तत्क्षणादेव सम्प्राप्ता विमानैः शीघ्रयायिभिः ।।

श्लेष्मातकवनं पुण्यं सिद्धचारणसेवितम् ।। १३ ।।
तस्मिन्सुरमणीयानि विविधानि शुचीनि च ।।
ध्यानस्थानानि रम्याणि बहूनि गुणवन्ति च ।। १४ ।।
आश्रमारण्यभागेषु दरीणां विवरेषु च ।।
विभ्राजद्वनराजाकी नद्यश्च विमलोदकाः ।। १५ ।।
सिंहशार्दूलमहिषगोलांगूलर्क्षवानरैः ।।
नादितं गजयूथैश्च मृगयूथैश्च तद्वनम् ।। १५ ।।
प्रमुखे वासवं कृत्वा विविशुस्ते सुरास्तदा ।।
विमुच्य रथयानानि पद्भिः सिद्धादिसङ्कटम् ।। १७ ।।
कन्दरोदरकूटेषु तरूणां गहनेषु च ।।
सर्वदेवमयं रुद्रं मार्गमाणाः शनैः शनैः ।। १८ ।।
प्रविशन्तश्च ते देवा वनोद्देशं क्वचिच्छुभे ।।
कदलीवनसंछन्ने फुल्लपादपशोभिते ।। १९ ।।
गिरिनद्यास्तु पुलिने हंसकुन्देंदुसन्निभे ।।
गन्धामोदेन पुष्पाणां वासितं मधुगन्धिमत् ।। 215.२० ।।
मुक्ताचूर्णनिकाशाभिर्वालुकाभिस्ततस्तत ।।
विक्रीडमानां ददृशुः कन्यां काश्चिन्मनोरमाम् ।। २१ ।।
तत्र ते विबुधा दृष्ट्वा सर्वे मां समचोदयन् ।।
आद्योऽहं सर्वदेवानां कथमेतद्भवेदिति ।। २२।।
मुहूर्त्तं ध्यानमास्थाय विज्ञाता सा मया तदा ।।
ध्रुवं शैलेन्द्रपुत्रीयमुमा विश्वेश्वरेश्वरी ।। २३ ।।
ततस्तदुच्चशिखरमारुह्य विबुधेश्वराः ।।
अधो विलोक्य ते सर्वे ददृशुस्तं सुरोत्तमम् ।। २४ ।।
मध्ये मृगसमूहस्य गोप्तारमिव संस्थितम् ।।
एकशृंगैकचरणं तप्तहाटकवर्चसम् ।। २५ ।।
चारुवक्त्राक्षिदशनं पृष्ठतः शुक्लबिन्दुभिः ।।
शुक्लेनोदरभागेन राजतैरुपशोभितम् ।। २६ ।।।
पीनोन्नतकटिस्कन्धं निमग्नांसशिरोधरम्।।

बिम्बोष्ठं ताम्रजिह्वास्यं दंष्ट्रांकुरविराजितम् ।। २७ ।।
तं दृष्ट्वा विबुधाः सर्वे शिखरात्प्रतिधाविताः ।।
सर्वोद्यमेन तरसा तं मृगेन्द्रजिघृक्षवः ।।२८।।
शृङ्गाग्रं प्रथमं धृत्वा गृहीत्वा वज्रपाणिना ।।
मध्यं मया तस्य तदा गृहीतं प्रणतात्मना ।।२९ ।।
जग्राह केशवश्चापि मूलं तस्य महात्मनः ।।
त्रिभिरेवं गृहीतं तु त्रिधा भूतमभज्यत ।।215.३०।।
शक्रस्याग्रं स्थितं हस्ते मध्यं हस्ते मम स्थितम् ।।
विष्णोर्मूलं स्थितं हस्ते प्रविभक्तं त्रिधागतम् ।।३१।।
शृङ्गस्यैव गृहीतस्य त्रिधास्माकं मृगाधिपः।।
विषाणरहितस्तस्य प्रनष्टः पुनरत्र वै ।।३२।।
अन्तर्हितोऽन्तरिक्षस्थः प्रोवाचास्मानुपालभन् ।।
भो भो देवा मया यूयं वच्यमानानवाप्स्यथ ।। ३३ ।।
सशरीरोऽहं युष्माभिर्वशाप्तः प्रगतस्त्वितः ।।
शृङ्गमात्रेण सन्तुष्टा भवन्तस्तेन वञ्चिताः ।। ३४ ।।
यद्यहं सशरीरः स्यां गृहीत्वा स्थापितोऽभवम् ।।
तदा चतुष्पात्सकलो धर्मः स्यात्प्रतिपादितः ।।३५।।
कामं शृंगाणि मेऽत्रैव श्लेष्मात्मकवनेऽमराः ।।
न्यायतः स्थापयिष्यध्वं लोकानुग्रहकाम्यया ।।३६।।
अत्रापि महती व्युष्टिर्भविष्यति न संशयः।।
पुण्यक्षेत्रे सुमहति मत्प्रभावानुभाविते।।३७।।
यावन्ति भुवि तीर्थानि ह्यासमुद्र सरांसि च।।
क्षेत्रेऽस्मिंस्तानि तीर्थानि चागमिष्यन्ति मत्कृते।।३८।।
अहं पुनः शैलपतेः पादे हिमवतः शुभे ।।
नेपालाख्ये समुत्पत्स्ये स्वयमेव महीतलात् ।।३९।।
दीप्ततेजोमयशिराः शरीरं च चतुर्मुखम् ।।
शरीरेश इति ख्यातः सर्वत्र भुवनत्रये ।। 215.४० ।।
तत्र नागह्रदे घोरे स्थास्याम्यन्तर्जले ह्यहम् ।।

त्रिंशद्वर्षसहस्राणि सर्वभूतहिते रतः ।। ४१ ।।

यदा वृष्णिकुलोत्पन्नः कृष्णचक्रेण पर्वतान् ।।

पाटयित्वेन्द्रवचनाद्दानवान्निहनिष्यति ।। ४२ ।।

तदा स देशो भविता सर्वम्लेच्छैरधिष्ठितः ।।

ततोऽन्ये सूर्यवंशीयाः क्षत्रियास्तान्निहत्य च ।। ४३ ।।

वसिष्यंति च तं देशं ब्राह्मणैः संप्रवर्त्तितान् ।।

धर्मान्संस्थापयिष्यंति राज्यं प्राप्स्यंति शाश्वतम् ।।४४।।

ततो लिङ्गार्च्चनं तत्र प्रतिष्ठास्यंति पार्थिवाः।।

क्षत्रियाः सूर्यवंशीयाः शून्ये लप्स्यंति मां नृपाः ।।४५।।

ततो जनपदस्तत्र भविष्यति महांस्तदा ।।

स्फीतो ब्राह्मणभूयिष्ठसर्ववर्णाश्रमैर्युतः ।। ४३ ।।

सम्यक्प्रवृत्ता राजानो भविष्यन्त्यायतौ स्थिताः ।।

एवं सम्यक्स्थिते तस्मिन्देशे पौरजने तथा ।। ४७ ।।

तत्र मामर्च्चयिष्यंति सर्वभूतानि सर्वदा ।।

तत्राहं यैः सकृद्दृष्टो विधिवद्वंदितस्तु यैः ।।४८।।

गत्वा शिवपुरं ते मां द्रक्ष्यंते दग्धकिल्बिषाः ।।

उत्तरेण तु गंगाया दक्षिणे चाश्विनीमुखात् ।। ४९ ।।

क्षेत्रं हि मम तज्ज्ञेयं योजनानि चतुर्दश ।।

हिमाद्रेस्तुङ्गशिखरात्प्रोद्भूता वाग्म ( ङ्म) ती नदी ।। 215.५० ।।

भागीरथ्याः शतगुणं पवित्रं तज्जलं स्मृतम् ।।

तत्र स्नात्वा हरेर्लोकानुपस्पृश्य दिवस्पतेः ।।५१ ।।

मुक्त्वा देहं नरा यांति मम लोकं न संशयः ।।

अपि दुष्कृतकर्माणः क्षेत्रेऽस्मिन्निवसंति ये ।। ५२ ।।

नियतं पुरुहूतस्य श्रिताः स्थाने वसंति ते ।।

देवदानवगन्धर्वाः सिद्धविद्याधरोरगाः ।।५३।।

मुनयोऽप्सरसो यक्षा मोहिता मम मायया ।।

तद्वै गुह्यं न जानंति यत्र सन्निहितो ह्यहम् ।। ५४ ।।

तपस्तपोधनानां च सिद्धक्षेत्रं हि तत्कृतम् ।।

प्रभासाच्च प्रयागाच्च नैमिषात्पुष्करादपि ।। ५५ ।।

कुरुक्षेत्रादपि बुधाः क्षेत्रमेतद्विशिष्यते ।।

श्वशुरो मे स्थितो यत्र हिमवान् भूधरेश्वरः ।। ५६ ।।

प्रभवन्ति यतः सर्वा गंगाद्याः सरितां वराः ।।

तस्मिन्क्षेत्रवरे पुण्ये पुण्याः सर्वाः सरिद्वराः ।। ५७ ।।

सर्वे प्रस्रवणाः पुण्याः सर्वे पुण्याः शिलोच्चयाः ।।

आश्रमस्तत्र भविता सिद्धचारणसेवितः ।।५८।।

शैलेश्वर इति ख्यातः शरीरं यत्र मे स्थितम् ।।

स्रवन्तीनां वरा पुण्या वाग्मती पर्वतोत्तमात् ।। ५९ ।।

भागीरथी वेगवती कलुषं दहते नृणाम् ।।

कीर्त्तनादेव संशुद्धे दर्शनाद्भूतिमाप्स्यति ।। 215.६० ।।

पानावगाहनात्तस्यास्तारयेत्सप्त वै कुलान् ।।

लोकपालस्तु चरति तीर्थख्यातिं च तत्स्वयम् ।। ६१ ।।

तत्र स्नात्वा दिवं यान्ति मृतास्ते त्वपुनर्भवाः ।।

स्नात्वा स्नात्वा तु ये तत्र नित्यमभ्यर्चयन्ति माम् ।। ६२ ।।

उद्धराम्यहमेतान्वै प्रीतः संसारसागरात् ।।

यस्तस्य वारिणा पूर्णमेकं च घटमुद्धरेत् ।। ६३ ।।

स्नापनार्थे मम शुचिः श्रद्दधानोऽनसूयकः ।।

वेदवेदांगविदुषा श्रोत्रियेण विशेषतः ।। ६४ ।।

आहृतस्याग्निहोत्रस्य यत्फलं तस्य तद्भवेत् ।।

तस्यास्तीरे जलोद्भेदं मन्मूलादभिनिःसृतम् ।। ६५ ।।

मृगशृङ्गोदकं नाम नित्यं मुनिजनप्रियम् ।।

तत्राभिषेकं कुर्वीत उपस्पृश्य समाहितः ।।६६ ।।

यावज्जीवकृतं पापं तत्क्षणादेव नश्यति।।

तीर्थं पंचनदं प्राप्य पुण्यं ब्रह्मर्षिसेवितम् ।। ६७ ।।

अग्निष्टोमफलं तत्र स्नातमात्रः प्रपद्यते ।।

षष्टिं धेनुसहस्राणि यानि रक्षन्ति वाग्मतीम् ।। ६८ ।।

न तां पापाः कृतघ्नो वा कदाचित्प्राप्नुयान्नरः।।

शुचयः श्रद्दधानाश्च सत्यसंधाश्च ये नराः ।।६९ ।।
वाग्मत्यां ते नराः स्नान्ति लभन्ते चोत्तमां गतिम् ।।
आर्त्ता भीताश्च सन्तप्ता व्याधितोऽव्याधितोऽपि वा।।215.७० ।।
वाग्मत्याः सलिले स्नात्वा ये मां पश्यन्ति संस्कृताः।।
तेषां शान्तिर्भवेन्नित्यं पुरुषाणां न संशयः ।।७१ ।।
मत्प्रभावात्तु स्नातस्य सर्वं नश्यति किल्बिषम् ।।
ईतयः समुदीर्णाश्च प्रशमं यान्ति सर्वशः।।७२।।
वाग्मत्याः सलिले स्नात्वा ये मां पश्यन्ति संस्कृताः ।।
वाग्मती सरितां श्रेष्ठा यत्र यत्राऽवगाह्यते ।।७७३।।
तत्र तत्र फलं दद्याद्राजसूयाश्वमेधयोः ।।
योजनाभ्यन्तरं क्षेत्रं समन्तात्सर्वतोदिशम् ।। ७४ ।।
मूलक्षेत्रं तु विज्ञेयं रुद्रेणाधिष्ठितं स्वयम् ।।
तत्र पूर्वोत्तरे पार्श्वे वासुकिर्नाम नागराट् ।। ७५ ।।
वृतो नागसहस्रैस्तु द्वारि तिष्ठति मे सदा ।।
स विघ्नं कुरुते नृणां तत्क्षेत्रं विशतां सदा ।। ७६ ।।
प्रथमं स नमस्कार्यस्ततोऽहं तदनन्तरम् ।।
अनेन विधिना पुंसामविघ्नं विशतां भवेत् ।। ७७ ।।
वन्दते परया भक्त्या यो मां तत्र नरः सदा ।।
पृथिव्यां स भवेद्राजा सर्वलोकनमस्कृतः ।। ७८ ।।
गन्धैर्माल्यैश्च मे मूर्त्तिमभ्यर्च्चयति यो नरः ।।
उत्पत्स्यते स देवेषु तुषितेषु न संशयः ।। ७९ ।।
यस्तु दद्यात्प्रदीपं मे पर्वते श्रद्धयान्वितः ।।
सूर्यप्रभेषु देवेषु तस्योत्पत्तिर्विधीयते ।। 215.८० ।।
गीतवादित्रनृत्यैस्तु स्तुतिभिर्जागरेण वा ।।
ये मे कुर्वन्ति सेवां वै मत्संस्थास्ते भवन्ति हि ।। ८१ ।।
दध्ना क्षीरेण मधुना सर्पिषा सलिलेन वा ।।
स्नापनं ये प्रयच्छन्ति ते तरन्ति जरान्तकौ ।।८२ ।।
यः श्राद्धे भोजनं दद्याद्विप्रेभ्यः श्रद्धयान्वितः ।।

सोऽमृताशी भवेन्नूनं त्रिदिवे सुरपूजितः ।। ८३ ।।
व्रतोपवासैर्होमैर्वा नैवेद्यैश्चारुभिस्तथा ।।
यजन्ते ब्राह्मणा ये मां परया श्रद्धयान्विताः ।। ८४ ।।
षष्टिवर्षसहस्राणि चोषित्वा दिवि ते ततः ।।
ऐश्वर्यं प्रतिपद्यन्ते मर्त्यलोके पुनः पुनः।।८५।।
ब्राह्मणाः क्षत्रियो वैश्यः शूद्रः स्त्री वापि सङ्गताः ।।
शैलेश्वरं तु तत्स्थानं भक्तितः समुपासते ।। ८६ ।।
मत्पार्षदास्ते जायन्ते सततं सहिताः सुरैः ।।
शैलेश्वरं परं गुह्यं गतिः शैलेश्वरः परा ।।
शैलेश्वरात्परं क्षेत्रं न क्वचिद्भुवि विद्यते ।। ८७ ।।
ब्रह्महा गुरुहा गोघ्नः स्पृष्टो वै सर्वपातकैः ।।
क्षेत्रमेतदनुप्राप्य निर्मलो जायते नरः ।। ८८ ।।
विविधान्यत्र तीर्थानि सन्ति पुण्यानि देवताः ।।
येषान्तोयैर्नरः स्पृष्टः सर्वपापैः प्रमुच्यते ।।८९।।
क्रोशं क्रोशं सुरै रूपं तच्च संहृत्य निर्मितम् ।।
तीर्थं क्रोशोदकं नाम पुण्यं मुनिजनप्रियम्।।215.९०।।
तत्र स्नात्वा शुचिर्दान्तः सत्यसन्धो जितेन्द्रियः।।
विमुक्तः किल्बिषैः सर्वैः सर्वमेव फलं लभेत्।।९१।।
अनाशकं व्रजेद्यस्तु दक्षिणेन महात्मनः ।।
शैलेश्वरस्य पुरुषः स गच्छेत्परमां गतिम् ।।९२।।
भृगुप्रपतनं कृत्वा कामक्रोधविवर्जितः।।
विमानेन दिवं गच्छेद्वृतः सोऽप्सरसाङ्गणैः।।९३।।
भृगुमूले परं तीर्थं ब्रह्मणा निर्मितं स्वयम् ।।
ब्रह्मोद्भेदेति विख्यातं तस्यापि शृणु यत्फलं।।९४।।
संवत्सरं तु यस्तत्र स्नास्यंस्तु नियतेन्द्रियः।।
स ब्रह्मलोके विरजे गच्छेन्नास्त्यत्र संशयः।।९५।।
तत्र गोरक्षकं नाम गोवृषः पदविक्षतम् ।।
दृष्ट्वा च तानि हि पुमान् गोसहस्रफलं लभेत् ।।९६।।

गौर्यास्तु शिखरं तत्र गच्छेत्सिद्धनिषेवितम् ।।

यत्र सन्निहिता नित्यं पार्वती शिखरप्रिया ।।९७।।

लोकमाता भगवती लोकरक्षार्थमुद्यता ।।

तस्याः सालोक्यमायाति दृष्ट्वा स्पृष्ट्वाभिवाद्य च ।। ९८ ।।

त्यजते पतितुं तस्या अधस्ताद्वाग्मतीतटे ।।

उमालोकं व्रजेदाशु विमानेन विहायसा ।। ९९ ।।

स्तनकुण्डे उमायास्तु यः स्नायात्खलु मानवः ।।

स्कन्दलोकमवाप्नोति भूत्वा वैश्वानर द्युतिः ।। 215.१०० ।।

तीर्थं पंचनदं प्राप्य पुण्यं ब्रह्मर्षिसेवितम् ।।

अग्निहोत्रफलं तत्र स्नानमात्रेण लभ्यते ।। १०१ ।।

नकुलोहेन मतिमान्स्नापयेत्प्रयतात्मवान् ।।

जातिस्मरः स तु भवेत्सिध्यते चास्य मानसम् ।। १०२ ।।

तस्यैवोत्तरतस्तीर्थमपरं सिद्धसेवितम् ।।

नाम्ना प्रान्तकपानीयं गुह्यं गुह्यकरक्षितम् ।। १०३ ।।

संवत्सरं यस्तु पूर्णं तत्र स्नायान्नरः सदा ।।

गुह्यकः स भवेदाशु रुद्रस्यानुचरः सुधीः ।। १०४ ।।

देव्याः शिखरवासिन्या ज्ञेयं पूर्वोत्तरेण वै ।।

दक्षिणेन तु वाग्मत्याः प्रसृतं कन्दरोदरात् ।। १०५ ।।

तीर्थं ब्रह्मोदयं नाम पुण्यं पापप्रणाशनम् ।।

तत्र गत्वा जलं स्पृष्ट्वा स्नात्वा चाभ्युक्ष्य मानवः ।। १०६ ।।

मृत्युलोकं न पश्येत्स कृच्छ्रेषु च न सीदति ।।

गत्वा सुन्दरिकातीर्थं विधिना तीर्थमादिमम् ।। १०७ ।।

तत्र स्नात्वा भवेत्तोये रूपवानुत्तमद्युतिः ।।

त्रिसन्ध्यं तत्र गच्छेत्तु पूर्वेण विधिवन्नरः ।। १०८ ।।

तत्र सन्ध्यामुपास्याथ द्विजो मुच्येत किल्विषात् ।।

वाग्मत्या मणिवत्याश्च सम्भेदे पापनाशने ।। १०९ ।।

अहोरात्रं वसेद्यस्तु रुद्रजापो द्विजः शुचिः ।।

स भवेद्वेदविद्विद्वान्यज्वा पार्थिवपूजितः ।। 215.११० ।।

तारितं च कुलं तेन सर्वं भवति साधुना ।।

वर्णावरोऽपि यः कश्चित्स्नात्वा दद्यात्तिलोदकम् ।। १११ ।।।

तर्पिताः पितरस्तेन भवेयुर्नात्र संशयः ।।

यत्र यत्र च वाग्मत्यां स्नाति वै मानवोत्तमः ।। ११२ ।।

तिर्यग्योनिं न गच्छेत्तु समृद्धे जायते कुले ।।

वाग्मतीमणिवत्योश्च संभेदश्चर्षिसेवितः ।। ११३ ।।

धीमान्गच्छेत्तु विधिना कामक्रोधविवर्जितः ।।

गङ्गाद्वारे तु यत्प्रोक्तं स्नानपुण्यफलं महत् ।। ११४ ।।

स्नानस्य तद्दशगुणं भवेदत्र न संशयः ।।

अत्र विद्याधराः सिद्धा गन्धर्वा मुनयः सुराः ।।११५ ।।

स्नानमेतदुपासन्ते यक्षाश्च भुजगैः सह ।।

स्वल्पमप्यत्र यत्किंचिद्द्विजेभ्यो दीयते धनम् ।। ११५ ।।

तदक्षयं भवेद्दातुर्दानपुण्यफलं महत् ।।

तस्मात्सर्वप्रयत्नेन करणीयं च देवताः ।। ११७ ।।

वरिष्ठं क्षेत्रमेतस्मान्नान्यदेव हि विद्यते ।।

तस्मिन् श्लेष्मातकवने पुण्ये त्रिदशसेविते ।। ११८ ।।

यत्र यत्र मया देवाश्चरता मृगरूपिणा ।।

आसितं स्वपितं यातं विहृतं वा समन्ततः ।।११९।।

तत्र तत्राभवत्सर्वं पुण्यक्षेत्रं च सर्वशः ।।

शृंगमेतत्त्रिधाभूतं सम्यक्संश्रूयतां सुराः ।। 215.१२० ।।

गोकर्णेश्वर इत्येतत्पृथिव्यां ख्यातिमेष्यति ।।

एवं सन्दिश्य विबुधान्देवदेवः सनातनः ।। १२१ ।।

अदृश्य एव विबुधैः प्रययावुत्तरां दिशम् ।। १२२ ।।

इति श्रीवराहपुराणे भगवच्छास्त्रे भगवद्गोकर्णेश्वरमाहात्म्ये जलेश्वरमाहात्म्यवर्णनं नाम पंचदशाधिकद्विशततमोऽध्यायः ।।२१५।।

**अथ गोकर्णशृंगेश्वरादिमाहात्म्यम् ।।**

ब्रह्मोवाच ।।

तस्मात्स्थानादपक्रान्ते त्र्यम्बके मृगरूपिणि ।।

अन्योऽन्यं मन्त्रयित्वा तु मया सह सुरोत्तमाः ।। १ ।।

त्रिधाविभक्तं तच्छृङ्गं पृथक्पृथगवस्थितम् ।।

सम्यक्स्थापयितुं देवा विधिदृष्टेन कर्मणा ।। २ ।।

स्थापितं देवि नीत्वा वै शृंगाग्रं वज्रपाणिना ।।

मया तत्रैव तन्मध्यं स्थापितं विधिवत्प्रभोः ।। ३ ।।

देवैर्देवर्षिभिश्चैव सिद्धैर्ब्रह्मर्षिभिस्तथा ।।

गोकर्ण इति विख्यातिः कृता वैशेषिकी वरा ।। ४ ।।

विष्णुना देवतीर्थेन तन्मूलं स्थापितं ततः ।।

तस्य शृङ्गेश्वर इति नाम तत्राभवन्महत् ।। ५ ।।

तत्र तत्रैव भगवांस्तस्मिन्शृंगे त्रिधा स्थिते ।।
सान्निध्यं कल्पयामास भागेनैकेन चोन्मना ।। ६ ।।
शतं तेन तु भागानामात्मनो निहितं मृगे ।।
तस्माद्द्विकं तु भागानां शृंगाणां त्रितये न्यधात् ।।७।।
मार्गेण तच्छरीरेण निर्ययौ भगवान्विभुः ।।
शैशिरस्य गिरेः पादं प्रपेदे स्वयमात्मनः।।८।।
शतसंख्या स्मृता व्युष्टिस्तस्मिञ्छैलेश्वरे विभोः ।।
त्रिधा विभक्ते शृंगेऽस्मिन्नेकाग्रगतिनिप्रभोः ।। ९ ।।
ततः सुरासुरगुरुर्देवं भूतमहेश्वरम् ।।
तपसोऽग्रेण संसेव्य वव्रिरे विविधान्वरान् ।। 216.१० ।।
देवदानवगन्धर्वाः सिद्धयक्षमहोरगाः ।।
श्लेष्मातकवनं कृत्स्नं सर्वतः परिमण्डलम् ।। ११ ।।
तीर्थयात्रां पुरस्कृत्य प्रादक्षिण्यं च चक्रतुः ।।
फलान्निर्दिश्य तीर्थानां तथा क्षेत्रफलं महत् ।। १२ ।।
यथास्थानानि ते तस्मान्निवृत्ताश्च सुरादयः ।।
एवं तस्मान्निवृत्तेषु दैवतेषु तदा ततः ।। १३ ।।
पौलस्त्यो रावणो नाम भ्रातृभिः सह राक्षसैः ।।
आगम्योग्रेण तपसा देवमाराधयद्विभुम् ।। १४ ।।
शुश्रूषया च परया गोकर्णेश्वरमव्ययम् ।।
यदा तु तस्य तुष्टो वै वरदः शंकरः स्वयम् ।। १५ ।।
तदा त्रैलोक्यविजयं वरं वव्रे स राक्षसः ।।
प्रसादात्तस्य तत्सर्वं वाञ्छितं मनसा हि यत् ।। १६ ।।
अवाप्य च दशग्रीवस्तदिष्टं परमेश्वरात् ।।
त्रैलोक्यविजयायाशु तत्क्षणादेव निर्ययौ ।। १७ ।।
त्रैलोक्यं स विनिर्जित्य शक्रं च त्रिदशाधिपम् ।।
तदुत्पाट्यानयामास पुत्रेणेन्द्रजिता सह ।। १८ ।।
शृंगाग्रं यत्पुरा नीत्वा स्थापितं वज्रपाणिना ।।
तदुत्पाट्यानयामास पुत्रेणेन्द्रजिता सह ।। १९ ।।
तद्यावद्रावणः स्थाप्य मुहूर्तमुदधेस्तटे ।।
सन्ध्यामुपासते तत्र लग्नस्तावदसौ भुवि ।। 216.२० ।।
न शशाक यदा रक्षस्तदुत्पाटयितुं बलात् ।।
वज्रकल्पं समुत्सृज्य तदा लंकां विनिर्ययौ ।। २१ ।।
स तु दक्षिणगोकर्णो विज्ञेयस्ते महामते ।।
स्वयं प्रतिष्ठितस्तत्र स्वयं भूतपतिः शिवः ।। २२ ।।
एतत्ते कथितं सर्वं मया विस्तरतो मुने ।।
यथावदुत्तरस्तस्य गोकर्णस्य महात्मनः।।२३।।
दक्षिणस्य च विप्रर्षे तथा शृंगेश्वरस्य च।।
शैलेश्वरस्य च विभो स्थित्युत्पत्तिर्यथाक्रमम्।।२४।।

व्युष्टिः क्षेत्रस्य महती तीर्थानां च समुद्भवः ।।
प्रोक्तं सर्वं मया वत्स किमन्यच्छ्रोतुमिच्छसि ।। २५ ।।
इति श्रीवराहपुराणे गोकर्णशृंगेश्वरादीनां माहात्म्यं नाम षोडशाधिकद्विशततमोऽध्यायः ।। २१६ ।।

**अथ धरणीवराहसंवादफलश्रुतिवर्णनम् ।।**

सनत्कुमार उवाच ।।

उक्तं भगवता सर्वं यथावत्परमेष्ठिना ।।

पृष्टेन संशयं सम्यक्परं कृत्वार्थनिश्चयम् ।। १ ।।

भगवद्विश्वरूपस्य स्थाणोरप्रतिमौजसः ।।

क्रीडतो लोकनाथस्य कानने मृगरूपिणः ।। २ ।।

यथा शरीरं शृङ्गं च पुण्यक्षेत्रे प्रतिष्ठितम् ।।

हिताय जगतस्तत्र तीर्थानि च यथाभवन् ।। ३ ।।

तन्मे ब्रूहि महाभाग यथातत्त्वं जगत्पते ।।

ब्रह्मोवाच ।।

पुलस्त्यो वक्ष्यते शेषं यदतोऽन्यन्महामुने ।। ४ ।।

सर्वेषामेव तीर्थानामेषां फलविनिश्चयम् ।।

कुरु राज्यं पुरस्कृत्य मुनीनां पुरतो वने ।। ५ ।।

पुत्रो मे मत्समः सम्यग्वेदवेदांगतत्त्ववित् ।।

यच्छ्रुत्वा पुरुषस्तात विमुक्तः सर्वकिल्बिषैः ।। ६ ।।

यशस्वी कीर्त्तिमान्भूत्वा वन्द्यते प्रेत्य चेह च ।।

श्रोतव्यमेतत्सततं चातुर्वर्ण्यैः सुसंयुतैः ।। ७।।

मंगल्यं च शिवं चैव धर्मकामार्थसाधकम् ।।

श्रीभूतिजननं पुण्यमायुष्यं विजयावहम् ।। ८ ।।

धन्यं यशस्यं पापघ्नं स्वस्तिकृच्छान्तिकारकम् ।।

श्रुत्वैवं पुरुषः सम्यङ्न दुर्गतिमवाप्नुयात् ।। ९ ।।

कीर्तयित्वा व्रजेत्स्वर्गं कल्यमुत्थाय मानवः ।।

सूत उवाच ।।

इत्युक्त्वा भगवान्देवः परमेष्ठी प्रजापतिः ।। 217.१० ।।

सनत्कुमारं सन्दिश्य विरराम महायशाः ।।

एतद्वः कथितं सर्वं मया तत्त्वेन सत्तमाः ।। ११ ।।

वराहभूमिसंवादं सारमुद्धृत्य सत्तमाः ।।

यश्चैव कीर्त्तयेन्नित्यं शृणुयाद्वापि भक्तितः ।। १२ ।।

सर्वपापविनिर्मुक्तः स याति परमां गतिम् ।।

प्रभासे नैमिषारण्ये गंगाद्वारेऽथ पुष्करे ।।१३ ।।

प्रयागे ब्रह्मतीर्थे च तीर्थे चामरकण्टके ।।

यत्पुण्यफलमाप्नोति तत्कोटिगुणितं भवेत् ।। १४ ।।

कपिलां द्विजमुख्याय सम्यग्दत्त्वा तु यत्फलम् ।।

प्राप्नोति सकलं श्रुत्वा चाध्यायं तु न संशयः ।। १५ ।।

श्रुत्वाऽस्यैव दशाध्यायं शुचिर्भूत्वा समाहितः ।।

अग्निष्टोमातिरात्राभ्यां फलं प्राप्नोति मानवः ।।१६ ।।

यः पुनः सततं शृण्वन्नैरन्तर्येण बुद्धिमान् ।।

पारयेत्परया भक्त्या तस्यापि शृणु यत्फलम् ।। १७ ।।

सर्वयज्ञेषु यत्पुण्यं सर्वदानेषु यत्फलम् ।।

सर्वतीर्थाभिषेकेन यत्फलं मुनिभिः स्मृतम् ।। १८ ।।

तत्प्राप्नोति न सन्देहो वराहवचनं यथा ।।

यदेतत्पारयेद्भक्त्या मम माहात्म्यमुत्तमम् ।। १९ ।।

अपुत्रस्य भवेत्पुत्रः सपौत्रस्य सुपौत्रकः ।।

यस्येदं लिखितं गेहे तिष्ठेत्संपूज्यते सदा ।। 217.२० ।।

तस्य नारायणो देवः सन्तुष्टः स्याद्धि सर्वदा ।।

यश्चैतच्छृणुयाद्भक्त्या नैरन्तर्येण मानवः ।। २१ ।।

श्रुत्वा तु पूजयेच्छास्त्रं यथा विष्णुं सनातनम् ।।

गन्धपुष्पैस्तथा वस्त्रैर्ब्राह्मणानां च तर्पणैः ।। २२ ।।

यथाशक्ति नृपो ग्रामैः पूजयेच्च वसुन्धरे।।

श्रुत्वा तु पूजयेद्यः पौराणिकं नियतः शुचिः ।।२३ ।।

सर्वपापविनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् २४।।ॐ।।

इति श्रीवराहपुराणे भगवच्छास्त्रे धरणीवराहसंवादे फलश्रुतिर्नाम सप्तदशाधिकद्विशततमोऽध्यायः।। २१७।।

समाप्तमिदं वराहमहापुराणम् ।।

अथ पुराणपठनादिविषयानुक्रमणिकाध्यायः ।।

त्रिःसप्तषट्क्षितिमिते नृपविक्रमस्य काले गते भगवतो हरिबोधनस्य ।।

वीरेश्वरेण सह माधवभद्रनाम्ना काश्यां वराहकथितं लिखितं पुराणम् ।। १ ।।

वराहस्य पुराणस्य वृत्तान्तान्प्रब्रवीम्यहम् ।।

आदौ सम्बन्धकथनं वृत्तान्तश्चादिकल्पकः।। २ ।।

आदिसृष्टिस्ततः प्रोक्ता चरितं दुर्जनस्य च ।।

वृत्तान्तोद्देशभागश्च श्राद्धकल्पस्ततः परम् ।। ३ ।।

आदिवृत्तान्तकथने सरमाख्यानमेव च ।।

महातपोपाख्यानं च अग्न्युत्पत्तिस्ततः परम् ।। ४ ।।

अश्विनोरपि चोत्पत्ति गौर्युत्पत्तिस्तथैव च ।।

विनायकस्य चोत्पत्तिर्नागोत्पत्तिस्तथैव च ।। ५ ।।

स्कन्दोत्पत्तिश्च भानोश्च उत्पत्तिः समुदाहृता ।।

कामादीनां तथोत्पत्तिः देव्युत्पत्तिस्तथैव च ।। ६ ।।

धनदस्य तथोत्पत्तिः परापरविनिर्णयः ।।

धर्मोत्पत्तिस्तथोत्पत्ती रुद्रस्य च ततः स्मृता ।। ७ ।।

सोमोत्पत्तिरहस्यं च क्षितेश्चापि समासतः ।।

उक्तः प्रागितिहासश्च व्याधोपाख्यानमेव च ।। ८ ।।

ततः सत्यतपोपाख्या मत्स्यद्वादशिका तथा ।।

कूर्मद्वादशिका चापि वराहद्वादशी तथा ।। ९ ।।

नृसिंहद्वादशी चापि वामनद्वादशी तथा ।।

भार्गवद्वादशी चापि श्रीरामद्वादशी तथा ।। 218.१० ।।

कृष्णद्वादशिका चापि बुद्धद्वादशिका तथा ।।

कल्कि द्वादशिका चापि पद्मनाभस्य द्वादशी ।। ११ ।।

ततो व्रतं धरण्याश्च गीतागस्त्यस्य चोत्तमा ।।

पशुपालस्य चाख्यानं भर्तृप्राप्तिव्रतं तथा ।। १२ ।।

शुभव्रतं धन्यव्रतं कान्तिव्रतमतः स्मृतम् ।।

सौभाग्यव्रतमाख्यातमविघ्नव्रतमेव च ।। १३ ।।

शान्तिव्रतं कामव्रतमारोग्यव्रतमेव च ।।
पुत्रप्राप्तिव्रतं शौर्यव्रतं वै सार्वभौमिकम् ।।१४।।
पुराणस्तवनं चैव नारायणेश्वरेण च ।।
रुद्रगीता ततः पुंसां प्रकृतेश्चापि निर्णयः ।।१५।।
ततो भुवनकोशस्य वर्णनं समुदाहृतम् ।।
जम्बूद्वीपस्य मर्यादावर्णनं परिकार्तितम् ।।१६।।
भारतादिसमुद्देशः सृष्टिसम्भाग एव च ।।
नारदस्य च संवादो महिषेण प्रकीर्त्तितः ।। १७ ।।
शक्तिमाहात्म्यकथनं महिषासुरघातनम् ।।
रुद्रमाहात्म्यकथनं पर्वाध्यायस्ततः परम् ।। १८ ।।
श्वेतोपाख्यानमत्रोक्तं तिलधेनुविधिस्ततः ।।
जलधेनोरसधेनोर्गुडधेनोर्विधिः परम् ।। १९ ।।
ततश्च शर्क्कराधेनोर्मधुधेनोस्ततः परम् ।।
दधिधेनोश्च लवणधेनोः कार्पासधेनुका ।। 218.२० ।।
धान्यधेनुश्च भगवच्छास्त्रलक्षणमेव च ।।
विष्णोस्तोत्रं ततो नाना प्रश्नाः प्रोक्ता हरिं प्रति ।। २१ ।।
ततो भागवतानां च लक्षणं परिकीर्त्तितम् ।।
लक्षणं सुखदुःखानां द्वात्रिंशदपराधकाः ।। २२ ।।
नानामन्त्रास्ततः प्रोक्ता देवोपकरणे विधिः ।।
भोज्याभोज्यस्य कथनं संध्योपस्थानकारणम् ।। २३ ।।
वियोनिगर्भमोक्षश्च कोकामुखप्रशंसनम् ।।
भगवच्छास्त्रकथने माहात्म्यं पुष्पगन्धयोः ।। २४ ।।
रूपकारणमत्रोक्तं मायाचक्रं ततः परम् ।।
कुब्जाम्रकस्य माहात्म्यं वर्णदीक्षा ततः परम् ।। २५ ।।
कंकृताञ्जनदर्पाणां मन्त्राः प्रोक्तास्ततः परम् ।।
राजान्नभक्षणे प्रायश्चित्तं प्रोक्तं ततः परम् ।। २६ ।।
दन्तकाष्ठाद्यकरणे प्रायश्चित्तं ततः परम् ।।
शवादिस्पर्शने मन्त्र त्यागे चोक्तं ततः परम् ।। २७ ।।

नीलवस्त्रपरिधाने क्रोधयुक्तस्य चार्चने ।।
रक्तवस्त्रपरिधाने अन्धकारे प्रपूजने ।। २८ ।।
कृष्णवस्त्रपरिधाने धौतवस्त्रस्य धारणे ।।
क्रोडादिमांसभक्षे च प्रायश्चित्तं प्रकीर्त्तितम्।।२९।।
दीपोच्छिष्टस्य तैलस्य करलेपेन पूजने।।
श्मशानगमने स्पृष्टपूजने चैव शोधने ।। 218.३० ।।
पिण्याकभक्षणे चैव उपानद्गूढपादके ।।
भगवच्छास्त्रविहिताकरणे शोधने ततः।।३१।।
सूकरक्षेत्रमहिमा ततो जम्बूकगृध्रयोः ।।
खञ्जरीटस्य चाख्यानं पुनः कोकामुखस्य च।।३२।।
बदरीषण्डमाहात्म्यं गुह्यधर्मप्रकीर्तनम् ।।
मन्दारगुह्यमहिमा शालग्रामप्रसंशनम् ।।३३।।
सोमेश्वरस्य महिमा मुक्तिक्षेत्रस्य चापि हि।।
त्रिवेण्याश्चैव माहात्म्यं माहात्म्यं गण्डकीभवम् ।३४।।
चक्रतीर्थस्य महिमा हरिक्षेत्रसमुद्भवः ।।
देवह्रदस्य चाख्यानं रुरुक्षेत्रस्य चापि हि ।। ३५ ।।
गोनिष्क्रमस्य महिमा द्वारवत्यास्ततः परम् ।।
तत्रत्य तीर्थमहिमा लौहार्गलमतः परम् ।। ३६ ।।
मथुरातीर्थमाहात्म्यं प्रादुर्भावस्तथैव च ।।
यमुनातीर्थमाहात्म्यमक्रूरस्य च तीर्थकम् ।। ३७ ।।
देवारण्यस्य माहात्म्यं चक्रतीर्थस्य चोत्तमम् ।।
कपिलस्यापि महिमा तथा गोवर्धनस्य च ।। ३८ ।।
तथा आख्यायिकायुक्तं विश्रान्तेश्च ततः परम् ।।
गोकर्णस्य च माहात्म्यं सरस्वत्यास्तथैव च ।। ३९ ।।
यमुनोद्भेदमहिमा कालिञ्जरसमुद्भवाः।।
गंगोद्भेदस्य महिमा शापः स्यम्बस्य वै तथा ।। 218.४०।।
मधुकप्रतिमायाश्च स्थापनं संप्रकीर्तितम् ।।
शैलाच्र्चा स्थापनं चापि मृन्मयाच्र्चास्थितिस्तथा ।। ४१ ।।

ताम्रार्चास्थापनं चापि कांस्यार्चास्थापनं तथा ।।

रौप्यर्चास्थापनं चाथ सौवर्णप्रतिमास्थितिः ।।४२।।

श्राद्धोत्पत्ति स्ततः प्रोक्तं पिण्डं संकल्प एव च ।।

पिण्डोत्पत्तिस्ततः प्रोक्ता पितृयज्ञविनिर्णयः ।। ४३ ।।

मधुपर्क्कफलं दाने संसारचक्रवर्णनम् ।।

दुष्कृत्यकरणं चैव सुखवर्णनमेव च ।। ४४ ।।

कृतान्तदूतकथनं यातनारूपमेव च ।।

वर्णनं नरकाणां च किंकराणां च वर्णनम् ।। ४५ ।।

तथा कर्मविपाकं च यादृशं कर्म तादृशम् ।।

पापकृत्यस्य कथनं दूतप्रेषणकर्म च ।। ४६ ।।

शुभाशुभस्य कथनं शुभकर्मफलोदयम् ।।

लोभनं पुरुषस्यापि निमेराख्यानमद्भुतम् ।। ४७ ।।

पापनाशकथां दिव्यां गोकर्णेशसमुद्भवम्।।

नन्दिना वरदानं च जलशैलेशयोस्तथा ।। ४८ ।।

शृंगेश्वरस्य महिमा चैवं वृत्तान्तसंग्रहः ।।

एतच्छ्रुत्वाप्नुयान्मर्त्यो वाराहश्रुतिजं फलम् ।। ४९ ।।

इत्यनुक्रमणिका नाम अष्टादशाधिकद्विशततमोऽध्यायः ।। २१८ ।।

समाप्तं वाराहं महापुराणं शुभम् ।।

यादृशं पुस्तके दृष्टं तादृशं लिखितं मया ।।

यदि शुद्धमशुद्धं वा मम दोषो न विद्यते ।। १ ।।